भवेत् । तथा सति यजुर्वेदग्रन्थे ऋचां प्रथमपाठोऽपि तर्हि ऋग्वेदे अन्यैर्ऋषिभिर्दृष्टानां तासां हौत्रकर्मणि विनियोगार्थं पठनानुकूलार्थः अनुवाद एवेति कथं नाभ्युपगम्येत ?

अथ पुनः यजुर्वेदेऽपि एकदा पठिताः सम्पूर्णा एव काश्चिदृचः पुनरुत्तरत्रापि असकृत्वः पठिता दृश्यन्ते 'अग्न आयूꣳषि पवसे' इत्याद्याः । तासां पृथग्दर्शनमेवेति वक्तव्यम् । पृथग्दर्शनत्वे पृथगार्षेयत्वं च अर्थात् सेत्स्यतीति । नैवमेतद् यत्र एकदा पूर्वत्र पठिताः सत्यः उत्तरत्र पुनः कर्मणि विनियोगे अविच्छेदेन द्वे ऋचौ, त्रिचतुरा वा ऋचः, द्वन्द्वेन दर्शयितव्या भवेयुः, तत्रैव प्रतीकमात्रपाठो दृश्यते ।

यत्र एकैव ऋक् पूर्वत्र पठिता सती पुनरुत्तरत्र एकैव विनियुज्यते, तत्र तु समग्रैव ऋक् पठ्यते, इत्येव विशेषः । तद्यथा 'आ प्यायस्व समेतु ते० । सं ते पयाꣳसि' इतीदमृग्द्वयं पूर्वत्र (तै० सं० ४।२।७।१२-१३) याज्यायां समग्र ऋग्रूपेण पठितं, तथा उत्तरत्रापि याज्यायां (तै० सं २।३।१४।१२-१३;३।१।११।३.४) असकृत् 'आ प्यायस्व। सं ते' इति प्रतीकमात्रेण पठितमपि उत्तरत्र विनियोगावसरे 'आ प्यायस्व' (तै० सं० ३।२।५।८) इतीयमेकैव ऋक्समग्रैव पठिता दृश्यते । अत्र पूर्वापरीभावः आर्षेयपाठक्रमेणैव ज्ञेयः, शास्त्रतः ब्राह्मणे कल्पसूत्रे च तथैव याज्यादिविनियोगात्, न तु सारस्वतपाठक्रमेण सम्प्रति प्रचलिते प्रसिद्धे तैत्तिरीयसंहितादिग्रन्थे पूर्वापरीभावनियमोऽस्ति ।

तत्र हि (तै. सं. २।३।१४।१२-१३) 'आ प्यायस्व । सं ते' इति प्रथमतः एव प्रतीकमात्रपाठः, ततः उत्तरत्र (तै० सं० ४।२।७।१२-१३) समग्र ऋक्पाठो विद्यते । तदेतदपि सारस्वतपाठे ग्रन्थव्यत्यासबोधकं लिङ्गम् । क्रमशः संहितादिग्रन्थाध्ययने प्रवृत्ताः बटवः प्रथमत एव प्रतीकमात्रपाठेन समग्रामृचं पठितुं ज्ञातुं च कथं शक्नुयुरिति चिन्त्यमेवैतत् । तस्मादस्य पृथग्दर्शनत्वनिर्णये न किञ्चित्प्रमाणान्तरमस्ति । एवमेव शुनःशेपदृष्टानां तथा सर्वासामपि ऋचां न पृथग्दर्शनं, न पृथगार्षेयं च, याजुषे भवितुमर्हति । एतेन ऋग्वेदे वेदान्तरे वा प्रसिद्धानामृचां यजुर्वेदे समग्र ऋक्पाठोऽपि न पृथग्दर्शनत्वसाधकः नापि पृथगार्षेयत्वसाधकश्च भवितुमर्हतीत्युक्तं भवति ।

अपि च वरुणपाशेन बद्धः शुनःशेपः 'स एतां वारुणीमपश्यत्, तया वै स आत्मानं वरुणपाशादमुञ्चत्' इति तैत्तिरीयके श्रुतया 'उदुत्तमं वरुण पाशमस्मत्' इत्येनया एकयैव ऋचा न खलु वरुणपाशान्मुक्तः, येन साक्षात् श्रवणात् 'उदुत्तमं' इयमेकैव ऋक् शुनःशेपदृष्टा, तथा श्रुतौ अनिर्देशात् 'इमं मे वरुण' इत्याद्या अत्र अन्यार्षेया इति च कल्प्येत । अपि तु शतशः ऋचां स्तोत्रेण मुक्तः शुनःशेप इति श्रूयते । तथा हि हरिश्चन्द्रेण वरुणप्रीत्यर्थमनुष्ठिते नरयज्ञे आलम्बनार्थं यूपे निबद्धः शुनःशेपः तस्मान्मृत्युमुखादात्मानं मोचयितुं प्रवृत्तः सन् 'अथ ह शुनःशेप ईक्षांचक्रे अमानुषमिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावामीति' ( ऐ० ब्रा० ७।१६ ) इति वाग्यज्ञेन देवतोपासांचक्रे । तत्र 'स प्रजापतिमेव प्रथमं देवतानामुपससार, कस्य नूनं कतमस्यामृतानामित्येतयर्चा' इति प्रथमतः प्रजापतिं तुष्टाव, ततश्च तेनाज्ञप्तः तथैवोत्तरत्र 'अग्निः सविता वरुणः पुनरग्निः विश्वे देवाः इन्द्रः अश्विनौ' इत्यासां देवतानां स्तोत्रेण तत्तद्देवताभिराज्ञप्तश्च अन्ते उषसः स्तोत्रेण वरुणपाशान्मुक्तः । एवं शतशः ऋग्भिः स्तोत्रेण शुनःशेपो वरुणपाशान्मुक्तः ।

अत्र यद्यपि तैत्तिरीयके 'स एतां वारुणीमपश्यत्, उदुत्तमं वरुण पाशमस्मदित्याह' इति एकैव ऋक् शुनःशेपेन दृष्टेति श्रूयते, अन्याः 'नहि ते क्षत्रं' इत्याद्याः शुनःशेपार्षेयत्वेन स्पष्टं न श्रूयन्ते, तथापि तैत्तिरीयब्राह्मणवचनादेव तासां शतशः ऋचां शुनःशेपार्षेयत्वं सिध्यति । 'शौनःशेपमाख्यापयते, वरुणपाशादेवैनं मुञ्चति, परः शतं भवति' इति ( तै० ब्रा० १।७।१० ) एवं तैत्तिरीयके श्रुतानां 'नहि ते क्षत्रं' इत्याद्यानामपि सर्वासां ऋचां यजुर्वेदेऽपि शुनःशेपार्षेयत्वमेवेति सिद्धम् ।

एतासामृचां शुनःशेपार्षेयत्वं शुक्लयजुर्वेदेऽपि अनूदितम्—

'उरुꣳहि राजा' ( वा० य० सं० ८।२३ ) ... ... 'उरुꣳहि' शुनःशेपो वारुणीं त्रिष्टुभम् ।

'नि षसाद' ( वा० य० १०।२७ ) ... ... 'नि षसाद' शुनःशेपो वारुणीं गायत्रीम् ।

' योगेयोगे ' ( वा० य० ११।१४ ) ' योगेयोगे ' शुनःशेपः ।
' उदुत्तमं वरुण० ' ( वा० य० १२।१२ ) ' उदुत्तमं ' शुनःशेपो वारुणीं त्रिष्टुभम् ।
' तत्त्वा यामि० ' ( वा० य० १८।४९ ) ' तत्त्वा ' वारुणीं त्रिष्टुभं शुनःशेपः ।

' इमं मे वरुण, तत्त्वा यामि० ' इमं मे गायत्रीत्रिष्टुभौ वारुण्यौ शुनःशेपः । इति ( शु० य० का० स० सूत्राणि ) ऋग्वेदे अप्रसिद्धापि शुनःशेपदृष्टा एका ऋग् दृश्यते । ' अपाघमपकिल्विषम्० ' ( वा० य० ३५।११ ) अपाघं लिङ्गोक्तदेवतामानुष्टुभं शुनःशेपः । ( का० स० सूत्रम् ) कथं तर्हि ' पुनातु ते परिस्रुतमिति यजुषा पुनाति व्यावृत्त्यै ' ( तै० ब्रा० १।८।५ ) इति ऋचोऽपि यजुःशब्देन निर्देशः । ' पुनातु ते ' इति यजुर्वेदपाठादराभिप्रायकः एव । एवं वेदान्तरे दृष्टाः ऋचो वेदान्तरे पठिता अपि स्वकीयैरार्षेयच्छन्दोदैवतैर्न हीयन्ते ।

अस्मिन्नर्थे ' अयꣳसो अग्निर्यस्मिन् ' इत्यादीन्यप्युदाहर्तव्यानि ऋग्वेदे ( मं० ३।२२।१ ) पठितस्य पञ्चर्चस्य सूक्तस्य ' अयꣳसो अग्निरिति ' विश्वामित्रस्य सूक्तं भवति । ( तै० सं० ५।२।३।८ ) विश्वामित्रार्षेयत्वमनुश्रूयते । तच्च विश्वामित्रसम्बधाभिप्रायं वैश्वामित्रमण्डलान्तर्गतत्वात् । वैश्वामित्रीयाभिप्रायं वेति ज्ञेयम् ।

ऋग्वेदे ' अयं स उपान्त्यानुष्टुप्पुरीष्येभ्योऽग्निभ्यः ' इति सर्वानुक्रमसूत्रे । ' अग्निं होतारं गाथी ह ' इति सूत्रात् ' अग्निं होतारं प्रवृणे मियेधे ' इति सूक्तादनुवृत्तः चतुर्णां सूक्तानां गाथी ऋषिः, न तु विश्वामित्रः । तथापि विश्वामित्रसम्बन्धाद् विश्वामित्रार्षेयत्वं श्रुत्यानुश्रावितमिति प्रतीयते । एवं ' दिवस्परि प्रथमं जज्ञे अग्निः ' इत्यस्य सूक्तस्य (ऋ० १०।४५।१, तै० सं० ४।२।२।१) 'दिवस्परि द्वादश वत्सप्रिराग्नेयं तु' इति सर्वानुक्रमसूत्रोक्तवत्सप्रेरार्षेयत्वं यजुर्वेदेऽपि अनुश्रूयते । ' वात्सप्रेणोप तिष्ठते एतेन वै वत्सप्रीर्भालन्दनोऽग्नेः प्रियं धामावारुन्ध ' इति स्पष्टम् । (तै० सं० ५।२।१) तथैव ' आऽयं गौः पृश्निरक्रमीत् ' इति तृचस्य सूक्तस्य ( ऋ० १०।१८९।१; तै० सं० १।५।३।२ ) ' आयं गौः सार्पराज्ञ्यात्मदैवतम् ' इति सूत्रदर्शितं तैत्तिरीयकेऽनुश्रूयते । ' सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति ' इति ( तै० सं० १।५।४।२ ) एवमेव यजुर्वेदे पठितानां अपठितानामपि सूक्तानां ऋग्वेदीयार्षेयानुश्रवणपूर्वकं विनियोगः श्रूयते ।

' सजनीयꣳ शस्यं विहव्यꣳ शस्यं आगस्त्यस्य कयाशुभीयं शस्यं ' इति । (तै० सं० ७।५।५।६ ) सजनीयम्-' स जनास इन्द्रः ' इति ऋगन्तिमपादैकदेशोपहितं, ' यो जात एव प्रथमो मनस्वान् ' इति ( ऋ० २।१२।१-१४) गृत्समदार्षेयं पञ्चदशर्चं सूक्तम् । ' विहव्यम्- ममाग्ने वर्चो विहवेष्वस्तु० ' इति ( ऋ० १०।१२८।१-९ ), ( तै० सं० ४।७।१४।१-९ ) नवर्चं विहव्यार्षेयं सूक्तम् । ' ममाग्ने नव विहव्यः ' इति सर्वानुक्रमसूत्रम् । ' अगस्त्यस्य कया शुभीयम् ' ' कया शुभा सवयसः सनीळाः' इति सूक्तं अगस्त्यार्षेयम् । ( ऋ० १।१६५।१-१५) ' कया पञ्चोना संवादोऽगस्त्येन्द्रमरुताम् ' इति सर्वानुक्रमसूत्रम् ।

अतएव शुक्लयजुर्वेदे कातीये सर्वानुक्रमसूत्रे शुक्लयजुर्वेदान्तर्गतानां सर्वासामपि ऋचां तत्रतत्र प्रकरणशः पाठक्रमानुसारेण काण्डर्षीणां सामान्यतो निर्देशेन, ऋचामेव ऋग्वेदे प्रसिद्धाः मन्त्रद्रष्टारः ऋषय एव विशेषतो दर्शिताः । ' अग्न्याधेयं प्रजापतेरार्षम् । समिधाग्नेयस्तिस्रो गायत्र्यः, समिधा विरूप आङ्गिरसः, सुसमिद्धाय वसुश्रुतः, तन्त्वा भरद्वाजः ' इत्यादि । समिधाग्निं- ' इमे त्रयस्त्रिंशद्विरूप आङ्गिरस आग्नेयं तु समिधाग्निं त्रिंशत् । इति ( ऋ० सर्वानुक्रमसूत्रम् ) सुसमिद्धाय शोचिषे- ' त्वमग्ने वसुश्रुतः त्वामग्न एकादश सुसमिद्धायाद्यं गायत्रम् । इति दिग्दर्शनार्थं किञ्चिदेवोपन्यस्तं । आर्षेयपाठक्रमे सर्वं संशोध्यते ।

एवं च सति अस्माकं द्विजत्वसिद्धये उपनयनसंस्कारे ब्रह्मोपदेशरूपेण सर्ववेदाधिकारार्थं प्रथमतः उपदश्यः गायत्रीमन्त्रोऽपि ऋगात्मकः विश्वामित्रार्षेयः 'गायत्र्या गायत्रीच्छन्दो विश्वामित्रऋषिः सवितादेवता' इतिश्रुतेः । (ना०उ० १९।३५) तथा च सर्वानुक्रमसूत्रम् ' कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार, तस्येन्द्र एव गाथी पुत्रो जज्ञे, गाथिनो विश्वामित्रः, स तृतीयं मण्डलमपश्यत् ' इति तृतीयमण्डलस्य विश्वामित्रार्षेयत्वात्, गायत्र्याश्च तत्रैव पाठदर्शनात् । ' तत्स

वितुर्वरेण्यम्' ( ऋ० ३।६२।३०; साम० १४६२; वा० य० ३,३५; तै० सं० १।५।६।१२ )

एवं वेदमन्त्राणां यातयामतानिवारणार्थं तत्तदार्षेयं यथाशास्त्रं विज्ञेयमिति सङ्क्षेपः।

## छन्दो विचारः।

'छन्द' एव वेदमन्त्राणां स्वरूपं प्रधानं लक्षणं च। छन्दसैव मन्त्राणां मन्त्रत्वं प्रतिष्ठितम्। छन्दसैव ऋक्त्वं यजुष्ट्वं सामत्वं च सिद्धम्। छन्दोनिबन्धनमन्तरा मन्त्र एव न भवति। मन्त्राणामेव मुख्यं वेदत्वं वस्तुतस्त्वसिद्धम्। तस्माद्वेदमन्त्र-स्वरूपज्ञाने छन्दोज्ञानमेव प्रधानम्। अत एव 'गायत्र्या गायत्रीच्छन्दो विश्वामित्र ऋषिः सविता देवता' इत्यत्र ( वा० उ० १९।३५ ) छन्द एव प्राथम्येन निर्दिष्टम्। तस्मात् ऋषिदैवतच्छन्दांसि 'तानि मन्त्रेमन्त्रे विद्यात्' इति श्रुत्या-विहितं वेदमन्त्राणामयातयामतासिध्यर्थम्। ऋचां तु गायत्र्यादीनि प्रसिद्धानि। छन्दोमुखेनैव ऋचां यज्ञे विनियोगो विहितः।

'गायत्र्या ब्राह्मणमुपनयीत, त्रिष्टुभा राजन्यं, जगत्या वैश्य'मिति, त्रैवर्णिकानां ब्राह्मणक्षत्रियवैश्यानां द्विजत्वसिद्धिः छन्दोमुखेनैव उपदिश्यते। अत एव तदेतच्छन्दस्तत्त्वविज्ञानादेवामृतत्वसिद्धिरपि मन्त्रोपदिष्टानुश्रूयते। तथा च दीर्घतमसः आर्षेयं ऋङ्मन्त्रदर्शनम्।

'यद्गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत।

यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः।' इति ( ऋ० १।१६४।२३ )

एवं सप्तच्छन्दांस्यनुश्रूयन्ते, तत्तद्देवताधिष्ठितानि। 'अग्नेर्गायत्र्यभवत्सयुग्वोष्णिहया सविता सं बभूव। अनुष्टुभा सोम उक्थैर्महस्वान्बृहस्पतेर्बृहती वाचमावत् ॥४॥ विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबिह भागो अह्नः। विश्वान्देवाञ्जगत्या विवेश तेन चाक्लृप्र ऋषयो मनुष्याः ॥५॥ इति ( ऋ० १०।१३०।४-५ )

एतेषां तथान्येषामपि सर्वेषां छन्दसां अधिष्ठाता उत वर्षकः प्रकाशश्च विश्वरूपः स परमैश्वर्यपूर्णः परमपुरुषः इन्द्र एव, तस्यापि छन्दोमुखेनैवाविर्भावः प्रकाशोऽनुश्रूयते 'यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्सम्बभूव। स मेन्द्रो मेधया स्पृणोतु' इति ( तै० शिक्षो० ४।१ )। एवं छन्दस्तत्त्वज्ञानेन मन्त्रज्ञानं, मन्त्रमुखेन ब्रह्मात्मतत्त्वज्ञानं, तेनैव चामृतत्वमिति छन्दोमुखेनैवामृतत्वसिद्धिरिति सिद्धम्।

ऋग्वेदे तु गायत्र्यादीनि छन्दांसि प्रसिद्धानि। तासामृचां अन्यासां च यजुर्वेदेऽपि तान्येव छन्दांसि भवन्ति। तदिदं तैत्तिरीयब्राह्मणवचनेनैव गम्यते। 'गायत्र्या गायत्री छन्दः' इति ( ना० उ० १९।३५ ) 'गायत्रीभिरुप तिष्ठते... यदेतं तृचमन्वाह सन्तत्यै' इति ( तै० सं० १।५।८।७ ) अत्र गायत्री ऋचस्तु-'सम्पश्यामि प्रजा अहम् ( तै० सं० १।५।६।१ ) उप त्वाऽग्ने दिवेदिवे' इति च। 'देवो वः सवितोत्पुनातु०' ( तै० सं० १।१।५।१ ) सावित्र्यर्चा, पच्छो गायत्रिया त्रिःषमृद्ध्वाय' इति ( तै० ब्रा० ३।३।४ ) 'विश्वे देवस्य नेतु:०' ( तै० सं० १।२।२।६ ) 'ऋचा जुहोति, यज्ञस्योद्यत्यै अनुष्टुभा जुहोति विश्वे देवस्य नेतुरित्याह' इति ( तै० ब्रा० ३।१।२ ) 'विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया जुहोति' इति ( तै० सं० ५।१।९ ) "सꣳस्रावभागाः स्थेषा बृहन्तः०" ( तै० सं० १।१।१३।१४ ) "सꣳस्रावभागाः स्थेत्याह। वैश्व-देव्यर्चा० त्रिष्टुप्भवति" ( तै० ब्रा० ३।३।६ ) 'वाजस्य मा प्रसवेन०।' ( तै० सं० १।१।१३।१ ) "अथ स्रुचावनु-ष्टुब्भ्यां वाजवतीभ्यां व्यूहति" ( तै० ब्रा० ३।३।९ )।

एवमेव क्वचिदतिच्छन्दसोऽपि निर्देशो भवति- "अभि त्यं देवꣳ सवितारमोण्योः०।" ( तै० सं० १।२।६।२ ) "अभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीते।" इति ( तै० सं० ६।१।९।९ )

तदेतद्दिग्दर्शनमार्गं किञ्चिदेवोपन्यस्तम्। एवं सर्वासामपि ऋचां छन्दांसि विनियोगसङ्ग्रहे निर्दिष्टानि सायनभाष्ये विद्यन्ते। तानि विज्ञाय तत्रतत्र विनियोगावसरे उच्चारणीयानि। एवं ऋचां गायत्र्यादीनि छन्दांसि सर्वेषामप्यभिमता-न्येव। यजुर्मन्त्राणां तु अप्रसिद्धान्येव छन्दांसि, नापि कुत्रचिदुल्लिखितानि, ऋचामिव यजुषां छन्दो व्यवस्था नास्तीति, भावः।

"अनियताक्षरपादानि यजूꣳषि भवन्ति" इति सूत्रेण यजुषां छन्दोनिबन्धनानियमाभावात् तेषां छन्दःस्वरूप-

विज्ञानमशक्यसम्पादं छन्द एव नास्तीत्यपि केषाञ्चिदभिप्रायः । अत एव केवलं " यजुश्छन्दः " इति पठनपद्धतिर्विद्यते इति प्रतीयते । अपि च यजुषामपि छन्दोनियमसत्वे सूत्रभेदेन अनेकधा मन्त्रविभागेन कर्मणि विनियोगः न शास्त्रयिता-मर्हति ।

तद्यथा- " इषे त्वोर्जे त्वेत्याह, इषमेवोर्जे यजमानेऽव रुन्धे " इति ब्राह्मणोद्धृते एकस्मिन् मन्त्रप्रतीके आपस्तम्बो मन्त्र-द्वयं परिकल्प्य, तद्विनियोगं पृथगेव विदधाति। 'इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि' इति। बौधायनस्तु अत्र ब्राह्म-णानुरोधेन एकमेव मन्त्रं कल्पितवान् ' इषे त्वोर्जे त्वेति शाखां छिनत्ति ' इति । उभयमपि प्रमाणम् । उभयथाप्यनुष्ठान-पद्धतिर्विद्यते । तत्र कथं छन्दोनिर्णयो भवेत् । एवं सहस्रशः स्थानेषु विद्यते । तस्मात् यजुषां छन्दोनियम एव नास्तीति-वक्तव्यमापतति, तन्निर्णायकप्रमाणाभावात् । नूतने निर्णये तु अप्रामाण्यात् अव्यवस्थादिदोषापत्तेश्च ।

वस्तुतस्तु- यजुर्मन्त्राणामपि छन्दोनियमोऽस्त्येव, एकाक्षरमारभ्य यजुश्छन्दः प्रवृत्तम् । तथा च पिङ्गलच्छन्दःसूत्रम्- ' छन्दः । गायत्री । दैव्येकम् ' इति । अत एव ' ओं ' प्रत्येकाक्षरस्य प्रणवमन्त्रस्य याजुषं दैवी गायत्रीछन्दो निर्दिष्टम्। **' ओमित्येकाक्षरं ब्रह्म। अग्निर्देवता ब्रह्म इत्यार्षम्। गायत्रं छन्दं परमात्मं सरूपम्। '** इति (ना० उ० १९।३३) ' प्रणवस्य ब्रह्मा, ब्रह्मा दैवी गायत्री ' इति च ( आ० परिशिष्टे ) ' ओमिति प्रतिपद्यते एतद्वै यजुः ' ( तै० आ० २।११ ) इति च प्रणवस्य यजुष्ट्वं स्पष्टमेवाम्नातम् ।

ऋचां तु ' **अष्टाक्षरा गायत्री** ' इति नियमः । सा च एकपदा क्वचिद् द्विपदा त्रिपदा च भवति । तत्रापि क्वचित् एक-स्मिन् अक्षरे अक्षरद्वये च न्यूनेऽधिके च ' निचृद् भुरिक् विराट् स्वराड् ' इति गायत्र्याः विशिष्टसंज्ञा प्रसिद्धा । एतेन ऋचामेकाक्षरा दैवी गायत्री छन्दो न भवतीति सिध्यति । तथा च ' छन्दः । गायत्री । दैव्येकम् । आसुरी पञ्चदश । प्राजापत्याऽष्टौ । यजुषां षट् । साम्नां द्विः । ऋचां त्रिः । द्वौ द्वौ साम्नां वर्धेत । त्रींस्त्रीनृचाम् । चतुरश्चतुरः प्राजापत्यायाः। एकैकं शेषे । तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः । चतुरश्चतुरः समाम्न्य एकैका ब्राह्म्यः प्रागयजुषामार्ष्य ' इति । इति पिङ्गलनागप्रणीते वेदाङ्गभूते छन्दःशास्त्रे प्रतिपादितं वैदिकं छन्दोलक्षणम् । तच्च विस्तरशः उत्तरत्र उल्लिख्यते ।

एवं ऋगादिमन्त्राणां ' ऋषिदैवतच्छन्दाँसि ' एतानि त्रीण्येवान्तरङ्गानि भवन्ति । तस्मादृष्यादिज्ञानेनैव तदुच्चारणपूर्वक-मेव वेदमन्त्रविनियोगो विहितः । अन्यथा यातयामतादोषापत्तेः । अतएव शुक्लयजुर्वेदकात्यायनसर्वानुक्रमणीसूत्रे ऋग्वेदे प्रसिद्धानामृचां तत्र दर्शितान्येव ' ऋषिदैवतच्छन्दाँसि । निर्दिष्टानि ' समिधाग्नेयश्चतस्रो गायत्र्यः । समिधा विरूप आङ्गि-रसः ' इत्यादीनि । ऋग्वेदे तु अप्रसिद्धानां केषांचिद्रूपाणां यजुर्मन्त्राणामपि ऋष्यादीनि तैत्तिरीयसायनभाष्ये विनियोग-सङ्ग्रहवार्तिकमुखेन लिखितानि । तत्सर्वं विज्ञाय यथाशास्त्रमेव वेदाध्ययनादिके कृते सर्वं श्रेयस्करं भवेदिति शास्त्राभिप्रायः ।

## देवताविचारः ।

' देवता ' तु मन्त्राधिष्ठात्री, दिव्यवस्तुस्वरूपा· सा च मन्त्रार्थरूपैवेति शास्त्रतत्त्वम् । मन्त्रार्थरूपदेवतास्वरूपज्ञानमन्तरेण प्रयुक्तो मन्त्रो निरर्थकः क्वचिदनर्थकश्च भवति । यद्यपि ' अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र ' ( ऋ० १।३३।९ [उत्तरार्धः] ) इति मन्त्रार्थज्ञानाभावेऽपि मन्त्रशक्त्यैव फलं सेत्स्यतीत्यापाततः प्रतीयते, तथापि फलसिद्धौ शब्दशो मन्त्रार्थज्ञानेऽन्यथा सिद्धेऽपि मन्त्राधिष्ठातृदेवताध्यानं तु अत्यन्तमावश्यकमेव । तथा च मन्त्रवर्णः- **' ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ '** इति ( ऋ० १।१६४।३९ ) मन्त्राधिष्ठातृदेवताज्ञानाभावे मन्त्रप्रयोगानर्थक्यम् । तज्ज्ञाने एव सार्थक्यमित्युक्तं भवति ।

' यस्तित्याज सखिविदँ सखायं । न तस्य वाच्यपि भागो अस्ति । यदीँ शृणोत्यलकँ शृणोति । न हि प्रवेद सुकृतस्य पन्थाम् ' इति । ( तै० आ० १।३।१ ) अत एव ' यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्त्साक्षादेव तद्देवतां प्रीणाति प्रत्यक्षाद्देवतां यजति ' ( ऐ० ब्रा० ३।८ ) इति सर्वेष्वपि यज्ञीयकर्मसु हवनादिषु मन्त्राणां विनियोगे तत्तन्मन्त्र-देवताध्यानं विहितं, तच्च ज्ञानमन्तरा न सम्भवति, अन्यथाऽनर्थोऽपि श्रूयते- ' प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेद-विद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यति ' इति ( छां० उ० १।१०।९ )

कथं देवता मन्त्रार्थरूपा भवितुमर्हति ? मन्त्रार्थस्तु कश्चिदभिप्रायरूपः स्तुत्यादिरूपश्च, देवता तु दिव्या ज्योतिराध्यात्मिका मन्त्रैरुपास्या भवति । अत्र देवता तु मन्त्रार्थाद् भिन्नैवेत्याशयः । अत्रोच्यते– यद्यपि प्रत्येकशः शब्दात् तदर्थाच्च देवता भिन्नैवेति वक्तुं शक्यं, तथापि समग्रमन्त्रार्थस्वरूपैव तदधिष्ठात्री देवतेत्यवश्यमेवाभ्युपगन्तव्यं भवेत् । कुत एतत् ? उच्यते–मन्त्रशरीरा देवता मन्त्रैरेव गम्या च । तेन 'वाच्यवाचकयोरभेदः' इति न्यायेन मन्त्रावयवभूतानां अग्नीन्द्रादित्यादिशब्दानां वाच्यार्थरूपास्तेऽग्न्यादयो देवताः, तद्वाचकशब्दसमूहसङ्ग्रथित एव मन्त्रः । तस्मान्मन्त्रार्थरूपैव देवतेति सम्पद्यते ।

तद्यथा– 'तत्सवितुर्वरेण्यं–' इति– 'यः अस्माकं धियः प्रेरयेत्, तस्य सवितुर्देवस्य तद्वरेण्यं तेजो ध्यायामः' इति प्रत्येकशः शब्दार्थस्य स्तुत्याद्यभिप्रायरूपत्वेऽपि सवितृतेजसो ध्याने तद्वस्तुज्ञानमेव प्रधानम् । अपि च 'अमन्यमानाꣳ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिन्द्र' इत्यत्रापि इन्द्रदेवतासम्बोधनेन स्तुता, तत्र तन्मन्त्राधिष्ठितेन्द्रदेवताज्ञानमन्तरेण तद्वचनमेव न सङ्गच्छते । तस्मात् ऋषिच्छन्दोदैवतानि तानि मन्त्रेमन्त्रे विद्यात् । इति श्रुतिवचनमेव शरणम् ।

तदेतत् तत्र तत्र मन्त्रविनियोगेषु देवतानिर्देशपूर्वकं तत्तद्देवताकमन्त्रविधानं ब्राह्मणे बहुधोपलभ्यते । 'उदु त्यं जातवेदसम्० । चित्रं देवानाम्० । ( तै० सं० १।४।४३।१–२ ) सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोति० ( तै० सं० ६।६।१।४ ) 'अग्न आयूꣳषि पवसे० ।' ( तै० सं० १।५।५।७ ) 'आग्निपावमानीभिरुप तिष्ठते०' ( तै० सं० १।५।७।९ ) 'उदु त्यं जातवेदसम्० ।' ( तै० सं० १।२।८।७ ) सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति० । ( तै० सं० ६।१।११।९ ) 'युञ्जते मनः०' ( तै० सं० १।२।१३।१ ) 'सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयाति० ।' ( तै० सं० ६।२।९।२ ) इदं विष्णुः० इरावती० ।' ( तै० सं० १।२।१३।४–५ ) 'वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति ।' ( तै० सं० ६।२।९।५ ) 'सोमो जिगाति गातुवित्० ।' ( तै० सं० १।३।४।५ ) 'सौम्यर्चा प्र पादयति०' ( तै० सं० ६।३।२।१२ ) 'उरु विष्णो वि क्रमस्व० ।' ( तै० सं १।३।४।४ ) वैष्णव्यर्चा हुत्वा यूपमच्छैति' ( तै० स० ६।३।३।१ ) 'विष्णोः कर्माणि पश्यत०' तद्विष्णोः परमं पदम्० ( तै० सं० १।३।६।१२–१३ ) 'वैष्णव्यर्चा कल्पयति द्वाभ्यां कल्पयति०' ( तै०सं० ६।३।४।१०–११ ) अस्तभ्नाद् द्यामृषभः०' ( तै० सं १।२।८।५ ) 'वारुण्यर्चा सादयति०' ( तै० सं० ६।१।११।६ ) 'मनो ज्योतिर्जुषतां० बृहस्पतिस्तनुतामिमं नः ।' ( तै० सं० १।५।३।७ ) 'बृहस्पतिवत्यर्चोप तिष्ठते० ।' ( तै० सं० १।५।४।७ ) 'उदुत्तमं वरुणपाशमस्मत्०' ( तै० सं० १।५।११।१० ) शुनःशेपमाजीगर्तिं वरुणोऽगृह्णात् । स एतां वारुणीमपश्यत्, इति ऋचां तु ऋग्वेदादिषु प्रसिद्धानि दैवतानि । यजुर्मन्त्राणां तु 'इषे त्वोर्जे त्वा' इत्यादीनां दैवतानि न प्रसिद्धानि । अत एव आहुतिदानानन्तरं वक्तव्ये देवतोद्देशके त्यागे 'मन्त्रोक्तदेवताया इदं न मम' इत्येव याजुषाणां त्यागोच्चारपद्धतिर्विद्यते ।

एवं सति तेषां यजुर्मन्त्राणामप्रसिद्धदेवताकानां नूतना दैवतकल्पना कथं शास्त्रीयतामर्हति ? अत्रोच्यते– मन्त्रे एव प्रतिष्ठितं तद्दैवतम् । तज्ज्ञानमेवावशिष्टं, तत्तु मन्त्रस्थशब्दलिङ्गादेवात्रगम्यते । 'या लिङ्गोक्ता सैव मन्त्रदेवता ।' इति स्पष्टमेवोपदिष्टं सूत्रे । 'यल्लिङ्गं सा देवता, ( ऋ० सर्वा० १।१।३९ ) इति च । अत एव बहुदेवताकस्य मन्त्रस्य सामान्यतः समासेन च वैश्वदेवत्वम् । विभागेन तु विशेषेण अनेकदेवताः लिङ्गोक्ता एव दर्शिताः । तद्यथा कुत्सदर्शने 'तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः' इति सूक्तान्तिमस्य अर्धर्चस्य उभयथा निर्देशः । तथा च ऋक्सर्वानुक्रमसूत्रम् 'इमं षोळश कुत्स आग्नेयं० तन्नो मित्रोऽर्धर्चो लिङ्गोक्तदेवतो यद्दैवत्यं वा सूक्तम्' इति ( ऋ० सर्वा० सू० १।९४ ) 'अस्तु श्रौषळैकादश वैश्वदेवी मैत्रावरुण्याश्विन्यस्तिस्रः ऐन्द्राग्नेयी मारुत्यैन्द्राग्नी बार्हस्पत्या वैश्वदेवी०, वैश्वदेवमेतत्, एवमन्यासामपि सूक्तप्रयोगे वैश्वदेवत्वं, सूक्तभेदप्रयोगे यल्लिङ्गं सा देवता' इति च ( ऋ० सर्वा० १।१३९ )

सत्यमेवेदं, श्रुतं सर्वं ज्ञातं च, विदितमेवेदं सर्वं अस्माकमपि, किमन्यत् ?– ऋचामेवेदं यजुषां तु का कथा ? तत्रापि एवमेव युज्यते । कथं तत् ? मन्त्रलिङ्गादेव यजुषामपि देवता अवगम्यते ।

तद्यथा 'इषे त्वोर्जे त्वा' इत्यस्मिन् इट् शब्दः अन्नवाचकः प्रसिद्धः, तेनास्य 'इट्' एव देवता भवति । किम्–

अन्नमपि देवता भवितुमर्हति ? अथ किम् ?– तर्हि पाषाणमपि दैवतं भवेत् ? ओम् । अन्नधान्यादिकरणोपकरणभूतं उलूखलादिरूपं अश्मापि दैवतं भवति । तथा च शुनःशेपार्षेयो मन्त्रवर्णः ।

' यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥' इति ( ऋ०१।२८।५ )

न केवलं दैवतात्मकं तदन्नं अपि तु साक्षाद् ब्रह्मात्मकमेव । ' अन्नं ब्रह्मेति व्यजानात्, अन्नꣳ हि भूतानां ज्येष्ठम् ' इति च श्रुतिवचनात् । अत एव ' अन्नं न निन्द्यात् अन्नं न परि चक्षीत ' इति अन्ननिन्दादिप्रतिषेधोऽपि श्रूयते । अन्नस्तुतिस्तु वेदे बहुधैवोपलभ्यते । ' पितुं नु स्तोषं महो धर्माणं तविषीम् । ' ( ऋ० १।१८७।१ ) ' त्वे पितो महानां देवानां मनो हितम् । ' इति ( ऋ० १।१८७।६ ) सर्वदा सर्वत्रापि सर्वेऽपि अन्नगतप्राणा एव प्राणभृतः, इति सर्वेषामनुभवसिद्धम्, अस्मिन् युगे तु तद्विशेषतः इति वक्तव्यम् । तत्रापि इदानीं सर्वैरपि प्रतिदिनमनुभूयते ' सर्वारम्भास्तण्डुलप्रस्थमूलाः ' इति प्राचामभियुक्तवचनं प्रसिद्धम् तस्मादस्मिञ्जगति जीवनमेव सर्वपुरुषार्थमूलसाधनभूतम् । ' जीवन् भद्राणि पश्यति ' इति न्यायात् । अन्नेन जीवनं, जीवनेन बलं, बलेन प्राणशक्तिः । प्राणेन बलवृद्धिः । प्राणेन बलेन चायुः । एवं चिरायुषा धर्मकर्मादिसमृद्धिः । तेनैव सर्वपुरुषार्थसिद्धिश्च भवितुमर्हति । अत्र जीवनाधारभूतमन्नमेव प्रधानं मूलभूतं च तदिदं शास्त्रदृष्ट्यैव सिद्धम् । लोकदृष्ट्यापि ज्ञायते । अत एव सा भगवती विश्वसञ्जीवनभूता जगज्जननी अन्नपूर्णाम्बिकैव सर्वेषां प्राणभृतां शरणं सर्वार्थसाधनसमर्थेति सिद्धम् ।

तत्रापि– सर्वेषां प्राणिनां मातृदुग्धमेव प्रथमं जीवनमिति प्रत्यक्षम् । तथापि मातुः शरीरस्य रोगवियोगादिविपत्तिनिमित्तेन माता तु केवलं गर्भधारिणी जन्मदात्री, अथवा निजबालकानामेव जननीति निश्चीयते । तदिह विशेषतः अनाथबालकानां, तथा इतरेषां सर्वेषामपि लोकानां जीवनं पशूनां दुग्धेनैव भवितुमर्हति ।

तत्रापि सर्वेषां पशूनां दुग्धादपि माधुर्यादिसर्वरसातिशयेन स्थैर्यबलायुरारोग्यसत्त्वशुद्धिसत्वबुद्ध्याद्यभिवर्धकगुणेन च गवां दुग्धमेव परमं श्रेष्ठ इति सर्वत्रानुभवसिद्धम् । ' प्रायः पयोऽत्र गव्यं तु जीवनीयं रसायनम् ' इति वाग्भटस्य अष्टाङ्गहृदये स्पष्टतरं वचनम् । एवं गोमूत्रगोमयादिभिरपि बीजक्षेत्रादौ शरीरे च सर्वदोषनिवृत्त्या शुद्धिक्रियया च संस्कारविशेषः आधीयते इत्यपि सिद्धम् । इति सर्वेषां प्राणिनां विशेषतो मानवजन्तूनां सुखजीवनस्थितौ गौर्मातैव मुख्या आधारभूतेति सर्वथा सम्पद्यते । तदिदं ' आप्यायध्वमघ्न्या देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्माः ' इति यजुषा सिद्धम् । अत एव धान्यदुग्धाद्यन्नस्य परंतत्त्वमुपनिषत्सु श्रूयते ।

' यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधारणं द्वे देवानभाजयत् ॥
त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न ।
कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा ॥ यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन ।
स देवानपि यच्छति स ऊर्जमुपजीवति ॥ ' इति ( बृ० उ० १।५।१ )

अत्र– 'एकमस्य साधारणं 'इति सर्वसाधारणं धान्यादिकमन्नं निर्दिष्टम् ।'पशुभ्य एकं प्रायच्छत्' इति च दुग्धनिर्देशः। अनयोरुभयविधयोरेवान्नयोः सर्वाण्यपि अन्नान्यन्तर्भूतानि । यद्यपि ' पशुभ्य एकं ' इत्यनेन पशुसामान्यशब्देन सर्वेषां पशूनां दुग्धं गृहीतुं शक्यं, तथापि गवां दुग्धमेव प्राधान्येनोद्दिष्टमिति उत्तरत्र व्याख्यानादवगम्यते । ' पशुभ्य एकं प्रायच्छदिति तत्पयः, पयोह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति, ' इत्यादि सामान्यतो निर्देशः ' तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद् यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति ' इति ( बृ० उ० १।५।१ )

अत्र जीवनस्य पशुसामान्यदुग्धे उपयुक्तेऽपि नित्याग्निहोत्रादौ गोदुग्धमेवोपयुक्तम् ' पयसा नित्यहोमः ' इति विधाने गोदुग्धमेवोद्दिष्टम् ' ' यस्याग्निहोत्रस्य गौरुपावसृष्टा वाश्येत० दुह्यमानोपविशेत् तामभिमृश्य जपेत् ' यस्माद् भीषा निषीदसि ' इत्यत्र अग्निहोत्रार्थे दुग्धदोहने गोरेव निर्देशात् ( ऐ० ब्रा०५ पं० प्रायश्चित्तप्र० ) । एवं विश्वसञ्जीवनकारणभूतं धान्यदुग्धादिरूपमन्नं यज्ञार्थं यज्ञश्च अन्नार्थकः इति वैदिकं तत्त्वम् । अत एव विश्वजीवनयज्ञमन्तरा केवलं स्वोदरपोषणायैवान्नोपयोगः शास्त्रनिषिद्धः ।

" मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥ " इति ( ऋ० १०।११७।६ )

" तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः । अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ॥ इति च स्मृतिः । एतेन अन्नेन यज्ञसिद्धिः, यज्ञमुखेनैवान्नसम्पत्तिः, तदेतदुभययोगेनैव प्राणसञ्जीवनात् विश्वप्रतिष्ठेति सिध्यति ।

" यज्ञाद्भवति पर्जन्यः, पर्जन्यादन्नसम्भवः । अन्नाद्भवन्ति भूतानि० " इति । ( गीता ३।१४ )

अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ ( इति च मनुः )

एवं श्रुत्यादिवचनानां क्रोडीकरणेन शास्त्रदशा तदर्थविमर्शेन च अन्नस्य विश्वसञ्जीवनैककारणत्वात्, तादृशान्नसम्पदभ्युदये विश्वदेवयज्ञस्यैव प्रधानसाधनत्वेन निश्चयाच्च, तादृशविश्वयज्ञमुखेन यज्ञरूपस्य परमपुरुषस्य प्रसादाद्, अन्नसम्पत्त्या विश्वसञ्जीवनार्थं प्रवृत्तोऽयं यजुर्वेदो, यज्ञप्रधानः इत्युच्यते । तदेतत् " इषे त्वा " इति अन्नदेवतोद्देशकयजनमुखेनारम्भादेव सिध्यति ।

तदेतत् सर्वमपि एतत्प्रथमानुवाकार्थविमर्शनात् स्पष्टं भवति । ' इषे त्वोर्जे त्वा० श्रेष्ठतमाय कर्मणे० आप्यायध्वमघ्न्या देवभागम् । ' ( इन्द्राय भागम् ) ' ऊर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्माः० । ध्रुवा अस्मिन् गोपतौ स्यात० यजमानस्य पशून् पाहि । ' इति यजुर्भिः एतदर्थमेवान्नमुद्दिश्य अन्नपतिं पार्थयन्ते पूर्वे ऋषयो मन्त्रमुखेन ।

' अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः ।
प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ' इति ( तै० ४।२।३।१, वा० य० ११।८३ )

अत एव विश्वसञ्जीवनाय यज्ञाय धान्यगोदुग्धादिजीवनीयान्नात्मकप्रधानसम्पदभ्युदयार्थं सर्वदा सर्वत्रापि समानं एकरूपेण प्रतिष्ठितं सर्वेषामपि स्वतन्त्रसञ्जीवनोपायभूतं स्वानुष्ठितं कृषिगोसेवादिकं लौकिकं साधनमपि ऋषयो मन्त्रमुखेनोपदिशन्ति ।

' अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे वि चष्टे सवितायमर्यः ॥ ' इति ( ऋ० १०।३४।१३ )

' दोग्ध्री धेनुर्वोढाऽनड्वान्, ' ' अनड्वाँश्च मे धेनुश्च म०, आयुर्यज्ञेन कल्पताम् । ' इत्यादि

यद्यपि अस्मिन् देवताविचारे एतावदर्थान्तरव्याख्यानं समयोचितं न भवेत्, तथापि यजुर्वेदस्य यज्ञमुखेन विश्वसञ्जीवनार्थं प्रवृत्तिं दर्शयितुं, सर्वप्राणिजीवनप्रधानान्नदेवतायजनमुखेन तद्वेदारम्भं वर्णयितुं, तथा ' इषे त्वा ' इति मन्त्रे ' इषे ' शब्दार्थस्यान्नस्य विश्वसञ्जीवनभूतप्रधानदेवतात्वं च समर्थयितुं, एतावन्महद्दीर्घव्याख्यानमर्थान्तरेणापि अवश्यकर्तव्यतया प्राप्तम् ।

अन्यथा ' इषे त्वा ' इति मन्त्रस्य तत्त्वसिद्धा अन्नदेवतेति श्रुतिसूत्रादिषु अनिर्देशात् तथा ज्ञातुमशक्यमेवाभविष्यत् । अपि च ऋग्वेदारम्भे 'अग्निमीळे' इति स्तुतः सर्वदेवतात्मकोऽग्निरन्नादो भवति भोक्तृरूपत्वात् । 'अग्निः सर्वा देवताः,' ' अग्निरन्नादः, ' 'अग्निमन्नादमन्नाद्याय' इत्यादि श्रुतेः । यजुर्वेदारम्भे तु भोग्यात्मकं विश्वरूपं अन्नमेवानुश्रुतम् । वस्तुतत्त्वज्ञाने तु उभयोर्भोक्तृभोग्ययोस्तादात्म्येनैव पूर्णता स्यात् । ' अहमन्नम् ३, अहमन्नादः ३। ' ( तै० भृगुप० १०।६ ) इति । तथा ' अहमन्नमन्नमदन्तमद्मि ' इति च स्पष्टं सामरस्यम् । अत एव देवतार्थमेव हविःसिद्धिरुद्दिष्टेति सङ्गच्छते ।

एवं भोक्तृभोग्यरूपेण बीजक्षेत्ररूपेण पुंस्त्रीरूपकेण प्रतिष्ठितयोः, तथा ऋग्यजुर्वेदमुखेऽनुश्रुतयोरग्न्यन्नयोः, तद्वाचकयोः ' अग्नि इट् ' शब्दयोः तथा–तन्मुखेनारब्धयोरवान्तजातिविशिष्टयोः अन्तर्भूतसर्ववेदयोः ऋग्यजुर्वेदयोरपि सामरस्ययोगेन सर्ववेदगर्भरूपे परस्मिन् ब्रह्मणि वाक्पुरुषात्मके ब्रह्मणस्पतौ मातृगर्भे पिण्डस्येव ऐक्येनैव प्रतिष्ठा, तत आविर्भावश्चेति अनेन देवतातत्त्वेन समुन्नीयते । तदिदं परं तत्त्वं महर्षिणा विश्वामित्रेण सर्वदेवतारूपात्मतत्त्वसाक्षात्कारेण ऋङ्मन्त्रमुखेनोद्गीतम् ।

' अग्निरस्मि जन्मना जातवेदाः०...।...अजस्रो घर्मो हविरस्मि नाम ॥ ' ( ऋ० ३।२६।७; वा० य० १८।६६ )
' अजस्रं ज्योतिर्हविरस्मि सर्वम् । ' इति ( साम० ६१३ )

*

अयमेव सर्ववेदात्मकेन वेदद्वयेन सम्पादनीयः परमो यज्ञः। सेयमेव ऋग्यजुर्वेदयजनीया, अन्न-अन्नादात्मिका वाक्पुरुषात्मिका च ब्रह्मणस्पतिस्वरूपा सा परा देवतेति विज्ञेयम्।

एवमेव यजुर्मन्त्रेषु सर्वत्रापि लिङ्गेन शास्त्रदृशा तत्त्वविमर्शनेन च दैवतं समुन्नेयम्। ऋषिच्छन्दोदैवतज्ञानसाहित्येनैव वेदमन्त्राणामध्ययने अध्यापने यजनादिषु विनियोगे परमं श्रेयः इति। 'ब्राह्मणार्षेयच्छन्दो दैवतविद्याजनाध्यापनाभ्यां श्रेयोऽधिगच्छति' इति वचनात्।

अन्यच्चैतद् विशिष्टम्-वेदानां मन्त्रार्थज्ञाने देवतातत्त्वमेव प्रधानम्, दैवतस्यैव मन्त्रार्थरूपत्वात्। 'अग्निमीळे पुरोहितम्' 'अग्न आ याहि वीतये' इति च आविशेषात् ऋक्साम्नोरारम्भे अग्निरेव देवतेति स्पष्टतरम्। यजुर्वेदारम्भे तु 'इषे त्वा' इत्यत्र यद्यपि इट्शब्दवाच्यमन्नमेव दैवतमिति पुरस्तात् सामान्यतः प्रतिपादितम्, तथापि पयःसोमयवादिरूपस्य इट्शब्दार्थस्यान्नस्यापि सोम एव देवतेति सूक्ष्मदृशा विमर्शेनोन्नीयेत। सोमस्यापि तस्य देवान्नत्वेनानुश्रवणात्। 'सोमो जिगाति गातुविद् देवानामिति निष्कृतिम्' इति (ऋ० ३।६२।१३) मन्त्रवर्णः। 'आदित्याच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति च ब्राह्मणम्। (छां० उ० ५।१०।४) अस्माकं तु स सोम एवान्नदाता देवान्नरूपः, तस्मादन्नं तत् सोमदैवत्यमेव। 'इषं तोकाय नो दधदस्मभ्यं सोम विश्वतः।' (ऋ० ९।६५।२१) 'सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे। अनमीवा इषस्करत्' इति मन्त्रवर्णात्। (ऋ० ३।६२।१४)

केवलरसात्मकस्य विशिष्टान्नरूपस्य गोदुग्धस्यापि सोम एव देवता। 'गावः सोमस्य प्रथमस्य भक्षः' इति (ऋ० ६।२८।५) गव्यस्य सोमान्वयत्वेनानुश्रवणात्। 'रौद्रं गविसद् वायव्यमुपावसृष्टमाश्विनं दुह्यमानं' 'सौम्यं दुग्धम्' इति च ब्राह्मणम् (ऐ० ब्रा०)।

एतेन रसात्मकं दुग्धं घनभूतं व्रीहियवादिकमन्नं च सोमदैवत्यमेवेति सिध्यति, सोमरसस्य तु सोम एव देवतेति शब्दत एव सिद्धम्, तदेतत् सर्वमप्यन्नं इट् शब्दवाच्यमेव। अत एव यज्ञार्थं विश्वसञ्जीवनार्थं च तादृशान्नप्राप्तये ऋषिभिः सोम एव प्रार्थितः। 'इषे पवस्व धारया मृज्यमानो मनीषिभिः। इन्दो रुचाभि गा इहि' (ऋ० ९।६४।१३)। 'इषमूर्जं पवमानाभ्यर्षसि।' इति च (ऋ० ९।८७।३५) स च सोमः न केवलमन्नरसादीनामेव देवता, अपि तु अन्नमयस्य मनसोऽपि अधिष्ठाता चेतनरूपो देवतात्मेति प्रसिद्धः। 'इन्द्राय सोम पातवे मदाय परि षिच्यसे। मनश्चिन्मनसस्पतिः' इति (ऋ० ९।११।८)।

सोमदेवताकमान्तर्यं करणरूपं तन्मनस्तु अन्नमयम्। 'त्वे पितो महानां देवानां मनो हितम्।' इति मन्त्रवर्णात्। (ऋ० १।१८७।६) 'अन्नमयꣳ हि सोम्य मनः' इति च ब्राह्मणम्। (छां० उ० ६।५।४) तदिदं मनः दिव्यात् सोमदैवतात् भोग्याद् भौतिकाच्च उत्पद्यते। स च सोमः मनसोऽधिपतिरपि बुध्यादिसर्वेन्द्रियाणां, तथा तत्तद्देवतानां च आविर्भावे कारणीभूतः सन् तेषां वागादीनां अग्न्यादीनां च मिथुनीभूत एव भवति। तथा च मन्त्रवर्णः:-

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः।
जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः॥ इति (ऋ० ९।९६।५)

सोऽयं सोमः परमपुरुषस्य मनस एवाविर्भूतः। 'चन्द्रमा मनसो जातः' इति श्रवणात् (ऋ० १०।९०।१३। तथा समष्टिमननशक्त्याविर्भूतः स सोमः पुनर्व्यष्ट्यात्मकेन मनोरूपेणास्माकं सर्वेषां प्राणभृतामन्तर्हृदये समाविष्टः 'हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमाः०। चन्द्रमा मनो भूत्वा हृदयं प्राविशत्। इत्यनुश्रवणात्। (ऐ० उ० १।१।४) एवं ऋग्यजुर्वेदयोर्द्वयोर्मुखे अग्नि इट् शब्दाभ्यां वाङ्मनःप्रधानमग्नीषोमात्मकं दैवतमेवाभिष्टुतम्। तच्च विश्वरूपं विश्वाधिष्ठानभूतत्वात् 'अग्नीषोमात्मकं जगत्' इति तदनुस्मरणाच्च। तच्च पूर्णमासयागे प्रधानम्। 'अग्नीषोमौ पूर्णमास्याम्।' इति कल्पसूत्रात्।

अथ दुग्धदधिघृतसोमयवादिरूपं इट्शब्दवाच्यं सर्वमप्यन्नं यज्ञार्थमेव, देवतार्थमिति यावत्। अत एवाविशेषेण 'आप्यायध्वमघ्न्या देवभागम्' इति तदेवोद्दिष्टम्। विशेषतस्तु-सर्वदेवतानामिन्द्र एव श्रेष्ठः 'तदिदास भुव-

नेषु ज्येष्ठम्' (ऋ० १०।१२०।१)। 'विश्वस्मादिन्द्र उत्तरः।' (ऋ० १०।८६।१) इति च श्रवणात्। अतः सर्वोऽपि यज्ञः इन्द्रायैव कल्पते, तस्यैव सर्वेश्वरत्वात्। 'इन्द्रो यातोऽवसितस्य राजा, सेदु राजा क्षयति चर्षणीनाम्। (ऋ० १।३२।१५)। 'इन्द्रो विश्वस्य राजति' (साम० ४५६) इत्यादि श्रवणात्। स च इन्द्रः अग्निना मिथुनी भूतः सहैवाविर्भूतश्च। 'मुखादिन्द्रश्चाग्निश्च।' (ऋ० १०।९०।१३) 'यदिन्द्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः।' इति च श्रवणात्। (ऋ० १।१०८।९) तौ चेन्द्राग्नी दर्शयागे प्रधानदेवतास्थानमुपप्राप्तौ। 'इन्द्राग्नी अमावास्यायाम्' इति सूत्रात्। तस्य च गव्यं दध्येव परं हविरिति श्रुतिसङ्केतितम्। 'ऐन्द्रं दध्यममावास्यायाम्' इति तद्विधिः।

अत एवात्यन्तश्रेष्ठयज्ञसिद्धये तत्रापीन्द्रयजनाय तद्धविः साधनाय च गावः प्रार्थ्यन्ते। 'इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या इन्द्राय भागम्' इति (वा० य० १।१) तत्र पयोऽधिष्ठाता सोमोऽपि सहकारी भवति। 'सम्पृच्यध्वमृतावरीरूर्मिणीर्मधुमत्तमा मन्द्रा धनस्य सातये सोमेन त्वाऽऽतनच्मीन्द्राय दधि विष्णो हव्यꣳ रक्षस्व' इति विशेषानुश्रवणात्। (तै० सं० १।१।३।८-१०) एवमग्नीषोमाभ्यामिन्द्राग्निभ्यां च सर्वोऽपि यज्ञः सम्पद्यत इति सिध्यति। तादृशयागसिद्धौ 'यागस्य द्वे रूपे द्रव्यं देवता च।' इति वचनेन देवतादिवत् आन्तर्यमुपकरणमपि भवति। अग्निरेव वाक्, अन्नपतिः सोम एव मनः। ताभ्यामग्नीषोमाधिष्ठानभूताभ्यां वाङ्मनसाभ्यामेव सर्वयज्ञसम्पत्तिरनुश्रूयते। 'वाचा च हि मनसा च यज्ञो वर्तते, यज्ञस्य वै मनश्च वाक् च वर्तन्यौ' (ऐ० ब्रा० ५।५१) 'अयं वै यज्ञो योऽयं पवते० तस्य मनश्च वाक् च वर्तनी।' इति च। (छां० ४।१६।१)

यथा खलु एकेन पादेन चक्रेण वा गच्छन् पुरुषो रथश्च न प्रचलति, किं तु पतत्येव। एवं वाचा मनसा वा एकेनैव करणेन प्रवृत्तः, ऋचा यजुषा वा एकेनैव वेदेन आवर्तितो यज्ञोऽपि भ्रश्यत्येव। 'वागेव ऋग्वेदो मनो यजुर्वेदः' (बृ० उ० १।४।५) इति वचनात् वाङ्मनसयोर्योगेन, अग्नीषोमयोः साहित्येन, ऋग्यजुर्वेदयोः सहप्रयोगेनैव यज्ञसिद्धिः, तथा तत्त्वत्रय सहित एव यज्ञः पूर्णो भवति। तदेतत् परं तत्त्वं दर्शयितुमेव 'अग्निमीळे, इषे त्वा' इति मन्त्रमुखेनारब्धं तदिदं वेदद्वयम्। तथा च मन्त्रवर्णः 'इषं दुहन्त्सुदुघां विश्वधायसं यज्ञप्रिये यजमानाय सुक्रतो। अग्ने घृतस्नुस्त्रिर्ऋतानि दीद्यद्वर्तिर्यज्ञं परियन्त्सुक्रतूयसे। (ऋ० १०।१२२।६) इति। 'अग्निरिषां सख्ये ददातु न ईशे यो वार्याणाम्।' इति च। इति उभयवेदतत्त्वसहकारेणैव सर्वो योगो यज्ञश्च सिध्यतीति सर्वथा सम्पद्यते।

एवं सर्वयज्ञसिध्यर्थं तद्द्वारा विश्वसञ्जीवनार्थं च उपयुक्तस्य दुग्धधान्यादिरूपान्नस्य सम्पत्त्यै सोम एव इषे त्वेति। येन हि सा इट् ऊर्क् च लभ्येत तस्यैव प्रार्थना युक्ततरा। तच्च सोमादेवेत्यनुश्रूयते। 'इषे पवस्व धारया मृज्यमानो मनीषिभिः। इन्दो रुचाभि गा इहि।' (ऋ० ९।६४।१३) 'इषमूर्जं च पिन्वस इन्द्राय मत्सरिन्तमः' इति च (ऋ० ९।६३।२)। इन्द्रादिदेवेभ्यो मनुष्यादिसर्वप्राणिभ्यश्च इषं ऊर्जं बलं च सोम एव ददाति। तस्माद् यजुर्वेदारम्भे 'इषे त्वोर्जे त्वा' इति प्रथमस्य यजुर्मन्त्रस्य इट् शब्दवाच्यान्नाधिष्ठाता सोम एव प्रधानदेवतेति सिद्धम्।

## वेदार्थ-विमर्शः।

अथ वेदानामर्थविषयकं विमर्शनं किञ्चित् प्रस्तूयते। 'वेदार्थः' अवश्यं ज्ञातव्यः, 'योऽर्थज्ञ इत्सकलं भद्रमश्नुते' इति वचनात्।

१- तत्र केचित् प्रत्यक्षैकप्रमाणवादिनः आधिभौतिकं तत्त्वमेव प्रधानं मन्वानाः सर्वेषां वेदानां भौतिकार्थपरतामेवोपवर्णयन्ति। तथा प्रत्यक्षाणामग्न्यादित्यादितेजोविभूतीनां केवलं भौतिकं रूपमभ्युपगच्छन्ति।

२- अन्ये तु अनुमानमपि प्रमाणमभिमन्यमानाः 'सर्वं तदिन्द्र ते वशे' (ऋ० ८।९३।४ [उत्तरार्धः]) देवाधीनं जगत्सर्वं' इति वचनेन अधिदैवतं परोक्षं तत्त्वमेव प्रधानमङ्गीकुर्वन्तः सर्वजगत्कारणत्वेन तत्परमीशतत्त्वं साधयन्ति। तथा कारणज्ञानेन कार्यज्ञानस्याप्यर्थात्सिद्धत्वात् 'एकस्मिन्विदिते सर्वमिदं विदितं भवती'ति प्रतिज्ञया तत्परादेवतात्मकब्रह्मवस्तु-

परतयैव सर्वेषां वेदानां समन्वयेन वाक्यानि योजयन्ति ।

३- अपरे तु अनुभवैकतत्त्वप्राधान्येन अनुभवोदितशब्दप्रमाणवादिनः अपरोक्षं स्वतःसिद्धं नित्यप्राप्तं अन्तरात्मवस्तुतत्त्वमेव सर्वेषां मूलभूतमित्यभिमन्यमानाः आध्यात्मिकार्थपरतयैव सर्वेषां वेदानामर्थं समर्थयन्ति ।

४- परे तु सदसद्विषयकविधिनिषेधपरप्रवृत्तिनिवृत्तिरूपक्रिययैव सर्वपुरुषार्थसिध्या स्वात्मसार्थक्यं मन्वानाः तादृशक्रियारूपस्य धर्मस्य यज्ञत्वसिद्धेः सर्वेश्वरस्य तस्य परमपुरुषस्य यज्ञेनैव यजनीयत्वाच्च अधियज्ञपरतयैव सर्ववेदार्थमुपवर्णयन्तः यज्ञार्थमेव सर्ववेदप्रवृत्तिं स्वीकुर्वन्तः ब्राह्मणादिकल्पमुखेन सर्वान्वेदमन्त्रान्यज्ञीये कर्मणि विनियोजयन्ति ।

५- इतरे लौकिकास्तु आदिसृष्टिमारभ्य अद्ययावत् सम्भूतं वर्तमानं भविष्यच्च लोकचरितमेव सर्वत्र विषयेषु सर्वेषां मार्गदर्शकत्वेन प्रधानं प्रमाणं मन्वानाः ऋग्वेदादिषु प्राचीनेषु वाङ्मयेषु प्राचीनलोकचरितोल्लिखननिरीक्षणेन ऐतिहासिकपरतयैव सर्वेषां वेदानामर्थं युक्तं कामयन्ते ।

६- केचित्तु पाश्चात्यपण्डिताः प्रायोगिकेन विधानेन प्रत्यक्षसिद्धं युक्त्या साधितं तथैव पुनः प्रक्रियया साधयितुं शक्यमेव सर्वथा प्रमाणास्पदं फलोदये समर्थं च भवितुमर्हतीति मन्वानाः शास्त्रोदितस्य विषयस्य प्रत्यक्षीकरणार्थं प्रयतमानाः सन्तः तत्त्वसंशोधने प्रवृत्ताः तत्परतयैव वेदार्थं कल्पयन्ति । तथा वेदे स्वस्वभाषासदृशशब्ददर्शनात् तत्र प्राचीनस्वात्मीयस्वदेशीयेतिहासादिकल्पनया वेदानामपि स्वात्मीयतामभिमन्यमानाः तत्प्रामाण्याङ्गीकारेण स्वात्मीयानामार्षेयवंशसम्भूतिमपि स्वीकुर्वन्ति ।

७- एवं बहुधा मतावलम्बनेन प्रवृत्तेषु स्वं स्वं मतमेव सत्यं प्रधानं चेति विवदमानेषु एतेष्वेव पुनः केचित् ' यद् दृष्टं तन्नष्टम् ' इति सर्वलोकप्रत्यक्षसिद्धेन न्यायेन सर्वस्यास्य जगतः असत्यत्वात् सत्यैकवस्तुतत्त्वमेव नित्यसिद्धं मन्वानाः तादृशसत्यवस्तुतत्त्वैकपरतया साक्षात् परम्परया वा सर्वेषां वेदानां अद्वितीयब्रह्मात्मवस्तुतत्त्वपर्यवसायितां तद्विज्ञानैकपरतां च दर्शयन्ति ।

८- तथा केचिदन्ये तु सत्यैकवस्त्वाविर्भूतत्वात् सर्वस्यास्य सत्यत्वभावनया यथा दृष्टं द्वैतवस्तुतत्त्वानुरोधेनैव सर्वं वेदार्थं समर्थयन्ति ।

९- एवं ' भिन्नरुचिर्हि लोकः ' इति न्यायात् तत्त्वभेदेन अन्यथाऽन्यथा व्याख्यानेऽपि ज्ञानोपासनाकर्मणां अन्यतमस्य प्राधान्यं मन्वानाः केचित् तत्तत्परतयैव वेदार्थं योजयन्ति । तदेतत्सर्वमपि यथार्थमेव शास्त्रचिन्तकानां विदुषामभिमतं तत्त्वम् ।

१०- वस्तुतस्तु प्रत्यक्ष-परोक्षापरोक्षभूतानां आधिभौतिकाधिदैविकाध्यात्मिकतत्त्वानां प्रत्यक्षानुमानागमप्रमाणप्रधानानां ज्ञानोपासनाकर्मणां च सामरस्ययोग एव सर्ववेदसिद्धान्तार्थ इति–दैवरातः ।

तदेतदेव वेदस्यातिवैचित्र्यं महत्सन्तोषास्पदं च, यत् खलु सर्वेषामप्यानुकूल्येन समन्वयात् स्वस्वाभिमतानुरूपं नेतुं शक्यते वेदः इति, सोऽयं वेदः आदित्यादिसार्वभौमज्योतिर्विभूतिरिव यौगपद्येन सर्वत्रापि प्रकाशमानः सर्वेषामपि स्वात्मीयाद्यभिमानास्पदीभूतः सर्वाश्रयभूतः दर्शनाकाङ्क्षार्हः सर्वाकाङ्क्षासम्पूरणसमर्थश्च भवति ।

अपि च आदिसृष्टिमारभ्य वसिष्ठादिमहर्षिमुखाद्वेदाविर्भावानन्तरं अद्ययावत् ब्राह्मणारण्यकोपनिषदादिरूपेण प्राचामृषीणां, भाष्यादिमुखेन यास्कसायनशङ्करप्रभृतीनामाचार्याणां, पुराणादिमुखेन व्यासादीनां च संवृत्तं वेदार्थोपव्याख्यानम्, तथाप्यद्याप्यसमाप्तमेव, तथैव पुनर्नवनवतरविचारव्याख्यानतत्त्वसंशोधनाद्यास्पदीभूतः सन्नेव वेदः सर्वेषां परमाश्रयं व्याख्यानावकाशं च ददाति । सम्प्रति अस्मिन् भूमण्डले सर्वेष्वपि देशेषु प्रचलितं वेदार्थव्याख्यानं पुनः नूतनं नूतनं तत्त्वसंशोधनं च नाद्यापि पारं गतम्, मन्ये एवमेवाप्रलयं विचारे प्रवर्तमानेऽपि वेदार्थव्याख्यानं समापयितुं कल्पान्तरेऽप्यशक्यमेव भवेदिति । तदेतदेव वेदस्य परं माहात्म्यं कल्पनातीतमानन्त्यं चेति युक्तमुन्नीयते ।

अत एव वेदपुरुषस्य ब्रह्मणस्पतेः परं माहात्म्यमनुश्रूयते । तथा च गृत्समदार्षेयो मन्त्रवर्णः–' सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवत् । ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनम् । ' इति

( ऋ० २।२३।४ )। हे ब्रह्मणस्पते वेदपुरुष ! त्वं त्वदाश्रितं जनं सुनीतिभिः सन्मार्गेण नयसि, त्रायसे च तेनैव, यः खलु तुभ्यं हृदयं ददाति तं परं पाप्मदोषादिकं न प्राप्नोति, त्वं वेदद्वेष्टृणामीशद्वेष्टृणां च तापकः, मन्युमीः– क्रोधादिवृत्तिशामकोऽसि, अतः हे बृहस्पते ! तव एतादृशं महत्तरं पूज्यं माहात्म्यमिति । एतेन वेदाश्रयात् सन्मार्गप्रवृत्तिः, आत्मरक्षा, पापादिदोषनिवृत्तिः, प्रतिबन्धकाज्ञानादिनिवृत्तिः, आत्मशान्तिः, इत्येवमादीनि फलानि भवन्तीति सम्पद्यते ।

किम् इतोऽप्यस्ति किञ्चिदधिकं वेदस्य सामर्थ्यम् ? ओम्, उपासकस्य सर्वतः परित्राणम् '**गायन्तं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता**' इति वचनोदितम् सा वेदमाता गायत्री ज्ञानप्रदानेन उपासकं सर्वथा त्रायते । अत एव सा वेदमाता गायत्री ज्ञानादज्ञानाद्वा केनचित् परित्यक्तापि हिततमा सती मातेव नैनं परित्यजन्तं सा परित्यजति । ज्ञानोदयानन्तरमपि विज्ञानात्परित्यजन्तोऽपि नैव तां हृदयात् परित्यक्तुं शक्नुवन्ति । एकदा उपदेशतोऽन्तर्हृदये श्रोत्रमुखात्प्रविष्टा सती स्वमात्मानमुपस्पृशन्ती सा गायत्री सकृच्छ्रवणोच्चारणादिमात्रेण संस्कारावशिष्टा उपासकेन परित्यक्तापि मृतमप्येनं केवलं शरीराद्विमुक्तममृतमन्तरात्मानं न परित्यजति, एवं परममर्थं तस्मिन् प्रकाशयितुं सेयं गायत्री मृतमप्येनमृतं भावयति, मृतमप्येनममृतमनुगच्छति, तमेनं पुनर्ब्रह्मसाक्षात्काराय प्रणयति । साक्षाद् ब्रह्मैव भावयति, ब्राह्मणमेव तं प्रज्ञानेन करोति । सेयं सत्या प्रतिज्ञा भगवत्याः वाचो देव्या वेदमन्त्रमुखेनोदिता—

'**अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः ।**

**यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥** इति, ( ऋ० १०।१२५।५ )

वेदमन्त्राणां अर्थविषये बहुधा मतभेदो दर्शितः । तत्र तत्त्वत्रयसामरस्यं यत्प्रतिज्ञातं तदेव किञ्चिद्विमृश्यते । '**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ।**' इति ( ऋ० १।१।१ ) ऋग्वेदारम्भेऽग्निः संस्तुतः । तस्यास्य अग्निशब्दस्य शक्तिस्तु योगाद्रूढेश्च केवले भौतिकेऽग्नावेव भवति तस्यैव प्रत्यक्षत्वात् सर्वेषाम् । न खलु देवतारूपः आध्यात्मकश्चाग्निर्नं कस्यचिदपि दृश्यते । शक्तिग्रहमन्तरेण लौकिको वैदिकश्च व्यवहारो भवितुं नार्हति । तस्मात् शक्तिग्रहानुरोधेन प्रत्यक्षोऽयं भौतिकोऽग्निरेव ज्ञातुं शक्यो नान्यः, तथापि शास्त्रदृशा तत्त्वत्रयोपहितोऽग्निरेव वेदे ज्ञातव्यः प्राधान्येन ।

तद्यथा '**अग्निमीळे**' इत्यत्रैव वेदो पुरःस्थितस्याग्नेः यज्ञे मन्त्रेण देवतात्वे सिद्धे साधितव्येऽपि प्रत्यक्षं भौतिकत्वं न हीयते, तच्च '**पुरोहितम्**' इति विशेषणेन गम्यते । तस्यास्य पुरस्थितस्यैव भौतिकाग्नेरेव वेदमन्त्रेण सिद्धं देवतात्वम्, तदेवाग्नेरधिदैवतं तत्त्वम् । तच्च '**यज्ञस्य देवम्**' इति विशेषणेन गम्यते । दर्शपूर्णमासादियज्ञेषु होतुः देवानामाह्वातुः तथा वषट्कारेण देवेभ्यो हविः प्रदातुः होतृनामकस्य ऋत्विजः ऋङ्मुखेन वाचिककर्मानुष्ठानाद्वाग्रूपत्वाच्च अग्निरूपत्वं प्रसिद्धम् । तच्च '**ऋत्विजं होतारम्**' इति विशेषणेन गम्यते । तत्रापि ऋत्विक् शब्दस्य प्रधानार्थत्वेन ऋत्विङ्मुखेन याजयितुः स्वयं यष्टुः यजमानस्यैव ग्रहणात् '**आत्मा यज्ञस्य पूर्व्यः**' ( ऋ० ९।२।१० ) '**तस्यैवं विदुषे यज्ञस्यात्मा यजमानः**' इति च ( ना० उ० १९।८० ) श्रुतेः अग्नेर्यजमानस्वरूपत्वं तच्चाग्नेराध्यात्मिकं तत्त्वम् । '**रत्नधातम-**' मिति विशेषणेन अग्नेरेव फलप्रदातृत्वं गम्यते । तच्च तत्त्वत्रयपूर्णं पारमैश्वर्यस्वरूपम् । '**फलमत उपपत्तेः**' ( ब्र० सू० ३।२।३८ ) इति ईश्वरस्यैव फलप्रदातृत्वनिर्णयात् ।

एवमेकस्मिन्नेव मन्त्रे अग्निशब्दार्थस्य तत्त्वत्रयसामरस्यमेव प्रतिष्ठितम् । तस्माद्यथोपदेशं यथाश्रुतमेव गृहीतं तत्पूर्णं भवति ।

## तत्त्वत्रयं ।

अथ जिज्ञासूनां हिताय विदुषां प्रमोदाय तत्त्वत्रयसामरस्यपूर्णमग्नेस्तत्परं तत्त्वस्वरूपं किञ्चित् स्पष्टीक्रियते । अत्र स्थूलोऽयं पार्थिवः प्रत्यक्षो बाह्यो भौतिकोऽग्निरिति सर्वत्र सुप्रसिद्ध एव, सोऽयमग्निः काष्ठलोष्ठाश्मादिसङ्घर्षणादुदितः काष्ठं कृष्णाङ्गारादिकं च पार्थिवं पदार्थजातमभिव्याप्तः सन् परिज्वलन्, यद्यपि परिच्छिन्नः काष्ठलोष्ठाद्युपाध्यनुरूपः स्थूलः सूक्ष्मः दीर्घः वर्तुलादिरूपश्चानुदृश्यते, तथापि तन्मूलं स्वरूपं तु अतिसूक्ष्मं पार्थिवं परमाणुमन्तरेण द्रष्टुमशक्यं समग्रायां पृथिव्यां व्याप्तमेव भवति । '**समिद्धो अग्निर्निहितः पृथिव्याम्**' इति ( ऋ० २।३।१ ) श्रुत्युदितं युक्तिसहं प्रत्यक्षसिद्धं सर्वसम्मतमेव ।

अयमेव दिविस्थितः दिव्योऽग्निरित्युच्यते । स च आदित्यात्मकोऽस्यैव मूलभूतः । दिवि द्योतमानमादित्यज्योतिरेव यदा पार्थिवे काष्ठादौ प्रविष्टः सन् परिज्वलति स एवाग्निर्भवति । तदिदं प्रत्यक्षं काचमणेरादित्यतेजसैवाग्नेराविर्भावात् । तस्मात् सवितुरेवायमंशभूतः पार्थिवोऽग्निरिति स्पष्टम् । अत एव द्रव्ययज्ञे काष्ठादग्निं मन्थन्तोऽपि तदुदयार्थं सवितारमेव संस्तुवन्ति, प्रार्थयन्ते च सवितुरेवांशम् । तथा श्रुतिविधानात् । 'अग्नये मथ्यमानायानु ब्रूहीत्याह सावित्रीमृचमन्वाह ।' इति ( तै० सं० ६।३।५।९-१० ) 'अभि त्वा देव सवितरिति सावित्रीमन्वाह ' इति ( ऐ० ब्रा० १।१६ )।

तत्र अग्निमथने 'मन्थता नरः कविमद्वयन्तं ' इति ( ऋ०३।२९।५ ) स्पष्टमग्निमथनलिंगकं मन्त्रं विहाय किमर्थं सावित्रीमृचं स्तोतुं विहितम् ? सवितुः सकाशादेवाग्निरुत्पद्यत इति । 'तदाहुर्यदध्वर्युरग्नये मथ्यमानायानुवाचाहाथ कस्मात् सावित्रीमन्वाहेति सवितृप्रसूतो ह्येष ' इति ( ऐ० ब्रा० १।१६ ) स्पष्टम् ।

'अभि त्वा देव सवितरीशानं वार्याणाम् । सदावन् भागमीमहे ( ऋ०१।२४।३ ), हे देव ! सवितः सर्वेषामीशानं त्वामभिलक्ष्य हे सदावन् ! तव भागं अंशरूपमग्निं इच्छामः इति । तस्मादयं दिव्योऽग्निः ।

अयमेवाशनिरूपेणान्तरिक्षेऽन्तर्हितो वैद्युतोऽग्निरिति कथ्यते । यदा तु अन्तरिक्षात्पतितोऽशनिः पृथिवीमुपस्पृशति स एवाग्निर्भवति । एवं पृथिवीमन्तरिक्षं द्युलोकं चाभिव्याप्तोऽग्निरेव भौतिकः ।'प्रत्यग्निरुषसो जातवेदा अख्यद्देवो रोचमाना महोभिः '। ( ऋ० ४।१४।१ ) 'आ प्रा द्यावापृथिवी अन्तरिक्षं वि सूर्यो रश्मिभिश्चेकितानः ।' इति ( ऋ० ४।१४।२ )।

अत एवैतास्तिस्रस्तन्वः अग्नेरिति श्रूयते । 'या ते अग्ने अयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा० स्वाहा ' इति, ( तै० सं० १।२।११।५-७। वा० य० ५,८ ) तदिदमग्नेर्भौतिकं तत्त्वम् । अत्र अग्नेर्भौतिकत्वे पार्थिवत्वेऽभ्युपगम्यमानेऽपि अस्ति किञ्चिद्वैशिष्ट्यमितरेभ्यः पार्थिवपदार्थेभ्यः । किं तत् ? आत्मसात्करणसामर्थ्यम् । प्रत्यक्षसिद्धमेवेदं अग्नेः स्पर्शेन सर्वमपि पार्थिवं पदार्थजातमग्निस्वरूपमेव भवतीति, साक्षादग्निरेव भवति । एवमेव आग्निशब्देन देवतात्माऽपि ग्राह्यः । यस्मिन् खलु सर्वदेवताभ्यो हविर्हूयते सः सर्वदेवतान्तर्यामिरूप एव भवति, उक्तं आदित्याद्यन्तर्यामित्वमग्नेः, अत एव सर्वदेवतानां प्राथम्यमग्नेरेवानुश्रूयते । 'अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ' इति ( ऋ० १।२४।२ )। नहि केवले भौतिकेऽग्नौ प्रक्षिप्तं हविर्देवान्प्रतिगच्छति एतेन अग्निरेव सर्वासां देवताना मुखमिति सिध्यति । अत एव सर्वाभ्यो देवताभ्यो हविरग्निमुखे एव हूयते । 'यच्चिद्धि शश्वता तना देवंदेवं यजामहे । त्वे इद्धूयते हविः ।' इति ( ऋ० १।२६।६ )। एवमग्नेराधिदैवतं तत्त्वम् ।

अस्माकं सर्वेषां प्राणिनां शरीरान्तःस्थो वैश्वानर एवाध्यात्मिकोऽग्निः, येनान्तर्भुक्तमन्नं पच्यते । सोऽयं भौतिकोऽग्निरेव वैश्वानररूपेणोदितः 'अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः ' इति मन्त्रवर्णात् । ( ऋ० ८।४३।९ ) 'जन्मञ्जन्मन्निहितो जातवेदाः ' इति च ( ऋ० ३।१।२० )। चेतनात्मनो यत्रयत्र प्रादुर्भावः तत्रतत्र सर्वत्रापि जातवेदाः सर्वज्ञोऽग्निः प्रतिष्ठित इत्यर्थः । सर्वेषु बीजेष्वपि अग्निर्विद्यते । तस्मात् स्थावरजङ्गमानामात्मेति अभिप्रायः । 'समिद्धो अग्निर्निहितः पृथिव्यां प्रत्यङ् विश्वानि भुवनान्यस्थात् ' इति । ( ऋ० २।३।१ ) स्पष्टोऽर्थः । 'अग्ने विश्वतः प्रत्यङ्ङसि त्वम् ' इति च ( ऋ० १०।७९।५ ) एतेन पार्थिवाग्नेर्भौतिकात् देवताग्नेश्च न भिद्यते वैश्वानरोऽग्निरित्युक्तं भवति ।

अन्तरपि सोऽयमग्निस्त्रेधा प्रतिनिहितः 'ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति ' च । ( गर्भोप० १७।५ ) एवं अग्न्यादिशब्दैः तत्तदर्थानां आधिभौतिकादितत्त्वत्रयसामरस्येनैव यत् ज्ञानं भवेत् तदेव पूर्णम् । यद्यपि अग्न्यादिशब्देन भौतिकाग्न्यादिमात्रज्ञानेऽपि तत् ज्ञानमेव, तथापि तावता अग्न्यादेः स्वरूपतो व्याप्तिर्न ज्ञायते । तस्मात् तत्त्वत्रयसामरस्ययोगेनैव ज्ञानं सर्वत्रापि प्रधानम् ।

सवित्रादीनामपि एवमेवोन्नेयम् । 'प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् । प्रत्यङ् विश्वं स्वर्दृशे ।' इति ( ऋ० १।५०।५ )।

हे सवितः ! त्वं देवानां विशः प्रजाः सर्वा देवताः प्रति प्रत्यङ् अन्तः उदेषि, ( तदधिदैवतम् ) उत मानुषान् प्रत्यङ् उदेषि, चेतनात्मना रूपेण तदध्यात्मम् । तथा विश्वं सर्वमिदं जगत् प्रति प्रत्यङ् स्वर्लोके दिवि दृशे दर्शनाय प्रत्यक्षं उदेषि इति । तदधिभूतं प्रत्यक्षत्वात् । एवं तत्त्वत्रयसामरस्येनैव सवितुर्ज्ञानं पूर्णं भवति ।

परमपुरुषस्यापि तदेतत्समानम् । 'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानो यदन्नेनातिरोहति।' इति (ऋ० १०।९०।२; वा० य० ३१।२), अस्यायमर्थः– अत्र भूतं, वर्तमानं, भाव्यं च सर्वमिदं जगत् यद् दृश्यते, तदिदं सर्वं पुरुष एव, पुरुषादेव आविर्भूतत्वात्, कार्यकारणयोरभेदाच्च । तदिदं भौतिकं तत्त्वं पुरुषस्य यद्विश्वरूपत्वम् । 'उतामृतत्वस्येशानः' अपि च अमृतत्वस्यापि ईशानः दिव्येन स्वेनामृतत्वरूपेण प्रतिष्ठितः स पुरुष एव, तदेतत् अधिदैवतं पुरुषस्य परोक्षं तत्त्वं स्वरूपात्मकम् । 'यदन्नेनातिरोहति' यत् खलु स पुरुषः अन्नेन अन्नमुखेन अतिरोहति सचेतनात्मकजीवरूपेणाविर्भवति सोऽपि पुरुष एव, तदिदमपरोक्षमाध्यात्मकं तत्त्वम् । एवं तत्त्वत्रयेऽपि स एक एव पुरुषोऽनुस्यूत इत्यर्थः ।

एतदेव पूर्णं ज्ञानम्, अन्यथा एकदेशीयज्ञानापत्तेः । 'स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषः ( बृ० उ० १,४,७ )' इति वचनसिद्धन्यायात् । एवं सर्वत्राप्यवगन्तव्यम् ।

अत एवोपनिषत्सु एकस्यापि वस्तुतः अनेकतत्त्वयोगेनैव स्वरूपोपवर्णनं दृश्यते– तथाहि–वाङ्मनःप्राणानां तत्त्वनिर्वचनम्– 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् इति' ( छां० उ० ६।५।४ ) इति त्रिकरणानां भौतिकत्वम् 'त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मने ऽकुरुत०, एतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः' इति आत्मन वाङ्मनःप्राणमयत्वं प्रतिज्ञातम् ( बृ० उ० १,५,३ ) ततश्च 'त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः' इति, अधिलोकं तत्त्वम् । 'त्रयो वेदा एत एव वागेव ऋग्वेदो मनो यजुर्वेदः प्राणः सामवेदः' इत्यधिविद्यं तत्त्वम् । 'देवाः पितरो मनुष्या एत एव वागेव देवाः मनः पितरः प्राणो मनुष्याः' इति अध्यात्मं तत्त्वम् । 'माता पिता प्रजैत एव मन एव पिता वाङ् माता प्राणः प्रजा' इत्यधिप्रजं तत्त्वम् । 'विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यच्च किञ्च विज्ञातं वाचस्तद्रूपं० यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं०, यत्किञ्चाविज्ञातं प्राणस्य तद्रूपम्०' इति अधिज्ञानतत्त्वम् । 'वाचः पृथिवी शरीरं, मनसो द्यौः शरीरम्, प्राणस्यापः शरीरम्' इति च पृथक् पृथक् तत्त्वानि निर्दिष्टानि । तथा 'एते सर्वे एव समाः सर्वेऽनन्ताः' इति दर्शितम् । एवं वाङ्मनःप्राणानां अधिलोकादितत्त्वयोगः । 'अधिलोकमधिज्यौतिष-( मधिविद्य ) मधिप्रजमध्यात्मम्' इति च पञ्चतत्त्वानां योगः अन्यत्र अन्यथा उपदिष्टः ।

क्वचित्तु पञ्चेन्द्रियाणां योगः तथा तेषां अधिदैवतं अधियज्ञं च तत्त्वमुपदिष्टम् । 'वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीत्' इति ( ना० उ० १९।८० ) । अन्यत्रैतेषामधिदैवतं तत्त्वमुपदिष्टम् । 'अग्निर्वाग् भूत्वा मुखं प्राविशद् वायुः प्राणो भूत्वा नासिके प्राविशद् आदित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद् दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्०, चन्द्रमा मनो भूत्वा हृदयं प्राविशत्' इति (ए० उ० १,२,४) । तथा च मन्त्रवर्णः– 'चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत । दिशः श्रोत्रात् ।' इति च ( ऋ० १०।९०।१३; वा० य० ३१।१२ ) । एवं अधिभौतिकाधिदैवताध्यात्मादितत्त्वयुक्तानां वाङ्मनःप्राणचक्षुःश्रोत्ररूपाणां करणानां योगेनैवायमात्मा परमपुरुषरूपो ज्ञेयः उपासनीयो यजनीयश्चेति सम्पद्यते । अत्र अधिलोकाधिविद्याधियज्ञादितत्त्वानामपि तत्त्वत्रये एवान्तर्भावो ज्ञेयः, तत्र तत्त्वत्रयस्यैव प्राधान्यात् । 'स प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येष' इति ( बृ० उ० १,४,७ ) इति एकैककरणयोगेनास्य ज्ञानोपासनादिप्रतिषेधः । 'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयः' इति च ( बृ० उ० ४,४,५ ) । अपि च 'योऽसावादित्ये पुरुषः सोऽसावहम् ।' ( वा० य० ४०।१७ ) 'स

यश्चायं पुरुषे यश्चासावादित्ये, स एकः ' इति ( तै० भृगू० १०,४ ) ' स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति तदप्येतदृषिणोक्तम् ' चित्रं देवानाम्० सूर्य आत्मा जगतस्तस्थुषश्चेति (तै० सं० १,४,४३,२); एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते० एनं सर्वेषु भूतेषु० एतद् ब्रह्मेत्याचक्षते स एष संवत्सर समानः चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा इति । ' ( ऐ० आ० २,२,९ ) एवं सर्वत्रापि वेदेषु सर्वकरणयोगेन सर्वतत्त्वसामरस्येनैव पुरुषस्य ज्ञानोपासनायज्ञादिकं विहितमिति प्रतिज्ञातं सर्वं सुसम्पन्नम् ।

तथा च तृचं भरद्वाजार्षेयं वैश्वानराग्नेयम्—

' अयं होता प्रथमः पश्यतेममिदं ज्योतिरमृतं मर्त्येषु । अयं स जज्ञे ध्रुव आ निषत्तोऽमर्त्यस्तन्वा३ वर्धमानः ' ॥ ४ ॥

' ध्रुवं ज्योतिर्निहितं दृशये कं मनो जविष्ठं पतयत्स्वन्तः । विश्वे देवाः समनसः सकेता एकं क्रतुमभि वि यन्ति साधु ' ॥५॥

' वि मे कर्णा पतयतो वि चक्षुर्वी३दं ज्योतिर्हृदय आहितं यत् । वि मे मनश्चरति दूर आधीः किं स्विद्वक्ष्यामि किमु नू मनिष्ये ' ॥६॥ इति ( ऋ० ६,९,४-६ ) । अस्यार्थस्तु एतावत्पर्यन्तमुपन्यस्त एव अग्न्यादीनां तत्त्वत्रयसामरस्यं, तथा आत्मनोऽपि सर्वेन्द्रिययोगेन ज्ञानोपासनायज्ञादिसिद्धिरिति ग्रन्थविस्तारभियोपसंह्रियते ।

एवं तत्त्वप्रयुक्तानां मन्त्राणां अग्न्यादिदेवतालिङ्गात् तत्र तत्र आग्नेयादिषु यज्ञीये कर्मणि विनियोगो विहितः ॥ न चैते मन्त्रास्तद्विनियोगोद्देशेन दृष्टाः, अपि तु तत्त्वदर्शेव दृष्टः, लिङ्गात्तेषां विनियोगः कल्पितो ब्राह्मणकल्पसूत्रादिभिः । तस्येदं प्रधानमुदाहरणम्—

" अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तः ।" इति (ऋ० १।१६४।३१ः वा० य० ३७।१७) दीर्घतमाः ( ऋ० १।१५८।६ ) पतङ्गः (ऋ०१०,१७७,१) । अत्र 'अपश्यं' इति दर्शनक्रियापददर्शनेन सोमयागे महावीरदर्शने विनियोगः कल्पितः । तद्विनियोगानुरोधेनैव भाष्यव्याख्यानादिकं चतुर्ष्वपि वेदेषु विद्यते, तत्तदाचार्यैः प्रणीतम् । क्वचित् तात्त्विकं व्याख्यानमपि दृश्यते । तत्र हि महावीरमपश्यमिति अर्थेन तस्य महावीरस्यैव विशेषणानि गोपां इत्यादीनीति परिकल्पितानि । तत्तथैवास्तु, न च तन्निषिध्यते । तथापि केवलान्मन्त्राद शब्दशः योऽर्थो निर्गलति स एव प्रधान इत्यभिमन्यते । वस्तुतस्तु अयं मन्त्रः सर्वात्मकपरवस्तुसाक्षात्कारेणोदितः, तदिदं ऐतरेयतैत्तिरीयशतपथादिब्राह्मणारण्यकोपनिषदादिवचनाद्यास्कनिरुक्ताच्च अवगम्यते ।

तथाहि " तस्य वाक्तन्तिर्नामानि दामानि०— तदुक्तमृषिणा अपश्यं गोपामिति एष वै गोपाः एष हीदं सर्वं गोपायति अनिपद्यमानमिति न ह्येष कदाचन संविशति, आ च परा च पथिभिश्चरन्तमिति आ च ह्येष परा च पथिभिश्चरति, स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च विषूचीश्च वस्ते, इमा एव दिशः आ वरीवर्ति भुवनेष्वन्तरिति एष ह्यन्तर्भुवनेष्वा वरीवर्ति " इति ( ऐ० आ० २।१।६ ) ।

" अपश्यं गोपामित्याह । प्राणो वै गोपाः । प्राणमेव प्रजासु वियातयति । अपश्यं गोपामित्याह । असौ वा आदित्यो गोपाः । स हीमाः प्रजा गोपायति । तमेव प्रजानां गोप्तारं कुरुते । अनिपद्यमानमित्याह । न ह्येष निपद्यते, इत्यादि० आ ह्येष वरीवर्ति भुवनेष्वन्तः । " इति ( तै० आ० ४।७।१;५।६।४ )

अपश्यं गोपामनिपद्यमानमिति एष वै गोपाः य एष तपति । एष हीदं सर्वं गोपायति० । स सध्रीचीः० इति सध्रीचीश्च विषूचीश्च दिशो वस्तेऽथो रश्मीन् , इत्यादि०— ( शतपथ ब्रा० १४।१।४।१।१० )

" अपश्यं गोपामिति० आ वरीवर्ति भुवनेष्वन्तरिति एष महानात्मा सत्त्वलक्षणस्तत्परं तद् ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्रं तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरित्येके तत्क्षेत्रं तज्ज्ञानात् क्षेत्रज्ञमनुप्राप्य निरात्मकम् ।

अथैष महानात्मा त्रिविधो भवति सत्त्वंरजस्तम इति । ( यास्क० निरुक्ते० १४।३ )

निर्गलितार्थस्तु—सत्त्वरजस्तमोगुणयोगेन सर्वस्यापि जगतः सृष्टिस्थितिलयकारणीभूतं तं परमात्मानमहमपश्यम् स च

दिगम्बरो ज्योतिर्वसनश्च सन् निर्विषयः सर्वेष्वपि भुवनेष्वन्तर्व्याप्तः प्रतितिष्ठति । स आदित्यप्राणात्मसर्वजगदधिष्ठानभूतः परमात्मैवेति । एतेन तत्त्वदृशा ऋषिभिर्दृष्टानां वेदमन्त्राणां अग्न्यादिलिङ्गेन तथा क्वचित् ' अपश्यं, पृच्छामि ' इत्यादिक्रियालिङ्गेन च, तदनुरूपे यज्ञीये कर्मणि विनियोगः कल्पितः इति सिद्धम् ।

अत्रेदं किञ्चित्पुनर्विचारास्पदम्–ऋङ्मन्त्राणां तथा भवतु तेषां तत्त्वदृशैवोदितत्वात् । यजुषां तु यज्ञप्राधान्येनैवोदयात् अधियज्ञपरतैव युक्तेति वक्तव्यमापतति । अभ्युपगम्यते च सर्वैरपि मीमांसादिशास्त्रचिन्तकैः पूर्वाचार्याणां वेदभाष्यादिवचनानुसारेण ब्राह्मणादिवचनानुरोधेन च । तथैव ऋङ्मन्त्रवर्णोऽपि भवति–"यज्ञस्य मात्रां वि मिमीत उ त्वः" इति (ऋ० १०।७१।११) अधियज्ञमपि प्रधानं तत्त्वमेव, ज्ञानोपासनाकर्मणां यज्ञे एव पर्यवसानात् इति ।

सत्यमेवैतत्–नात्राधियज्ञतत्त्वं निषिध्यते, न च तन्निषेद्धुं शक्यं, नापि तन्निषेधमर्हति, तस्य वेदैकगम्यत्वाभ्युपगमात् । तथा चेत् यजुषां यज्ञार्थपरतैव प्रधानेत्युच्यताम्, तथा वक्तुं शक्यं तथापि न युक्तम् । कथमेतत् ? उच्यते; यज्ञस्य तत्त्वसिद्धत्वेऽपि तत्रानुपूर्व्यादिकल्पस्य तु कल्पितत्वमेवेति प्रतीयते । न च कल्पानुरोधेन मन्त्राविर्भावः ।

न खलु ऋषिभिर्दर्शपूर्णमासादिषु शाखाछेदनाद्यानुपूर्वीमनु लक्ष्यैव ' इषे त्वोर्जे त्वा ' इत्यादयो मन्त्रा दृष्टाः; किंतु यजुर्मन्त्रा अपि केवलं तत्त्वदृशा समाधौ अन्तरनुभवेन दृष्टाः इत्येव सत्यम् ।

तथा दृष्टानां तेषां यज्ञादिषु विनियोगः कल्पितः, कर्मणां तु क्वचिदानुपूर्वी आवश्यकी, सा च यथायुक्तं कल्पितैव, अन्यथा यज्ञीयकर्मानुपूर्व्याद्यनुरोधेन मन्त्रदर्शने अभ्युपगम्यमाने कल्पस्यैव प्राथम्यात् मन्त्राणामपि बुद्धिपूर्वकत्वेन कल्पितत्वमेव स्यात, तथा च ब्राह्मणादिकल्प एव यजुर्मन्त्रा अपि कल्पिता एव भवेयुः । न तु तथा भवितुं कल्पयितुं च युक्तम् ।

अपि च ' इषे त्वेति शाखां छिनत्ति, ऊर्जे त्वेत्यनुमार्ष्टि ' इति कल्पोक्तशाखाछेदनादिलिङ्गं लेशतोऽपि नास्ति ' इषे त्वेति ' यजुर्मन्त्रे, येन तत्परतयैव वेदाविर्भावोऽभ्युपगम्येत । तत्त्वार्थपरत्वे तु कल्पो यथा कथञ्चिदपि कल्पयितुं शक्यः । तथाकल्पितेऽपि न कश्चिद्विरोधः, नापि दोषप्रसङ्गः ।

न च यज्ञीयकल्पोऽत्र निषिध्यते, नापि निन्द्यते। अस्माभिरप्यनुष्ठीयते 'वचनात्प्रवृत्तिर्वचनान्निवृत्तिः' इति न्यायात् ।

अधियज्ञतत्त्वं तु यजुर्मन्त्रेऽपि प्रतिष्ठितं नित्यसिद्धमेव, कल्पमात्रं तु कयाचिदानुपूर्व्या कल्पितमेवेति विवेकः । काण्डविभागपाठेऽप्येतत्समानं, तत्रापि यज्ञीयकर्मानुपूर्व्याद्यनुरोधेनैव काण्डग्रथनात् ।

अथ कथं पुनर्ब्राह्मणादिवेदवचनक्लृप्तं कल्पमनादृत्य अर्थान्तरमाद्रियेत ? तस्मात् कल्पानुरोधेनैव मन्त्रार्थः समुन्नेयः इत्येव युक्तम् । तथैव मन्त्राविर्भावात् । तथा चेत्–ब्राह्मणकल्पस्य एकविधत्वात् कथं कल्पसूत्रभेदेन विनियोगभेदो वेदमन्त्राणाम् ? वस्तुतस्तु ब्राह्मणादिवेदवचनानुरोधेन सर्वेषामपि एकविध एव कल्पः प्रधानो युक्ततरश्च, वेदविहितत्वात् । दृश्यते तु तैत्तिरीयादौ एकस्यामपि शाखायां एकरूपाणामपि मन्त्राणां आपस्तम्बबौधायनसत्याषाढादिकल्पसूत्रभेदेन विनियोगभेदः, न हि द्वित्राः त्रिचतुरा वा विधाः ब्राह्मणे विहिताः । कल्पभेदेऽपि मन्त्राणामेकविधत्वं स्वरूपं च न हीयते, प्रत्युत कल्पभेद इव मन्त्राणामपि बहुविधत्वं दृश्यते, तैत्तिरीयमैत्रायणीयवाजसनेयादिशाखासु, तद्यथा– ' इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आ प्यायध्वमघ्न्या देवभागमूर्जस्वतीः पयस्वतीः प्रजावतीरनमीवा अयक्ष्माः ॥ इति ( तै० सं० १।१।१।१-५ ) ' इषे त्वोर्जे त्वा वायवः स्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आ प्यायध्वमघ्न्या इन्द्राय भागं प्रजावतीरनमीवा अयक्ष्माः०' इति ( वा० य० १।१ ) ।

सत्यम्; तत्तु शाखाभेदेन दर्शनभेदात् तथा मन्त्राणां बहुविधत्वेऽपि न कश्चिद्विरोधो दोषापत्तिश्च । विनियोगस्य तु श्रौतस्य स्मार्तस्य च कल्पितत्वादेवानेकाविधत्वं कल्पनयैव प्राप्तं, मन्त्राणां तु कल्पितत्वं सर्वथाप्यसङ्गतमेव, तस्मात् न कल्पानुरोधेनैव वेदमन्त्रदर्शनं, नापि कल्पानुरोधेन वेदमन्त्रार्थकल्पनं प्रधानम् । तत्त्वार्थविमर्शस्तु कल्पविनियोगाद्यनुरोधमन्तरेण केवलानां मन्त्राणां यथाश्रुतमेव कर्तुं युक्ततर इत्युन्नीयते । तस्माद् यजुर्मन्त्राणामपि स्वतन्त्रेण तत्त्वार्थो वस्तुसिद्ध एव । स च कर्मादिविनियोगनिबन्धमन्तरेणैव विमर्शनीयः । तथा केवलानां मन्त्राणां तत्त्वार्थे विज्ञाते तदनुकरणेन विनियोगादिपरत्वेनाप्यर्थं कल्पयितुं शक्यं युक्तं चेति सिद्धम् ।

*

केवलं विनियोगपरत्वेनार्थकरणे प्रथमतः तत्रैव लक्ष्यवेधात् शुद्धमन्त्रार्थविमर्शनदृष्टिः कुण्ठिता दूरनिरस्ता च भवति। तस्माद् अर्थज्ञानपटवः तत्त्वार्थबुभुत्सवो विद्वांसः पक्षपातादिदृष्टिं परित्यज्य, स्वस्वाभिमताग्रहं विना, समदर्शैव शास्त्रदृष्ट्या, वेदार्थं स्वयं विमर्शितुमर्हन्ति भवन्त इति विज्ञप्तिः।

## सायनभाष्यविमर्शः।

विदितमेवेदं सर्वेषां विदुषां सर्वत्र सुप्रसिद्धं च तत्र भवान् आचार्यः सायनः चतुर्णामपि वेदानामर्थं प्रकाशयामास भाष्यमुखेनेति। तत्रापि प्रथमतः प्रणीतं विशिष्टतरं तैत्तिरीयकृष्णयजुर्वेदभाष्यमेव सर्वतः प्राधान्येन वरीवर्ति। तदपि 'यज्ञस्य मात्रां वि मिमीत उ त्वः' इति ( ऋ० १०,७१,११ ) मन्त्रवर्णात, 'वेदा हि यज्ञार्थमभि प्रवृत्ताः' इति ( वे० ज्यो० ) स्मरणाच्च सर्वेषामपि वेदानां यज्ञार्थमेव प्रवृत्तेः, यज्ञे च तस्मिन् यजुर्वेदस्यैव प्राधान्याच्च, तथा अधीतस्वशाखाद्यभिनिवेशेन विशेषतः तदर्थप्रकाशनकौतूहलेन स्वनुष्ठितयज्ञादिकर्मकलापविज्ञानप्राचुर्याच्च प्रथमतो यजुर्वेदभाष्यं प्रणीतमिति प्रतीयते।

भाष्यं च तदतिगम्भीरं महद्विस्तीर्णं अधियज्ञादितत्त्वविचारप्रचुरं विशेषतः ब्राह्मणकल्पसूत्राद्यनुरोधेन सुप्रसिद्धप्रकृतिविकृतिरूपदर्शपूर्णमाससोमादियज्ञीयविनियोगपरेण अर्थेन परिपूर्णं मीमांसादिन्यायपरिक्लृप्तं सर्वेषां शास्त्रचिन्तकानां सर्वथा विचारास्पदं प्रमाणभूतं च भवति।

यद्यपि आध्यात्मिकैकविषयप्रचुरस्य वेदैकदेशस्य गद्यगाथादि ब्राह्मणरूपस्य क्वचिदल्पीयसो मन्त्ररूपस्यापि उपनिषद्भागस्य प्राचामाचार्याणां शङ्करदेशिकेन्द्रप्रभृतीनां भाष्यं विशिष्टतरतत्त्वार्थविचारप्रचुरं प्रसिद्धतरं वरीवर्ति, तथापि आमूलाग्रस्य पाठप्रवचनादिपरम्परया प्रचलितस्य सम्पूर्णस्य वेदस्य मन्त्रात्मकस्य संहिताग्रन्थस्य तथा ब्राह्मणभागस्यापि ब्राह्मणारण्यकोपनिषदादिग्रन्थस्य च सुप्रसिद्धं अग्रगण्यं सायनभाष्यमेव सर्वेभ्यः प्राथम्यं गौरवं चार्हतीति न पुनर्वक्तव्यम्।

तच्च सायनभाष्यं ब्राह्मणारण्यकोपनिषन्निरुक्तव्याकरणकल्पसूत्रधर्मशास्त्रमीमांसादिवचनन्यायाद्युपबृंहितं, सरलतरसंस्कृतभाषानिबन्धनोपक्लृप्तं, अतिप्राचीनानां प्रसिद्धे संस्कृतसाहित्येऽप्यप्रसिद्धानां अलौकिकानां वैदिकशब्दानां अर्थावबोधायानुकूलं विशिष्टतरशब्दार्थव्युत्पत्तिप्रक्रियादिसहितं वेदार्थव्याख्यानप्रक्रियामार्गदर्शकं भवति।

यद्यपि अस्मिन् सायनवेदभाष्ये प्रथमकल्पनया विरचिते केवलयज्ञादिविनियोगपरतया व्याख्यानेन एकदेशीयसङ्कुचितार्थकल्पनादिहेतोः तत्र न्यूनातिरेकादिदोषारोपणं केषांचित् प्राचां वैदिकानां, तथा आधुनिकानां लौकिकानां पाश्चात्यपण्डितानां चानिवार्यम्, तथापि अत्यन्तमप्रसिद्धार्थानां अलौकिकानां संस्कृतप्राकृतादिसर्वभाषाविलक्षणानां क्वचित् प्रसिद्धसंस्कृतसाहित्येभ्योऽपि विलक्षणस्वरूपाणां क्वचिद्विरुद्धार्थावभासकानां च वैदिकशब्दानां अर्थप्रकाशनाय आपाततः प्रदर्शितस्य यास्कनिरुक्तादेरवलम्बनेन प्रथमकल्पनया समाविष्कृतं सायनवेदभाष्यं वेदार्थव्याख्याने शब्दव्युत्पत्त्यादौ च सर्वेषां मार्गदर्शकमेव भवितुमर्हतीत्युन्नीयते।

तत्र दोषारोपणं तु अज्ञानमूलकमेव। तद्यथा आपाततः शब्दमुखेन श्रुतानां विनायकादिदेवतानां प्रथमकल्पनया चित्रविग्रहादिरचनोत्तरं तत्र न्यूनातिरेकादिदोषारोपणं तु सामान्यजनानामपि सुलभतरम्, तद्वदेव सायनवेदभाष्येऽपीति मन्तव्यम्। अन्यथा अत्यन्तमप्रसिद्धे लोकविलक्षणे वेदे प्रथमकल्पनासङ्केतितसायनभाष्याभावे तत्र प्रयतमानानां विदुषामपि वेदव्याख्यानोपक्रमणं तु 'विनायकं प्रकुर्वाणो रचयामास वानरम्' इतिवत् हास्यास्पदमेवाभविष्यत्।

सुप्रसिद्धं च 'विद्वानेव वि जानाति विद्वज्जनपरिश्रमम्।' इति न्यायसिद्धं वचनम्। तस्मात् तदिदं समदृशः स्वयं विद्वांस एव विमर्शितुमर्हन्ति। एवमिह वेदानां सायनभाष्यस्यैव सर्वतः प्राथम्यात् वेदार्थव्याख्यानप्रक्रियादिमार्गदर्शकत्वाच्च विशिष्टतरगौरवार्हता स्वतःसिद्धैवेति प्रतिज्ञायते। अतएव इतः पूर्वं परं च सायनवेदभाष्यादप्याधिक्येन विशेषतस्तत्त्वविमर्शनेन सङ्क्षेपतो विस्तरशश्च येन केनचिद् विद्वद्वरेण निपुणतरं वेदार्थप्रतिपादने कृते करिष्यमाणेऽपि तत्र यदृच्छा प्राप्तं महता पुण्येन प्रयासेन च सम्पादितं परमं सौभाग्यं प्रथमं तन्महद्यशश्च सर्वथापि सायनस्यैवाभवत्। न च तत्पुनरस्मिन्

कल्पे अन्येषां भवितुं शक्यमिति तदेव प्रशंसनीयम् ।

किम् ? इतोऽप्यस्ति कश्चिद्विशेषः सायने तद्वेदभाष्ये च । अथ किम् ? वेदवचनानुरोधेनाचरणं आचरणानुरूपमेव वेदव्याख्यानमित्येष एव विशेषः । तद्यथा-- वेदार्थप्रकाशनवत् भारतेऽस्मिन् भूमण्डले वैदिकधर्मप्राधान्यतः प्रसिद्धतरकर्नाटकविजयनगरसाम्राज्यप्रतिष्ठापनेन तत्र स्वयं प्रधानमन्त्रित्वपदवीमधिष्ठाय तत्सञ्चालनेन, तथा आचार्येन्द्रशङ्करभगवत्पादप्रतिष्ठापितस्याद्वैतब्रह्मात्मतत्त्वसिद्धान्तस्य पुनरुद्बोधनेन चेत्येवं प्रपञ्चपरमार्थोभयविधसाम्राज्यसञ्चालने ज्ञान-क्रियाशक्तिभ्यां सव्यसाचित्वमङ्गीकृत्य तत्र तदितिकर्तव्यतानिर्वहणेनोपप्राप्तां कृतकृत्यतापदवीमारूढः कीर्तिशेषः सन् रामराज्यादौ प्राचां वसिष्ठादिवदर्वाचीनानां विजयनगरराज्ये आचार्यः सायनो माधवः सर्वेषां मार्गदर्शी बभूवेति विशिष्टं गौरवास्पदं सर्वेषां भारतीयानाम्, ततोऽपि विशेषतः अभिमानास्पदमस्माकं वैदिकधर्मविद्यावलम्बिनाम् ।

एवमेव वेदार्थज्ञानप्रकाशने पूर्णसहानुभूत्या प्रोत्साहनेन यथोचितसहायप्रदानेन च आचार्यसायनस्य प्रेरणया तद्यशः पुण्यफलभागितामुपेतो जनताहितैषी श्रीकर्नाटकराज्यपीठमधिष्ठितः श्रीवीरबुक्कमहीपतिरपि धन्यवादार्हः चिरमनुस्मरणीय एव ।

तत्रापि विशेषस्तु यत् खलु वसिष्ठादिमहर्षीणां वेददर्शनादनन्तरं अद्ययावत् अस्मिन् भूमण्डले सम्भूतेषु तथा कीर्तिशेषेषु च सहस्रशो राजन्येषु भूपतिषु पुण्यपुरुषेषु श्रीबुक्कभूपतेरेवेदं अपूर्वमनन्यसाधारणं तद्वेदार्थप्रकाशनयशः महता भागधेयेनोपप्राप्तम् । तत्रापि पत्रिकाप्रकाशादिना राजकारणादिकमिव राजकीयप्रतिष्ठादिप्रयोजनमन्तरेण धनार्जनेन लौकिकैश्वर्याभिवृद्ध्यादिस्वार्थदृष्टिं विनैव केवलं जनताहिताय वैदिकतत्त्वज्ञानोदयैकध्येयसिद्ध्यर्थं स भूपतिः सायनमुखेन यद्वेदार्थप्रकाशनं कारयामासेति, तदिदमनुकरणीयमेव सर्वेषां राज्ञां विदुषां प्रजाजनानां च वैदिकधर्मविद्यापरायणत्वम् । तथा च वेदभाष्यादौ मङ्गलमुखेनोदितः स पुण्यश्लोकः ।

'यत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः । आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने ॥
ये पूर्वोत्तरमीमांसे ते व्याख्यायातिसङ्ग्रहात् । कृपालुर्माधवाचार्यो वेदार्थं वक्तुमुद्यतः ॥' ( इति ऋग्वेदभाष्यभूमिकायाम् ) ।

एवमिह वेदार्थप्रकाशने ब्राह्मणराजन्ययोः मित्रावरुणतेजः प्रभावपूर्णयोर्ज्ञानशक्ति-क्रियाशक्तिप्रधानयोः श्रीसायणाचार्य-बुक्कभूपयोः सहयोग एव प्रधानं कारणमिति प्रतीयते, तदिदं परं वैदिकं तत्त्वं लोके निदर्शनाय प्रत्यक्षीकृतं तयोस्तेन सहयोगेन । तथा च यजुर्मन्त्रवर्णः—

'सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥' इति
( तै० सं० ४,१,१०,९ )

तस्यायमर्थः—'मे' मम 'ब्रह्म' ज्ञानशक्तिप्रधानं ब्राह्मं तेजः 'सꣳशितम्' तपसा सम्यक् निशितम् । तथा तदनुगुणं 'वीर्यं बलं' च 'सꣳशितम्' ज्ञानप्रकाशनाय सन्नद्धम् । अपि च 'यस्य' राज्ञः 'अहं पुरोहितोऽस्मि' कार्यकर्ता नेताऽस्मि तस्य राज्ञोऽपि 'जिष्णु' जयशीलं 'क्षत्रं' क्रियाशक्तिप्रधानं क्षात्रं तेजः सम्यक् निशितम्, विश्वविजयाय सन्नद्धमिति यावत् । एतेन ब्रह्मक्षत्रयोः सहयोगेनैव सर्वं सेत्स्यतीति सम्पद्यते । एतन्मन्त्रोपव्याख्यानब्राह्मणमपि एतमेवार्थं स्पष्टीकरोति । 'ब्रह्मणैव क्षत्रꣳ सꣳश्यति, क्षत्रेण ब्रह्म, तस्माद् ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं, तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यम्' इति । ( तै० सं० ५,१,१०,८ )

'ब्रह्मणैव' ज्ञानरूपेण ब्रह्मतेजसैव 'क्षत्रं' क्रियारूपं क्षात्रं तेजः तत्कार्यं च 'सꣳश्यति' सम्यक् निशितं तीक्ष्णं भवति, तथैव 'क्षत्रेण' क्रियाशक्तिरूपेण क्षात्रतेजसा 'ब्रह्म' ज्ञानं तीक्ष्णं भवति । 'तस्माद् ब्राह्मणः' विद्यामुखेन ज्ञानशक्तिप्रधानो विप्रः 'राजन्यवान्' शासनमुखेन क्रियाशक्तियुक्तेन क्षत्रियेण राज्ञा सहितः 'अन्यं सर्वं ब्राह्मणं' 'अति' अत्येति राज्ञा सहयोगेन स्वाभीष्टक्रियानिर्वर्तनसमर्थः सन् सर्वान् ब्राह्मणानतीत्य सुप्रतिष्ठितः पूजार्हो भवतीत्यर्थः । तथैव 'राजन्यः' क्षत्रियः क्रियाशक्तियुक्तः पुरुषः 'ब्राह्मणवान्' ज्ञानशक्तियुक्तेन विप्रेण सहितः 'अन्यं राजन्यम्' अन्यान् सर्वान् क्षत्रियान् अत्येति, ज्ञानशक्तिप्रकाशनेन सर्वराजश्रेष्ठो भवतीत्यर्थः ।

अत्र ' ब्राह्मणोऽस्य मुखमासीत् ' इति श्रुतेः वेदवागुपासः परमपुरुषमुखस्थानीयो ब्राह्मणः, ' मुखादग्निरजायत, ' (वा० य० ३१।१२) ' वाग्ध आसन् ' (ना० उ०) ' अग्निर्मे वाचि श्रितः, आग्नेयो वै ब्राह्मणः ' (तै० ब्रा० २,७,३ ) इत्यादि श्रुतिभ्यः । वेदवागादिमुखेन ज्ञानप्रकाशनसमर्थो ज्ञानशक्तिप्रधानो ब्राह्मणः इति सिध्यति । तथा ' बाहू राजन्यः कृतः ' इति च परमपुरुषबाहुस्थानीयो राजन्यः, ' बाहुवोर्बलम्, इन्द्रो मे बले श्रितः, ऐन्द्रो राजन्यः ' इति च बल-क्रियादिमुखेन कर्तृत्वशक्तियुक्तः क्रियाशक्तिप्रधानः क्षत्रियः इति सिध्यति ।

एवं ज्ञानक्रिययोरिव ब्राह्मणराजन्ययोः सहयोगेनैव अस्मिन् लोके सर्वोऽपि प्रपञ्चव्यवहारः परमार्थश्च सिध्यति, तेन विशिष्टं लोकोत्तरं जनताहितं च भवति । तदेतत्सर्वं शतपथब्राह्मणे स्पष्टमनुश्रूयते– 'क्रतूदक्षौ वा अस्य मित्रावरुणौ। एतन्न्व-ध्यात्मम् । स यदेव मनसा कामयते इदं मे स्यादिदं कुर्वीयेति स क्रतुः । अथ यदस्मै तत् समृध्यते स दक्षः । मित्र एव क्रतुर्वरुणो दक्षः । ब्रह्मैव मित्रः क्षत्रं वरुणः । अभिगन्तैव ब्रह्म कर्ता क्षत्रियः ' इति ( शत० ब्रा० ४।१।४।१–६ ) ।

तथा च ऋङ्मन्त्रवर्णः– ' इमां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण सꣳशिशाधि ' इति ( ऋ० ८,४२,३) नाभाकः काण्वः । तस्येदमुपव्याख्यानब्राह्मणम्– ' क्रतुं दक्षं वरुण सꣳशिशाधीति वीर्यं प्रज्ञानं मयि सꣳशिशा-धीत्येव तदाह ' इति ( ऐ० ब्रा० १,१३,२८ ) ।

तस्यास्य प्रत्यक्षं निदर्शनं सायन–बुक्कभूपयोः सहयोगेन सङ्घटितं वेदार्थप्रकाशनं तथा वैदिकधर्मप्रतिष्ठापनं च अभूतपूर्वं जगद्धितकारणीभूतं मनुष्यमात्रस्य ज्ञानोदयेन शाश्वतसुखसञ्जीवनास्पदं च सत् तदिदमद्यापि वरीवर्ति, जागर्ति च सर्वत्र वैदिकतत्त्वज्ञानसुधारसवितरणार्थं, एवमेव उत्तरत्रापि प्रज्ञानरसं वितरन् आचन्द्रार्कं प्रतिष्ठास्यतीति महत् सौभाग्यमेवैतत् सर्वेषां मानवानां विशेषतो भारतीयानां वेदब्रह्मास्तिकानाम् ।

तस्मादस्माकं सर्वेषां मानवानां हितार्थं अज्ञाननिवृत्तये वैदिकतत्त्वज्ञानप्रकाशनेन कृतः तेषां महानुपकारोऽयमविस्मरणीयः । तथा तेषामेतादृशऋणापनोदनाय यथोचितसेवावलम्बनेन सम्पूर्णजीवितस्य क्षपणेनापि न पारयाम इति कृतज्ञतया वेदवचनानु-सारेण तदध्ययनं तदर्थज्ञानं तथैवाचरणं तत्प्रचारणं च सर्वतः संवर्धयितुं न प्रमदितव्यम् ।

तथा च वेदमातुर्मुखेन परमपुरुषस्य तस्यास्य विश्वरूपस्य जनताजनार्दनस्य सेवावलम्बनमेवास्माकं सर्वथा शरणमिति तदर्थमेवास्माभिः सर्वैरपि चिरमनुचिन्तनीयम् । तथा वेदाचार्याणां तेषां अन्तेवासिपरम्पराप्रवाहान्तःप्रवेशेन तदितिकर्तव्य-तानिर्वहणदीक्षोपनिबद्धदृढपरिकरेण वेदार्थज्ञानाय तत्प्रचारणाय च अस्माभिः सर्वैरपि यावज्जीवं स्वस्वकर्तव्यपरायणतया-प्रयत्नशीलैर्भवितव्यं, तथा तत्परं ध्येयं साधयितुं न विस्मरणीयं, नापि प्रमदितव्यमिति च साञ्जलिबन्धा सविनयसद्विद्या-प्रेमलरसपूर्णेयं विज्ञप्तिः ।

' ज्ञप्तिरियं ज्ञाननीव जनानां ज्ञापयतादिविकृतिमिह विहिताम् । ज्ञप्तिं लब्ध्वा जगति जनास्तां ज्ञानसुधारसतोऽत्र रमन्ताम् । ' इति दैवरातीया अक्षरमाला ।

प्रस्तुतेऽस्मिन् तैत्तिरीयसंहितादीनां सायनभाष्ये अधियज्ञ तत्त्वं यज्ञीयकर्मानुष्ठानपद्धतिक्रमादिकं च साकल्येन सम्यक् उपन्यस्तमस्ति । तेन मीमांसादिज्ञानपूर्वकं यथाशास्त्रं यज्ञाद्यनुष्ठाने महानुपकारो भवति । तत्र सायनस्याधियज्ञविज्ञान-सर्वस्वं प्रतिष्ठितमिति अनावृतमेव ।

तत्र केचिदेवमाहुः– सायनेन सारस्वतपाठक्रमेणैव यथास्थितानामेव संहितादीनां भाष्यं विरचितम् । यदि तत्र आर्षेय-पाठक्रम एव युक्त इति सायनाभिमतं चेत, तथा तेनैव क्रमेण संहितादिग्रन्थविभागात् भाष्यं प्रणेतव्यमासीत् । तेन सारस्वत-पाठ एव सायनाभिप्रेतः नतु पुनरार्षेयकाण्डानुक्रमः इति प्रतीयत इति । अत्रोच्यते– नैषा वस्तुस्थितिः, नाप्येतद्युक्तिसहं वचनम् । कुतः ? काण्डानुक्रमस्य सायनेनाप्यभ्युपगतत्वात् ? कथम् ? तैत्तिरीयसंहिताभाष्यारम्भे ' यो ह वा अविदिता-र्षेयछन्दोदैवतब्राह्मणेन मन्त्रेण यजते याजयतेऽध्यापयति वा यातयामानि ( अस्य ) छन्दांꣳसि भवन्ति ' इति श्रुतिवचनपूर्वकं काण्डानुक्रमणिकाप्रमाणोदाहरणेन काण्डपाठस्योद्धृतत्वात् । ' शाखादिं याजमानं च होतॄन् हौत्रं च

दार्शिकम् । तद्विधीन् पितृमेधं च नवाहुः कस्य तद्विदः ' इत्यादि । एतेन आर्षेयकाण्डपाठक्रमः सायनस्याप्यभिप्रेत एवेति सिध्यति ।

सत्यम्; संहिताभाष्यारम्भे समुद्धृतः काण्डक्रमः सायनेनेति, भाष्यं तु सारस्वतपाठक्रमेण यथास्थितमेव विरचितं खलु ? ओम्, तत्तु ' स्थितस्य गतिश्चिन्तनीया, ' ' न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ' ( भ० गी० ३।२६ ) इति न्यायेन ब्रह्मदेवनिर्णयानुसारेण अध्ययनादिपरम्पराप्रचलितपाठक्रमेण यथास्थितानामेव संहितादीनां भाष्यरचनया सारस्वतपाठोऽप्याहृतः, तथा– अपि सारस्वते पाठे ज्ञानमात्रमिहेष्यते ' इति वचनात् । काण्डज्ञानार्थं काण्डक्रमोऽप्युपदिष्टः, न हि तावता भाष्येण आर्षेयकाण्डक्रमं तथा तदध्ययनादिविधिं च निषेद्धुं शक्यते । ' काण्डे काण्डे व्रतचर्या ' इत्यादिसूत्रेणार्षेयपाठस्यैवोद्धृतत्वात्, काण्डविभागेन पाठक्रमेऽपि काण्डानुक्रमणिकादिसहितं यथास्थितमेव सायनभाष्यं यथायुक्तं काण्डक्रमेण योजयितुं शक्यमेव । तस्मात् सायनभाष्यं काण्डक्रमे प्रातिकूलं न भवति, प्रत्युत सर्वथाप्यनुकूलमेव ।

तथापि पुनर्ब्रह्मसभानिर्णयानुरोधेन सायनादिभाष्यानुसारेण चिरन्तनपाठप्रवचनादिप्रवाहप्रचलितपाठक्रमेणैवाध्ययने का हानिः का च दोषापत्तिः ? यातयामतादोषाद्यनिवृत्तिरेव, तथा ब्रह्मनिर्णयादिसत्त्वेऽपि आर्षेयादिपरिशुद्धिमन्तरेण यातयामतादोषो ब्रह्मणापि न शक्यो निवर्तयितुम् । ' यातयामानि छन्दांसि भवन्ति ' इति श्रुतिवचनात् । ब्रह्मवचनेनैव तद्दोषनिवृत्तिर्भवितुमर्हतीति चेत्– किमर्थं पुनः ' ज्ञानमात्रमिहेष्यते ' इति तज्ज्ञानावश्यकता ?

अथ– ' आर्षेयछन्दोदैवतावित् ' इति आर्षेयादिज्ञानमात्रेण तदपि ब्रह्मवचनमेव । यातयामतादोषनिवृत्तेः किं पुनरार्षेयपाठाश्रयेण ? ' ज्ञानमात्रमिहेष्यते ' इति ज्ञानमात्रस्याभ्यनुज्ञातत्वात् । तत्र ज्ञानमात्रे तु अभ्यनुज्ञामात्रं न तु विधिः, विधिस्तु वेदव्रतादिपूर्वकं काण्डपाठक्रमेणाध्ययनमेव स्पृशति ।

अपि च सारस्वतपाठे काण्डविभागस्यैवाभावात् तज्ज्ञानं दुःसम्पाद्यमेव, अतएव समग्रवेदपारङ्गता अपि आर्षेयादिकं न जानन्ति, प्रत्युत स्वाधीतमव्यवस्थितमपि सुव्यवस्थितं युक्ततरमेवाभिमन्यन्ते । मन्त्रविनियोगावसरे यजुर्वेदिनां ऋष्यादिस्मरणपद्धतिरेव प्रायः न दृश्यते, क्वचित् आहुतिप्रदानानन्तरं देवतात्यागे ' मन्त्रोक्तदेवतायै इदं न मम ' इति उच्चरन्ति, तत्र प्रचलितपाठक्रम एव हेतुः ।

तस्मादत्र युक्तायुक्तविमर्शेन यथोचितमनुष्ठातुमर्हन्ति विद्वांसः, युक्ततरस्वीकारे एव गुणिनां गुणः प्रतिष्ठितः, यद्वक्तव्यं तदुक्तं, इतःपरं ' यथेच्छसि तथा कुरु ' इति भगवदुपदेशानुसारेण यथारुचि कर्तुमर्हन्ति वेदविद्यार्थिनो विद्वांसश्चेति, सोऽयं तेष्वेव समर्प्यते कर्तव्यानुसरणभारः । साम्प्रतिकेऽस्मिन् तत्त्वविमर्शके युगे तेषामपि– ' करिष्ये वचनं तव ' इति युक्तानुसरणप्रसङ्गोऽपि अचिरादेवागमिष्यतीति निश्चयात्, अनवरतं वेदैकचिन्तनेन स्थीयते वैदिकानां वेदविज्ञानभाग्योदयनिरीक्षणेन, इत्यास्तां तावदलमतिविस्तरेण ।

## तैत्तिरीयके कृष्णयजुर्वेदे

## आर्षेयपाठक्रमः ।

वस्तुतस्तु कृष्णयजुर्वेदे तैत्तिरीयशाखायां मन्त्रब्राह्मणसङ्करोपहितात् सारस्वतपाठादपि काण्डविभागेन आर्षेयपाठ एव युक्ततर इति प्रतिज्ञायते । सोऽयं पाठः सत्याषाढापस्तम्बबौधायनप्रभृतिभिराचार्यैः स्वीये गृह्यसूत्रे स्पष्टतरमुल्लिखितो भवति ।

## काण्डानुक्रमणिका ।

तत्र ' प्राजापत्यं, सौम्यमाग्नेयं, वैश्वदेवं, स्वायम्भुवं चेति ' पञ्चकाण्डानि भवन्ति ।

### ( १ ) प्रथमं प्राजापत्यं काण्डम् ।

' पौरोडाशिकं याजमानं होतारः हौत्रं पितृमेधः इति सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि ' इति सूत्रम् ( बौ० गृ० सू० प्रश्नः ३।३ ) ।

काण्डानुक्रमणिकायामपि—

'शाखादिं याजमानं च होतॄन् हौत्रं च दार्शिकम् । तद्विधीन् पितृमेधं च नवाहुः कस्य तद्विदः । ' इति

तस्यायमर्थः- शाखादिः ( पौरोडाशिकं ) याजमानं होतारः दार्शिकहौत्रं चेति चत्वारि, तेषां ब्राह्मणान्यपि चत्वारि, पितृमेधश्चेति नवप्रकरणानि प्राजापत्यानीत्यर्थः ।

तद्विवरणमपि कृतं तत्रैव—

" इषे प्रश्नः पुरोडाश्यमनुवाकं विनान्तिमम् । तृतीयस्यां × च प्रत्युष्टं पौरोडाशीयको विधिः ॥
विश्वरूपादयः षट् † च समिधो यजतौ च षट् । निवीतशेषो देवा वै सामिधेनीरतःपरः ॥
इन्द्रो वृत्रं हत्वेत्येतद् दार्शिकं ब्राह्मणं विदुः । ममे+त्यत्र पयस्वतीरादिसन्त्वादयश्च षट् ॥
अनुवाकाश्च विख्यातमैष्टिकं याजमानकम् । यथा वै समृतेत्यादि क्रमात्पञ्चानुवाककाः ॥
सं॰श्रवावर्जकं पञ्च पाकयज्ञादि षड् भवेत् । याजमानस्यैष्टिकस्य विधिरेष उदाहृतः ॥
चित्तिः स्रुगादि होतारस्त्वनुवाकास्त्रयोदश । प्रश्नौ प्रजापतिर्ब्रह्मवादिनश्चेति तद्विधिः ॥
सत्यं प्रश्नो दार्शहौत्रं देवा वै नार्चिनादितः । चत्वारोऽपि निवीतमित्याद्याभिजयतीति * च ॥
मनुः पृथिव्याश्चत्वारः सं॰श्रवाह च तन्मतम् । पित्र्यः परेयुवांसकम् ॥ " इति

## ( २ ) द्वितीयं सौम्यं काण्डम् ।

' आध्वर्यवं ग्रहाः दाक्षिणानि सामिष्टयजूं॰षि अवभृथयजूं॰षि वाजपेयः शुक्रियाणि सवाः इति सब्राह्मणानि सानुब्राह्मणानि सौम्यानि ' इति सूत्रम् ।

काण्डानुक्रमणिका च—

अध्वरप्रभृतित्रीणि तद्विधिर्वाजपेयके । सवाः शुक्रियकाण्डे च नवेन्दोरिति धारणा ॥ इति

अध्वरो ग्रहाः दक्षिणानीति त्रीणि, तेषां ब्राह्मणान्यपि त्रीणि, वाजपेयः, तद्ब्राह्मणं, सवाः शुक्रियाणि ( प्रवर्ग्यः ) तद्ब्राह्मणं चेति नव सौम्यानि भवन्तीत्यर्थः ।

तद्विवरणम्- ' आप उन्दन्तु देवस्य प्रश्नावन्तिमवर्जितौ । पवमानो ब्रह्मसन्धत्तमेतौ ꣳ चाध्वराह्वया ॥
प्राचीनवं॰शं षट्प्रश्नास्त्रिभिः प्रजननं सुखैः । देवासुराः सप्रजापतिश्चत्वार्याध्वरो विधिः ॥
वर्जयित्वाऽददे प्रश्ने चतुरोऽन्यान् ग्रहाह्वयाः । उभये वै ब्रह्मवादिनः कत्येतौ ग्रहे विधिः ॥
उदु त्यमिति चारभ्य त्रयो दाक्षिणनामकाः ॰ । उक्तेऽध्वरविधावन्तर्गतोऽभूद्दाक्षिणो विधिः
देवसवितरारभ्य वाजपेयाह्वयाश्च षट् । वाजपेयस्य देवा वै यथाद्यष्टौ विधिर्मतः ॥
त्रिवृत्प्रश्नः सवाः प्रोक्तः, प्रवर्ग्यस्तु नमो वाचे परः प्रश्नश्च तद्विधिः ॥ इति

## ( ३ ) तृतीयमाग्नेयं काण्डम्

'अग्न्याधेयमग्निहोत्रमग्न्युपस्थानमाग्निचयनं सावित्रं नाचिकेतं चातुर्होत्रीयं वैश्वसृजमारुणा इति सब्राह्मणानि सानुब्राह्मणान्याग्नेयानि ' इति सूत्रम् ।

काण्डानुक्रमणिका च—

' त्रिष्वग्न्याधेयपूर्वेषु ह्यग्नौ च सविधिद्वये । विधौ चैवाग्निहोत्रस्य सप्तस्वग्निमृषिं विदुः ॥ ' इति

अग्न्याधेयपुनराधेयाग्न्युपस्थानानीति त्रीणि, अग्निः, ( अग्निचयनं ) अग्न्याधेयादित्रिकस्य ब्राह्मणं, अग्निचयनस्य ब्राह्मणमिति द्वयं, अग्निहोत्रब्राह्मणं चेत्येवं सप्त आग्नेयानि भवन्तीत्यर्थः । सावित्रादि काठकवचनान्यप्यत्रैव परिगणनीयानि

× तृतीयस्यां, प्रत्युष्टं इति कृत्स्नौ प्रश्नौ । † षडनुवाकाः । × ममनामेत्यस्मिन्ननुवाके । * अभिजयतीत्यन्तम् ।
ꣳ एतावनुवाकौ ॰ अत्रैव समिष्टयजूं॰षि अवभृथयजूं॰षि चान्तर्भावितानि ।

'काठकादिषु×ह्व्यवाट्' ( ऋषिः ) इति तत्रैव सङ्ग्रहणात्सूत्रोक्तेश्च ।

अथैषां विवरणम्—

'उद्धन्यमानं घर्मः शिरोऽग्न्या धेयाविमौ मतौ । कृत्तिकास्वग्निमित्यारभ्य च पञ्चानुवाककाः ॥
इमे वा एत इति च त्रयोऽग्न्याधेयको विधिः । भूमिर्भूम्नानुवाकोऽयं पुनराधेयनामकः ॥
देवासुराः पश वै च भूमिर्भूम्नेति चोत्तरम् । देवासुराग्नीषोमयोः पुनराधेयको विधिः ॥
उप प्रयन्तः सम्पश्याम्यनुवाकद्वयं तथा । अग्न्युपस्थानमाख्यातं मम नामेत्यृचश्च षट् ॥
अयज्ञादि त्रिकं पूर्वमग्न्युपस्थानको विधिः । अन्त्यान्विनाऽनुवाकान्स्त्वान् जीमूतस्येति च त्रयम् ॥
तुरीयमग्निकाण्डं स्यात् रुद्रान्त्यं तु न वर्जयेत् । मा नो हिंसीदस्मादूर्ध्वमाप्यायस्व सशान्तिकम् ॥
इषमेवानुवाकान्ते ईयुष्टे ये च तादृशम् । प्रजापतिर्मनसोर्ध्वं ज्योतिष्मतीं च योजयेत् ॥
आयुषः प्राणमिन्द्रो दधीच एतेऽग्निकाण्डकाः । सावित्राणीति चत्वारः प्रश्ना अन्तिमवर्जिताः ॥
द्विचत्वारिंशकं ख्यातं गायत्रीति च वर्जितम् । यदेकेनादिकं प्रश्नत्रितयं त्रैंशिकं मतम् ।
इन्द्राय रोहितस्तेगानित्यादीर्दशिनीर्विना । ( सावित्राणीत्यादिकमग्निचयनस्य ब्राह्मणमिति ज्ञेयम् )
संज्ञानमिह सावित्रं लोकोऽयं नाचिकेतकः । चातुर्होत्रो ब्रह्म वै च परे वैश्वसृजास्ततः ॥
भद्रं प्रश्नस्त्वारुणं स्यात्पञ्चैते चितिनामकाः । योऽयमङ्गिरसः प्रश्नः सोऽग्निहोत्रविधिः स्मृतः ॥
उदस्थाच्चिवा एतस्येत्येतौ चेह प्रवेशयेत् ।' इति ।

## ( ४ ) चतुर्थं वैश्वदेवं काण्डम् ।

'राजसूयः पशुबन्धः इष्टयो नक्षत्रेष्टयो दिवश्येनयोऽपाघाः सात्रायणमुपहोमाः कौलिकी सूक्तान्यौपानुवाक्यं याज्या अश्वमेधः पुरुषमेधः सौत्रामणी अच्छिद्राणि पशुहौत्रं उपनिषदः इति सब्राह्मणानि सानुब्राह्मणानि वैश्वदेवानि ।' इतिसूत्रम् ।

काण्डानुक्रमणिका च—

'अवशिष्टानि यानि स्युः काण्डान्यन्यानि षोडश । विश्वान्देवानृषींस्तेषु विदुर्वेदविदो जनाः ॥
सब्राह्मणो राजसूयः पशुबन्धः सहेष्टिभिः । उपानुवाक्यं याज्याश्च अश्वमेधः सब्राह्मणः ॥
सात्रायणं चोपहोमाः सूक्तानि च सहेष्टिभिः । सौत्रामणी सहाच्छिद्रैर्हौत्रं मेधश्च षोडश ॥' इति ।

राजसूयः तद्ब्राह्मणं पशुबन्धः काम्येष्टयः उपानुवाक्यं याज्याः अश्वमेधः तद्ब्राह्मणं सात्रायणं उपहोमाः सूक्तानि नक्षत्रेष्टयः सौत्रामणी अच्छिद्राणि पशुहौत्रं पुरुषमेधश्चेति षोडश वैश्वदेवानीत्यर्थः । काठकोक्ता दिवश्येन्यपाघनामका इष्टयः उपनिषदश्चात्रैव परिगणनीयाः, सूत्रे तथैव परिगणनात् ।

अथैतेषां विवरणम्—

'अनुमत्या इति प्रश्नो राजसूयो विनान्तिमम् । ऋतमेव परमेष्ठीत्यनुवाकश्च तादृशः ॥
अनुमत्यादयः प्रश्नो राजसूयविधिस्त्रयः । प्रजा वै सत्रमग्निश्च देवा वै ते सुरा इति ॥
वायव्यमन्त्यवर्ज्यं तु काम्याः पशव ईरिताः । प्रजापतिरिति प्रश्नत्रयमन्त्यान् विनेष्टयः ॥
अन्त्यान्विनोपानुवाक्यं तृतीयं काण्डमीरितम् । इषे त्वादिह्यपान्त्वान्तं प्रश्नानामन्तगामिनः ॥
अनुवाकास्तु याज्याख्या युक्ष्वाहीत्यपि तादृशः । अथाश्वमेधकाण्डस्य क्रमः साम्प्रतमुच्यते ॥
देवस्यादि * दशैकस्मै दशार्वाङादितो दश । मेषस्त्वैकादश तथा पृथिव्यै च चतुर्दश ॥

---

× 'भद्रं च सह संज्ञानं लोकस्तुभ्यमिति क्रमात् । एते काठकसंज्ञाः स्युः पञ्चप्रश्ना न चेतरे ॥' ( इति षड्विंशतिसूत्रे )

* प्रजननप्रश्ने 'देवस्य त्वा' इत्येकादशानुवाकमारभ्य ।

एता दशिन्य आख्याताः पञ्चादौ सात्रिका इति । महापृष्ठं जीमूतस्य × यन्मायेऽग्नेः समिच्च षट् ॥
चतुर्दशेन्द्रायादीनि रोहितादि त्रयोदश । दशिन्यौ त्र्यंशिके एते दन्द्वपृष्ठमथोच्यते ॥
समिद्धो गायत्रीकस्त्वा द्विचत्वारिंशिकं मतम् । उत्तमा दशिनीस्तेगानित्यादीनि च षोडश ॥
क्रमैरूर्ध्वं प्रयासाय चित्तमेतौ च योजयेत् । प्रजापतेः पवस्वेति द्विचत्वारिंशिकौ मतौ ॥
यो वा अश्वस्य मेध्यस्येत्युत्तमां दशिनीं विदुः । अश्वमेधः साङ्ग्रहिण्यादिकं प्रश्नद्वयं विधिः ॥
सात्रायणं चाङ्गिरस ※ आद्याः सप्तानुवाककाः । साध्या वै प्रजवमाद्याः क्रमाद्दशदशेरिताः ॥
बृहस्पतिः श्रदाद्येकादश गावो दशादितः । नवैतानीत्यादि पञ्च यस्य प्रातरिति त्रयम् ॥
जुष्टः प्राण इति प्रश्नावुपहोमाः प्रकीर्तिताः । 'पीवः सूक्ताख्य ईरितः' ॥
तत्राहमस्म्यनुवाकाद्धर्ता हरिं च योजयेत् । अग्निर्नः पातु नक्षत्रेष्टिरग्नेः कृत्तिकात्रिभिः ॥
युवाँसुरामसहितः स्वाद्वीं प्रश्नस्तु कौकिली । अश्नन्ति पाशुकं हौत्रं सर्वानच्छिद्रकाण्डकम् ॥
'नृमेधो ब्रह्मणे प्रश्नः'
तुभ्यं देवेभ्य इति च दिवश्येनीसमाह्वयौ । तपसा देवेभ्य इति द्वावपाद्यौ समीरितौ ॥
शन्नः सांहित्युपनिषद्याज्ञिक्यम्भस्य विश्रुता । भृगुर्ब्रह्मेति वारुण्यः प्रोक्तास्तित्तिरिणा इमाः ॥ इति ।

## ( ५ ) पञ्चमं स्वायम्भुवं काण्डम् ।

'स्वायम्भुवं काण्डं काठके पठितो विधिः' इति सूत्रम् । काण्डानुक्रमणिका च 'ब्रह्माम्नायविधावपि' इति आम्नायविधिरपि तत्रैव व्याख्यातः— 'स्वाध्यायब्राह्मणमिति सह वै प्रश्न उच्यते' इति ।

## इति पञ्चकाण्डानि ।

अत्र सूत्रेषु 'सब्राह्मणानि सानुब्राह्मणानि प्राजापत्यानि अनुब्राह्मणस्य पृथङ्निर्देशात् अन्यत्र वेदेषु तदप्रसिद्धेः तत्स्वरूपभेदज्ञानाय वैदिकानां मतं प्रदर्श्यते' । ( प्रपाठकेऽथाष्टमेऽस्मिन् राजसूयो निगद्यते इत्यादि ) ।

अष्टमे मन्त्रकाण्डस्थे कर्मणां बहुलत्वतः । तत्सन्निधये प्रोक्ताः मन्त्रा विधिपुरःसराः ॥
अनूद्य तान्विधीनर्थवादो ब्राह्मण ईरितः । सम्प्रदायविदोऽतोऽत्र ब्राह्मणद्वयमूचिरे ॥
'ब्राह्मणं' मन्त्रकाण्डस्थविधिजातमितीरितम् । अनुब्राह्मणमन्यत्तु कथितं सार्थवादकम् ॥ ( तै० सं० भाष्ये. १।८।१ )

एतेन मन्त्राणां कर्मणि विनियोजकं विधिरूपं वाक्यजातं ब्राह्मणं, तथा विधेरनुवादेन अर्थवादसहितं क्वचित् मन्त्रार्थोपवर्णनयुक्तं वाक्यजातमेवानुब्राह्मणमिति गम्यते । तस्यास्य दिग्दर्शनार्थं एकमेव स्थानं प्रदर्श्यते ।

तथाहि 'इषे त्वोर्जे त्वा' इति अस्य पौरोडाशिकस्य दर्शपूर्णमासेष्टिमन्त्रसमूहस्य विधायकं ब्राह्मणं प्रसिद्धे ( तै० ब्रा० प्र० ३।२ ) ब्राह्मणग्रन्थे 'तृतीयस्यामितो दिवि सोम आसीत् प्रत्युष्टꣳ रक्षः' इति प्रश्नद्वयं विद्यते । तथा 'इषे त्वा' इत्यस्यैव मन्त्रव्याख्यानरूपं अर्थवादसहितं अनुब्राह्मणं तु ( तै० सं० २।५।१ ) संहिताग्रन्थे 'विश्वरूपो वै त्वाष्ट्रः' 'समिधो यजति' इति प्रश्नद्वयं भवति । अवशिष्टानां तु तत्तद्विषयविशेषादवगन्तव्यम् ।

## अथ दिवाकीर्त्यानि ।

'कारीर्यश्चाथ पिव्याश्च दिवाकीर्त्येति यत्र च । रुद्रः सन्ततिरित्येतावनुवाकौ च सात्रिके ॥
होतृविध्यवसाने च ह्यनुवाकचतुष्टयम् । सूक्तेषु सूक्तं यत्सौर्यं मेधो यश्चैव पित्रियः ॥
काठकानि च सर्वाणि सर्वाण्यारण्यकानि च । दिवाकीर्त्यानि शाखायामेतावन्तीति धारणा ।' इति । कारीर्यः "मारुतमसि मरुतामोजः" ( तै० सं० २,४,७,१;९,१ ) इति चत्वारोऽनुवाकाः ।

---

× 'जीमूतस्य, यदक्रन्दः, मा नो हिꣳसीत्, ये वाजिनं, समिद्दिशां' इति षडनुवाकाः ।
※ प्रजननप्रश्ने 'अङ्गिरसो वै' इति च चतुर्थानुवाकमारभ्य ।

पित्र्याः-‘ सोमाय पितृमते, उशन्तस्त्वा हवामह उशन्तः, इन्द्रो वृत्रꣳ हत्वा, वैश्वदेवेन वै प्रजापतिः प्रजा असृजत, ता वरुणप्रघासैः, अग्नये देवेभ्यः पितृभ्यः, सुरावन्तं बर्हिषदं, उशन्तस्त्वा हवामह, आ नो अग्ने सुकेतुना ’ इत्येतेऽनुवाकाः। दिवाकीर्त्येति पदं यस्मिन्ननुवाकेऽस्ति स च अनुवाकः । ‘ असावादित्योऽस्मिन् ’ इति। रुद्रः— **नमस्ते रुद्र** इति प्रश्नः । सत्रप्रकरणे- ‘ सन्ततिर्वै, एकविꣳश एषः ’ इत्यनुवाकौ । होतृविध्यवसाने— ‘ प्रजापतिः सोऽन्तर्वान् ’ इत्याद्यनुवाकचतुष्टयम् । ‘ **सूर्यो देवीमुषसमित्यारभ्य ‘ सूर्य आत्मा जगतस्तस्थुषश्च** ’ इत्यन्तं सूर्यसूक्तम्। पितृमेधः ‘ **परे युवाꣳसम्** ’ इति प्रश्नः । ‘ **काठकानि, आरण्यकानि च** ’ इत्येतानि तैत्तिरीयशाखायां दिवैव कीर्त्यानि भवन्तीत्यर्थः । इति ।

एवमेतेष्वेव पञ्चकाण्डेषु हिरण्यकेशीयानां नवकाण्डानि प्रसिद्धानि- ‘ आरुणं काण्डं, सांहित्यो देवता उपनिषदः, वारुणीर्देवता उपनिषदः, याज्ञिकीर्देवता उपनिषदः,’ इति अन्यान्यपि चत्वारि काण्डानि अधिकानि तत्रैवान्तरविभागेन परिकल्पितानि भवन्ति । इति नवकाण्डपक्षे काण्डानि । षट्काण्डपक्षे आरुणान्तानि षट्, पञ्चपक्षे स्वायम्भुवान्तानि पञ्च । चतुष्पक्षे वैश्वदेवान्तानि चत्वारि ।

नवपक्षे तेषां विभागः ‘ **भद्रं कर्णेभिरिति** ’ प्रश्नः आरुणं काण्डम् ॥ १ ॥ ‘ **शन्नो मित्रः** ’ इति पूर्वोत्तरशान्तिसहितः ‘ **शीक्षां व्याख्यास्यामः** ’ इति प्रश्नः सांहित्यो देवता उपनिषदः ॥ २ ॥ ‘ **अम्भस्य पारे** ’ इति प्रश्नः याज्ञिक्यो देवता उपनिषदः ॥३॥ ‘ **ब्रह्मविद्-भृगुर्वै वारुणिः** ’ इति प्रश्नद्वयं सशान्तिकं वारुण्यो देवता उपनिषदः ॥४॥

मातृदत्तेन तु स्वायम्भुवकाण्डमात्रमधिकं पाक्षिकत्वेन सङ्गृहीतम् । आरुणादिकाण्डानि तु नैव सङ्गृहीतानि तस्मिन् कल्पे, ‘भद्रं प्रश्नः’ आग्नेयकाण्डेऽन्तर्भवति काठकत्वसामान्यात्, अवशिष्टाः पञ्चप्रश्नाः वैश्वदेवकाण्डस्य अन्त्यत्वात् तत्रैवान्तर्भवन्ति । स्वायम्भुवकाण्डस्य पृथक्त्वपक्षे तस्यैवान्त्यत्वात् तत्रैवान्तर्भावो ज्ञेयः इति । तद्यथाकाण्डमध्ययनम् ।

---

## कृष्णयजुर्वेदः (तैत्तिरीय शाखायाः) काण्डविभागोपहितः

# आर्षेयपाठक्रमः ।

[ बौधायन-हिरण्यकेशादि-काण्डानुक्रमणिकायां प्रसिद्धः । ]

**अथ तैत्तिरीया कृष्णयजुःसंहिता-मन्त्रभागात्मिका ।**

**अथ तैत्तिरीयम् कृष्णयजुर्ब्राह्मणं विधि-(ब्राह्मण-) भागात्मकम्**

**॥ अथ प्रथमं प्राजापत्यं काण्डम् ॥ १ ॥**

**प्रथमः पौरोडाशिकः प्रश्नः ।**

| अनुक्रमः | मन्त्रप्रतीकः | ग्रन्थः कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ | इषे त्वोर्जे त्वा. | तै. सं. १, १, १ | यजुर्मन्त्राः । |
| २ | यज्ञस्य घोषदसि. | ,, २ | ,, |
| ३ | शुन्धध्वं दैव्याय | ,, ३ | |
| ४ | कर्मणे वां देवेभ्यः | ,, ४ | |

*

**प्रथमं पौरोडाशिकब्राह्मणम् ।**

| अनुक्रमः | ब्राह्मणवाक्यप्रतीकः | ग्रन्थः कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ | तृतीयस्यामितो. | तै. ब्रा. ३, २, १-१० | दशानुवाकात्मकः पूर्णः प्रश्नः |
| २ | प्रत्युष्टꣳ रक्षः | ,, ३, ३, १-११ | एकादशानुवाकात्मकः पूर्णः प्रश्नः |

| | | | |
|---|---|---|---|
| ५ देवो वः सवितो | तै. सं. | | ५ |
| ६ अवधूतꣳ रक्षः | ,, | | ६ |
| ७ धृष्टिरसि ब्रह्म यच्छ | ,, | | ७ |
| ८ सं वपामि समापः | ,, | | ८ |
| ९ आ दद इन्द्रस्य | ,, | | ९ |
| १० प्रत्युष्टꣳ रक्षः | ,, | | १० |
| ११ कृष्णोऽस्याखरेष्ठः | ,, | | ११ |
| १२ भुवनमसि विप्रथस्व | ,, | | १२ |
| १३ वाजस्य मा प्रसवेन | ,, | | १३ |

( अनुवाकाः १३ )

॥ इति पौरोडाशिकमन्त्राः ॥

| | | | |
|---|---|---|---|
| ३ विश्वरूपो वै त्वाष्ट्रः | तै. सं. २, ५, १ | | अनुब्राह्मणम् |
| ४ त्वष्टा हतपुत्रः | ,, | २ | ,, |
| ५ इन्द्रं वृत्रं जघ्निवाँसं | ,, | ३ | ,, |
| ६ ब्रह्मवादिनो वदन्ति | ,, | ४ | ,, |
| ७ नासोमयाजी सन्नयेत् | ,, | ५ | ,, |
| ८ एष वै देवरथः | ,, | ६ | ,, |
| ९ समिधो यजति. | ,, | २, ६, १ | ब्राह्मणम् |
| १० चक्षुषी वा एते | ,, | २ | ,, |
| ११ प्रजापतिर्देवेभ्यः | ,, | ३ | ,, |
| १२ देवस्य त्वा सवितुः | ,, | ४ | ,, |
| १३ ब्रह्मवादिनो वदन्त्यद्भिः | ,, | ५ | ,, |
| १४ अग्नेस्त्रयो ज्यायाꣳसो. | तै. सं. २ ६ ६ | | |

१५ देवा वै सामिधेनीरनूच्य. ,, २, ५, ११ "निवीतं मनुष्याणां" (९-२६) इत्यत्र अनुवाकान्तो निवीतशेषः "न परोच्यः" इत्यन्तम्

१६ इन्द्रो वृत्रꣳ हत्वा. तै. ब्रा. १, ३, १० एकोऽनुवाकः

॥ इति पौरोडाशिकब्राह्मणम् ॥ ( अनुवाकाः ३५ )

---

॥ द्वितीयो याजमानप्रश्नः ॥

१ पयस्वतीरोषधयः तै. सं. १, ५, १० 'मम नाम' इत्यस्मिन्ननुवाकेऽनुवाकान्तं ( ७–१३ इति ) ७ मन्त्राः ।

| | | | |
|---|---|---|---|
| २ सं त्वा सिञ्चामि यजुषा. | ,, | १, ६, १ | |
| ३ ध्रुवोऽसि ध्रुवोऽहꣳ | ,, | | २ |
| ४ अग्निर्मा दुरिष्टात् पातु | ,, | | ३ |
| ५ बर्हिषोऽहं देवयज्यया, | ,, | | ४ |
| ६ आ प्यायतां ध्रुवा. | ,, | | ५ |
| ७ अगन्म सुवः सुवरगन्म. | ,, | | ६ |

( अनुवाकाः ७ )

॥ इति याजमानमन्त्राः ॥

॥ द्वितीयं याजमानब्राह्मणम् ॥

| | | | |
|---|---|---|---|
| १ यथा वै समृतसोमाः. | तै. सं. | १, ६, | ७ |
| २ यो वै श्रद्धामनारभ्य. | ,, | | ८ |
| ३ प्रजापतिर्यज्ञान्. | ,, | | ९ |
| ४ ध्रुवोऽसि ध्रुवोऽहꣳ | ,, | | १० |
| ५ यौ वै सप्तदशं. | ,, | | ११ |
| ६ पाकयज्ञं वा | ,, | १, ७, | १ |
| ७ परोक्षं वा अन्ये देवाः | ,, | | ३ |
| ८ बर्हिषोऽहं देवयज्यया. | ,, | | ४ |
| ९ ध्रुवां वै रिच्यमानाम्. | ,, | | ५ |
| १० अगन्म० अगमेत्याह. | ,, | | ६ |

॥ इति याजमानब्राह्मणम् ॥ ( अनुवाकाः १० )

---

॥ तृतीयो होतृप्रश्नः ॥

| | | प्रपा. | अनु. |
|---|---|---|---|
| १ चित्तिः स्रुक्. | तै. आ. | ३, | १ |
| २ पृथिवी होता. | ,, | | २ |
| ३ अग्निर्होता. | ,, | | ३ |
| ४ सूर्यं ते चक्षुः. | ,, | | ४ |
| ५ महाहविर्होता. | ,, | | ५ |
| ६ वाग्घोता. | ,, | | ६ |

॥ तृतीयं होतृब्राह्मणम् ॥

१ प्रजापतिरकामयत प्रजाः सृजेयेति. तै. ब्रा. २, २, १–११ एकादशानुवाकात्मकः पूर्णः प्रश्नः ।

२ ब्रह्मवादिनो वदन्ति, किं चतुर्होतृणां० ,, २, ३, १–११ एकादशानुवाकात्मकः पूर्णः प्रश्नः ।

( अनुवाकाः २२ )

॥ इति होतृब्राह्मणम् ॥

| | | | |
|---|---|---|---|
| ७ ब्राह्मण एकहोता. | तै. आ. | | ७ |
| ८ अग्निर्यजुर्भिः. | ,, | | ८ |
| ९ सेनेन्द्रस्य. | ,, | | ९ |

## ॥ तै० कृष्णयजुःसंहिता ॥

| अनु. मन्त्रप्रतीकः | ग्रन्थः | कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १० देवस्य त्वा सवितुः | तै. आ. | ३, १० | |
| ११ सुवर्णं घर्मम्. | ,, | ११ | |
| १२ सहस्रशीर्षा पुरुषः | ,, | १२ | |
| १३ अद्भ्यः सम्भूतः. | ,, | १३ | |

॥ इति होतृमन्त्राः ॥ ( अनुवाकाः १३ )

### ॥ चतुर्थो हौत्रप्रश्नः ॥

| अनु. मन्त्रप्रतीकः | ग्रन्थः | कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ सत्यं प्रपद्ये. | तै. ब्रा. | ३, ५, १ | |
| २ प्र वो वाजा अभिद्यवः | ,, | २ | |
| ३ अग्न महाऽअसि ब्राह्मणभारत | ,, | ३ | |
| ४ अग्निर्होता वेत्त्वग्निः | ,, | ४ | |
| ५ समिधो अग्न आज्यस्य | ,, | ५ | |
| ६ अग्निर्वृत्राणि जङ्घनत्. | ,, | ६ | |
| ७ अग्निर्मूर्धा दिवः ककुत्. | ,, | ७ | |
| ८ उपहूतꣳ रथन्तरम्. | ,, | ८ | |
| ९ देवं बर्हिर्वसुवने. | ,, | ९ | |
| १० इदं द्यावापृथिवी. | ,, | १० | |
| ११ तच्छंयोरावृणीमहे. | ,, | ११ | |
| १२ आ प्यायस्व सं ते, इह त्वष्टारमग्रियम्. | ,, | १२ | |
| १३ उपहूतꣳ रथन्तरम्. | ,, | १३ | |

॥ इति हौत्रमन्त्राः ॥ ( अनुवाकाः १३ )

## ॥ तै० कृष्णयजुर्ब्राह्मणम्

| अनु. ब्राह्मणवाक्यप्रतीकः | ग्रन्थः | कां. प्र. अनु. | विशेषः |
|---|---|---|---|

### ॥ चतुर्थं हौत्रब्राह्मणम् ॥

| अनु. ब्राह्मणवाक्यप्रतीकः | ग्रन्थः | कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ देवा वै नर्चि न यजुषि. | तै. सं. | २, ५, ७ | |
| २ अयज्ञो वा एष योऽसामा. | ,, | ८ | |
| ३ अग्ने महाꣳ असीत्याह | ,, | ९ | |
| ४ त्रीꣳस्तृचाननु ब्रूयात्. | ,, | १० | |
| ५ निवीतं मनुष्याणाम्. | ,, | ११ | निवीतमित्यादि मनुष्यलोकं चाभि जयतीत्यन्तं (१–८) |
| ६ मनुः पृथिव्या यज्ञियमैच्छत् | ,, | २, ६, ७ | |
| ७ पशवो वा इडा स्वयमा दत्ते | ,, | ८ | |
| ८ अग्नीध आ दधाति. | ,, | ९ | |
| ९ देवा वै यज्ञस्य स्वगाकर्तारं. | ,, | १० | |
| १० सꣳश्रवा ह सौवर्चनसः | ,, | १, ७, २ | |

( अनुवाकाः १० )

॥ इति हौत्रब्राह्मणम् ॥

### ॥ पञ्चमः पितृमेधप्रश्नः ॥

| अनु. मन्त्रप्रतीकः | ग्रन्थः | कां. प्र. अनु. |
|---|---|---|
| १ परे युवाꣳसं प्रवतो. | तै. आ. | ६, १ |
| २ य एतस्य पथो गोप्तारः | ,, | २ |
| ३ प्र केतुना बृहता. | ,, | ३ |
| ४ यं ते अग्निममन्थाम | ,, | ४ |
| ५ आयातु देवः सुमनाभिः | ,, | ५ |
| ६ वैश्वानरे हविरिदं जुहोमि. | ,, | ६ |
| ७ उत्ते तभ्नोमि पृथिवीम्. | ,, | ७ |
| ८ अपूपवान् घृतवान्. | ,, | ८ |
| ९ एतास्ते स्वधा अमृताः | ,, | ९ |

| | | | |
|---|---|---|---|
| १० | आरो तायुर्जरसम्. | ,, | १० |
| ११ | अप नः शोशुचदघम्. | ,, | ११ |
| १२ | अपश्याम युवतिम्. | ,, | १२ |

॥ इति पितृमेधमन्त्राः ॥ ( अनुवाकाः १२ )

## ॥ इति प्रथमं प्राजापत्यं काण्डं संपूर्णम् ॥

| संहितायां मन्त्रभागे | प्रश्नाः | ब्राह्मणे विधिभागे |
|---|---|---|
| १३ अनुवाकाः | १ पौरोडाशिके | अनुवाकाः- ३५ |
| ७ ,, | २ याजमाने | ,, १० |
| १३ ,, | ३ होतृप्रश्ने | ,, २२ |
| १३ ,, | ४ हौत्रे | ,, १० |
| १२ ,, | ५ पितृमेधे | ,, ० |
| ५८ अनुवाकाः। | ५ प्रश्नाः। | अनुवाकाः ७७ |

एवं प्रथमे प्राजापत्यकाण्डे–

| | | |
|---|---|---|
| प्रश्नाः | ५ | प्रश्नाः। |
| संहितायाम् | ५८ | अनुवाकाः। |
| ब्राह्मणे | ७७ | ,, |

## ॥ तै० कृष्णयजुःसंहिता ॥ ॥ तै० कृष्णयजुर्ब्राह्मणम् ॥

## ॥ अथ द्वितीयं सौम्यं काण्डम् ॥ २ ॥

॥ प्रथमः आध्वर्यवः प्रश्नः ॥

| अनु. | मन्त्रप्रतीकः | ग्रन्थः कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ | आप उन्दन्तु जीवसे | तै. सं. १, २, १ | |
| २ | आकूत्यै प्रयुजेऽग्नये | ,, २ | |
| ३ | दैवीं धियं मनामहे. | ,, ३ | |
| ४ | इयं ते शुक्र तनूः. | ,, ४ | |
| ५ | वस्व्यसि रुद्राऽसि | ,, ५ | |
| ६ | अꣳशुना ते अꣳशुः | ,, ६ | |
| ७ | सोमं ते क्रीणामि. | ,, ७ | |
| ८ | उदायुषा स्वायुषा | ,, ८ | |
| ९ | प्र च्यवस्व भुवस्पते. | ,, ९ | |
| १० | अग्नेरातिथ्यमसि. | ,, १० | |
| ११ | अꣳशुरꣳशुस्ते. | ,, ११ | |
| १२ | वित्तायनी मेऽसि. | ,, १२ | |
| १३ | युञ्जते मनः. | ,, १३ | |
| १४ | देवस्य त्वा० अभ्रिरसि. | ,, १, ३, १ | |
| १५ | रक्षोहणो वलगहनः | २ | |
| १६ | विभूरसि प्रवाहणः | ,, ३ | |
| १७ | त्वꣳ सोम तनूकृद्भ्यः. | ,, ४ | |
| १८ | अत्यन्यानगाम्. | ,, ५ | |

॥ प्रथमं आध्वर्यवब्राह्मणम् ॥

| अनु. | ब्राह्मणवाक्यप्रतीकः | ग्रन्थः कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ | प्राचीनवꣳशं करोति. | तै.सं. ६, १, १–११ | सम्पूर्णः प्रश्नः |
| २ | यदुभौ विमुच्य. | ,, ६, २, १–११ | सम्पूर्णः प्रश्नः |
| ३ | चात्वालाद्धिष्णियात् | ,, ६, ३, १–११ | सम्पूर्णः प्रश्नः |
| ४ | यज्ञेन वै प्रजापतिः | ,, ६, ४, १ | |
| ५ | देवा वै यज्ञमाग्नीध्रे. | ,, २ | |
| ६ | ब्रह्मवादिनो वदन्ति, स त्वा अध्वर्युः स्यात्. | ,, ,, ३ | अनुब्राह्मणम्। |
| ७ | स्फ्येन वेदिमुद्धन्ति. | ,, ६, ६, ४–११ | इत्यारभ्य अष्टानुवाकाः प्रश्नान्तम्। |
| ८ | प्रजननं ज्योतिः. | ,, ७, १, १ | अनुब्राह्मणम् |
| ९ | प्रातःसवने वै गायत्रेण. | ,, २ | ,, |
| १० | ब्रह्मवादिनो वदन्ति स त्वै यजेत. | ,, ३ | ,, |
| ११ | देवासुराः संयत्ता आसन् स प्रजापतिरिन्द्रं ज्येष्ठं० | तै.ब्रा. १, ५, ९ | ब्राह्मणम् |
| १२ | स समुद्र उत्तरतः | ,, १० | ,, |
| १३ | ये वै चत्वारः स्तोमाः. | ,, ११ | ,, |
| १४ | तस्या वाचोऽवपादात्. | ,, १२ | ,, |

१९ पृथिव्यै त्वाऽन्तरिक्षाय तै. सं. ६
२० इषे त्वोपवीरसि. ,, ७
२१ आ दद ऋतस्य त्वा. ,, ८
२२ वाक्त आ प्यायताम् ,, ९
२३ सं ते मनसा मनः ,, १०
२४ समुद्रं गच्छ स्वाहा. ,, ११
२५ हविष्मतीरिमा आपः. ,, १२
२६ हृदे त्वा मनसे त्वा. ,, १३
२७ पवमानः सुवर्जनः. तै. ब्रा. १, ४, ८
२८ ब्रह्म सन्धत्तम्. ,, १, १, १

॥ इति आध्वर्यवमन्त्राः ॥ ( अनुवाकाः २८ )

॥ द्वितीयो ग्रहाख्यः प्रश्नः ॥

१ आ ददे ग्रावासि. तै. सं. १, ४, १-४२ अनुवाकाः
२ तरणिर्विश्वदर्शतः तै. आ. ३, १६

( अनुवाकाः ४३ )

॥ इति ग्रहमन्त्राः ॥

१ उदु त्यं जातवेदसम्. तै. सं. १, ४, ४३ दाक्षिणानि।

॥ समिष्टयजूꣳषि ॥

१ धाता रातिः. तै. सं. १, ४, ४४

॥ अवभृथयजूꣳषि ॥

१ उरुꣳ हि राजा वरुणः तै. सं. १, ४, ४५

( अनुवाकाः ३ )

॥ वाजपेयः ॥

१ देव सवितः प्रसुव. तै. सं. १, ७, ७
२ देवस्याहꣳ सवितुः. ,, ८
३ क्षत्रस्योल्बमसि. ,, ९
४ वाजस्येमं प्रसवः सुषुवे. ,, १०
५ अग्निरेकाक्षरेण. ,, ११
६ उपयामगृहीतोऽसि. नृषदं त्वा. ,, १२

॥ इति वाजपेयमन्त्राः ॥ ( अनुवाकाः ६ )

## ॥ तै० कृष्णयजुःसंहिता ॥

अनु. मन्त्रप्रतीकः ग्रन्थः कां. प्र. अनु० विशेषः

( अनुवाकाः ५१ )

॥ इति आध्वर्यवब्राह्मणम् ॥

॥ द्वितीयं ग्रहब्राह्मणम् ॥

१ उभये वा एते तै. ब्रा. १, ४, १ अनुब्राह्मणम्
२ ब्रह्मवादिनो वदन्ति ,, १, ५, ४ ,,
३ देवस्य त्वा सवितुरिति तै. सं. ६,४,४-११ प्रश्नान्तं अष्टानुवाकाः
४ इन्द्रो वृत्राय वज्रम् ,, ६,५,१-११ कृत्स्नः प्रश्नः

॥ इति ग्रहब्राह्मणम् ॥ ( अनुवाकाः २१ )

१ सुवर्गाय वा एतानि. तै. सं. ६, ६, १ दाक्षिणब्राह्मणम्।

॥ समिष्टयजुर्ब्राह्मणम् ॥

१ समिष्टयजूꣳषि जुहोति. तै. सं. ६, ६, २

॥ अवभृथयजुर्ब्राह्मणम् ॥

१ अवभृथयजूꣳषि जुहोति. तै. सं. ६, ६, ३

( अनुवाकाः ३ )

॥ वाजपेयब्राह्मणम् ॥

१ देवा वै यथादर्शम्. तै. ब्रा. १, ३, २
२ देवा वै यदन्यैर्ग्रहैः. ,, ३
३ ब्रह्मवादिनो वदन्ति, नाग्निष्टोमः ,, ४
४ सावित्रं जुहोति. ,, ५
५ देवस्याहꣳ सावितुः प्रसव, इत्याह. ,, ६

## ॥ तै० कृष्णयजुर्ब्राह्मणम् ॥

अनु. ब्राह्मणवाक्यप्रतीकः ग्रन्थः कां. प्र. अनु. विशेषः

६ ताप्र्यं यजमानम्. तै. ब्रा. १, ३, ७
७ सप्तान्न होमान् जुहोति. ,, ८

८ नृषदं त्वेत्याह. ,, ९

॥ इति वाजपेयब्राह्मणम् ॥ ( अनुवाकाः ८ )

॥ शुक्रियाणि, शुक्रियः प्रश्नः ॥

१ नमो वाचे. तै. आ. ४, १–४२ अनुवाकाः

॥ इति शुक्रियमन्त्राः ॥ ( अनुवाकाः ४२ )

॥ शुक्रियब्राह्मणम् ॥

१ देवा वै सत्रमासत. तै. आ. ५, १–१२ कृत्स्नः प्रश्नः

॥ इति शुक्रियब्राह्मणम् ॥ ( अनुवाकाः १२ )

॥ सवाः ( सवप्रश्नः ) ॥

१ अषाढं युत्सु पृतनासु. तै. ब्रा. २, ७, ४ अन्तिमो मन्त्रः
२ ये मे पञ्चाशतं ददुः ,, ५ ,, मन्त्रः
३ रेवज्जातः सहसा वृद्धः ,, ६ एको मन्त्रः
४ सिꣳहे व्याघ्र उतया. ,, ७ पूर्णः अनुवाकः
५ अभि प्रेहि वीरयस्व. ,, ८ ,,
६ अस्याजरासो. ,, १२ ,,
७ तिष्ठा हरी रथ आ ,, १३ ,,
८ व्याघ्रोऽयमग्नौ चरति. ,, १५ ,,
९ अभि प्रेहि वीरयस्व ,, १६ ,,
१० ये केशिनः प्रथमाः ,, १७ ,,

( अनुवाकाः ८ )

॥ इति सवमन्त्राः ॥

॥ सवब्राह्मणम् ॥

१ त्रिवृत्स्तोमो भवति तै. ब्रा. २,७,१
२ यदाग्नेयो भवति अग्निमुखा० ,, २
३ यदाग्नेयो भवति आग्नेयो ,, ३
४ न वै सोमेन सोमस्य. ,, ४ तत्सर्वं भवतीत्यन्तम्
५ यो वै सोमेन सूयते ,, ५ तत्सर्वं भवतीत्यन्तम्
६ एष गोसवः, ,, ६ षट्त्रिꣳशः सर्वः इत्यन्तम् ।

( इत्याह स्वाराज्यमेवैनं गमयति इत्यनुवाकशेषः )

७ प्रजापतिः प्रजाः ,, ९
८ प्रजापतिरकामयत. ,, १०
९ अगस्त्यो मरुद्भ्यः ,, ११
१० प्रजापतिः पशूनसृजत ,, १४
११ इन्द्रं वै स्वा विशः– ,, १८

॥ इति सवब्राह्मणम् ॥ ( अनुवाकाः ११ )

## ॥ इति द्वितीयं सौम्यं काण्डं संपूर्णम् ॥

| संहितायाम् | | प्रश्नाः | | ब्राह्मणे |
|---|---|---|---|---|
| २८ | अनुवाकाः | १ आध्वर्यवम् | अनुवाकाः | ५१ |
| ४२ | ,, | २ ग्रहाः | ,, | २१ |
| ३ | ,, | ३ दाक्षिणादित्रयं | ,, | ३ |
| ६ | ,, | ४ वाजपेयः | ,, | ८ |
| ४२ | ,, | ५ शुक्रियाणि | ,, | १२ |
| ८ | ,, | ६ सवाः | ,, | ११ |
| १२९ अनुवाकाः । | | ६ प्रश्नाः । | अनुवाकाः | १०६ |

एवं द्वितीये सौम्यकाण्डे—

| | | |
|---|---|---|
| प्रश्नाः | ६ | प्रश्नाः । |
| संहितायाम् | १२९ | अनुवाकाः । |
| ब्राह्मणे | १०६ | ,, |

## ॥ अथ तृतीयमाग्नेयं काण्डम् ॥३॥

॥ अग्न्याधेयम् ॥

| अनु. | मन्त्रप्रतीकः | ग्रन्थः कां. प्र. अ. | विशेषः |
|---|---|---|---|
| १ | उद्धन्यमानमस्या | तै. ब्रा. १, २, १ | एकोऽनुवाकः |
| २ | घर्मः शिरस्तदयमग्निः | ,, १, १, ७ | ,, |

॥ इत्यग्न्याधेयमन्त्राः ॥ ( अनुवाकौ २ )

॥ अग्न्याधेयब्राह्मणम् ॥

| अनु. | ब्राह्मणवाक्यप्रतीकः | ग्रन्थः कां. प्र. अ. | |
|---|---|---|---|
| १ | कृत्तिकास्वग्निमादधीत | तै. ब्रा. १, १, २–६ | पञ्चानुवाकाः |
| २ | इमे वा एते. | ,, १, १, ८–१० | त्रयोऽनुवाकाः |

॥ इत्यग्न्याधेयब्राह्मणम् ॥ ( अनुवाकाः ८ )

॥ पुनराधेयम् ॥

१ भूमिर्भूम्ना. तै. सं. १, ५, ३ एकोऽनुवाकः

॥ इति पुनराधेयम् ॥ ( अनुवाकः १ )

॥ पुनराधेयब्राह्मणम् ॥

१ देवासुराः संयत्ता आसन्
ते देवा विजयमुपयन्तः तै. सं. १, ५, १
२ परा वा एष यज्ञम्. ,, २
३ भूमिर्भूम्ना० इत्याह. ,, ४
४ देवासुराः संयत्ता आसन् तै. ब्रा. १, ३, १

॥ इति पुनराधेयब्राह्मणम् ॥ ( अनुवाकाः ४ )

---

॥ अग्निहोत्रम् ॥

... ...

॥ अग्निहोत्रब्राह्मणम् ॥

१ अङ्गिरसो वै तै. ब्रा. २, १, १–११ समग्रः प्रश्नः॥
२ उदस्थाद्देव्यदितिः ,, १, ४, ३ एकोऽनुवाकः
३ नि वा एतस्य ,, ४

॥ इत्यग्निहोत्रब्राह्मणम् ॥ ( अनुवाकाः १३ )

# ॥ तै० कृष्णयजुःसंहिता ॥

॥ अग्न्युपस्थानम् ॥

| अनु. | मन्त्रप्रतीकः | ग्रन्थः कां. प्र. अ. | विशेषः |
|---|---|---|---|
| १ | उपप्रयन्तो अध्वरम्. | तै. सं. १, ५, ५ | एकोनुवाकः |
| २ | सं पश्यामि प्रजा अहम्. | ,, ६ | ,, |
| ३ | मम नाम प्रथमं जातवेदः | ,, १० | षण्मन्त्राः |

॥ इत्यग्न्युपस्थानमन्त्राः ॥ ( अनुवाकाः ३ )

# ॥ तै० कृष्णयजुर्ब्राह्मणम् ॥

॥ अग्न्युपस्थानब्राह्मणम् ॥

| अनु. | ब्राह्मणवाक्यप्रतीकः | ग्रन्थः कां. प्र. अनु. | विशेषः |
|---|---|---|---|
| १ | अयज्ञो वा एषः | तै. सं. १, ५, ७ | |
| २ | सं पश्यामि प्रजा अहम् | ,, ८ | |
| ३ | अग्निहोत्रं जुहोति. | ,, ९ | |

॥ इत्यग्न्युपस्थानब्राह्मणम् ॥ ( अनुवाकाः ३ )

---

॥ अग्निचयनम् ॥

| अनु. | मन्त्रप्रतीकः | ग्रन्थः | विशेषः |
|---|---|---|---|
| १ | युञ्जानः प्रथमं मनः | तै. सं. ४, १, १–१० | दशानुवाकाः |
| २ | विष्णोः क्रमोऽसि | ,, ४, २, १–१० | ,, |
| ३ | आ प्यायस्व मदिन्तम | तै. आ. ३, १७ | एको मन्त्रः पूर्वत्र २ प्रश्ने सप्तानुवाकानन्तरम् |
| ४ | अपां त्वेमन्त्सादयामि. | तै. सं. ४, ३, १–१२ | द्वादशानुवाकाः |
| ५ | ईयुष्टे ये | तै. आ. ३, १८ | एको मंत्रः पूर्वत्र ३ प्रश्ने एकादशानुवाकानन्तरम् |
| ६ | रश्मिरसि क्षयाय त्वा. | तै. सं. ४, ४, १–११ | एकादशानुवाकाः |
| ७ | ज्योतिष्मतीं त्वा | तै. आ. ३, १९ | एको मन्त्रः पूर्वत्र ४ प्रश्ने नवानुवाकानन्तरम् |
| ८ | नमस्ते रुद्र मन्यवे. | तै. सं. ४, ५, १–११ | कृत्स्नः प्रश्नः |
| ९ | अश्मन्नूर्जं पर्वते | ,, ४, ६, १–५ | पञ्चानुवाकाः |
| १० | अग्नाविष्णू सजोषसा | ,, ४, ७, १–१४ | चतुर्दशानुवाकाः |
| ११ | आयुषः प्राणꣳ सन्तनु | तै. ब्रा. १, ५, ७ | |
| १२ | इन्द्रो दधीचो अस्थभिः | ,, ८ | |

॥ इत्यग्निचयनमन्त्राः ॥ (अनुवाकाः ७८)

॥ अग्निचयनब्राह्मणम् ॥

| अनु. | ब्राह्मणवाक्यप्रतीकः | ग्रन्थः | विशेषः |
|---|---|---|---|
| १ | सावित्राणि जुहोति | तै. सं. ५, १, १–१० | दशानुवाकाः |
| २ | विष्णुमुखा वै देवाः | ,, ५, २, १–१० | ,, |
| ३ | उत्सन्नयज्ञो वा एषः | ,, ५, ३, १–११ | एकादशानुवाकाः |
| ४ | देवासुराः० ते न | ,, ५, ४, १–११ | ,, (एतेषां द्विचत्वारिंशिकमिति संज्ञा ।) |
| ५ | यदेकेन सꣳस्थापयति | ,, ५, ५, १–१० | दशानुवाकाः |
| ६ | हिरण्यवर्णाः शुचयः | ,, ५, ६, १–१० | मन्त्रब्राह्मणात्मकः |
| ७ | यो वा अयथादेवतम् | ,, ५, ७, १–१० | (एतेषां त्रैचिकमिति संज्ञा ।) |

(प्राणभृत उपधाय संयत उप दधाति तै. सं. ५।२।१०), अयं पुरो भुवः ( तै. सं. ४।३।२ ) इत्यस्य अनन्तरम्

॥ इत्यग्निचयनब्राह्मणम् ॥ ( अनुवाकाः ७२ )

॥ सावित्रम् ॥

१ संज्ञानं विज्ञानं तै. ब्रा. ३,१०,१-८ अष्टावनुवाकाः

॥ इति सावित्रमन्त्राः ॥ (अनुवाकाः ८)

॥ सावित्रब्राह्मणम् ॥

१ प्रजापतिर्देवानसृजत तै. ब्रा. ३,१०,९
१ इयं वाव सरघा ,, १०
२ कश्चिद्ध वा अस्मात् ,, ११

॥ इति सावित्रब्राह्मणम् ॥ (अनुवाकाः ३)

---

॥ नाचिकेतम् ॥

१ लोकोऽसि स्वर्गोऽसि. तै. ब्रा. ३,११,१
२ त्वमग्ने रुद्रो असुरः ,, २
३ अग्नाविष्णू सजोषसा ,, ३
४ अन्नपतेऽन्नस्य नो देहि ,, ४
५ सप्त ते अग्ने समिधः ,, ५
६ यत्तेऽचितं यदु चितम् ,, ६

॥ इति नाचिकेतमन्त्राः ॥ (अनुवाकाः ६)

॥ नाचिकेतब्राह्मणम् ॥

१ अयं वाव यः पवते तै. ब्रा. ३,११,७
२ उशन् ह वै वाजश्रवसः ,, ८
३ त९ हैतमेके पशुबन्ध एव ,, ९
४ यां प्रथमामिष्टकां ,, १०

॥ इति नाचिकेतब्राह्मणम् ॥ (अनुवाकाः ४)

---

॥ चातुर्होत्रीयम् ॥

१ चित्तिः स्रुक्. तै. आ. ३,१ चित्तिप्रश्ने हौत्रेऽन्तर्गतम्

॥ इति चातुर्होत्रीयम् ॥ (अनुवाकः १)

॥ चातुर्होत्रीयब्राह्मणम् ॥

१ ब्रह्म वै चतुर्होतारः तै. ब्रा. ३,१२, ५

॥ इति चातुर्होत्रीयब्राह्मणम् ॥ (अनुवाकः १)

---

॥ वैश्वसृजम् ॥

१ यच्चामृतं यच्च मर्त्यम् तै. ब्रा. ३,१२,६
२ सर्वा दिशो दिक्षु ,, ७
३ सर्वान्दिव९ सर्वान्देवान् ,, ८
४ ऋचां प्राची महती ,, ९

॥ इति वैश्वसृजमन्त्राः ॥ (अनुवाकाः ४)

॥ वैश्वसृजब्राह्मणम् ॥

... ...

---

॥ आरुणम् ॥

१ भद्रं कर्णेभिः० तै. आ. १, १-३२ मन्त्रब्राह्मणात्मकः

पूर्णः प्रश्नः

२ स्मृतिः प्रत्यक्षमैतिह्यम् ,, २ इह रातिरस्तु (९ मन्त्राः)
३ साकंजाना९ सप्तथमाहुः ,, ३ एकादशमन्त्राः पूर्णः प्रश्न

॥ आरुणब्राह्मणम् ॥

१ ... ... तै. आ. १, २—
२ नात्र भुवनं न पूषा ,, २ अनुवाकान्तम्
३ याः प्रतितिष्ठन्ति ,, ३ ,,

## ॥ तै० कृष्णयजुःसंहिता ॥

| अनु. | मन्त्रप्रतीकः | ग्रन्थः कां. प्र. अनु. | | | विशेषः |
|---|---|---|---|---|---|
| ४ | अक्षिदुःखोत्थितस्यैव | तै. आ. | १ | ४ | अनुवाकः |
| ५ | अतिताम्राणि वासा९सि | ,, | | ५ | चत्वारो मन्त्राः |
| ६ | अत्यूर्ध्वाक्षोऽतिरश्वात् | ,, | | ६ | मन्त्रात्रयः |
| ७ | अव द्रप्सो अ९शुमतीं | ,, | | ,, | एको मन्त्रः |
| ८ | आरोगो भ्राजः | ,, | | ७ | ,, |
| ९ | यत्ते शिल्पम् | ,, | | ,, | ,, |

## ॥ तै० कृष्णयजुर्ब्राह्मणम् ॥

| अनुक्रमः | ब्राह्मणवाक्यप्रतीकः | ग्रन्थः कां. प्र. अनु. | | | विशेषः |
|---|---|---|---|---|---|
| ४ | ... ... | तै. आ. | | | |
| ५ | रुद्रस्य त्वेव धनुरार्त्निः | ,, | १, | ५ | अनुवाकान्तम् |
| ६ | तस्मै सर्वं ऋतवो नमन्ते | ,, | | ६ | तस्यैषा भवतीत्यन्तम् |
| ,, | एतयैवेन्द्रः सलावृक्या सह | ,, | | ,, | अनुवाकान्तम् |
| ८ | ... ... | | | | |
| ९ | ते अस्मै सर्वे कश्यपात् | ,, | | ७ | तेषामेषा भवतीत्यन्तम् |

द्विवꣳ स्तभानाऽन्तरिक्षं पृण पृथिवीं दृꣳह[10] ध्रुतानस्त्वा मारुतो मिनोतु मित्रावरुणयोर्ध्रुवेण धर्मणा[11] ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि[12] ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं दृꣳह[13] घृतेन द्यावापृथिवी आ पृणेथा[14]मिन्द्रस्य सदोऽसि[15] विश्वजनस्य छाया[16] परि त्वा गिर्वणो गिर इमा (२) भवन्तु विश्वतो वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टय[17] इन्द्रस्य स्यूरसी[18]न्द्रस्य ध्रुवमसी[19]न्द्रमसीन्द्राय त्वा[20] ॥ (द्वेषं, इमा, अष्टादश च) ॥ १ ॥

उपरवनिर्माणम् ॥ सोमऋषिः ।

रक्षोहणो वलगहनो वैष्णवान् खनामी[1]दमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखानेदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति[2] गायत्रेण छन्दसाऽवबाढो वलगः[3] किमत्र[4] भद्रं[5] तन्नौ सह[6] विराडसि सपत्नहा[7] सम्राडसि भ्रातृव्यहा[8] स्वराडस्यभिमातिहा[9] विश्वाराडसि विश्वासां नाष्ट्राणाꣳ हन्ता[10] (१) रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान्[11] रक्षोहणो वलगहनोऽव नयामि वैष्णवान्[12] यवोऽसि यवयास्मद्द्वेषो यवयारातीः[13] रक्षोहणो वलगहनोऽव स्तृणामि वैष्णवान्[14] रक्षोहणो वलगहनोऽभि जुहोमि वैष्णवान्[15] रक्षोहणौ वलगहनावुप दधामि वैष्णवी[16] रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी[17] रक्षोहणौ वलगहनौ परि स्तृणामि वैष्णवी[18] रक्षोहणौ वलगहनौ वैष्णवी[19] बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय (२) वाचं वद[20] ॥ (हन्ता, -न्द्राय द्वे च) ॥ २ ॥

धिष्णियाः ॥ सोमऋषिः ।

विभूरसि प्रवाहणो[1] * - वह्निरसि हव्यवाहनः[2] * - श्वात्रोऽसि प्रचेताः[3] * - स्तुथोऽसि विश्ववेदाः[4] * - उशिगसि कविः[5] * - रङ्घारिरसि बम्भारिः[6] * - रवस्युरसि दुवस्वान्[7] * - ञ्छुन्ध्यूरसि मार्जालीयः[8] * - सम्राडसि कृशानुः[9] * - परिषद्योऽसि पवमानः[10] * - प्रतक्वाऽसि नभस्वान्[11] * - संमृष्टोऽसि हव्यसूदः[12] * - ऋतधामाऽसि सुवर्ज्योतिः[13] * - ब्रह्मज्योतिरसि सुवर्धामा[14] * - ऽजोऽस्येकपाद[15] * - हिरसि बुध्नियो रौद्रेणानीकेन (१) पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः[16] ॥ (अनीकेनाष्टौ च) ॥ ३ ॥

वैसर्जनीयहोमः ॥ १, ५ गायत्री, ३ त्रिष्टुप्, ४ अनुष्टुप् । सोमऋषिः ।

त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरूथꣳ
स्वाहा[1] जुषाणो अप्तुराज्यस्य वेतु स्वाहा[2]—
ऽयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयꣳ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ[3] ॥
उरु विष्णो वि क्रमस्वोरु क्षयाय नः कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर[4] ॥
सोमो जिगाति गातुवि (१) द्देवानामेति निष्कृतमृतस्य योनिमासदम्—

( ३।१—१५ ) रौद्रेण...हिꣳसीः ।

—दित्याः सदोऽस्य[6]—दित्याः सद आ सीद[7] देव सवितः सोमस्ते[8] रक्षध्वं मा वो दभदे[9]—तत् त्वꣳ सोम देवो देवानुपागा[10] इदमहं मनुष्यो मनुष्यान् सह प्रजया सह रायस्पोषेण[11] नमो देवेभ्यः[12] स्वधा पितृभ्य[12] इदमहं निर्वरुणस्य पाशात्[13] सुवरभि (२) वि ख्येषं[14] वैश्वानरं ज्योति[15]—रग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूस्त्वय्यभूदियꣳ सा मयि या तव तनूर्मय्यभूदेषा सा त्वयि यथायथं नौ व्रतपते व्रतिनोर्व्रतानि[16] ॥ (गातुविद्–, भ्यो,–श्चत्रिꣳशच्च) ॥ ४ ॥

यूपच्छेदनम् ॥ सोमऋषिः ।

अत्यन्यानगां नान्यानुपागामर्वाक्त्वा परैरविदं परोऽवरै[1]—स्तं त्वा जुषे वैष्णवं देवयज्यायै[2] देवस्त्वा सविता मध्वाऽनक्त्वो[3]—षधे त्रायस्वैनꣳ[4] स्वधिते मैनꣳ हिꣳसी[5]—र्दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीः पृथिव्या सं भव[6]

वनस्पते शतवल्शो वि रोह[7] सहस्रवल्शा वि वयꣳ रुहेम[8] यं (१) त्वाऽयꣳ स्वधितिस्तेतिजानः प्रणिनाय महते सौभगाया[9]—ऽच्छिन्नो रायः सुवीरः[10] ॥ (यं, दश च) ॥ ५ ॥

यूपस्थापनम् ॥ ११ त्रिष्टुप्, १२-१३ ) गायत्र्यौ । सोमऋषिः ॥

पृथिव्यै त्वा[1]—ऽन्तरिक्षाय त्वा[2] दिवे त्वा[3] शुन्धतां लोकः पितृषदनो[4] यवोऽसि यवयास्मद् द्वेषो यवयारातीः[5] पितृणाꣳ सदनमसि[6] स्वावेशोऽस्यग्रेगा नेतृणां वनस्पतिरधि त्वा स्थास्यति तस्य वित्ता[8]—द्देवस्त्वा सविता मध्वाऽनक्तु सुपिप्पलाभ्यस्त्वौषधीभ्य[9] उद्दिवꣳ स्तभानान्तरिक्षं पृण पृथिवीमुपरेण दृꣳह[10]

ते ते धामान्युश्मसी (१) गमध्ये गावो यत्र भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य विष्णोः परमं पदमव भाति भूरेः[11] ॥
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा[12] ॥
तद्विष्णोः परमं पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्[13] ॥

ब्रह्मवनिं त्वा क्षत्रवनिꣳ सुप्रजावनिꣳ रायस्पोषवनिं पर्यूहामि[14] ब्रह्म दृꣳह क्षत्रं दृꣳह प्रजां दृꣳह रायस्पोषं (२) दृꣳह[15] परिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमꣳ रायस्पोषो यजमानं मनुष्या[16] अन्तरिक्षस्य त्वा सानाववं गूहामि[17] ॥ (उश्मसी, पोषमे–, कान्नविꣳशतिश्च) ॥ ६ ॥

पशोरुपाकरणम् ॥ १३ पङ्क्तिः, १४ त्रिष्टुप् । सोमऋषिः ।

इषे त्वो[1]—पवीरस्यु[2]—पो देवान् दैवीर्विशः प्रागुर्वह्नीरुशिजो बृहस्पते धारया वसूनि हव्या ते स्वदन्तां देव त्वष्टर्वसु रण्व रेवती रमध्वम्[3]—ग्नेर्जनित्रमसि[4] वृषणौ स्थ[5] उर्वश्यस्या[6]—युरसि[7] पुरूरवा[8] घृतेनाक्ते वृषणं दधाथां[9] गायत्रं छन्दोऽनु प्र जायस्व[10] त्रैष्टुभं[11]*— जागतं छन्दोऽनु प्र जायस्व[12]

---

( ७,११ छन्दो...यस्व । )

भवतं ( १ ) नः समनसौ समोकसावरेपसौ ।
मा यज्ञꣳहिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः[१३] ॥
अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः ।
स्वाहाकृत्य ब्रह्मणा ते जुहोमि मा देवानां मिथुया कर्भागधेयम्[१४] ॥

( भवतमेकत्रिꣳशच्च ) ॥ ७ ॥

उपाकृतस्य पशोर्विशसनम् । १२ त्रिष्टुप्. १६ अनुष्टुप् ॥ सोमऋषिः।

आ दंदे[१] ऋतस्यं त्वा देवहविः पाशेनाऽऽरंभे[२] धर्षा मानुषान्[३]—द्भ्यस्त्वौषधीभ्यः प्रोक्षाम्य[४]—पां पेरुरसि[५] स्वात्तं चित् सदेवꣳहव्यमापो देवीः स्वदंतैनं[६] सं ते प्राणो वायुना गच्छतां[७] सं यजत्रै-रङ्गानि[८] सं यज्ञपतिराशिषा[९] घृतेनाक्तौ पशुं त्रायेथां[१०] रेवतीर्यज्ञपतिं प्रियधाऽऽविशतो[११]—रो अन्तरिक्ष सजूर्देवेन ( १ ) वातेनाऽस्य हविषस्त्मना यज समस्य तनुवा भव वर्षीयो वर्षीयसि यज्ञे यज्ञपतिं धाः[१२] पृथिव्याः सम्पृचः पाहि[१३] नमस्त आतानाऽ[१४]—ऽनर्वा प्रेहि घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणा[१५]—ऽऽपो देवीः शुद्धायुवः शुद्धा यूयं देवाꣳऊड्ढ्वꣳशुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म[१६] ॥ ( देवेन, चतुश्चत्वारिꣳशच्च ) ॥ ८ ॥

संज्ञपितस्य पशोर्वपोत्खेदनम् ॥ सोमऋषिः

वाक्त आ प्यायतां[१] प्राणस्त आ प्यायतां[२] चक्षुस्त आ प्यायतां[३] श्रोत्रं त आ प्यायतां[४] या ते प्राणाञ्छुग्जगाम या चक्षुर्या श्रोत्रं यत् ते क्रूरं यदास्थितं तत्त आ प्यायतां तत् त एतेन शुन्धतां[५] नाभिस्त आ प्यायतां[६] पायुस्त आ प्यायतां[७] शुद्धाश्चरित्राः[८] शमद्भ्यः ( १ ) शमोषधीभ्यः शं पृथिव्यै शमहोभ्यां[९]—मोषधे त्रायस्वैनं[१०] स्वधिते मैनꣳहिꣳसीः[११] रक्षसां भागोऽसीदं[१२]—महꣳ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमेनमधमं तमो नयामी[१३]—षे त्वा[१४] घृतेन द्यावापृथिवी प्रोर्णुवाथा[१५]—मच्छिन्नो रायः सुवीर[१६] उर्वन्तरिक्षमन्विहि[१७] वायो वीहि ( २ ) स्तोकानां[१८] स्वाहोर्ध्वनभसं मारुतं गच्छतम्[१९] ॥ ( अद्भ्यो, वीहि, पञ्च च ) ॥ ९ ॥

वसाहोमः ॥ सोमऋषिः

सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यो हव्यं घृतवत् स्वाहै[१]—न्द्रः प्राणो अङ्गेअङ्गे नि देध्यदैन्द्रोऽपानो अङ्गेअङ्गे वि बोभुवद्देव त्वष्टर्भूरि ते सꣳसमेतु विषुरूपा यत् सलक्ष्माणो भवथ देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु[२] श्रीरस्यग्निस्त्वा श्रीणात्वापः समरिणन्[३] वातस्य ( १ ) त्वा ध्रज्यै पूष्णो रꣳह्या अपामोषधीनाꣳरोहिष्यै[४] घृतं घृतपावानः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा[५] त्वाऽन्तरिक्षाय[६] दिशः[७] प्रदिश[८] आदिशो[९] विदिश[१०] उद्दिशः स्वाहा[११] दिग्भ्यो[१२] नमो दिग्भ्यः[१३] ॥ ( वातस्याष्टाविꣳशतिश्च ) ॥ १० ॥

गुदकाण्डहोमः ॥ सोमऋषिः

समुद्रं गच्छ स्वाहाऽन्तरिक्षं गच्छ स्वाहा देवꣳसवितारं गच्छ स्वाहाऽहोरात्रे गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा सोमं गच्छ स्वाहा यज्ञं गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा नभो दिव्यं गच्छ स्वाहाऽग्निं वैश्वानरं गच्छ स्वाहाऽद्भ्यस्त्वौषधीभ्यो मनो मे हार्दि यच्छ तनूं त्वचं पुत्रं नप्तारमशीय शुगसि (१) तमभि शोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो धाम्नोधाम्नो राजन्नितो वरुण नो मुञ्च यदापो अघ्निया वरुणेति शपामहे ततो वरुण नो मुञ्च ॥ (असि षड्विꣳशतिश्च) ॥ ११ ॥

वसतीवरीसंज्ञकानामपामुपादानम् ॥ अनुष्टुप् । सोमऋषिः

हविष्मतीरिमा आपो हविष्मान् देवो अध्वरो
हविष्माꣳआ विवासति हविष्माꣳ अस्तु सूर्यः ॥

अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्तेन्द्राग्नियोर्भागधेयीः स्थ मित्रावरुणयोर्भागधेयीः स्थ विश्वेषां देवानां भागधेयीः स्थ यज्ञे जागृत ॥ (हविष्मतीश्चतुस्त्रिꣳशत्) ॥ १२ ॥

सोमस्य शकटादुपावरोहः ॥ ३ त्रिष्टुप्, ७ गायत्री । सोमऋषिः ।

हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ सोम राजन्नेह्यव रोह मा भेर्मा सं विक्था मा त्वा हिꣳसिषं प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु

शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः ।
शृणोत ग्रावाणो विदुषो नु (१) यज्ञꣳशृणोतु देवः सविता हवं मे ।

देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तं देवेभ्यो देवत्रा धत्त शुक्रꣳ शुक्रपेभ्यो येषां भागः स्थ स्वाहा कार्षिरस्यपापां मृध्रꣳ समुद्रस्य वोक्षित्या उन्नये ।

यमग्ने पृत्सु मर्त्यमावो वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः ॥
(नु सप्तचत्वारिꣳशच्च) ॥ १३ ॥

काम्ययाज्यापुरोऽनुवाक्याः ॥ १-६, ८, १०, १२, १४, १६-१८, २२ त्रिष्टुप्; ७, ९, १३, १५, २१, २३-२८ गायत्री; ११, १९-२० अनुष्टुप् । विश्वेदेवा ऋषयः ।

त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳशर्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नु त्मना ॥
आ वो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः ।
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥

अग्निर्होता नि षसादा यजीयानुपस्थे मातुः सुरभावु लोके ।
युवा कविः पुरुनिष्ठ (१) ऋतावा धर्ता कृष्टीनामुत मध्य इद्धः[३] ॥
साध्वीमकर्देववीतिं नो अद्य यज्ञस्य जिह्वामविदाम गुह्याम् ।
स आयुरागात्सुरभिर्वसानो भद्रामकर्देवहूतिं नो अद्य[४] ॥
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः[५] ॥
त्वे वसूनि पुर्वणीक (२) होतर्दोषा वस्तोरेरिरे यज्ञियासः ।
क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳसौभगानि दधिरे पावके[६] ॥
तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय येमिरे[७] ॥
अश्याम तं काममग्ने तवोत्यश्याम रयिꣳरयिवः सुवीरम् ।
अश्याम वाजमभि वाजयन्तोऽश्याम द्युम्नमजराजरं ते[८] ॥
श्रेष्ठं यविष्ठ भारताग्ने द्युमन्तमा भर । (३) वसो पुरुस्पृहꣳरयिम्[९] ॥
स श्विंतानस्तन्यतू रोचनस्था अजरेभिर्नानदद्भिर्यविष्ठः ।
यः पावकः पुरुतमः पुरूणि पृथून्यग्निरनुयाति भर्वन्[१०] ॥
आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ।
पुनस्ते प्राण आयति परा यक्ष्मꣳसुवामि ते[११] ॥
आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि (४) रक्षतादिमम्[१२] ।
तस्मै ते प्रतिहर्यते जातवेदो विचर्षणे । अग्ने जनामि सुष्टुतिम्[१३] ॥
दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[१४] ॥
शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्वं घृतेभिराहुतः[१५] ॥
दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभि (५) र्यदेनं द्यौरजनयत्सुरेताः[१६] ॥
आ यदिषे नृपतिं तेज आनट् छुचि रेतो निषिक्तं द्यौरभीके ।
अग्निः शर्धमनवद्यं युवानꣳस्वाधियं जनयत्सूदयच्च[१७] ॥
स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।
अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टुतयश्च वस्वः[१८] ॥

अग्ने सहन्तमा भर द्युम्नस्य प्रासहा रयिम् ।
विश्वा य (६) श्चर्षणीरभ्यासा वाजेषु सासहत् ॥
तमग्ने पृतनासहꣳ रयिꣳ सहस्व आ भर ।
त्वꣳ हि सत्यो अद्भुतो दाता वाजस्य गोमतः ॥
उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये ॥
वद्मा हि सूनो अस्यद्मसद्वा चक्रे अग्निर्जनुषाज्मान्नम् ।
स त्वं न ऊर्जसन ऊर्जं धा राजेव जेरवृके क्षेष्यन्तः ॥
अग्न आयूꣳषि (७) पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥
अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत् पोषꣳ रयिं मयि ॥
अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवाꣳ इहा वह । उप यज्ञꣳ हविश्च नः ॥
अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः (८) कविः । शुची रोचत आहुतः ॥
उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः ॥

( पुरुनिष्ठः, पूर्वणीक, भराऽभि वयोभि,-र्य, आयूꣳषि, विप्रः शुचि,-श्चतुर्दश च ) ॥ १४ ॥

[ देवस्य ११८ । रक्षोहणो १०२ । विभू- ५८ ।- स्त्व १३१ ।- मति ६० । पृथिव्या ११९ । इष ८१ । आददे ९४ । वाक् १०५ । सꣳ७८ । समुद्रꣳ ७६ । हविष्मती- ३४ ।- हृदे ९७ । त्वं ४१४ । चतुर्दश ॥ १५६७ ॥

[ इति प्रथमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥ ]

## सुत्यादिने कर्तव्या ग्रहाः ।

[ अथ चतुर्थः प्रपाठकः ॥ ४ ॥ ]

सोमाभिषवः ॥ सोमऋषिः ।

आ ददे ग्रावास्यध्वरकृद् देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पवित्रेणेन्द्राय सोमꣳ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिमिन्द्राय त्वा वृत्रघ्न इन्द्राय त्वा वृत्रतुर इन्द्राय त्वाऽभिमातिघ्न इन्द्राय त्वा ऽऽदित्यवत इन्द्राय त्वा विश्वदेव्यावते श्वात्राः स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीस्ता देवीर्देवत्रेमं यज्ञं धत्तोपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ (१) सोमः पिबतु यत्ते सोम दिवि ज्योतिर्यत् पृथिव्यां यदुरावन्तरिक्षे तेनास्मै यजमानायोरु राया कृध्यधि दात्रे वोचो धिषणे वीडू सती वीडयेथामूर्जं दधाथामूर्जं मे धत्तं मा वाꣳ हिꣳसिषं मा मा हिꣳसिष्टं प्रागपागुदगधराक्तास्त्वा दिश आ धावन्त्वम्ब नि ष्वर । यत्ते (२) सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ॥ ( युष्माक, ते, नव च ) ॥ १ ॥

उपांशुग्रहः ॥ सोमऋषिः ।

वाचस्पतये पवस्व वाजिन् वृषा वृष्णो अꣳशुभ्यां गभस्तिपूतो देवो देवानां पवित्रमसि येषां भागोऽसि तेभ्यस्त्वा स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टू र्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्यस्त्वा मरीचिपेभ्य एष ते योनिः प्राणाय त्वा ( वाचः सप्तचत्वारिꣳशत् ) ॥ २ ॥

अन्तर्यामग्रहः ॥ सोमऋषिः ।

उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोममुरुष्य रायः समिषो यजस्वान्तस्ते दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षꣳ सजोषा देवैरवरैः परैश्चान्तर्यामे मघवन् मादयस्व स्वाङ्कृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाष्टू र्वन्तरिक्षमन्विहि स्वाहा त्वा सुभवः सूर्याय देवेभ्य (१) स्त्वा मरीचिपेभ्य एष ते योनिरपानाय त्वा ॥ ( देवेभ्यः, सप्त च ) ॥ ३ ॥

ऐन्द्रवायवग्रहः ॥ १ त्रिष्टुप्, २ गायत्री । सोमऋषिः ।

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥

उपयामगृहीतोऽसि वायवे त्वे न्द्रवायू इमे सुताः । उप प्रयोभिरा गतमिन्दवो वामुशन्ति हि ॥
उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वैष ते योनिः सजोषाभ्यां त्वा ॥ ( आ त्रिचत्वारिꣳशत् ) ॥ ४ ॥

मैत्रावरुणग्रहः ॥ गायत्री । सोमऋषिः ।

अयं वां मित्रावरुणा सुतः सोम ऋतावृधा । ममेदिह श्रुतꣳ हवम् ।
उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वैष ते योनिर्ऋतायुभ्यां त्वा ॥ ( अयं विꣳशतिः ) ॥ ५ ॥

आश्विनग्रहः ॥ गायत्री । सोमऋषिः ।

या वां कशा मधुमत्यश्विना सूनृतावती । तया यज्ञं मिमिक्षतम् ।
उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिर्माध्वीभ्यां त्वा ( याऽष्टादश १८ ) ॥ ६ ॥

प्रातर्युजौ वि मुच्येथामश्विनावेह गच्छतम् । अस्य सोमस्य पीतये ॥
उपयामगृहीतोऽस्यश्विभ्यां त्वैष ते योनिरश्विभ्यां त्वा ॥ ( प्रातर्युजावेकान्नविꣳशतिः ) ॥ ७ ॥

शुक्रग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने ।
इममपाꣳ सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति ॥
उपयामगृहीतोऽसि शण्डाय त्वैष ते योनिर्वीरतां पाहि ॥ ( अयं पञ्चविꣳशतिः ) ॥ ८ ॥

*

मन्थिग्रहः ॥ जगती । सोमऋषिः ।

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदꣳ सुवर्विदं प्रतीचीनं वृजनं दोहसे गिराऽऽशुं जयन्तमनु यासु वर्धसे ।
उपयामगृहीतोऽसि मर्काय त्वैष ते योनिः प्रजाः पाहि ॥ ( तꣳ षड्विꣳशतिः ) ॥ ९ ॥

आग्रयणग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्था—ऽप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वमु—पयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥
( ये त्रिचत्वारिꣳशत् ) ॥ १० ॥

भ्रातृव्यवत आग्रयणग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

त्रिꣳशत्त्रयश्च गणिनो रुजन्तो दिवꣳ रुद्राः पृथिवीं च सचन्ते ।
एकादशासो अप्सुषदः सुतꣳ सोमं जुषन्ताꣳ सवनाय विश्वे ॥
उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभिसवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ( त्रिꣳशद् द्विचत्वारिꣳशत् ) ॥ ११ ॥

उक्थ्यग्रहः ॥ सोमऋषिः ।

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वत उक्थायुवे यत् त इन्द्र बृहद्वयस्तस्मै त्वा विष्णवे त्वैष ते योनिरिन्द्राय त्वोक्थायुवे ( उपयामगृहीतो द्वाविꣳशतिः ) ॥ १२ ॥

ध्रुवग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् ।
कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः ॥
उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम एष ते योनिरग्नये त्वा वैश्वानराय ॥ ( मूर्धानं पञ्चत्रिꣳशत् ) ॥ १३ ॥

ऋतुग्रहाः ॥ सोमऋषिः ।

मधुश्च माधवश्च शुक्रश्च शुचिश्च नभश्च नभस्यश्च—षश्चो—र्जश्च सहश्च सहस्यश्च तपश्च तपस्यश्चो—पयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वा ॥ ( मधुस्त्रिꣳशत् ) ॥ १४ ॥

ऐन्द्राग्नग्रहः ॥ गायत्री । सोमऋषिः ।

इन्द्राग्नी आ गतꣳसुतं गीर्भिर्नभो वरेण्यम् । अस्य पातं धियेषिता ॥
उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वैषते योनिरिन्द्राग्निभ्यां त्वा ॥ ( इन्द्राग्नी विꣳशतिः ) ॥ १५ ॥

वैश्वदेवग्रहः ॥ गायत्री । सोमऋषिः ।

ओमासश्चर्षणीधृतो विश्वे देवास आ गत । दाश्वाꣳसो दाशुषः सुतम् ॥

उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ( ओमासो विꣳशतिः )

॥ १६ ॥

पूर्वो मरुत्वतीयग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳशासमिन्द्रम् ।

विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम ॥

उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ( मरुत्वन्तꣳषड्विꣳशतिः )

॥ १७ ॥

उत्तरमरुत्वतीयग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

इन्द्र मरुत्व इह पाहि सोमं यथा शार्याते अपिबः सुतस्य ।

तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः ॥

उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ( इन्द्रैकान्नत्रिꣳशत् )

॥ १८ ॥

तृतीयमरुत्वतीयग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

मरुत्वाꣳ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।

आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वꣳराजासि प्रदिवः सुतानाम् ॥

उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वत एष ते योनिरिन्द्राय त्वा मरुत्वते ॥ ( मरुत्वानेकान्नत्रिꣳशत् )

॥ १९ ॥

माहेन्द्रग्रहः ॥ गायत्री । सोमऋषिः ।

महाꣳ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाꣳ इव । स्तोमैर्वत्सस्य वावृधे ॥

उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ( महानेकान्नविꣳशतिः ) ॥ २० ॥

माहेन्द्रग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

महाꣳ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः स सहोभिः ।

अस्मद्रियग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥

उपयामगृहीतोऽसि महेन्द्राय त्वैष ते योनिर्महेन्द्राय त्वा ॥ ( महान् षड्विꣳशतिः ) ॥ २१ ॥

आदित्यग्रहः ॥ १-२ बृहती, ३ त्रिष्टुप् । सोमऋषिः ।

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।

उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥

उपयामगृहीतोऽस्यादित्येभ्यस्त्वा ॥

कदा चन प्रयुच्छस्युभे नि पासि जन्मनी ।

तुरीयादित्य सवनं त इन्द्रियमातस्थावमृतं दिवि ॥

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।

आ वो (१) वर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवो वित्तरासत् ॥

विवस्व आदित्यैष ते सोमपीथस्तेन मन्दस्व तेन तृप्य तृप्यास्म ते वयं तर्पयितारो या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ ( वः, सप्तविꣳशतिश्च ) ॥ २२ ॥

सावित्रग्रहः ॥ त्रिष्टुप् । सोमऋषिः ।

वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यꣳ सावीः ।

वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम ॥

उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ ( वामं चतुर्विꣳशतिः ) ॥ २३ ॥

सावित्रग्रहः ॥ जगती । सोमऋषिः ।

अदब्धेभिः सवितः पायुभिष्ट्वꣳ शिवेभिरद्य परि पाहि नो गयम् ।

हिरण्यजिह्वः सुविताय नव्यसे रक्षा माकिर्नो अघशꣳस ईशत ॥

उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ ( अदब्धेभिस्त्रयोविꣳशतिः ) ॥ २४ ॥

सावित्रग्रहः ॥ गायत्री । सोमऋषिः ।

हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम् ॥

उपयामगृहीतोऽसि देवाय त्वा सवित्रे ॥ ( हिरण्यपाणिं चतुर्दश ) ॥ २५ ॥

वैश्वदेवग्रहः ॥ सोमऋषिः ।

सुशर्मासि सुप्रतिष्ठानो बृहदुक्षे नम एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः ॥ ( सुशर्मा द्वादश ) ॥ २६ ॥

पात्नीवतग्रहः ॥ सोमऋषिः ।

बृहस्पतिसुतस्य त इन्द्रो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाम्यग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ॥ ( बृहस्पतिसुतस्य पञ्चदश ) ॥ २७ ॥

हारियोजनग्रहः ॥ सोमऋषिः ।

हरिरसि हारियोजनो हर्योः स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य हरिवन्तं ग्रहं गृह्णामि हरीः स्थ हर्योर्धाना: सह सोमा इन्द्राय स्वाहा ( हरिः षड्विꣳशतिः ) ॥ २८ ॥

आग्नेयोऽतिग्रहः ॥ गायत्री । सोमऋषिः ।

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥
उपयामगृहीतोऽस्यग्नये त्वा तेजस्वत एष ते योनिरग्नये त्वा तेजस्वते ॥ ( अग्ने त्रयोविꣳशतिः )
॥ २९ ॥

ऐन्द्रोऽतिग्रहः ॥ गायत्री । सोमऋषिः ।

उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः । सोममिन्द्र चमू सुतम् ॥
उपयामगृहीतोऽसीन्द्राय त्वौजस्वत एष ते योनिरिन्द्राय त्वौजस्वते ॥ ( उत्तिष्ठन्नेकविꣳशतिः )
॥ ३० ॥

सौर्योऽतिग्रहः ॥ गायत्री । सोमऋषिः ।

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य । विश्वमा भासि रोचनम् ॥
उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वत एष ते योनिः सूर्याय त्वा भ्राजस्वते ॥
( तरणिर्विꣳशतिः ) ॥ ३१ ॥

संगाहनम् ॥ गायत्री । सोमऋषिः ।

आ प्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः । भवा नः सप्रथस्तमः ( आ नव ) ॥ ३२ ॥

अवगाहनम् ॥ त्रिष्टुप् । सोमऋषिः ।

ईयुष्टे ये पूर्वतरामपश्यन् व्युच्छन्तीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याऽभूदो ते यन्ति ये अपरीषु पश्यान् ॥ ( ईयुरेकान्नविꣳशतिः )
॥ ३३ ॥

ओषणम् ॥ सोमऋषिः ।

ज्योतिष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ( ज्योतिष्मतीꣳषट्त्रिꣳशत् ) ॥ ३४ ॥

स्रुवाहुतयः । विश्वेदेवा ऋषयः

प्रयासाय स्वाहा[1] ऽऽयासाय स्वाहा[2] वियासाय स्वाहा[3] संयासाय स्वाहा[4] — द्यासाय स्वाहा[5] ऽवयासाय स्वाहा[6] शुचे स्वाहा[7] शोकाय स्वाहा[8] तप्यत्वै स्वाहा[9] तपते स्वाहा[10] ब्रह्महत्यायै स्वाहा[11] सर्वस्मै स्वाहा[12] ( प्रयासाय चतुर्विꣳशतिः ) ॥ ३५ ॥

राजगवीहोमः । विश्वेदेवा ऋषयः ।

चित्तꣳ संतानेन[1] भवं यक्ना[2] रुद्रं तनिम्ना[3] पशुपतिꣳ स्थूलहृदयेना[4] — ग्निꣳ हृदयेन[5]

रुद्रं लोहितेन शर्वं मतस्नाभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शिङ्गीनिकोश्याभ्याम्
( चित्तमष्टादश ) ॥ ३६ ॥

३७-४२ षोडशिग्रहः ॥ ३७-४० अनुष्टुप् । सोमऋषिः ।

आ तिष्ठ वृत्रहन् रथं युक्ता ते ब्रह्मणा हरी । अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
( आ तिष्ठ षड्विꣳशतिः ) ॥ ३७ ( ३१ ) ॥

इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसमृषीणां च स्तुतीरुप यज्ञं च मानुषाणाम् ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
( इन्द्रं त्रयोविꣳशतिः ) ॥ ३८ ( ३२ ) ॥

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियꣳरजः सूर्यं न रश्मिभिः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
( असावि सप्तविꣳशतिः ) ॥ ३९ ( ३३ ) ॥

सर्वस्य प्रतिशीवरी भूमिस्त्वोपस्थ आऽधित ।
स्योनास्मै सुषदा भव यच्छास्मै शर्म सप्रथाः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
( सर्वस्य षड्विꣳशतिः ) ४० ( ३४ ) ॥

स्वराडनुष्टुप् ।

महाꣳइन्द्रो वज्रबाहुः षोडशी शर्म यच्छतु ।
स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान् द्वेष्टि ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
( महान् षड्विꣳशतिः ) ॥ ४१ ( ३५ ) ॥

त्रिष्टुप् ।

सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहञ्छूर विद्वान् ।
जहि शत्रूꣳरप मृधो नुदस्वाऽथाभयं कृणुहि विश्वतो नः ॥
उपयामगृहीतोऽसीन्द्राय त्वा षोडशिन एष ते योनिरिन्द्राय त्वा षोडशिने ॥
( सजोषास्त्रिꣳशत् ) ॥ ४२ ( ३६ ) ॥

दक्षिणा ॥ १ गायत्री, २-३ त्रिष्टुप् । सोमऋषिः ।

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥
अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥
दिवं गच्छ सुवः पत रूपेण (१) वो रूपमभ्यैमि वयसा वयः ।
तुथो वो विश्ववेदा वि भजतु वर्षिष्ठे अधि नाके ॥

एतत् ते अग्ने राध ऐति सोमच्युतं तन्मित्रस्य पथा नयर्तस्य पथा प्रेत चन्द्रदक्षिणा यज्ञस्य पथा सुविता नयन्ती ब्राह्मणमद्य राध्यासमृषिमार्षेयं पितृमन्तं पैतृमत्यꣳ सुधातुदक्षिणं वि सुवः पश्य व्यन्तरिक्षं यतस्व सदस्यैः (२) रस्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतानवहायास्मान् देवयानेन पथेत सुकृतां लोके सीदत तन्नः सꣳस्कृतम् ॥ (रूपेण, सदस्यैः,-रष्टादश च) ॥ ४३ (३७) ॥

समिष्टयजुर्होमः ॥ १-६ त्रिष्टुप् । सोमऋषिः ।

धाता रातिः सवितेदं जुषतां प्रजापतिर्निधिपतिर्नो अग्निः ।
त्वष्टा विष्णुः प्रजया सꣳरराणो यजमानाय द्रविणं दधातु ॥
समिन्द्र णो मनसा नेषि गोभिः सꣳ सूरिभिर्मघवन्त्सꣳस्वस्त्या ।
सं ब्रह्मणा देवकृतं यदस्ति सं देवानाꣳसुमत्या यज्ञियानाम् ॥
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳशिवेन ।
त्वष्टा नो अत्र वरिवः कृणोत्व (१) नु मार्ष्टु तनुवो यद्विलिष्टम् ॥
यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह ।
ऋधगयाडृधगुताशमिष्ठाः प्रजानन् यज्ञमुपयाहि विद्वान् ॥
स्वगा वो देवाः सदनमकर्म य आजग्म सवनेदं जुषाणाः ।
जक्षिवाꣳसः पपिवाꣳसश्च विश्वेऽस्मे धत्त वसवो वसूनि ॥
यानाऽवह उशतो देव देवान् तान् (२) प्रेरय स्वे अग्ने सधस्थे ।
वहमाना भरमाणा हवीꣳषि वसुं घर्मं दिवमा तिष्ठतानु ॥

यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैष ते यज्ञो यज्ञपते सहसूक्तवाकः सुवीरः स्वाहा देवा गातुविदो गातुं वित्त्वा गातुमित मनसस्पत इमं नो देव देवेषु यज्ञꣳ स्वाहा वाचि स्वाहा वाते धाः ॥ (कृणोतु, तान्--, द्वाचत्वारिꣳशच्च ॥ ४४ (३८) ॥

अवभृतः ॥ १-४ त्रिष्टुप् । सोमऋषिः ।

उरुꣳ हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उं ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥
शतं ते राजन् भिषजः सहस्रमुर्वी गम्भीरा सुमतिष्टे अस्तु ।
बाधस्व द्वेषो निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥
अभिष्ठितो वरुणस्य पाशो—ऽग्नेरनीकमप आ विवेश ।
अपान्नपात् प्रतिरक्षन्नसुर्यं दमेदमे (१) समिधं यक्ष्यग्ने ॥
प्रति ते जिह्वा घृतमुच्चरण्येत् समुद्रे ते हृदयमप्स्वन्तः ।
सं त्वा विशन्त्वोषधीरुताऽऽपो यज्ञस्य त्वा यज्ञपते हविर्भिः ॥

सूक्तवाके नमोवाके विधेमा—वभृथ निचङ्कुण निचेरुरसि निचङ्कुणाव देवैर्देवकृतमेनोऽयाडव मर्त्यैर्मर्त्यकृतमुरोरा नो देव रिषस्पाहि सुमित्रा न आप ओषधयः (२) सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मो देवीराप एष वो गर्भस्तं वः सुप्रीतꣳ सुभृतमकर्म देवेषु नः सुकृतो ब्रूतात् प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाश एधोऽस्येधिषीमहि समिदसि तेजोऽसि तेजो मयि धेह्य—ऽपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आ (३) ऽगमं तं मा सꣳ सृज वर्चसा ॥ ( दमेदमे, ओषधय, आ, षट् च ) ॥ ४५ ( ३९ ) ॥

काम्ययाज्यापुरोऽनुवाक्याः ॥ १-२, ४, ८, १० त्रिष्टुप्; ३, ५, ७, ९, ११-१२ गायत्री; ६ अनुष्टुप् ।

यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ।
जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥
यस्मै त्वꣳ सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ।
अश्विनꣳ स पुत्रिणं वीरवन्तं गोमन्तꣳ रयिं नशते स्वस्ति ॥
त्वे सु पुत्र शवसोऽवृत्रन् कामकातयः । न त्वामिन्द्राति रिच्यते ॥
उक्थउक्थे सोम इन्द्रं ममाद नीथेनीथे मघवानꣳ (१) सुतासः ।
यदीꣳ सबाधः पितरं न पुत्राः समानदक्षा अवसे हवन्ते ॥
अग्ने रसेन तेजसा जातवेदो वि रोचसे । रक्षोहाऽमीवचातनः ॥
अपो अन्वचारिषꣳ रसेन समसृक्ष्महि । पयस्वाꣳ अग्न आऽगमं तं मा सꣳसृज वर्चसा ॥
वसुर्वसुपतिर्हिकमस्यग्ने विभावसुः । स्याम ते सुमतावपि ॥
त्वामग्ने वसुपतिं वसूनामभि प्र मन्दे (२) अध्वरेषु राजन् ।
त्वया वाजं वाजयन्तो जयेमाभि ष्याम पृत्सुतीर्मर्त्यानाम् ।

त्वामग्ने वाजसातमं विप्रा वर्धन्ति सुष्टुतम् । स नो रास्व सुवीर्यम् ॥
अयं नो अग्निर्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् ।
अयँ शत्रूञ्जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ[10] ॥
अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः[11] ॥
त्वँ ह्यग्ने ( ३ ) अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे[12] ॥
उदग्ने शुचयस्तव[13]०* वि ज्योतिषा[14]०× ॥ ( मघवानं, मन्दे, ह्यग्ने, चतुर्दश च ) ॥ ४६ ( ४० ) ॥

[आ १०९ । वाच ४७ । उपयामगृहीत ५७ । आ ४३ । ऽयं २० । या १८ प्रातर्युजा-१९ ।-वयं २५ । तं २६ । ये ४३ । त्रिँशश-४२ ।-दुपयामगृहीतो २२ । मूर्धानं ३५ । मधु ३० ।-रिन्द्राग्नी २० । ओमासो २० । मरुत्वन्त २६ ।-मिन्द्र २९ । मरुत्वान् २९ । महान् १९ । महान् २६ । कदा ७७ । वाम- २४ ।- मदब्धेभि- २३ ।-हिरण्यपाणिँ १४ । सुशर्मा १२ । बृहस्पति-१५ ।- हरि-२६ ।- रग्ने २३ । उत्तिष्ठन्- २१ ।- तरणि- २० ।-राप्यायस्वे-९ ।-यु --१९ । -ज्योतिष्मतीं-३६ । प्रयासाय २४ । चित्रा-१८ ।- मातिष्टे- २६ ।- न्द्र- २३ ।-मसावि २७ । - सर्वस्य २६ । महान् २६ । सजोषा ३० । उ- ११८ ।- द्धातो-१४८ ।- रुं १५६ ।-यः १६४ । षट्चत्वारिँशत ॥ १८१० ॥ ]

[ इति प्रथमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥ ]

## पुनराधानम् ।

[ अथ पञ्चमः प्रपाठकः ॥ १ ॥ ] अग्निर्ऋषिः ।

पुनराधानविधानम् ॥

देवासुराः संयत्ता आसन्, ते देवा विजयमुपयन्तोऽग्नौ वामं वसु सं न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति, तदग्निर्न्यकामयत तेनापाक्रामत् तद्देवा विजित्यावरुरुत्समाना अन्वायन्, तदस्य सहसाऽदित्सन्त, सोऽरोदीद्यदरोदीत् तद्रुद्रस्य रुद्रत्वं, यदश्र्वशीयत, त ( १ ) द्रजतँ हिरण्यमभवत्, तस्माद्रजतँ हिरण्यमदक्षिण्यमश्रुजँ हि, यो बर्हिषि ददाति, पुराऽस्य संवत्सराद्गृहे रुदन्ति, तस्माद्बर्हिषि न देयँ[1] सोऽग्निरब्रवीद्भाग्यसान्यर्थ व इदमिति पुनराधेयं ते केवलमित्यब्रुवन्नृध्नवत् खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति[2] तं पूषाऽऽधत्त तेन ( २ ) पूषाऽऽर्ध्नोत् तस्मात् पौष्णाः पशव उच्यन्ते, तं त्वष्टा ऽऽधत्त, तेन त्वष्टाऽऽर्ध्नोत् तस्मात् त्वाष्ट्राः पशव उच्यन्ते, तं मनुराऽधत्त, तेन मनुरार्ध्नोत्, तस्मान्मानव्यः प्रजा उच्यन्ते, तं धाता ऽऽधत्त तेन धाताऽऽर्ध्नोत् संवत्सरो वै धाता, तस्मात् संवत्सरं प्रजाः पशवोऽनु प्र जायन्ते[3] य एवं पुनराधेयस्यर्द्धिं वेद ( ३ ) र्ध्नोत्येव[4] योऽस्यैवं बन्धुतां वेद, बन्धुमान् भवति[5] भागधेयं वा अग्निराहित इच्छमानः प्रजां पशून् यजमानस्योप दोद्रावोद्वास्य पुनरा दधीत, भागधेयेनैवैनँ समर्धयत्यथो शान्तिरेवास्यैषा[6] पुनर्वस्वोरा दधीतैतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू, स्वायामेवैनं देवतायामाधाय, ब्रह्मवर्चसी भवति[7] दर्भै ( ४ ) रा दधात्ययातयामत्वाय[8] दर्भैरा दधात्यद्भ्य एवैनमोषधीभ्योऽवरुध्या ऽऽधत्ते[9] पञ्चकपालः पुरोडाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैनमवरुध्याऽऽधत्ते[10] ॥ ( अशीयत तत, तेन, वेद, दर्भैः, पञ्चविँशतिश्च ) ॥ १ ॥

---

* ४६।१३ ( तै. सं. १।३।१४।२८ ; × ४६।१४ ( १।२।१४।१७ )

*

याज्याद्यङ्गजातविधानम् । अग्निर्ऋषिः ।

परा वा एष यज्ञं पशून् वपति योऽग्निमुद्वासयते, पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे[१] वीरहा वा एष देवानां योऽग्निमुद्वासयते, न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्, पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो, देवानेव वीरं निरवदायाग्निं पुनरा (१) धत्ते[२] शताक्षरा भवन्ति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति[३] यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयꣳ सर्वं भवति सैवास्यर्द्धिः[४] सं वा एतस्य गृहे वाक् सृज्यते योऽग्निमुद्वासयते स वाचꣳ सꣳसृष्टां यजमान ईश्वरोऽनु पराभवितोर्विभक्तयो भवन्ति वाचो विधृत्यै यजमानस्यापराभावाय (२) विभक्तिं करोति ब्रह्मैव तदकरु—पाꣳशु यजति यथा वामं वसु विविदानो गूहति तादृगेव तद—ग्निं प्रति स्विष्टकृतं निराह यथा वामं वसु विविदानः प्रकाशं जिगमिषति तादृगेव तद्वि—भक्तिमुक्त्वा प्रयाजेन वषट्करोत्यायतनादेव नैति[९] यजमानो वै पुरोडाशः पशव एते आहुती यदभितः पुरोडाशमेते आहुती (३) जुहोति यजमानमेवोभयतः पशुभिः परि गृह्णाति[१०] कृतयजुः संभृतसम्भार इत्याहुर्न सम्भृत्याः सम्भारा न यजुः कर्तव्यमित्य—थो खलु सम्भृत्या एव सम्भाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै[१२] पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान् पुनराधेयस्य समृद्ध्यै[१३] सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं तत (४) एवैनमव रुन्धे[१४] वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नाऽऽर्तिमार्च्छति यजमानः[१५] ॥

( आ,-ऽपराभावाया, -ऽऽहुती, ततः, षट्त्रिꣳशच्च ) ॥ २ ॥

पुनराधानमन्त्राः ॥ १ उपरिष्टाद्बृहती; २-४, ९-१० गायत्री; ५-६ अनुष्टुप्; ७-८; त्रिष्टुप् । अग्निर्ऋषिः ।

भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा ।
उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे[१] ॥
आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः[२] ॥
त्रिꣳशद्धाम वि राजति वाक् पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः[३] ॥
अस्य प्राणादपानत्यन्तश्चरति रोचना । व्यख्यन्महिषः सुवः[४] ॥
यत् त्वा (१) क्रुद्धः परोवप मन्युना यदवर्त्या ।
सुकल्पमग्ने तत् तव पुनस्त्वोद्दीपयामसि[५] ॥
यत् ते मन्युपरोप्तस्य पृथिवीमनु दध्वसे । आदित्या विश्वे तद् देवा वसवश्च समाभरन्[६] ॥
मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥
सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त (२) र्षयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन[८] ॥

पुन॑रू॒र्जा नि व॑र्तस्व॒ पुन॑रग्न इ॒षाऽऽयु॑षा । पुन॑र्नः पाहि वि॒श्वतः॑ ॥

स॒ह र॒य्या नि व॑र्तस्वाग्ने॒ पिन्व॑स्व॒ धार॑या । वि॒श्वप्स्नि॑या वि॒श्वत॒स्परि॑ ॥

लेकः॒ सले॑कः सु॒लेक॒स्ते न॑ आदि॒त्या आज्यं॑ जुषा॒णा वि॑यन्तु॒ केतः॒ सके॑तः सु॒केत॒स्ते न॑ (३) आदि॒त्या आज्यं॑ जुषा॒णा वि॑यन्तु॒ विव॑स्वा॒ꣳ अदि॑ति॒र्देव॑जूति॒स्ते न॑ आदि॒त्या आज्यं॑ जुषा॒णा वि॑यन्तु ॥ ( त्वा, स॒प्त, न॒,- त्रयो॑दश च ) ॥ ३ ॥

पूर्वोक्तमन्त्राणां व्याख्यानम् ॥ अग्निर्ऋषिः ।

भूमि॑र्भू॒म्ना द्यौर्व॑रि॒णेत्या॑हा॒ऽऽशिषै॒वैन॒मा ध॑त्ते स॒र्पा वै जीर्य॑न्तोऽमन्यन्त॒ स ए॒तं क॑स॒र्णीरः॑ काद्रवे॒यो मन्त्र॑मपश्यत्॒ ततो॒ वै ते जी॒र्णास्त॒नूरपा॑घ्नत सर्पराज्ञि॒या ऋ॒ग्भिर्गार्ह॑पत्यमा द॑धाति पुन॒र्नव॑मे॒वैन॑म॒जरं॑ कृ॒त्वाऽऽधत्तेऽथो॑ पू॒तमे॒व पृ॑थि॒वीम॒न्नाद्यं॒ नोपा॑नम॒त्सैतं (१) मन्त्र॑मपश्यत्॒ ततो॒ वै ताम॒न्नाद्य॒मुपा॑नम॒द्यत् स॑र्पराज्ञि॒या ऋ॒ग्भिर्गार्ह॑पत्यमा॒दधा॑त्य॒न्नाद्य॒स्याव॑रुध्या॒ अथो॑ अ॒स्यामे॒वैनं॒ प्रति॑ष्ठितमा ध॑त्ते य॒त्त्वा क्रु॒द्धः प॑रो॒वपे॒त्याहाप॑ह्नुत ए॒वास्मै॒ तत् पुन॑—स्त्वोद्दी॑पयाम॒सीत्या॑ह॒ समि॑न्ध ए॒वैनं॒ यत्ते॒ म॒न्युप॑रोप्त॒स्येत्या॑ह दे॒वता॑भिरे॒वै (२) न॒ꣳ सं भ॑रति॒ वि वा ए॒तस्य॑ य॒ज्ञश्छि॑द्यते॒ यो॑ऽग्निमु॑द्वा॒सय॑ते बृ॒हस्पति॑व॒त्यर्चोप॑ तिष्ठते॒ ब्रह्म॒ वै दे॒वानां॒ बृ॒हस्पति॒र्ब्रह्म॑णै॒व य॒ज्ञꣳ सं द॑धाति॒ विच्छि॑न्नं य॒ज्ञꣳ समि॒मं द॑धा॒त्वित्या॑ह॒ सन्त॑त्यै॒ विश्वे॑ दे॒वा इ॒ह मा॑दयन्ता॒मित्या॑ह॒ सन्त॑त्यै॒व य॒ज्ञं दे॒वेभ्योऽनु॑ दिशति॒ स॒प्त ते॑ अग्ने स॒मिधः॑ स॒प्त जि॒ह्वा (३) इत्या॑ह स॒प्तस॑प्त॒ वै स॑प्त॒धाऽग्नेः प्रि॒यास्त॒नुव॒स्ता ए॒वाव॑ रुन्धे॒ पुन॑रू॒र्जा स॒ह र॒य्येत्य॒भितः॑ पुरो॒डाश॒माहु॑ती जुहोति॒ यज॑मानमे॒वोर्जा च॑ र॒य्या चो॒भय॑तः॒ परि॑ गृह्णात्या॑—दि॒त्या वा अ॒स्माल्लो॒कादमुं॒ लो॒कमा॑य॒न्तेऽमुष्मि॑ꣳल्लो॒के व्य॑तृष्यन्त॒ इ॒मं लो॒कं पुन॑रभ्य॒वेत्या॒ग्निमा॒धायै॒तान् (४) होमा॑नजुहवु॒स्त आ॑र्ध्नुव॒न् ते सु॑व॒र्गꣳल्लो॒कमा॑यन् यः पर॑ाचीनं॒ पु॒नरा॒धेया॑द॒ग्निमा॒दधी॑त॒ स ए॒तान् होमा॑ञ्जुहुया॒द्यामे॒वाऽऽदि॒त्या ऋ॒द्धिमा॒र्ध्नुव॒न् ताम॒वर्ध्नो॑ति ॥ ( ए॒त–,मे॒व, जि॒ह्वा, ए॒तान्, पञ्च॑विꣳशतिश्च ) ॥ ४ ॥

आहवनीयोपस्थानम् ॥ १-३, ७-१२ गायत्री, ४ जगती, ५ त्रिष्टुप्, ६ अनुष्टुप् । अग्निर्ऋषिः ।

उ॒प॒प्र॒यन्तो॑ अध्व॒रं मन्त्रं॑ वोचेमा॒ग्नये॑ । आ॒रे अ॒स्मे च॑ शृण्व॒ते ॥

अ॒स्य प्र॒त्नामनु॒ द्युत॑ꣳ शु॒क्रं दु॑दु॒ह्रे अह्र॑यः । पयः॑ सहस्र॒सामृषि॑म् ॥

अ॒ग्निर्मू॒र्धा दि॒वः क॒कुत् पतिः॑ पृथि॒व्या अ॒यम् । अ॒पाꣳ रेता॑ꣳसि जिन्वति ॥

अ॒यमि॒ह प्र॑थ॒मो धा॑यि धा॒तृभि॒र्होता॒ यजि॑ष्ठो अध्व॒रेष्वीड्यः॑ ।

यमप्न॑वानो॒ भृग॑वो विरुरु॒चुर्वने॑षु चि॒त्रं वि॒भ्वं॑ वि॒शेवि॑शे ॥

उ॒भा वा॑मिन्द्राग्नी आहु॒वध्या॑ (१) उ॒भा राध॑सः स॒ह मा॑द॒यध्यै॑ ।

उ॒भा दा॒तारा॑वि॒षाꣳ र॑यी॒णामु॒भा वाज॑स्य सा॒तये॑ हुवे वाम् ॥

अ॒यं ते॒ योनि॑र्ऋ॒त्वियो॒ यतो॑ जा॒तो अरो॑चथाः ।

तं जा॒नन्न॑ग्न॒ आ रो॒हाथा॑ नो वर्धया र॒यिम् ॥

अग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । दधत्पोषꣳ रयिं (२) मयि ॥

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् वक्षि यक्षि च ॥

स नः पावक दीदिवोऽग्ने देवाꣳ इहाऽऽवह । उप यज्ञꣳ हविश्च नः[१०] ॥

अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः । शुची रोचत आहुतः[११] ॥

उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीꣳष्यर्चयः[१२] ॥

आयुर्दा अग्नेऽस्यायुर्मे (३) देहि[१३] वर्चोदा अग्नेऽसि वर्चो मे देहि[१४] तनूपा अग्नेऽसि तनुवं मे पाह्य[१५]ग्ने यन्मे तनुवा ऊनं तन्म आ पृण[१६] चित्रावसो स्वस्ति ते पारमशीय[१७] इन्धानास्त्वा शतꣳ हिमा द्युमन्तः समिधीमहि वयस्वन्तो वयस्कृतं यशस्वन्तो यशस्कृतꣳ सुवीरासो अदाभ्यम् । अग्ने सपत्नदम्भनं वर्षिष्ठे अधि नाके[१८] ॥

सं त्वमग्ने सूर्यस्य वर्चसा (४) ऽगथाः समृषीणाꣳ स्तुतेन सं प्रियेण धाम्ना ।

त्वमग्ने सूर्यवर्चा असि सं मामायुषा वर्चसा प्रजया सृज[१९] ॥

( आहुवध्यै, रयिं, मे, वर्चसा, सप्तदश च ) ॥ ५ ॥

गार्हपत्यस्य पुनरप्याहवनीयस्य चोपस्थानम् ॥ १, ५-७, १२-१३ गायत्री, ९-१० द्विपदा विराट्, १४ बृहती, १५ अनुष्टुप् । अग्निर्ऋषिः ।

सं पश्यामि प्रजा अहमिडप्रजसो मानवीः । सर्वा भवन्तु नो गृहे[१] ॥

अम्भः स्थाम्भो वो भक्षीय महः स्थ महो वो भक्षीय सहः स्थ सहो वो भक्षीयोर्जः स्थोर्जं वो भक्षीय[२] रेवती रमध्वमस्मिँल्लोकेऽस्मिन् गोष्ठेऽस्मिन् क्षयेऽस्मिन् योनाविहैव स्तेतो माऽप गात बह्वीर्मे भूयास्त[३] (१) सꣳहितासि विश्वरूपीरा मोर्जा विशाऽऽ गौपत्येनाऽऽ रायस्पोषेण सहस्रपोषं वः पुष्यासं मयि वो रायः श्रयन्ताम्[४] ॥

उप त्वाऽग्ने दिवेदिवे दोषावस्तर्धिया वयम् । नमो भरन्त एमसि[५] ।

राजन्तमध्वराणां गोपामृतस्य दीदिविम् । वर्धमानꣳ स्वे दमे[६] ॥

स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये[७] ॥

अग्ने (२) त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः[८] ॥

तं त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः[९] ॥

वसुरग्निर्वसुश्रवाः । अच्छा नक्षि द्युमत्तमो रयिं दाः[१०] ॥

ऊर्जा वः पश्याम्यूर्जा मा पश्यत रायस्पोषेण वः पश्यामि रायस्पोषेण मा पश्यतेडाः स्थ मधुकृतः स्योना मा ऽऽ विशतेरा मदः । सहस्रपोषं वः पुष्यासं (३) मयि वो रायः श्रयन्ताम्[११] ॥

तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्[१२] ॥

सोमानꣳस्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवन्तं य औशिजम् [13] ॥

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।

उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते [14] ॥

परि त्वाग्ने पुरं वयं विप्रꣳ सहस्य धीमहि ।

धृषद्वर्णं (४) दिवेदिवे भेत्तारं भङ्गुरावतः [15] ॥

अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीं तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीम् [16] ।

( भूयास्त, स्वस्तयेऽग्ने, पुष्यासं, धृषद्वर्ण--, मेकान्नत्रिꣳशच्च ) ॥ ६ ॥

पञ्चमानुवाकोक्तमन्त्राणां व्याख्यानम् ।

अयज्ञो वा एष योऽसामोपप्रयन्तो अध्वरमित्याह स्तोममेवास्मै युनक्त्युपेत्याह प्रजा वै पशव उपेमं लोकं प्रजामेव पशूनिमं लोकमुपैत्यस्य प्रत्नामनुद्युतमित्याह सुवर्गो वै लोकः प्रत्नः सुवर्गमेव लोकꣳ समारोहत्यग्निर्मूर्धा दिवः ककुदित्याह मूर्धानमे (१) वैनꣳ समानानां करोत्यथो देवलोकादेव मनुष्यलोके प्रतितिष्ठत्ययमिह प्रथमो धायि धातृभिरित्याह मुख्यमेवैनं करोत्युभा वामिन्द्राग्नी आहुवध्या इत्याहौजो बलमेवाव रुन्धेऽयं ते योनिर्ऋत्विय इत्याह पशवो वै रयिः पशूनेवाव रुन्धे षड्भिरुप तिष्ठते षड्वा (२) ऋतव ऋतुष्वेव प्रति तिष्ठति षड्भिरुत्तराभिरुप तिष्ठते द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति यथा वै पुरुषोऽश्वो गौर्जीर्यत्येवमग्निराहितो जीर्यति संवत्सरस्य परस्तादाग्निपावमानीभिरुप तिष्ठते पुनर्नवमेवैनमजरं करोत्यथो पुनात्येवोप तिष्ठते योग एवास्यैष उप तिष्ठते (३) दम एवास्यैष उप तिष्ठते याच्ञैवास्यैषोप तिष्ठते यथा पापीयाञ्छ्रेयस आहृत्य नमस्यति तादृगेव तदायुर्दा अग्नेऽस्यायुर्मे देहीत्याहाऽऽयुर्दा ह्येष वर्चोदा अग्नेऽसि वर्चो मे देहीत्याह वर्चोदा ह्येष तनूपा अग्नेऽसि तनुवं मे पाहीत्याह (४) तनूपा ह्येषोऽग्ने यन्मे तनुवा ऊनं तन्म आ पृणेत्याह यन्मे प्रजायै पशूनामूनं तन्म आ पूरयेति वावैतदाह चित्रावसो स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्ट्यै वा एतस्यै पुरा ब्राह्मणा अभैषुर्व्युष्टिमेवाव रुन्ध इन्धानास्त्वा शतꣳ (५) हिमा इत्याह शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्येषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणाꣳ शततर्हाꣳस्तृꣳहन्ति यदेतया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अछम्बट्कारꣳ सं त्वमग्ने सूर्यस्य वर्चसा गथा इत्याहैतत्त्वमसीदमहं (६) भूयासमिति वावैतदाह त्वमग्ने सूर्यवर्चा असीत्याहाऽऽशिषमेवैतामा शास्ते ( मूर्धानं, वै, तिष्ठत, आह, शत--, सहꣳ, षोडश च ) ॥ ७ ॥

षष्ठानुवाकोक्तमन्त्राणां व्याख्यानम् । अग्निर्ऋषिः ।

सं पश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धेऽम्भः स्थाम्भो वो भक्षीयेत्याहाम्भो ह्येता महः स्थ महो वो भक्षीयेत्याह महो ह्येताः सहः स्थ सहो वो भक्षीयेत्याह सहो ह्येता

ऊर्जस्थोर्जं वो भक्षीयेत्या (१) होर्जो ह्येता रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवात्मन् रमयत
इहैव स्तेतो माऽप गातेत्याह ध्रुवा एवैना अनपगाः कुरुत इष्टकचिद्वा अन्योऽग्निः पशुचिदन्यः सꣳहि-
तासि विश्वरूपीरिति वत्समभि मृशत्युपैवैनं धत्ते पशुचितमेनं कुरुते प्र (२) वा एषोऽस्माँल्लोकाच्च्य-
वते य आहवनीयमुप तिष्ठते गार्हपत्यमुप तिष्ठतेऽस्मिन्नेव लोके प्रति तिष्ठत्यथो गार्हपत्यायैव नि ह्नुते
गायत्रीभिरुप तिष्ठते तेजो वै गायत्री तेज एवात्मन् धत्तेऽथो यदेतं तृचमन्वाह सन्तत्यै गार्हपत्यं वा
अनु द्विपादो वीराः प्रजायन्ते य एवं विद्वान् द्विपदाभिर्गार्हपत्यमुप तिष्ठत (३) आस्य वीरो जायत
ऊर्जा वः पश्याम्यूर्जा मा पश्यतेत्याहाऽऽशिषमेवैतामा शास्ते तत्सवितुर्वरेण्यमित्याह प्रसूत्यै सोमानꣳ
स्वरणमित्याह सोमपीथमेवाव रुन्धे कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुन्धे कदा चन
स्तरीरसीत्याह न स्तरीꣳ रात्रिं वसति (४) य एवं विद्वानग्निमुप तिष्ठते परि त्वाग्ने पुरं वयमित्याह
परिधिमेवैतं परि दधात्यस्कन्दायाग्ने गृहपत इत्याह यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं त्वा
हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे
ज्योतिष्मती (५) मिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात्तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा
शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो जातः स्यात् तेज एवास्मिन् ब्रह्मवर्चसं दधाति ॥
( ऊर्जंवोभक्षीयेति, प्र, गार्हपत्यमुपतिष्ठते, वसति, ज्योतिष्मती , मेकान्नत्रिꣳशच्च ) ॥ ८ ॥

पूर्वोक्तोपस्थानस्याग्निहोत्राङ्गता ॥ अग्निर्ऋषिः ।

अग्निहोत्रं जुहोति यदेव किं च यजमानस्य स्वं तस्यैव तद्रेतः सिञ्चति प्रजनने प्रजननꣳ हि वा
अग्निरथौषधीरन्तगता दहति तास्ततो भूयसीः प्रजायन्ते यत्सायं जुहोति रेत एव तत्सिञ्चति प्रैव
प्रातस्तनेन जनयति तद्रेतः सिक्तं न त्वष्ट्राऽविकृतं प्रजायते यावच्छो वै रेतसः सिक्तस्य (१) त्वष्टा
रूपाणि वि करोति तावच्छो वै तत्प्रजायत एष वै दैव्यस्त्वष्टा यो यजते बह्वीभिरुप तिष्ठते रेतस एव
सिक्तस्य बहुशो रूपाणि वि करोति स प्रैव जायते श्वःश्वो भूयान् भवति य एवं विद्वानग्निमुप तिष्ठते
ऽहर्देवानामासीद्रात्रिरसुराणां तेऽसुरा यद्देवानां वित्तं वेद्यमासीत्तेन सह (२) रात्रिं प्राविशन् ते देवा हीना
अमन्यन्त तेऽपश्यन्नाग्नेयी रात्रिराग्नेयाः पशव इममेवाग्निꣳ स्तवाम स नः स्तुतः पशून् पुनर्दास्यतीति तेऽ-
ग्निमस्तुवन्त्स एभ्यः स्तुतो रात्रिया अध्यहरभि पशून्निरार्जत् ते देवाः पशून् वित्त्वा कामाꣳ अकुर्वत य एवं
विद्वानग्निमुप तिष्ठते पशुमान् भवत्यादि (३) त्यो वा अस्माँल्लोकादमुं लोकमैत् सोऽमुं लोकं गत्वा पुन-
रिमं लोकमभ्यध्यायत् स इमं लोकमागत्य मृत्योरबिभेन्मृत्युसंयुत इव ह्ययं लोकः सोऽमन्यतेममेवाग्निꣳ
स्तवानि स मा स्तुतः सुवर्गं लोकं गमयिष्यतीति सोऽग्निमस्तौत् स एनꣳ स्तुतः सुवर्गं लोकमगमयद्य
(४) एवं विद्वानग्निमुप तिष्ठते सुवर्गमेव लोकमेति सर्वमायुरेत्यभि वा एषोऽग्नी आ रोहति य एना-
वुप तिष्ठते यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति नक्तमुप तिष्ठते न प्रातः सꣳ हि नक्तं
व्रतानि सृज्यन्ते सह श्रेयाꣳश्च पापीयाꣳश्चासाते ज्योतिर्वा अग्निस्तमो रात्रिर्य (५) न्नक्तमुप तिष्ठते
ज्योतिषैव तमस्तरत्युपस्थेयोऽग्नी३र्नोपस्थेया३ इत्याहुर्मनुष्यायेन्वै योऽहरहराहृत्याथैनं याचति स

इन्वे तमुपांच्छेत्यथ को देवानहरहर्याचिष्यतीति तस्मान्नोपस्थेयो[११] ऽथो खल्वाहुराशिषे वै कं यज-
मानो यजत इत्येषा खलु वा ( ६ ) आहिताग्नेराशीर्यदग्निमुप तिष्ठते तस्मादुपस्थेयः[१२] प्रजापतिः पशून-
सृजत ते सृष्टा अहोरात्रे प्राविशन् ताञ्छन्दोभिरन्वविन्दद्यच्छन्दोभिरुप तिष्ठते स्वमेव तदन्विच्छति[१३]
न तत्र जाम्यस्तीत्याहुर्योऽहरहरुप तिष्ठत इति[१४] यो वा अग्निं प्रत्यङ्ङुप तिष्ठते प्रत्येनमोषति यः पराङ्
विष्वङ् प्रजायां पशुभि ( ७ ) रेति कवातिर्यङ्ङिवोपतिष्ठेत नैनं प्रत्योषति न विष्वङ् प्रजया पशुभिरेति[१५]

( सिक्तस्य, सह, भवति, यो, य,--खलु वै, पशुभि--; त्रयोदश च ) ॥ ९ ॥

प्रवत्स्यतो यजमानस्याग्नेरुपस्थानमन्त्राः, आचमनम्, कपालानुमन्त्रणादि च । १, २, ६, ९ त्रिष्टुप्; ३ विपरीता बृहती; ४ शङ्कुमत्यनुष्टुप्; ५, ७, ११ अनुष्टुप्; १२ विराट्स्थाना; ८ द्विपदा । प्रजापतिर्ऋषिः । )

मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे ।
तत्त्वं बिभृहि पुनरा मदैतोस्तवाहं नाम बिभराण्यग्ने[१] ॥
मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः ।
आयुषे त्वं जीवसे वयं यथायथं वि परि दधावहै पुनस्ते[२] ॥
नमोऽग्नयेऽप्रतिविद्धाय नमोऽनाधृष्टाय नमः सम्राजे ।
अषाढो ( १ ) ऽग्निर्बृहद्वया विश्वजित्सहन्त्यः श्रेष्ठो गन्धर्वः[३] ॥
त्वत्पितारो अग्ने देवास्त्वामाहुतयस्त्वद्विवाचनाः ।
सं मामायुषा सं गौपत्येन सुहिते मा धाः ॥
अयमग्निः श्रेष्ठतमोऽयं भगवत्तमोऽयꣳ सहस्रसातमः । अस्मा अस्तु सुवीर्यम् ॥
मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।
या इष्टा उषसो निम्रुचश्च ताः सं दधामि हविषा घृतेन[६] ॥
पयस्वतीरोषधयः ( २ ) पयस्वद्वीरुधां पयः । अपां पयसो यत्पयस्तेन मामिन्द्र सꣳसृज ॥
अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम् ॥
अग्निꣳ होतारमिह तꣳ हुवे देवान् यज्ञियानिह यान् हवामहे ॥
आ यन्तु देवाः सुमनस्यमाना वियन्तु देवा हविषो मे अस्य ॥
कस्त्वा युनक्ति स त्वा युनक्तु यानि घर्मे कपालान्युपचिन्वन्ति ( ३ ) वेधसः ।
पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चताम्[११] ॥
अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन् पुनः ।
इध्मो वेदिः परिधयश्च सर्वे यज्ञस्याऽऽयुरनु सं चरन्ति ॥

त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं यज्ञꣳ स्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा
घर्मो देवाꣳ अप्येतु[१३] ॥ ( अषाढ, ओषधय, उपचिन्वन्ति, पञ्चचत्वारिꣳशच्च ) ॥ १० ॥

काम्या याज्यापुरोऽनुवाक्याः ॥ १-२, १३, १५, १७, २० गायत्री; ३, ७ जगती; ४-६, ८-१०, १२; १४, १६, १८-१९ त्रिष्टुप्; ११ अनुष्टुप् । विश्वेदेवाऋषयः ।

वैश्वानरो न ऊत्याऽऽ प्र यातु परावतः । अग्निरुक्थेन वाहसा[१] ॥
ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे[२] ॥
वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ।
उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा[३] ॥
पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश ।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स (१) रिषः पातु नक्तम्[४] ॥
जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा ।
वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः[५] ॥
त्वमग्ने शोचिषा शोशुचान आ रोदसी अपृणा जायमानः ।
त्वं देवाꣳ अभिशस्तेरमुञ्चो वैश्वानर जातवेदो महित्वा[६] ॥
अस्माकमग्ने मघवत्सु धारयानामि क्षत्रमजरꣳ सुवीर्यम् ।
वयं जयेम शतिनꣳ सहस्रिणं वैश्वानर (२) वाजमग्ने तवोतिभिः[७] ॥
वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः ।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण[८] ॥
अव ते हेडो वरुण नमोभिरव यज्ञेभिरीमहे हविर्भिः ।
क्षयन्नस्मभ्यमसुर प्रचेतो राजन्नेनाꣳसि शिश्रथः कृतानि[९] ॥
उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमꣳ श्रथाय ।
अथा वयमादित्य (३) व्रते तवानागसो अदितये स्याम[१०] ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत्[११] ॥
आ दधिक्राः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषाऽपस्ततान ।
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचाꣳसि[१२] ॥
अग्निर्मूर्धा[१३] भुवः[१४] (४।४।४)
मरुतो यद्ध वो दिवः सुम्नायन्तो हवामहे । आ तू न (४) उप गन्तन[१५] ॥
या वः शर्म शशमानाय सन्ति त्रिधातूनि दाशुषे यच्छताधि ।
अस्मभ्यं तानि मरुतो वि यन्त रयिं नो धत्त वृषणः सुवीरम्[१६] ॥

अदि॑तिर्न उरुष्यत्वदि॑तिः शर्म॑ यच्छतु । अदि॑तिः पात्व॒ꣳह॑सः[१७] ॥

म॒हीमू॒ षु मा॒तर॑ꣳ सुव्र॒ताना॑मृ॒तस्य॒ पत्नी॒मव॑से हुवेम ।

तु॒वि॒क्ष॒त्राम॒जर॑न्तीमुरू॒चीꣳ सु॒शर्मा॑ण॒मदि॑तिꣳ सु॒प्रणी॑तिम्[१८] ॥

सु॒त्रामा॑णं पृथि॒वीं द्याम॑ने॒हस॑ꣳ सु॒शर्मा॑ण (५) मदि॑तिꣳ सु॒प्रणी॑तिम् ।

दैवीं॒ नाव॑ꣳ स्वरि॒त्राम॑नागस॒मस्र॑वन्ती॒मा रु॑हेमा स्व॒स्तये॑[१९] ॥

इ॒माꣳ सु नाव॒मा ऽरु॑ह॒ꣳ श॒तारि॑त्राꣳ श॒तस्फ्या॑म् । आच्छि॑द्रां पारयि॒ष्णुम्[२०] ॥ ( दि॒वा स, स॒हस्रिणं॒ वैश्वा॑नरा--, ऽऽ दि॒त्या, तू॒ नो, ऽने॒हस॑ꣳ सु॒शर्मा॑ण,--मेका॑न्नवि॒ꣳ शतिश्च ) ॥ ११ ॥

[ दे॒वासुराः २२५। पर॒ा २३६। भूमि॒--१६३ । भू॒मि॑--२२५।--रु॒गप्र॒यन्तः २१७। सं॒पश्य॒ा--२२९। स्थय॒ज्ञः ३१६। सं॒पश्य॒ामी-२७५।- त्वा॒हाग्नि॒होत्रं॑ ३६३ । मम॒ नाम॑ १९५ । वैश्व॒ न॒र २७९ । ( एका॑दश ॥ ११ ॥ २७२७ ) ]

[ ॥ इति प्रथमकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥ ]

## याजमानकाण्डम् ।

[ अथ षष्ठः प्रपाठकः ॥ ६ ॥ ] प्रजापतिर्ऋषिः ।
आज्यग्रहणानुमन्त्रणम् ॥ अनुष्टुप् ।

सं त्वा॑ सिञ्चा॒मि॒ यजु॑षा प्र॒जामायु॒र्धनं॑ च । बृ॒ह॒स्पति॑प्रसूतो॒ यज॑मान इ॒ह मा रि॑षत्[१] ॥

आज्य॑मसि स॒त्यम॑सि स॒त्यस्याध्य॑क्षमसि ह॒विर॑सि वैश्वान॒रं वैश्वदे॒वमुत्पू॑तशुष्मꣳ स॒त्यौजाः सहो॑ऽसि॒ सह॑मानमसि॒ सह॒स्वारा॑तीः सह॑स्वारातीय॒तः सह॑स्व॒ पृत॑नाः सह॑स्व॒ पृत॒न्य॒तः । स॒हस्र॑वीर्यमसि॒ तन्मा॑ जिन्वाऽऽज्य॒स्याऽऽज्य॑मसि स॒त्यस्य॑ स॒त्यम॑सि स॒त्यायु॑ (१) रसि स॒त्यशु॑ष्ममसि स॒त्येन॑ त्वाऽ-भि घा॑रयामि॒ तस्य॑ ते भक्षीय[२] पञ्चा॒नां॑ त्वा॒ वाता॑नां य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[३] पञ्चा॒नां॑ त्व॑र्तू॒नां य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[४] पञ्चा॒नां॑ त्वा॑ दि॒शां य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[५] पञ्चा॒नां॑ त्वा॑ पञ्चज॒नानां॑ य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[६] च॒रोस्त्वा॒ पञ्च॑बिलस्य य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[७] ब्रह्म॑णस्त्वा॒ तेज॑से य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[८] क्ष॒त्रस्य॒ त्वौज॑से य॒न्त्राय॑ (२) ध॒र्त्राय॑ गृह्णामि[९] वि॒शे त्वा॑ य॒न्त्राय॑ ध॒र्त्राय॑ गृह्णामि[१०] सु॒वीर्या॑य त्वा गृह्णामि[११] सु॒प्र॒जा॒स्त्वाय॑ त्वा गृह्णामि[१२] रा॒यस्पोषा॑य त्वा गृह्णामि[१३] ब्र॒ह्म॒व॒र्च॒साय॑ त्वा गृह्णामि[१४] भूर॒स्माकꣳ ह॒विर्दे॒वानां॑मा॒शिषो॒ यज॑मानस्य दे॒वानां॑ त्वा दे॒वता॑भ्यो गृह्णामि[१५] कामा॑य त्वा गृह्णामि[१६] ( स॒त्यायु॒-, रोजसे॒य॒न्त्राय॒, त्रया॑स्त्रिꣳशच्च ) ॥ १ ॥

हविर्ग्रहणानुमन्त्रणम् ॥ ४-५ द्विपदा त्रिष्टुप्; ६ त्रिष्टुप्; १० पिपीलिकमध्या ॥ प्रजापतिर्ऋषिः ।

ध्रु॒वो॑ऽसि ध्रु॒वो॑ऽहꣳ स॑जा॒तेषु॑ भूयासं॒ धीर॒श्चेत्ता॑ वसु॒वित्[१] उ॒ग्रो॑ऽस्यु॒ग्रो॑ऽहꣳ स॑जा॒तेषु॑ भूयासमु॒ग्रश्चेत्ता॑ वसु॒वित्[२] अ॒भि॒भूर॑स्यभि॒भूर॒हꣳ स॑जा॒तेषु॑ भूयासमभि॒भूश्चेत्ता॑ वसु॒वित्[३] यु॒नज्मि॑ त्वा॒ ब्रह्म॑णा॒ दैव्ये॑न ह॒व्या-यास्मै॒ वोढ॑वे जातवेदः ॥

इन्धा॑नास्त्वा सुप्र॒जसः॑ सु॒वीरा॒ ज्योग्जी॑वेम बलि॒हृतो॑ व॒यं ते॑[४] ॥

❀

यन्मे अग्ने अस्य यज्ञस्य रिष्या (१) द्यद्वा स्कन्दादाज्यस्योत विष्णो ।

तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे[९] ।

भूँ—र्भुवः सुवँ—रुच्छुष्मो अग्ने यजमानायैधि निशुष्मो अभिदासते । अग्ने देवेद्धमन्विद्ध मन्द्रजिह्वं—मर्त्यस्य ते होतर्मूर्धन्ना जिघर्मि रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय[११] मनोऽसि प्राजापत्यं मनसा मा भूतेनाऽऽविश[१२] वागस्यैन्द्री सपत्नक्षयणी (२) वाचा मेन्द्रियेणाऽऽविश[१३] वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु[१४] ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु[१५] वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु[१६] शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु[१७] हेमन्तशिशिरावृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीतां[१८]—मग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासं[१९]—मग्नेरहं देवयज्ययाऽन्नादो भूयासं[२०] (३) दब्धिरस्यदब्धो भूयासममुं दभेयं[२१]—मग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासं[२२]—मिन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासं[२३]—मिन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासं[२४] महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयं[२५]—मग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयम्[२६] ॥ ( रिष्यात, सपत्नक्षयण्य,-न्नादो भूयास,-षट्त्रिꣳशच्च ) ॥२॥

इडा भागाद्यनुमन्त्रणम् ॥ ५ त्रिष्टुप् । प्रजापतिर्ऋषिः

अग्निर्मा दुरिष्टात् पातु सविताऽघशꣳसा—द्यो मेऽन्ति दूरेऽरातीयति तमेतेन जेषम्[१] सुरूपवर्षवर्ण एहीमान् भद्रान् दुर्यान्[२] अभ्येहि मामनुव्रता न्यु शीर्षाणि मृढ्वमिड एह्यदित एहि सरस्वत्येहि रन्तिरसि रमतिरसि सूनर्यसि जुष्टे जुष्टिं तेऽशीयोपहूत उपहवं (१) तेऽशीय सा मे सत्याशीरस्य यज्ञस्य भूयादरेडता मनसा तच्छकेयं यज्ञो दिवꣳ रोहतु यज्ञो दिवं गच्छतु यो देवयानः पन्थास्तेन यज्ञो देवाꣳ अप्येत्वस्मास्विन्द्र इन्द्रियं दधात्वस्मान् राय उत यज्ञाः सचन्तामस्मासु सन्त्वाशिषः सा नः प्रिया सुप्रतूर्तिर्मघोनी[३] जुष्टिरसि जुषस्व नो जुष्टा नो (२) ऽसि जुष्टिं ते गमेयम्[४] मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु । बृहस्पतिस्तनुतामिमं नो विश्वे देवा इह मादयन्ताम् ॥

ब्रध्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसत् प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यक्षितोऽस्यक्षित्यै त्वा (३) मा मे क्षेष्ठा अमुत्रामुष्मिन् लोके[९] ॥ ( उपहवं, जुष्टा न-स्त्वा, षट् च ) ॥ ३ ॥

अनुयाजादीनामनुमन्त्रणम् ॥ १२-१३ अनुष्टुप्; १४ पुर उष्णिक्; १८ त्रिष्टुप् । प्रजापतिर्ऋषिः ।

बर्हिषोऽहं देवयज्यया प्रजावान् भूयासं[१] नराशꣳसस्याहं देवयज्यया पशुमान् भूयासं[२]—मग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयं[३]—मग्नेरहमुज्जितिमनूज्जेषम्[४] सोमस्याहमुज्जितिमनूज्जेषं[५]—मग्नेरहमुज्जितिमनूज्जेषं[६]—मग्नीषोमयोरहमुज्जितिमनूज्जेषं[७]—मिन्द्राग्नियोरहमुज्जितिमनूज्जेषं[८]—मिन्द्रस्याहमु (१) ज्जितिमनूज्जेषं[९] महेन्द्रस्याहमुज्जितिमनूज्जेषं[१०]—मग्नेः स्विष्ट-

कृतोऽहमुज्जितिमनूज्जेषं[११] वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाꣳ इन्द्रो मे निग्राभेणाधराꣳ अकः[१२] ॥

उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ।
अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्[१३] ॥

एमा अग्मन्नाशिषो दोहकामा इन्द्रवन्तो (२) वनामहे धुक्षीमहि प्रजामिषम्[१४] ॥

रोहितेन त्वाऽग्निर्देवतां गमयतु[१५] हरिभ्यां त्वेन्द्रो देवतां गमयत्वे[१६]तशेन त्वा सूर्यो देवतां गमयतु[१७] वि ते मुञ्चामि रशना वि रश्मीन् वि योक्त्रा यानि परिचर्तनानि धत्तादस्मासु द्रविणं यच्च भद्रं प्र णो ब्रूताद्भागधान् देवतासु[१८] ॥

विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयꣳ[१९] सोमस्याहं देवयज्यया (३) सुरेता रेतो धिषीय[२०] त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयं[२१] देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्रभूयासं[२२] वेदोऽसि वित्तिरसि विदेय कर्मासि करुणमसि क्रियासꣳ सनिरसि सनितासि सनेयं घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनम्[२३] (इन्द्रस्याह,-मिन्द्रवन्त, सोमस्याहं देवयज्यया, चतुश्चत्वारिꣳशच्च) ॥ ४ ॥

ध्रुवाप्यायनादि ॥ १ विराट्स्थाना । प्रजापतिर्ऋषिः ।

आ प्यायतां ध्रुवा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः ।
सूर्याया ऊधोऽदित्या उपस्थ उरुधारा पृथिवी यज्ञे अस्मिन्[१] ॥

प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेन[२] सदसि सन्मे भूयाः सर्वमसि सर्वं मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मा मे क्षेष्ठाः[३] प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तां[४] दक्षिणायां (१) दिशि मासाः पितरो मार्जयन्तां[५] प्रतीच्यां दिशि गृहाः पशवो मार्जयन्तां[६]मुदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्तां[७]मूर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्तां[८] विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु वि क्रमे निर्भक्तः स यं द्विष्मो[९] विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु वि क्रमे निर्भक्तः स यं द्विष्मो[१०] विष्णोः (२) क्रमोऽस्यरातीयतो हन्ता जागतेन छन्दसा दिवमनु वि क्रमे निर्भक्तः स यं द्विष्मो[११] विष्णोः क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभेन छन्दसा दिशो नु वि क्रमे निर्भक्तः स यं द्विष्मः[१२] ॥ (दक्षिणायां, द्विष्मो विष्णो,-रेकान्नत्रिꣳशच्च) ॥ ५ ॥

सूर्योपस्थानादि ॥ ९-१० गायत्री; १४ अतिजगती; १५ त्रिष्टुप् ।

अगन्म सुवः सुवरगन्म संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते माऽऽवृक्षि[१] सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहि वर्चोधा असि वर्चो मयि धेही[२]दमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिवोऽस्मादन्तरिक्षादस्यै पृथिव्या अस्मादन्नाद्यान्निर्भजामि निर्भक्तः स यं द्विष्मः ॥ (१)

सं ज्योतिषाऽभूवꣳ—मैन्द्रीमावृतमन्वावर्ते[५] समहं प्रजया सं मया प्रजा समहꣳ रायस्पोषेण सं मया रायस्पोषः[६] समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासं[७] वसुमान् यज्ञो वसीयान् भूयासꣳ—मग्न आयूꣳषि पवस आ सुवोर्जमिषं च नः। आरे बाधस्व दुच्छुनाम्[९] ॥

अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् । ( २ ) दधत् पोषꣳ रयिं मयि[१०] ।

अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासꣳ सुगृहपतिर्मया त्वं गृहपतिना भूयाः शतꣳ हिमास्तामाशिषमा शासे तन्तवे ज्योतिष्मतीं तामाशिषमाशासेऽमुष्मै ज्योतिष्मतीं[११] कस्त्वा युनक्ति स त्वा विमुञ्चत्वꣳ[१२]—ग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि[१३] यज्ञो बभूव स आ ( ३ ) बभूव स प्र जज्ञे स वावृधे ।

स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणाम्[१४] ॥

गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।

इडावाꣳ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान्[१५] ॥

( द्विष्मः । सुवीर्यꣳ, स आ, पञ्चत्रिꣳशच्च ) ॥ ६ ॥

देवतापरिग्रहादिविधिः ॥ प्रजापतिर्ऋषिः ।

यथा वै संभृतसोमा एवं वा एते संभृतयज्ञा यद्दर्शपूर्णमासौ कस्य वाह देवा यज्ञमा गच्छन्ति कस्य वा न बहूनां यजमानानां यो वै देवताः पूर्वः परिगृह्णाति स एनाः श्वो भूते यजते[१] एतद्वै देवानामायतनं यदाहवनीयोऽन्तराग्नी पशूनां गार्हपत्यो मनुष्याणामन्वाहार्यपचनः पितृणा[२]—मग्निं गृह्णाति स एवायतने देवताः परि ( १ ) गृह्णाति ताः श्वो भूते यजते[३]—व्रतेन वै मेध्योऽग्निर्व्रतपतिर्ब्राह्मणो व्रतभृद्व्रतमुपैष्यन् ब्रूयादग्ने व्रतपते व्रतं चरिष्यामीत्य[५]—ग्निर्वै देवानां व्रतपतिस्तस्मा एव प्रतिप्रोच्य व्रतमालभते[६] बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामेतद्ध्येतयोरायतनमु—पस्तीर्यः पूर्वश्चाग्निरपरश्चेत्याहु—र्मनुष्या ( २ ) इन्वा उपस्तीर्णमिच्छन्ति किमु देवा येषां नवावसानमुपास्मिञ्छ्वो यक्ष्यमाणे देवता वसन्ति य एवं विद्वानग्निमुपस्तृणाति[९] यजमानेन ग्राम्याश्च पशवोऽवरुध्या आरण्याश्चेत्याहुर्यद्ग्राम्यानुपवसति तेन ग्राम्यानव रुन्धे यदारण्यस्याश्नाति तेनारण्यान्यदनाश्वानुपवसेत् पितृदेवत्यः स्यादा[१०]—रण्यस्याश्नातीन्द्रियं ( ३ ) वा आरण्यमिन्द्रियमेवाऽऽत्मन् धत्ते[११] यदनाश्वानुपवसेत् क्षोधुकः स्याद्यदश्नीयाद्रुद्रोऽस्य पशूनभिमन्येता[१२]—पोऽश्नाति[१३] तन्नेवाशितं नेवानशितं न क्षोधुको भवति नास्य रुद्रः पशूनभि मन्यते[१४] वज्रो वै यज्ञः क्षुत्खलु वै मनुष्यस्य भ्रातृव्यो यदनाश्वानुपवसति वज्रेणैव साक्षात् ( ४ ) क्षुधं भ्रातृव्यꣳ हन्ति[१५] ॥ ( परि, मनुष्या, इन्द्रियꣳ, साक्षात्, त्रीणि च ) ॥ ७ ॥

यज्ञायुधसम्भृतिः ॥ प्रजापतिर्ऋषिः ।

यो वै श्रद्धामनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधते[१] ऽपः प्र णयति श्रद्धा वा आपः श्रद्धामेवाऽऽरभ्य यज्ञेन यजत उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते[२] तदाहुरति वा एता वर्त्रं नेदन्त्यति वाचं

मनो वावैता नार्ति नेदन्तीति[३] मनसा प्र णयती[४]—यं वै मनो ( १ ) ऽनयैवैनाः प्र णयत्य[५]—स्कन्नहविर्भवति य एवं वेद[६] यज्ञायुधानि संभरति यज्ञो वै यज्ञायुधानि यज्ञमेव तत्संभरति[७] यदेकमेकꣳसंभरेत् पितृदेवत्यानि स्युर्यत् सह सर्वाणि मानुषाणि द्वेद्वे संभरति याज्यानुवाक्ययोरेव रूपं करोत्यथो मिथुनमेवं यो वै दश यज्ञायुधानि वेद मुखतोऽस्य यज्ञः कल्पते[१०] स्फ्य ( २ ) श्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि य एवं वेद मुखतोऽस्य यज्ञः कल्पते[११] यो वै देवेभ्यः प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्यꣳ[१२] हविर्निरुप्यमाणमभि मन्त्रयेताग्निꣳ होतारमिह तꣳ हुव इति ( ३ ) देवेभ्य एव प्रतिप्रोच्य यज्ञेन यजते जुषन्तेऽस्य देवा हव्य[१३]—मेष वै यज्ञस्य ग्रहो गृहीत्वैव यज्ञेन यजते[१४] तदुदित्वा वाचं यच्छति यज्ञस्य धृत्या[१५] अथो मनसा वै प्रजापतिर्यज्ञमतनुत मनसैव तद्यज्ञं तनुते रक्षसामनन्ववचाराय[१६] यो वै यज्ञं योग आगते युनक्ति युङ्क्ते युञ्जानेषु[१७] कस्त्वा युनक्ति स त्वा युनक्त्वि ( ४ ) त्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति युङ्क्ते युञ्जानेषु[१८] ॥ (वै मनः, स्फ्य, इति युनक्त्वे,-कादश च) ॥८॥

द्वादशद्वन्द्वसम्पात्तिः ॥ प्रजापतिर्ऋषिः ।

प्रजापतिर्यज्ञानसृजताग्निहोत्रं चाग्निष्टोमं च पौर्णमासीं चोक्थ्यं चामावास्यां चातिरात्रं च तानुदमिमीत यावदग्निहोत्रमासीत् तावानग्निष्टोमो यावती पौर्णमासी तावानुक्थ्यो यावत्यमावास्या तावानतिरात्रो[१] य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपाप्नोति तावदुपाऽऽप्नोति य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति ( १ ) तावदुपाऽऽप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाऽऽप्नोति[२] परमेष्ठिनो वा एष यज्ञोऽग्र आसीत् तेन स परमां काष्ठामगच्छत् तेन प्रजापतिं निरवासाययत् तेन प्रजापतिः परमां काष्ठामगच्छत् तेनेन्द्रं निरवासाययत् तेनेन्द्रः परमां काष्ठामगच्छत् तेनाग्नीषोमौ निरवासाययत् तेनाग्नीषोमौ परमां काष्ठामगच्छतां य ( २ ) एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति[३] यो वै प्रजातेन यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते द्वादश मासाः संवत्सरो द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि सम्पाद्यानीत्याहु[४]—र्वत्सं चोपावसृजत्युखां चाधि श्रयत्यव च हन्ति दृषदौ च समाहन्त्यधि च वपते कपालानि चोप दधाति पुरोडाशं ( ३ ) चाधिश्रयत्याज्यं च स्तम्बयजुश्च हरत्यभि च गृह्णाति वेदिं च परिगृह्णाति पत्नीं च सं नह्यति प्रोक्षणीश्चाऽऽसादयत्याज्यं चै[५]—तानि वै द्वादश द्वन्द्वानि दर्शपूर्णमासयोस्तानि य एवꣳ सम्पाद्य यजते प्रजातेनैव यज्ञेन यजते प्र प्रजया पशुभिर्मिथुनैर्जायते[६] ॥( उक्थ्येनोपाप्नोत्य,-गच्छतां यः, पुरोडाशं, चत्वारिꣳशच्च) ॥ ९ ॥

हविः सादनम् ॥ प्रजापतिर्ऋषिः ।

ध्रुवोऽसि ध्रुवोऽहꣳ संजातेषु भूयासमित्याह ध्रुवानेवैनान् कुरुत उग्रोऽस्युग्रोऽहꣳ संजातेषु भूयासमित्याहाप्रतिवादिन एवैनान् कुरुतेऽभिभूरस्यभिभूरहꣳ संजातेषु भूयासमित्याह य एवैनं प्रत्युत्पिपीते तमुपास्यते[१] युनज्मि त्वा ब्रह्मणा दैव्येनेत्याहैष वा अग्नेर्योगस्तेनै ( १ ) वैनं युनक्ति[२] यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान् पराभावयन् यन्मे अग्ने अस्य यज्ञस्य रिष्यादित्याह

यज्ञस्यैव तत्समृद्धेन यजमानः सुवर्गं लोकमेति यज्ञस्य व्यृद्धेन भ्रातृव्यान् पराभावयं[३]—त्यग्निहोत्रमेताभिर्व्याहृतिभिरुपसादयेद्—[४]यज्ञमुखं वा अग्निहोत्रं ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म ( २ ) कुरुते[५] संवत्सरे पर्यागत एताभिरेवोपसादयेद्[६] ब्रह्मणैवोभयतः संवत्सरं परिगृह्णाति[७] दर्शपूर्णमासौ चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवींषि ष्यासादयेद्यज्ञमुखं वै दर्शपूर्णमासौ चातुर्मास्यानि ब्रह्मैता व्याहृतयो यज्ञमुख एव ब्रह्म कुरुते संवत्सरे पर्यागत एताभिरेवासादयेद् ब्रह्मणैवोभयतः संवत्सरं परिगृह्णाति[८] यद्वै यज्ञस्य साम्ना क्रियते राष्ट्रं ( ३ ) यज्ञस्याऽऽशीर्गच्छति यदृचा विशं यज्ञस्याऽऽशीर्गच्छत्यथ ब्राह्मणोऽनाशीर्केण यज्ञेन यजते सामिधेनीरनुवक्ष्यन्नेता व्याहृतीः पुरस्ताद्दध्याद् ब्रह्मैव प्रतिपदं कुरुते तथा ब्राह्मणः साशीर्केण यज्ञेन यजते[९] यं कामयेत यजमानं भ्रातृव्यमस्य यज्ञस्याऽऽशीर्गच्छेदिति तस्यैता व्याहृतीः पुरोऽनुवाक्यायां दध्याद् भ्रातृव्यदेवत्या वै पुरोऽनुवाक्या भ्रातृव्यमेवास्य यज्ञस्या ( ४ ) ऽऽशीर्गच्छति[१०] यान् कामयेत यजमानान्त्समावत्येतान् यज्ञस्याऽऽशीर्गच्छेदिति तेषामेता व्याहृतीः पुरोऽनुवाक्याया अर्धर्च एकां दध्याद्याज्यायै पुरस्तादेकां याज्याया अर्धर्च एकां तथैनान्त्समावती यज्ञस्याऽऽशीर्गच्छति[११] यथा वै पर्जन्यः सुवृष्टं वर्षत्येवं यज्ञो यजमानाय वर्षति स्थलयोदकं परिगृह्णन्त्याशिषा यज्ञं यजमानः परिगृह्णाति[१२] मनोऽसि प्राजापत्यं ( ५ ) मनसा मा भूतेनाऽऽविशेत्याह मनो वै प्राजापत्यं प्राजापत्यो यज्ञो मन एव यज्ञमात्मन् धत्ते वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाऽऽविशेत्याहैन्द्री वै वाग्वाचमेवैन्द्रीमात्मन् धत्ते[१३] ॥

( तेनै,-व ब्रह्म, राष्ट्रं, यज्ञस्य, प्राजापत्य॰, षट्त्रिंशच्च ) ॥ १० ॥

आश्रावणादिमन्त्रविधानम् ॥

यो वै सप्तदशं प्रजापतिं यज्ञमन्वायत्तं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद् भ्रंशते[१] आ श्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तो य एवं वेद प्रति यज्ञेन तिष्ठति न यज्ञाद् भ्रंशते[२] यो वै यज्ञस्य प्रायणं प्रतिष्ठा ( १ ) मुदयनं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन संस्थां गच्छत्या[३] श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कार एतद्वै यज्ञस्य प्रायणमेषा प्रतिष्ठैतदुदयनं य एवं वेद प्रतिष्ठितेनारिष्टेन यज्ञेन संस्थां गच्छति[४] यो वै सूनृतायै दोहं वेद दुह एवैनां[५] यज्ञो वै सूनृताऽऽश्रावयेत्यैवैनामह्वदस्तु ( २ ) श्रौषडित्युपावास्राग्यजेत्युदनैषीद्ये यजामह इत्युपासदद्वषट्कारेण दोग्ध्येष वै सूनृतायै दोहो य एवं वेद दुह एवैनां[६] देवा वै सत्रमासत तेषां दिशोऽदस्यन्त एतामार्द्रां पङ्क्तिमपश्यन्ना श्रावयेति पुरोवातमजनयन्नस्तु श्रौषडित्यभ्रं समप्लावयन् यजेति विद्युत ( ३ ) मजनयन् ये यजामह इति प्रावर्षयन्नभ्यस्तनयन् वषट्कारेण ततो वै तेभ्यो दिशः प्राप्यायन्त य एवं वेद प्रास्मै दिशः प्यायन्ते[७] प्रजापतिं त्वो वेद प्रजापतिस्त्वं वेद यं प्रजापतिर्वेद स पुण्यो भवत्येष वै छन्दस्यः प्रजापतिरा श्रावयास्तु श्रौषड्यज ये यजामहे वषट्कारो य एवं वेद पुण्यो भवति[९] वसन्त ( ४ ) मृतूनां प्रीणामीत्याहर्तवो वै प्रयाजा ऋतूनेव प्रीणाति तेऽस्मै प्रीता यथापूर्वं कल्पन्ते कल्पन्तेऽस्मा ऋतवो य एवं वेदा[१०]—ग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासमित्याहाग्नीषोमाभ्यां वै यज्ञश्चक्षुष्मान् ताभ्यामेव चक्षुरात्मन् धत्ते[११]—ऽग्नेरहं देवयज्ययान्नादो भूयास-

मित्याहाग्निर्वै देवानामन्नादस्तेनैवा ( ५ ) ऽन्नाद्यमात्मन् धत्ते[२] दब्धिरस्यदब्धो भूयासममुं दभेयमित्याहै-तया वै दब्ध्या देवा असुरानदभ्नुवन् तयैव भ्रातृव्यं दभ्नो[१३]त्यग्नीषोमयोरहं देवयज्यया वृत्रहा भूयास-मित्याहाग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन् ताभ्यामेव भ्रातृव्यँस्तृणुते[१४] इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्य-न्नादो भूयासमित्याहेन्द्रियाव्येवान्नादो भवती[१५]न्द्रस्या ( ६ ) ऽहं देवयज्ययेन्द्रियावी भूयासमित्याहेन्द्रि-याव्येव भवति[१६] महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमित्याह जेमानमेव महिमानं गच्छ-त्य[१७]ग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहायुरेवात्मन् धत्ते प्रति यज्ञेन तिष्ठति[१८] ॥

प्रतिष्ठा,--मह्वदस्तु, विद्युते, वसन्व,-मेवे,--न्द्रस्या, ऽष्टात्रिँशच्च ) ॥ ११ ॥

काम्यायाज्यापुरोऽनुवाक्याः ॥ १, ३, ७ गायत्री; २, ४, ९-११, १३-१४, १६-१९ त्रिष्टुप्; ५,८,१२, १५ अनुष्टुप्; ६ बृहती । विश्वेदेवा ऋषयः ।

इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः । अस्माकमस्तु केवलः ॥
इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः[२] ॥
इन्द्रियाणि शतक्रतो या ते जनेषु पञ्चसु । इन्द्र तानि त आ वृणे[३] ॥
अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु ( १ ) क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये[४] ॥
आ यस्मिन्त्सप्त वासवास्तिष्ठन्ति स्वारुहो यथा ।
ऋषिर्ह दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथिः[५] ॥
आमासु पक्वमैरय आ सूर्यँ रोहयो दिवि ।
घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे गिरः[६] ॥
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत[७] ॥
गायन्ति त्वा गायत्रिणो ( २ ) ऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रतवुद्वँशमिव येमिरे[८] ॥
अँहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः ।
इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः[९] ॥
विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अँहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते[१०] ॥
प्र सम्राजं प्रथममध्वराणा ( ३ ) मँहोमुचं वृषभं यज्ञियानाम् ।
अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः[११] ॥

वि न॑ इन्द्र मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः ।
अ॒ध॒स्प॒दं तमी॑ṃ कृधि यो अ॒स्माꣳ अ॑भि॒दास॑ति[12] ॥
इन्द्र॑ क्ष॒त्रम॒भि वा॒ममोजोऽजा॑यथा वृषभ चर्ष॒णीना॑म् ।
अपा॑नुदो जन॑ममित्र॒यन्त॑मु॒रुं दे॒वेभ्यो॑ अकृणोरु लो॒कम्[13] ॥
मृ॒गो न भी॒मः कु॑च॒रो गि॑रि॒ष्ठाः प॑रा॒वत॒ ( ४ ) आ ज॑गामा॒ पर॑स्याः ।
सृ॒कꣳ स॒ꣳशाय॑ प॒विमि॑न्द्र ति॒ग्मं वि शत्रू॑न् ता॒ढि वि मृधो॑ नुदस्व[14] ॥
वि शत्रू॑न् वि मृधो॑ नुद॒ वि वृ॒त्रस्य॒ हनू॑ रुज ।
वि म॒न्युमि॑न्द्र भामि॒तो॑ऽमित्र॑स्याभि॒दास॑तः[15] ॥
त्रा॒तार॒मिन्द्र॑मवि॒तार॒मिन्द्र॒ꣳ हवे॑हवे सु॒हव॒ꣳ शूर॒मिन्द्र॑म् ।
हु॒वे नु श॒क्रं पु॑रुहू॒तमिन्द्र॒ꣳ स्व॒स्ति नो॑ म॒घवा॑ धा॒त्विन्द्रः॑[16] ॥
मा ते॑ अ॒स्याꣳ ( ५ ) स॑हसाव॒न् परि॑ष्टाव॒घाय॑ भूम हरिवः परा॒दै ।
त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यासः॑ सू॒रिषु॑ स्याम[17] ॥
अन॑वस्ते॒ रथ॒मश्वा॑य तक्ष॒न् त्वष्टा॒ वज्रं॑ पुरुहूत द्यु॒मन्त॑म् ।
ब्र॒ह्माण॒ इन्द्र॑ म॒हय॑न्तो अ॒र्कैरव॑र्धय॒न्नह॑ये॒ हन्त॒वा उ॑[18] ॥
वृष्णे॒ यत् ते॒ वृष॑णो अ॒र्कमर्चा॒निन्द्र॒ ग्रावा॑णो॒ अदि॑तिः स॒जोषाः॑ ।
अ॒न॒श्वासो॒ ये प॒वयो॑ऽर॒था इन्द्रे॑षिता अ॒भ्यव॑र्तन्त॒ दस्यू॑न्[19] ॥

( वृ॒त्रह॒त्येऽनु॑, गाय॒त्रिणो॑, ऽध्व॒राणा॑ं, परा॒वतो॒, ऽस्या,–म॒ष्टाच॑त्वारिꣳशच्च ) ॥ १२ ॥

[ सं त्वा॑ १३३ । ध्रु॒वो॑–१८६।–स्य॒ऽग्नि–१५६। ब॒र्हि॑षो॒ह १९४। माप्या॑यता॒– १२९ ।–मग॑न्म १८५। यथा॒ वै २०३ । यो वै २११ । प्र॒जाप॑ति–१९० ।–ध्रु॒वो॑ऽसि॒ २८६ । यो वै स॑प्तद॒श–३३८ ।–मिन्द्रं॒ वो २९८ । द्वाद॑श ॥ २५०९ ]

[ ॥ इति प्रथमकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥ ]

## याजमान–ब्राह्मणम् ।

[ अथ सप्तमः प्रपाठकः ॥ ७ ॥ ] प्रजापतिर्ऋषिः ।

इडानुमन्त्रणमन्त्रब्राह्मणम् ॥

पा॒क॒य॒ज्ञं वा अन्वाहि॑ताग्नेः प॒शव॒ उप॑ तिष्ठन्त॒ इडा॒ खलु॒ वै पा॑कय॒ज्ञः सैषान्त॒रा प्र॑याजानूया॒जान् यज॑मानस्य लो॒केऽव॑हि॒ता॒ तामा॑ह्रि॒यमा॑णाम॒भि म॑न्त्रयते॒ सुरू॑पवर्षवर्ण॒ एहीति॑ प॒शवो॒ वा इडा॑ प॒शूने॒वोप॑ ह्वयते[2] य॒ज्ञं वै दे॒वा अदु॑ह्रन् य॒ज्ञोऽसु॑राꣳ अदुहत् तेऽसु॑रा य॒ज्ञदु॑ग्धाः परा॑ऽभव॒न् यो वै य॒ज्ञस्य॒ दोहं॑ वि॒द्वान् ( १ ) यज॑तेऽप्य॒न्यं यज॑मानं दु॒हे[3] सा मे॑ स॒त्याऽऽशीर॒स्य य॒ज्ञस्य॑ भूया॒दित्या॑हैष वै य॒ज्ञस्य॒ दोह॒स्तेनै॒वैनं॑ दुहे[4] प्रत्ता॒ वै गौर्दु॑हे॒ प्रत्तेडा॒ यज॑मानाय दुह ए॒ते वा इडा॑यै॒ स्तना॒ इडोप॑हू॒तेति॑ वा॒युर्व॒त्सो[5] य॒र्हि होतेडा॑मुप॒ह्वये॑त॒ त॒र्हि यज॑मानो॒ होता॑र॒मीक्ष॑माणो॒ वा॒युं मन॑सा ध्याये॒न् ( २ ) मा॒त्रे व॒त्स-

मुपावसृजति[६] सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत्सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः सा देवानुपावर्तत पशवो वै तद् देवानवृणत पशवो-ऽसुरानजहुर्—यं कामयेतापशुः स्यादिति पराचीं तस्येडामुपह्वयेतापशुरेव भवति[८] यं (३) कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुपह्वयेत पशुमानेव भवति[९] ब्रह्मवादिनो वदन्ति स त्वा इडामुप-ह्वयेत य इडामुपह्वयात्मानमिडायामुपह्वयेतेति[१०] सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपह्वयाऽऽ-त्मानमिडायामुपह्वयते[११] व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति (४) सामि मार्जयन्त एतत् प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुर्[१२]—बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳसंदधाति[१३] विच्छिन्नं यज्ञꣳ समिमं दधात्वित्याह संतत्यै[१४] विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति[१५] यां वै (५) यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु संक्रामन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीतात्मन् पशून् रमयेतेति[१६] ब्रध्न पिन्वस्वेत्याह यज्ञो वै ब्रध्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन् पशून् रमयते[१७] ददतो मे (६) मा क्षायीत्याहाक्षितिमेवोपैति[१८] कुर्वतो मे मोप दस-दित्याह भूमानमेवोपैति[१९] ॥ ( विद्वान्, ध्यायेद्,-धं, प्राश्नन्ति, यां वै, मे, एकान्नविंꣳशतिश्च ) ॥ १ ॥

सꣳश्रव-स्तुमिञ्ञयोः प्रश्नोत्तराभ्यामिडाप्रशंसनम् ॥ प्रजापतिर्ऋषिः ।

सꣳश्रवा ह सौवर्चनसस्तुमिञ्ञमौपोदितिमुवाच[१] यत्सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति[२] तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितॄनिति[३] छिनत्ति सा न छिनत्ती३ इति[४] छिनत्तीति होवाच[५] शरीरं वा अस्यै तदुपाह्वथा इति होवाच[६] गौर्वा (१) अस्यै शरीरं गां वाव तौ तत्पर्यवदतां[७] या यज्ञे दीयते सा प्राणेन देवान् दाधार यया मनुष्या जीवन्ति सा व्यानेन मनुष्यान् यां पितृभ्यो घ्नन्ति साऽपानेन पितॄन्[८] य एवं वेद पशुमान् भवत्य[९]—थ वै तामुपाह्व इति होवाच या प्रजाः प्रभवन्तीः प्रत्याभवतीत्य[१०]—न्नं वा अस्यै तदु (२) पाह्वथा इति होवाचौ[११]—षधयो वा अस्या अन्नमोषधयो वै प्रजाः प्रभवन्तीः प्रत्या भवन्ति[१२] य एवं वेदान्नादो भवत्य[१३]—थ वै तामुपाह्व इति होवाच या प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णातीति[१४] प्रतिष्ठां वा अस्यै तदुपाह्वथा इति होवाचे[१५]—यं वा अस्यै प्रतिष्ठे (३) यं वै प्रजाः पराभवन्तीरनुगृह्णाति प्रत्याभवन्तीर्गृह्णाति[१६] य एवं वेद प्रत्येव तिष्ठत्यथ[१७] वै तामुपाह्व इति होवाच यस्यै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्तीति[१८] छिनत्ति सा न छिनत्ती३ इति[१९] न छिनत्तीति होवाच प्र तु जनयती[२०]—त्येष वा इडामुपाह्वथा इति (४) होवाच[२१] वृष्टिर्वा इडा वृष्ट्यै वै निक्रमणे घृतं प्रजाः संजीवन्तीः पिबन्ति य एवं वेद प्रैव जायतेऽन्नादो भवति[२२] ॥ ( गौर्वा, अस्यै तत, प्रतिष्ठा, ऽह्वथा इति विꣳशतिश्च ) ॥ २ ॥

अन्वाहार्यः ॥ प्रजापतिर्ऋषिः ।

परोक्षं वा अन्ये देवा इज्यन्ते प्रत्यक्षमन्ये यद्यजते य एव देवाः परोक्षमिज्यन्ते तानेव तद्यजति[१] यदन्वाहार्यमाहरत्येते वै देवाः प्रत्यक्षं यद् ब्राह्मणास्तानेव तेन प्रीणात्य—थो दक्षिणैवास्यैषाऽथो यज्ञस्यैव

*

छिद्रमपि दधाति[3] यद्वै यज्ञस्य क्रूरं यद्विलिष्टं तदन्वाहार्येणा ( १ ) ऽन्वाहरति तदन्वाहार्यस्यान्वाहार्यत्वं[4] देवदूता वा एते यदृत्विजो यदन्वाहार्यमाहरति देवदूतानेव प्रीणाति[5] प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स एतमन्वाहार्यमभक्तमपश्यत् तमात्मन्नधत्त स वा एष प्राजापत्यो यदन्वाहार्यो यस्यैवं विदुषोऽन्वाहार्य आह्रियते साक्षादेव प्रजापतिमृध्नोत्य[6]—परिमितो निरुप्योऽपरिमितः प्रजापतिः प्रजापतेरा ( २ ) प्त्यै[7] देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं प्राजापत्यमन्वाहार्यमपश्यन् तमन्वाहरन्त ततो देवा अभवन् परासुरा यस्यैवं विदुषो ऽन्वाहार्य आह्रियते भवत्यात्मना परास्य भ्रातृव्यो भवति[8] यज्ञेन वा इष्टी पक्वेन पूर्ती यस्यैवं विदुषोऽन्वाहार्य आह्रियते स त्वेवेष्टापूर्ती[9] प्रजापतेर्भागोऽसी ( ३ ) त्याह प्रजापतिमेव भागधेयेन समर्धयत्यू[10]—र्जस्वान् पयस्वानित्याहोर्जमेवास्मिन् पयो दधाति[11] प्राणापानौ मे पाहि समानव्यानौ मे पाहीत्याहाऽऽशिषमेवैतामा शास्ते[12] ऽक्षितोऽस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिँल्लोक इत्याह क्षीयते वा अमुष्मिँल्लोकेऽन्नमितःप्रदानꣳ ह्यमुष्मिँल्लोके ( ४ ) प्रजा उपजीवन्ति यदेवमभिमृशत्यक्षितिमेवैनद्गमयति नास्यामुष्मिँल्लोकेऽन्नं क्षीयते[13] ॥

( अन्वाहार्येण, प्रजापते,–रसि, ह्यमुष्मिँल्लोके, पञ्चदश च ) ॥ ३ ॥

शेषाहुतीनामनुमन्त्रणमन्त्रव्याख्यानम् ॥ प्रजापतिर्ऋषिः ।

बर्हिषोऽहं देवयज्यया प्रजावान् भूयासमित्याह बर्हिषा वै प्रजापतिः प्रजा असृजत तेनैव प्रजाः सृजते नराशꣳसस्याहं देवयज्यया पशुमान् भूयासमित्याह नराशꣳसेन वै प्रजापतिः पशूनसृजत तेनैव पशून् सृजतेऽग्नेः स्विष्टकृतोऽहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रतिष्ठां गमेयमित्याहाऽऽयुरेवात्मन् धत्ते प्रति यज्ञेन तिष्ठति[1] दर्शपूर्णमासयो ( १ ) र्वै देवा उज्जितिमनूदजयन् दर्शपूर्णमासाभ्यामसुरानपानुदन्ताग्नेरहमुज्जितिमनूज्जेषमित्याह दर्शपूर्णमासयोरेव देवतानां यजमान उज्जितिमनूज्जयति दर्शपूर्णमासाभ्यां भ्रातृव्यानप नुदते[2] वाजवतीभ्यां व्यूहत्यन्नं वै वाजोऽन्नमेवावरुन्धे[3] द्वाभ्यां प्रतिष्ठित्यै[4] यो वै यज्ञस्य द्वौ दोहौ विद्वान् यजत उभयत ( २ ) एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्चैष वा अन्यो यज्ञस्य दोह इडायामन्यो[5] यर्हि होता यजमानस्य नाम गृह्णीयात् तर्हि ब्रूयादेमा अग्मन्नाशिषो दोहकामा इति सꣳस्तुता एव देवता दुहेऽथो उभयत एव यज्ञं दुहे पुरस्ताच्चोपरिष्टाच्च[6] रोहितेन त्वाऽग्निर्देवतां गमयत्वित्याहैते वै देवाश्वा ( ३ ) यजमानः प्रस्तरो यदेतैः प्रस्तरं प्रहरति देवाश्वैरेव यजमानꣳ सुवर्गं लोकं गमयति[7] वि ते मुञ्चामि रशना वि रश्मीनित्याहैष वा अग्नेर्विमोकस्तेनैवैनं वि मुञ्चति[8] विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्याह यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रति तिष्ठति[9] सोमस्याहं देवयज्यया सुरेता ( ४ ) रेतो धिषीयेत्याह सोमो वै रेतोधास्तेनैव रेत आत्मन् धत्ते[10] त्वष्टुरहं देवयज्यया पशूनाꣳ रूपं पुषेयमित्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृत्तेनैव पशूनाꣳ रूपमात्मन् धत्ते[11] देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासमित्याहैतस्माद्वै मिथुनात् प्रजापतिर्मिथुनेन ( ५ ) प्राजायत तस्मादेव यजमानो मिथुनेन प्र जायते[12] वेदोऽसि वित्तिरसि विदेयेत्याह वेदेन वै देवा असुराणां वित्तं वेद्यमविन्दन्त तद्वेदस्य वेदत्वं[13] यद्यद्भ्रातृव्यस्याभिध्यायेत् तस्य नाम गृह्णीयात् तदेवास्य सर्वं

वृङ्क्ते[१४] घृतवन्तं कुलायिनꣳ रायस्पोषꣳ सहस्रिणं वेदो ददातु वाजिनमित्याह प्र सहस्रं पशूनाप्नोत्या (६)—स्य प्रजायां वाजी जायते य एवं वेद[१६] ॥ (दर्शपूर्णमासयो, रुक्षयतो, देवाश्वाः, सुरेताः, प्रजापतिर्मिथुनेना,-ऽऽप्नोत्य,-ष्टौ च ८) ॥ ४ ॥

आप्यायनादिमन्त्रव्याख्यानम् ॥ प्रजापतिर्ऋषिः।

ध्रुवां वै रिच्यमानां यज्ञोऽनु रिच्यते यज्ञं यजमानो यजमानं प्रजा ध्रुवामाप्यायमानां यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजा आ प्यायतां ध्रुवा घृतेनेत्याह ध्रुवामेवाऽऽ प्याययति तामाप्यायमानां यज्ञोऽन्वा प्यायते यज्ञं यजमानो यजमानं प्रजाः[२] प्रजापतेर्विभान्नाम लोकस्तस्मिꣳस्त्वा दधामि सह यजमानेने (१) त्याहायं वै प्रजापतेर्विभान्नाम लोकस्तस्मिन्नेवैनं दधाति सह यजमानेन[३] रिच्यत इव वा एतद्यद्यजते यद्यजमानभागं प्राश्नात्यात्मानमेव प्रीणात्ये[४]—तावान् वै यज्ञो यावान् यजमानभागो यज्ञो यजमानो यद्यजमानभागं प्राश्नाति यज्ञ एव यज्ञं प्रतिष्ठापय[५]—त्येतद्वै सूयवसꣳ सोदकं यद्बर्हिश्चाऽऽपश्चैत (२) द्यजमानस्याऽऽयतनं यद्वेदि[६]—र्यत् पूर्णपात्रमन्तर्वेदि निनयति स्व एवाऽऽयतने सूयवसꣳ सोदकं कुरुते[७] सदसि सन्मे भूया इत्याहाऽऽपो वै यज्ञ आपोऽमृतं यज्ञमेवामृतमात्मन् धत्ते[८] सर्वाणि वै भूतानि व्रतमुपयन्तमनूप यन्ति प्राच्यां दिशि देवा ऋत्विजो मार्जयन्तामित्याहैष वै दर्शपूर्णमासयोरवभृथो (३) यान्येवैनं भूतानि व्रतमुपयन्तमनूपयन्ति तैरेव सहावभृथमवैति[९] विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति[१०] विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिश (४) श्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभि जयति[११] ॥ (इत्ये, -तद्, -वभृथो, दिशः, सप्त च) ॥५॥

उपस्थानादिमन्त्रव्याख्यानम् प्रजापतिर्ऋषिः।

अगन्म सुवः सुवरगन्मेत्याह सुवर्गमेव लोकमेति[१] संदृशस्ते मा छित्सि यत्ते तपस्तस्मै ते मा वृक्षीत्याह यथायजुरेवैतत्[२] सुभूरसि श्रेष्ठो रश्मीनामायुर्धा अस्यायुर्मे धेहीत्याहाऽऽशिषमेवैतामा शास्ते[३] प्र वा एषोऽस्माँल्लोकाच्च्यवते यो (१) विष्णुक्रमान् क्रमते सुवर्गाय हि लोकाय विष्णुक्रमाः क्रम्यन्ते ब्रह्मवादिनो वदन्ति स त्वै विष्णुक्रमान् क्रमेत य इमाँल्लोकान् भ्रातृव्यस्य संविद्य पुनरिमँल्लोकं प्रत्यवरोहेदित्ये[४]—ष वा अस्य लोकस्य प्रत्यवरोहो यदाहेदमहममुं भ्रातृव्यमाभ्यो दिग्भ्योऽस्यै दिव इतीमानेव लोकान् भ्रातृव्यस्य संविद्य पुनरिमँल्लोकं प्रत्यवरोहति[५] सं (२) ज्योतिषाऽभूवमित्याहास्मिन्नेव लोके प्रति तिष्ठत्यै[६]—न्द्रीमावृतमन्वावर्त इत्याहासौ वा आदित्य इन्द्रस्तस्यैवाऽऽवृतमनु पर्यावर्तते[७] दक्षिणा पर्यावर्तते स्वमेव वीर्यमनु पर्यावर्तते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तते[८] समहं प्रजया सं मया प्रजेत्याहाऽऽशिषमे (३) वैतामा शास्ते[९] समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासमित्याह यथायजुरेवैत[१०]—द्वसुमान् यज्ञो वसीयान् भूयासमित्याहाऽऽशिषमेवैतामा शास्ते[११] बहु वै गार्हपत्यस्यान्ते मिश्रमिव चर्यत आग्निपावमानीभ्यां गार्हपत्यमुप तिष्ठते पुनात्येवाग्निं पुनीत आत्मानं द्वाभ्यां प्रतिष्ठित्या[१२] अग्ने गृहपत इत्याह (४) यथायजुरेवैतच्छतꣳ हिमा इत्याह शतं

त्वा हेमन्तानिन्धिषीयेति वावैतदाह पुत्रस्य नाम गृह्णात्यन्नादमेवैनं करोति तामाशिषमा शासे तन्तवे ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रोऽजातः स्यात् तेजस्व्येवास्य ब्रह्मवर्चसी पुत्रो जायते तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीमिति ब्रूयाद्यस्य पुत्रो ( ५ ) जातः स्यात् तेज एवास्मिन् ब्रह्मवर्चसं दधाति[१३] यो वै यज्ञं प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवति कस्त्वा युनक्ति स त्वा वि मुञ्चत्वित्याह प्रजापतिर्वै कः प्रजापतिनैवैनं युनक्ति प्रजापतिना वि मुञ्चति प्रतिष्ठित्यै[१४] ईश्वरं वै व्रतमविसृष्टं प्रदहोऽग्ने व्रतपते व्रतमचारिषमित्याह व्रतमेव ( ६ ) वि सृजते शान्त्या अप्रदाहाय[१५] पराङ् वाव यज्ञ एति न नि वर्तते पुनर्यो वै यज्ञस्य पुनरालम्भं विद्वान् यजते तमभि नि वर्तते[१६] यज्ञो बभूव स आ बभूवेत्याहैष वै यज्ञस्य पुनरालम्भस्तेनैवैनं पुनरालभते[१७]ऽनवरुद्धा वा एतस्य विराड् य आहिताग्निः सन्नसभः पशवः खलु वै ( ७ ) ब्राह्मणस्य सभे[१८]ष्ट्वा प्राङुत्क्रम्य ब्रूयाद्गोमा२ँ अग्नेऽविमा२ँ अश्वी यज्ञ इत्यव सभा२ँ रुन्धे प्र सहस्रं पशूनाप्नोत्यास्य प्रजायां वाजी जायते[१९] ॥ ( यः, स,--माशिषं, गृहपत इत्याह, यस्य पुत्रो, व्रतमेव, खलु वै, चतुर्वि२ँशतिश्च ) ॥ ६ ॥

वाजपेयाध्वर्यवे रथसंस्काराः ॥ १ महासतोबृहती; २ द्विपदा गायत्री, ३ अतिजगती; ४ पुर उष्णिक्; ५ अनुष्टुप्; ६ उष्णिक् । सोमऋषिः ।

देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय दिव्यो गन्धर्वः ।
केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः[१] ॥
इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्यात्[२] ॥
वाजस्य नु प्रसवे मातरं महीमदितिं नाम वचसा करामहे ।
यस्यामिदं विश्वं भुवनमाविवेश तस्यां नो देवः सविता धर्म साविषत्[३] ॥
अप्स्व ( १ ) न्तरमृतमप्सु भेषजमपामुत प्रशस्तिष्वश्वा भवथ वाजिनः ॥
वायुर्वा त्वा मनुर्वा त्वा गन्धर्वाः सप्तवि२ँशतिः ।
ते अग्रे अश्वमायुञ्जन् ते अस्मिञ्जवमादधुः ॥
अपां नपादाशुहेमन् य ऊर्मिः ककुद्मान् प्रतूर्तिर्वाजसातमस्तेनायं वाज२ँ सेत् ॥
विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमस्य[ँ]ङ्कौ न्यङ्का ( २ ) वभितो रथं यौ ध्वान्तं वाताग्रमनु सञ्चरन्तौ दूरेहेतिरिन्द्रियावान् पतत्री ते नोऽग्नयः पप्रयः पारयन्तु ॥
( अप्सु, न्यङ्कौ, पञ्चदश च ) ॥ ७ ॥

रथधावनम् ॥ ४ गायत्री; ९--१० त्रिष्टुप्; ११ द्विपदा विराड्गायत्री; १२ आस्तारपङ्क्तिः, १३ विराट्; १४-१५ जगती; १६ त्रिष्टुप् ॥ सोमऋषिः ।

देवस्याह२ँ सवितुः प्रसवे बृहस्पतिना वाजजिता वाजं जेषं[१] देवस्याह२ँ सवितुः प्रसवे बृहस्पतिना वाजजिता वर्षिष्ठं नाक२ँ रुहेयम्[२]—

—मिन्द्राय वाचं वदतेन्द्रं वाजं जापयतेन्द्रो वाजमजयित्[३] ॥
अश्वाजनि वाजिनि वाजेषु वाजिनीवत्यश्वान्त्समत्सु वाजय[४] ॥
अर्वासि[५] सप्तिरसि[६] वाज्यसि[७] वाजिनो वाजं धावत मरुतां प्रसवे जयत वि योजना
मिमीध्वमध्वनः स्कभ्नीत (१) काष्ठां गच्छत[८]
वाजेवाजेऽवत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः[९] ॥
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः[१०] ॥
ते नो अर्वन्तो हवनश्रुतो हवं विश्वे शृण्वन्तु वाजिनः[११] ॥
मितद्रवः सहस्रसा मेधसाता सनिष्यवः ।
महो ये रत्नꣳ समिथेषु जभ्रिरे शं नो भवन्तु वाजिनो हवेषु[१२] ॥
देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकꣳ रक्षाꣳसि सनेम्यस्मद्युयवन्न (२) मीवाः[१३] ॥
एष स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।
क्रतुं दधिक्रा अनु सन्तवीत्वत् पथामङ्काꣳस्यन्वापनीफणत्[१४] ॥
उत स्मास्य द्रवतस्तुरण्यतः पर्णं न वेरनु वाति प्रगर्धिनः ।
श्येनस्येव ध्रजतो अङ्कसं परि दधिक्राव्णः सहोर्जा तरित्रतः[१५] ॥
आ मा वाजस्य प्रसवो जगम्यादा द्यावापृथिवी विश्वशम्भू ।
आ मा गन्तां पितरा (३) मातरा चाऽऽ मा सोमो अमृतत्वाय गम्यात्[१६] ॥
वाजिनो वाजजितो वाजꣳ सरिष्यन्तो वाजं जेष्यन्तो बृहस्पतेर्भागमव जिघ्रत[१७]
वाजिनो वाजजितो वाजꣳ ससृवाꣳसो वाजं जिगिवाꣳसो[१८] बृहस्पतेर्भागे नि मृड्ढ्व[१९]—मियं वः
सा सत्या सन्धाभूद्यामिन्द्रेण समधद्ध्वं[२०]—मजीजिपत वनस्पतय इन्द्रं वाजं विमुच्यध्वम्[२१] (स्कभ्नीत,
युयवन्, पितरा, द्विचत्वारिꣳशच्च) ॥ ८ ॥

यूपारोहणम् ॥ सोमऋषिः ।

क्षत्रस्योल्बमसि[१] क्षत्रस्य योनिरसि[२] जाय एहि सुवो रोहाव[३] रोहाव हि सुवः[४]—रहं नावुभयोः सुवो
रोक्ष्यामि[५] वाजश्च[६] प्रसवश्चा[७]—पिजश्च[८] क्रतुश्च[९] सुवश्च[१०] मूर्धा च[११] व्यश्नियश्चा[१२]—ऽऽन्त्यायन[१३]—
श्चान्त्यश्च[१४] भौवनश्च[१५] भुवनश्चा[१६]—धिपतिश्च[१७] । आयुर्यज्ञेन कल्पतां[१८] प्राणो यज्ञेन कल्पता[१९]—
मपानो (१) यज्ञेन कल्पतां[२०] व्यानो यज्ञेन कल्पतां[२१] चक्षुर्यज्ञेन कल्पताꣳ[२२] श्रोत्रं यज्ञेन
कल्पतां[२३] मनो यज्ञेन कल्पतां[२४] वाग्यज्ञेन कल्पता[२५]—मात्मा यज्ञेन कल्पतां[२६] यज्ञो यज्ञेन कल्प-
ताꣳ[२७] सुवर्देवाꣳ अगन्मामृता अभूम प्रजापतेः प्रजा अभूम[२८] समहं प्रजया सं मया प्रजा समहꣳ

रायस्पोषेण सं मया रायस्पोषो[२९] ऽन्नाय त्वा[३०] ऽन्नाद्याय त्वा[३१] वाजाय (२) त्वा[३२] वाजजित्यायै त्वा[३३] ऽमृतमसि[३४] पुष्टिरसि प्रजननमसि[३५] (अपानो, वाजाय, नव च) ॥ ९ ॥

अन्नहोमाः ॥ १-३ त्रिष्टुब्जगती वा, ४-७ अनुष्टुप् ।

वाजस्येमं प्रसवः सुषुवे अग्रे सोमꣳ राजानमोषधीष्वप्सु ।
ता अस्मभ्यं मधुमतीर्भवन्तु वयꣳ राष्ट्रे जागृयाम पुरोहिताः ॥
वाजस्येदं प्रसव आ बभूवेमा च विश्वा भुवनानि सर्वतः ।
स विराजं पर्येति प्रजानन् प्रजां पुष्टिं वर्धयमानो अस्मे[२] ॥
वाजस्येमां प्रसवः शिश्रिये दिवमिमा च विश्वा भुवनानि सम्राट् ।
अदित्सन्तं दापयतु प्रजानन् रयिं (१) च नः सर्ववीरां नि यच्छतु[३] ॥
अग्ने अच्छा वदेह नः प्रति नः सुमना भव ।
प्र णो यच्छ भुवस्पते धनदा असि नस्त्वम्[४] ॥
प्र णो यच्छत्वर्यमा प्र भगः प्र बृहस्पतिः ।
प्र देवाः प्रोत सूनृता प्र वाग्देवी ददातु नः ॥
अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वाचं विष्णुꣳ सरस्वतीꣳ सवितारं (२) च वाजिनम्[६] ॥
सोमꣳ राजानं वरुणमग्निमन्वारभामहे ।
आदित्यान् विष्णुꣳसूर्यं ब्रह्माणं च बृहस्पतिम्[७] ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वा साम्राज्येनाभि षिञ्चामीन्द्रस्य बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामि[१०] ॥ (रयिꣳ, सवितारꣳ, षट्त्रिꣳशच्च) ॥ १० ॥

उज्जितीः ॥ सोमऋषिः ।

अग्निरेकाक्षरेण वाचमुदजयदश्विनौ द्व्यक्षरेण प्राणापानावुदजयतां[२] विष्णुस्त्र्यक्षरेण त्रीन् लोकानुदजयत्[३] सोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्[४] पूषा पञ्चाक्षरेण पङ्क्तिमुदजयद्धाता षडक्षरेण षडृतूनुदजयत्[६] मरुतः सप्ताक्षरेण सप्तपदाꣳ शक्वरीमुदजयन्[७] बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयन्मित्रो नवाक्षरेण त्रिवृतꣳ स्तोममुदजयत् (१) वरुणो दशाक्षरेण विराजमुदजयदिन्द्र एकादशाक्षरेण त्रिष्टुभमुदजयद्[११] विश्वे देवा द्वादशाक्षरेण जगतीमुदजयन्[१२] वसवस्त्रयोदशाक्षरेण त्रयोदशꣳ स्तोममुदजयन्[१३] रुद्राश्चतुर्दशाक्षरेण चतुर्दशꣳस्तोममुदजयन्नादित्याः पञ्चदशाक्षरेण पञ्चदशꣳ स्तोममुदजयन्नदितिः षोडशाक्षरेण षोडशꣳ स्तोममुदजयत्[१६] प्रजापतिः सप्तदशाक्षरेण सप्तदशꣳ स्तोममुदजयत्[१७] (अजयत, षट्चत्वारिꣳशच्च) ॥ ११ ॥

अतिग्राह्याः ॥ ७ पङ्क्तिः, ९ अनुष्टुप्, ११ त्रिष्टुप् । सोमऋषिः ।

उपयामगृहीतोऽसि नृषदं त्वा द्रुषदं भुवनसदमिन्द्राय जुष्टं गृह्णाम्ये[1]ष ते योनिरिन्द्राय त्वो[2]पयामगृहीतोऽस्यप्सुषदं त्वा घृतसदं व्योमसदमिन्द्राय जुष्टं गृह्णा[3]म्येष ते योनिरिन्द्राय त्वो[4]पयामगृहीतोऽसि पृथिविषदं त्वाऽन्तरिक्षसदं नाकसदमिन्द्राय जुष्टं गृह्णा[5]म्येष ते योनिरिन्द्राय त्वा[6] ॥

ये ग्रहाः पञ्चजनीना येषां तिस्रः परमजाः ।
दैव्यः कोशः (१) समुब्जितः ।
तेषां विशिप्रियाणामिषमूर्जꣳ समग्रभी[7]—
—देष ते योनिरिन्द्राय त्वा[8] ॥
अपाꣳ रसमुद्वयसꣳ सूर्यरश्मिꣳ समाभृतम् ।
अपाꣳ रसस्य यो रसस्तं वो गृह्णाम्युत्तम[9]—
—मेष ते योनिरिन्द्राय त्वा[10] ॥
अया विष्ठा जनयन् कर्वराणि स हि घृणिरुरुर्वराय गातुः ।
स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वायां यत् तनुवां (२) तनूमैरयत ।

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्ये[11]ष ते योनिः प्रजापतये त्वा[12] ॥ (कोशः—स्तनुवां, त्रयोदश च) ॥ १२ ॥

काम्ययाज्यापुरोऽनुवाक्याः ॥ १--२, ५--८, १०--१२ त्रिष्टुप्; ३-४ अनुष्टुप्; ९ आस्तारपङ्क्तिः; १३ गायत्री; १४ शक्करी । विश्वदेवा ऋषयः ।

अन्वह मासा अन्विद्वनान्यन्वोषधीरनु पर्वतासः ।
अन्विन्द्रꣳ रोदसी वावशाने अन्वापो अजिहत जायमानम्[1] ॥
अनु ते दायि मह इन्द्रियाय सत्रा ते विश्वमनु वृत्रहत्ये ।
अनु क्षत्रमनु सहो यजत्रेन्द्र देवेभिरनु ते नृषह्ये[2] ॥
इन्द्राणीमासु नारिषु सुपत्नीमहमश्रवम् ।
न ह्यस्या अपरं चन जरसा (१) मरते पतिः[3] ॥
नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।
यस्येदमप्यꣳ हविः प्रियं देवेषु गच्छति[4] ॥
यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः[5] ॥
आ ते मह इन्द्रोत्युग्र समन्यवो यत् समरन्त सेनाः ।
पताति दिद्युन्नर्यस्य बाहुवोर्मा ते (२) मनो विष्वद्रियग्विचारीत्[6] ॥

मा नो मर्धीरा भरा दद्धि तन्नः प्र दाशुषे दातवे भूरि यत् ते ।
नव्ये देष्णे शस्ते अस्मिन् त उक्थे प्र ब्रवाम वयमिन्द्र स्तुवन्तः ॥
आ तू भर माकिरेतत् परि ष्ठाद्विद्मा हि त्वा वसुपतिं वसूनाम् ।
इन्द्र यत् ते माहिनं दत्रमस्त्यस्मभ्यं तद्धर्यश्व (३) प्र यन्धि ॥
प्रदातारꣳ हवामह इन्द्रमा हविषा वयम् ।
उभा हि हस्ता वसुना पृणस्वाऽऽ प्र यच्छ दक्षिणादोत सव्यात् ॥
प्रदाता वज्री वृषभस्तुराषाट्छुष्मी राजा वृत्रहा सोमपावा ।
अस्मिन् यज्ञे बर्हिष्या निषद्याथा भव यजमानाय शं योः ॥
इन्द्रः सुत्रामा स्ववाꣳ अवोभिः सुमृडीको भवतु विश्ववेदाः ।
बाधतां द्वेषो अभयं कृणोतु सुवीर्यस्य (४) पतयः स्याम ॥
तस्य वयꣳ सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम ।
स सुत्रामा स्ववाꣳ इन्द्रो अस्मे आराच्चिद्द्वेषः सनुतर्युयोतु ॥
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
क्षुमन्तो याभिर्मदेम ॥
प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
अभीके चिदु लोककृत् सङ्गे समत्सु वृत्रहा ।
अस्माकं बोधि चोदिता नभन्तामन्यकेषाम् ।
ज्याका अधि (५) धन्वसु ॥ (जरसा, मा ते, हर्यश्व, सुवीर्यस्याध्ये,-कं च ) ॥ १३ ॥

[ पाकयज्ञꣳ ३१९ । सꣳश्रवाः २२० । परोक्षं २१५ । बर्हिषो ३०८ । ध्रुवा-२०७ । -मर्गन्म ३७४ । देव सवित-११५ । -देवस्य १९२ । क्षत्रस्य १०९ । वाजस्या १३६ । ऽग्नि-९६ । -रुपयामगृहीतो ११३ । तु २५१ । त्रयोदश ॥ २६५५ ॥ ]

[ इति प्रथमकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥ ]

## राजसूयः ।

[ अथाष्टमः प्रपाठकः ॥ ८ ॥ ]

अनुमतादियागाः नैर्ऋतमन्त्राश्च ॥ विश्वेदेवा ऋषयः ।

अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति धेनुर्दक्षिणा ये प्रत्यञ्चः शम्याया अवशीयन्ते तं नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणा

वीहि स्वाहाऽऽहुतिं जुषाण एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहा नमो य इदं चकार—

—ऽऽदित्यं चरुं निर्वपति वरो दक्षिणा[९] ऽऽग्नावैष्णवमेकादशकपालं वामनो वही दक्षिणा[१०] ऽग्नीषोमीयमे ( १ ) कादशकपालꣳ हिरण्यं दक्षिणै[४]न्द्रमेकादशकपालमृषभो वही दक्षिणा[५] ऽऽग्नेयमष्टाकपालमैन्द्रं दध्यृषभो वही दक्षिणै[१०]न्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा[११] सौम्यꣳ श्यामाकं चरुं वासो दक्षिणा[१२] सरस्वत्यै चरुꣳ सरस्वते चरुं मिथुनौ गावौ दक्षिणा[१३] ( अग्नीषोमीयं, चतुस्त्रिꣳशच्च ) ॥ १ ॥

चातुर्मास्येषु प्रथमं वैश्वदेवपर्व ॥ विश्वेदेवा ऋषयः ।

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुं मारुतꣳ सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालम् ॥ ( आग्नेयम्,–द्वादश ) ॥ २ ॥

द्वितीयं वरुणप्रघासपर्व ॥ २ गायत्री, ३ विराट्स्थाना, ४ महापङ्क्तिः, ५ अनुष्टुप् । विश्वेदेवा ऋषयः ।

ऐन्द्राग्नमेकादशकपालं मारुतीमामिक्षां वारुणीमामिक्षां कायमेककपालम्[१]

प्रघास्यान् हवामहे मरुतो यज्ञवाहसः करम्भेण सजोषसः[२] ॥
मो षू ण इन्द्र पृत्सु देवास्तु स्म ते शुष्मिन्नवया ।
मही ह्यस्य मीढुषो यव्या । हविष्मतो मरुतो वन्दते गीः[३] ॥
यद् ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये । यच्छूद्रे यदर्य एनश्चकृमा वयम् ।
यदे ( १ ) कस्याधि धर्मणि तस्यावयजनमसि स्वाहा[४] ॥
अक्रन् कर्म कर्मकृतः सह वाचा मयो भुवा । देवेभ्यः कर्म कृत्वाऽस्तं प्रेत सुदानवः[५] ॥
( वयं यद्, विꣳशतिश्च ) ॥ ३ ॥

तृतीयं साकमेधपर्व ॥ २–३ अनुष्टुप् । विश्वेदेवा ऋषयः ।

अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपति साकꣳ सूर्येणोद्यता मरुद्भ्यः सान्तपनेभ्यो मध्यंदिने चरुं मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्[१]

पूर्णा दर्वि परा पत सुपूर्णा पुनरापत । वस्नेव वि क्रीणावहा इषमूर्जꣳ शतक्रतो[२] ॥
देहि मे ददामि ते नि मे धेहि नि ते दधे ।
निहारमिन्नि मे हरा निहारं ( १ ) नि हरामि ते[३] ॥

मरुद्भ्यः क्रीडिभ्यः पुरोडाशꣳ सप्तकपालं निर्वपति साकꣳ सूर्येणोद्यताग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालꣳ सारस्वतं चरुं पौष्णं चरुमैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालम् ॥ ( हरा निहारं, त्रिꣳशच्च ) ॥ ४ ॥

महापितृयज्ञः॥ ६–७ पङ्क्तिः; ९ आस्तारपङ्क्तिः, १०–१२ गायत्री, १३ शक्करी । विश्वेदेवा ऋषयः ।

सोमाय पितृमते पुरोडाशꣳ षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थ[१]मेतत् ते तत ये च त्वाम[२]न्वेतत् ते पितामह[३] प्रपितामह ये च त्वामन्व[४]त्र पितरो यथाभागं मन्दध्वꣳ

❀

सुसंदृशं त्वा वयं मघवन् मन्दिषीमहि ।
प्र नूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳ अनु । योजा न्विन्द्र ते हरी[६] ॥ (१)
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती । योजा न्विन्द्र ते हरी[७] ॥
अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरोऽमीमृजन्त पितरः[८] ॥
परेत पितरः सोम्या गम्भीरैः पथिभिः पूर्व्यैः ।
अथा पितॄन्त्सुविदत्राꣳ अपीत यमेन ये सधमादं मदन्ति[९] ॥
मनो न्वा हुवामहे नाराशꣳसेन स्तोमेन पितॄणां च मन्मभिः[१०] ॥
आ (२) न एतु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशे[११] ॥
पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रातꣳ सचेमहि[१२] ॥
यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम ।
अग्निर्मा तस्मादेनसो गार्हपत्यः प्र मुञ्चतु दुरिता यानि चकृम करोतु मामनेनसम्[१३] ॥
( हरी, मन्मभिरा, चतुश्चत्वारिꣳशच्च ) ॥ ५ ॥

त्र्यंबक पुरोडाशाः । ९ महापङ्क्तिः, १० अनुष्टुप् । विश्वेदेवा ऋषयः ।

प्रतिपूरुषमेककपालान्निर्वपत्येकमतिरिक्तं[१] यावन्तो गृह्याः स्मस्तेभ्यः कमकरं[२] पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छै[३]—क एव रुद्रो न द्वितीयाय तस्थे[४] आखुस्ते रुद्र पशुस्तं जुषस्वै[५]—ष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व[६] भेषजं गवेऽश्वाय पुरुषाय भेषज—मथो अस्मभ्यं भेषजꣳ सुभेषजं (१) यथाऽसति । सुगं मेषाय मेष्यै[७]

अवाम्ब रुद्रमदिमह्यव देवं त्र्यम्बकम् ।
यथा नः श्रेयसः करद्यथा नो वस्यसः करद्यथा नः पशुमतः करद्यथा नो व्यवसाययात्[८] ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात्[९] ॥
एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीह्य[१०]—(२)—वततधन्वा पिनाकहस्तः कृत्तिवासाः[११] ( सुभेषज,–मिहि, त्रीणि च ) ॥ ६ ॥

शुनासीर्यम्, इन्द्रतुरीयम्, पञ्चेध्मीयमन्त्राः, अपामार्गहोममन्त्राश्च ॥ विश्वेदेवा ऋषयः ।

ऐन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालं द्वादशगवꣳ सीरं दक्षिणा[१] ऽऽग्नेयमष्टाकपालं निर्वपति रौद्रं गावीधुकं चरुमैन्द्रं दधि वारुणं यवमयं चरुं वहिनी धेनुर्दक्षिणा,

ये देवाः पुरःसदोऽग्निनेत्राः*- -*दक्षिणसदो यमनेत्राः*- -*पश्चात्सदः सवितृनेत्राः*- -*उत्तरसदो वरुणनेत्राः*- -*उपरिषदो बृहस्पतिनेत्रा रक्षोहणस्ते नः पान्तु ते नोऽवन्तु तेभ्यो (१)
नमस्तेभ्यः स्वाहा समूढꣳ रक्षः संदग्धꣳ रक्ष इदमहꣳ रक्षोऽभि सं दहाम्यग्नये रक्षोघ्ने स्वाहा यमाय*- सवित्रे*- वरुणाय*- बृहस्पतये दुवस्वते रक्षोघ्ने स्वाहा प्रष्टिवाही रथो दक्षिणा,
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ
रक्षसो वधं जुहोमि हतꣳ रक्षोऽवधिष्म रक्षो यद्वस्ते तद्दक्षिणा ॥ (तेभ्यः, पञ्चचत्वारिꣳशच्च)॥७॥

देविकादि कर्मषट्कम् ॥ विश्वेदेवा ऋषयः ।

धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरुꣳ राकायै चरुꣳ सिनीवाल्यै चरुं कुह्वै चरुं मिथुनौ गावौ दक्षिणाऽऽग्नावैष्णवमेकादशकपालं निर्वपत्यैन्द्रावैष्णवमेकादशकपालं वैष्णवं त्रिकपालं वामनो वही दक्षिणाऽग्नीषोमीयमेकादशकपालं निर्वपतीन्द्रासोमीयमेकादशकपालꣳ सौम्यं चरुं बभ्रुर्दक्षिणा सोमापौष्णं चरुं निर्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुꣳ श्यामो दक्षिणा वैश्वानरं द्वादशकपालं नि (१) र्वपति हिरण्यं दक्षिणा वारुणं यवमयं चरुमश्वो दक्षिणा (नि,-रष्टौ च) ॥ ८ ॥

रत्निनां हवींषि, अभिषेचनीयस्य दीक्षणीया च ॥ विश्वेदेवा ऋषयः ।

बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालꣳ राजन्यस्य गृह ऋषभो दक्षिणाऽऽदित्यं चरुं महिष्यै गृहे धेनुर्दक्षिणा नैर्ऋतं चरुं परिवृक्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणाऽऽग्नेयमष्टाकपालꣳ सेनान्यो गृहे हिरण्यं दक्षिणा वारुणं दशकपालꣳ सूतस्य गृहे महानिरष्टो दक्षिणा मारुतꣳ सप्तकपालं ग्रामण्यो गृहे पृश्निर्दक्षिणा सावित्रं द्वादशकपालं (१) क्षत्तुर्गृह उपध्वस्तो दक्षिणाऽऽश्विनं द्विकपालꣳ संग्रहीतुर्गृहे सवात्यौ दक्षिणा पौष्णं चरुं भागदुघस्य गृहे श्यामो दक्षिणा रौद्रं गावीधुकं चरुमक्षावापस्य गृहे शबल उद्वारो दक्षिणेन्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं प्रति निर्वपतीन्द्रायाꣳहोमुचेऽयं नो राजा भूत्वा वृत्रं वध्यान्मैत्राबार्हस्पत्यं भवति श्वेतायै श्वेतवत्सायै दुग्धे स्वयंमूर्ते स्वयंमथित आज्य आश्वत्थे (२) पात्रे चतुःस्रक्तौ स्वयमवपन्नायै शाखायै कर्णाꣳश्चाकर्णाꣳश्च तण्डुलान्वि चिनुयाद्ये कर्णाः स पयसि बार्हस्पत्यो येऽकर्णाः स आज्ये मैत्रः स्वयंकृता वेदिर्भवति स्वयंदिनं बर्हिः स्वयंकृत इध्मः सैव श्वेता श्वेतवत्सा दक्षिणा (सावित्रं द्वादशकपाल,-माश्वत्थे, त्रयस्त्रिꣳशच्च) ॥ ९ ॥

देवसुवां हवींषि ॥ विश्वेदेवा ऋषयः ।

अग्नये गृहपतये पुरोडाशमष्टाकपालं निर्वपति कृष्णानां व्रीहीणाꣳ सोमाय वनस्पतये श्यामाकं चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालमाशूनां व्रीहीणाꣳ रुद्राय पशुपतये गावीधुकं चरुं बृहस्पतये वाचस्पतयेनैवारं चरुमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं महाव्रीहीणां मित्राय सत्यायाऽऽम्बानां चरुं वरुणाय धर्मपतये यवमयं चरुꣳ

---

(७।३-६) रक्षोहण...स्वाहा। (७।४-७) -*ये देवा। (७।१०-१२) रक्षोघ्ने स्वाहा।

सविता त्वा प्रसवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाꣳ रुद्रः पशूनां ( १ ) बृहस्पतिर्वाचामिन्द्रो ज्येष्ठानां मित्रः सत्यानां वरुणो धर्मपतीनां ये देवा देवसुवः स्थ त इममामुष्यायणमनमित्राय सुवध्वं महते क्षत्राय महत आधिपत्याय महते जानराज्यायै[२]ष वो भरता राजा[३] सोमोऽस्माकं ब्राह्मणानाꣳ राजा[४] प्रति त्यन्नाम राज्यमधायि स्वां तनुवं वरुणो अशिश्रेच्छुचेर्मित्रस्य व्रत्या अभूमामन्महि महत ऋतस्य नाम[५] सर्वे व्राता ( २ ) वरुणस्याभूवन्वि मित्र एवैररातिमतारीदसूषुदन्त यज्ञिया ऋतेन व्युं त्रितो जरिमाणं न आनट्[६] विष्णोः क्रमोऽसि[७] विष्णोः क्रान्तमसि[८] विष्णोर्विक्रान्तमसि[९] ॥ ( पशूनां, व्राताः, पञ्चत्रिꣳशतिश्च ) ॥ १० ॥

अभिषेकजलग्रहणम् ।। विश्वेदेवा ऋषयः ।

अर्थेतः स्था[१]ऽपां पतिरसि[२] वृषास्यूर्मि[३]र्वृषसेनोऽसि[४] व्रजक्षितः स्थ[५] मरुतामोजः स्थ[६] सूर्यवर्चसः स्थ[७] सूर्यत्वचसः स्थ[८] मान्दाः स्थ[९] वाशाः स्थ[१०] शक्वरीः स्थ[११] विश्वभृतः स्थ[१२] जनभृतः स्था[१३]ऽग्नेस्तेजस्याः स्था[१४]ऽपामोषधीनाꣳ रसः स्था[१५]ऽपो देवीर्मधुमतीरगृह्णन्नूर्जस्वती राजसूयाय चितानाः ।

याभिर्मित्रावरुणावभ्यषिञ्चन् याभिरिन्द्रमनयन्नत्य ( १ ) रातीः[१६] ॥

राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहा[१७] राष्ट्रदाः स्थ राष्ट्रममुष्मै दत्त[१८] ( अत्य,-कादश च ) ॥ ११ ॥

अभिषेकजलसंस्कारः ॥ ५, २० त्रिष्टुप् । विश्वेदेवा ऋषयः ।

देवीरापः सं मधुमतीर्मधुमतीभिः सृज्यध्वं महि वर्चः क्षत्रियाय वन्वाना[१] अनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधती[२]रनिभृष्टमसि वाचो बन्धुस्तपोजाः सोमस्य दात्रमसि[३] शुक्रा वः शुक्रेणोत्पुनामि चन्द्राश्चन्द्रेणामृता अमृतेन स्वाहा राजसूयाय चितानाः ॥

सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः ।

पस्त्यासु चक्रे वरुणः सधस्थमपाꣳ शिशु ( १ ) र्मातृतमास्वन्तः ॥

क्षत्रस्योल्बमसि[६] क्षत्रस्य योनिरस्या[७]विन्नो अग्निर्गृहपति[८]राविन्न इन्द्रो वृद्धश्रवा[९] आविन्नः पूषा विश्ववेदा[१०] आविन्नौ मित्रावरुणावृतावृधा[११]वाविन्ने द्यावापृथिवी धृतव्रते[१२] आविन्ना देव्यदितिर्विश्वरूप्या[१३]विन्नोऽयमसावामुष्यायणोऽस्यां विश्यस्मिन् राष्ट्रे महते क्षत्राय महत आधिपत्याय महते जानराज्या[१४]यैष वो भरता राजा[१५] सोमोऽस्माकं ब्राह्मणानाꣳ राजे[१६]न्द्रस्य ( २ ) वज्रोऽसि वार्त्रघ्नस्त्वया यं वृत्रं वध्या[१७]च्छत्रुबाधनाः स्थ[१८] पात मा प्रत्यञ्चं पात मा तिर्यञ्चमन्वञ्चं मा पात दिग्भ्यो मा पात विश्वाभ्यो मा नाष्ट्राभ्यः पात[१९] हिरण्यवर्णावुषसां विरोकेऽयःस्थूणावुदितौ सूर्यस्याऽऽरोहतं वरुण मित्र गर्तं ततश्चक्षाथामदितिं दितिं च[२०] ॥ ( शिशु,-रिन्द्रस्यै,-कचत्वारिꣳशच्च ) ॥ १२ ॥

दिग्व्यास्थापनम् ॥ विश्वेदेवा ऋषयः ।

समिधमा तिष्ठ गायत्री त्वा छन्दसामवतु त्रिवृत्स्तोमो रथन्तरꣳ सामाग्निर्देवता ब्रह्म द्रविणं[१]मुग्रामा तिष्ठ त्रिष्टुप् त्वा छन्दसामवतु पञ्चदशस्तोमो बृहत्सामेन्द्रो देवता क्षत्रं द्रविणं[२] विराजमा तिष्ठ जगती त्वा छन्दसामवतु सप्तदशस्तोमो वैरूपꣳ साम मरुतो देवता विड्द्रविणं[३]मुदीचीमा तिष्ठानुष्टुप् त्वा ( १ ) छन्दसामवत्वेकविꣳशस्तोमो वैराजꣳ साम मित्रावरुणौ देवता बलं द्रविणं[४]मूर्ध्वामा तिष्ठ पङ्क्तिस्त्वा छन्दसामवतु त्रिणवत्रयस्त्रिꣳशौ स्तोमौ शाक्वररैवते सामनी बृहस्पतिर्देवता वर्चो द्रविणं[५]मीदृङ् चा[६]न्यादृङ् चै[७]तादृङ् च[८] प्रतिदृङ् च[९] मितश्च[१०] संमितश्च[११] सभराः[१२] । शुक्रज्योतिश्च[१३] चित्रज्योतिश्च[१४] सत्यज्योतिश्च[१५] ज्योतिष्माꣳश्च[१६] सत्यश्च[१७]र्तपाश्चा[१८] ( २ ) ऽत्यꣳहाः[१९] । अग्नये स्वाहा[२०] सोमाय स्वाहा[२१] सवित्रे स्वाहा[२२] सरस्वत्यै स्वाहा[२३] पूष्णे स्वाहा[२४] बृहस्पतये स्वाहे[२५]न्द्राय स्वाहा[२६] घोषाय स्वाहा[२७] श्लोकाय स्वाहा[२८] ऽꣳशाय स्वाहा[२९] भगाय स्वाहा[३०] क्षेत्रस्य पतये स्वाहा[३१] पृथिव्यै स्वाहा[३२] ऽन्तरिक्षाय स्वाहा[३३] दिवे स्वाहा[३४] सूर्याय स्वाहा[३५] चन्द्रमसे स्वाहा[३६] नक्षत्रेभ्यः स्वाहा[३७] ऽद्भ्यः स्वाहौ[३८]षधीभ्यः स्वाहा[३९] वनस्पतिभ्यः स्वाहा[४०] चराचरेभ्यः स्वाहा[४१] परिप्लवेभ्यः स्वाहा[४२] सरीसृपेभ्यः स्वाहा[४३] ( ३ ) ॥ ( अनुष्टुप्त्वं, र्तपाश्च, सरीसृपेभ्यः स्वाहा ) ॥ १३ ॥

आभिषेकः ॥ ६ महापंक्तिः, १०, १२ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

सोमस्य त्विषिरसि तवेव मे त्विषिर्भूया[१]दमृतमसि मृत्योर्मा पाहि[२] दिद्योन्मा पाह्य[३]वेष्टा दन्दशूका[४] निरस्तं नमुचेः शिरः[५] ॥

सोमो राजा वरुणो देवा धर्मसुवश्च ये ।

ते ते वाचꣳ सुवन्तां ते ते प्राणꣳ सुवन्तां ते ते चक्षुः सुवन्तां ते ते श्रोत्रꣳ सुवन्ताꣳ[६] सोमस्य त्वा द्युम्नेनाभि षिञ्चाम्यग्ने ( १ ) स्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेण मित्रावरुणयोर्वीर्येण मरुतामोजसा[७] क्षत्राणां क्षत्रपति[८]रस्यति दिवस्पाहि[९]

समाववृत्रन्नधरागुदीचीरहिं बुध्नियमनु सञ्चरन्ती[१०]स्ताः पर्वतस्य वृषभस्य पृष्ठे नावश्चरन्ति स्वसिच इयानाः[११] ॥

रुद्र यत्ते क्रयी परं नाम तस्मै हुतमसि यमेष्टमसि[११] ।

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता ( २ ) बभूव ।

यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्[१२] ॥

( अग्ने,--स्तै,--कादश च ) ॥ १४ ॥

रथेन दिग्विजयः ॥ १८ जगती । विश्वेदेवा ऋषयः ।

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्त्वयाऽयं वृत्रं वध्या[१]न्मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मि यज्ञस्य योगेन[२] विष्णोः क्रमोऽसि[३] विष्णोः क्रान्तमसि[४] विष्णोर्विक्रान्तमसि[५] मरुतां प्रसवे जेषमा[६]प्तं मनः[७] समहमिन्द्रियेण वीर्येण[८] पशूनां मन्युरसि तवेव मे मन्युर्भूया[९]न्नमो मात्रे पृथिव्यै माहं मातरं पृथिवीꣳ हिꣳसिषं मा (१) मां माता पृथिवी हिꣳसी[१०]दियदस्यायुरस्यायुर्मे धेह्यू[११]र्गस्यूर्जं मे धेहि[१२] युङ्ङसि वर्चोऽसि वर्चो मयि धेह्य[१३]ग्नये गृहपतये स्वाहा[१४] सोमाय वनस्पतये स्वाहे[१५]न्द्रस्य बलाय स्वाहा[१६] मरुतामोजसे स्वाहा[१७] हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा (२) अद्रिजा ऋतं बृहत्[१८] ॥ (हिꣳसिषं मा,--ऋतजा,--त्रीणि च) ॥ १५ ॥

जितवतो राज्ञः सेवोपचारः ॥ ७ गायत्री । विश्वेदेवा ऋषयः ।

मित्रोऽसि[१] वरुणोऽसि[२] समहं विश्वैर्देवैः[३] क्षत्रस्य नाभिरसि क्षत्रस्य योनिरसि[४] स्योनामा सीद सुषदामा सीद[५] मा त्वा हिꣳसीन्मा मा हिꣳसी[६]न्निषसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतु[७]र्ब्रह्मा३न्[८] त्वꣳ राजन् ब्रह्माऽसि सविताऽसि सत्यसवो[९] ब्रह्मा३न्[१०] त्वꣳ राजन् ब्रह्माऽसीन्द्रोऽसि सत्यौजा (१) ब्रह्मा३न्[१२] त्वꣳ राजन् ब्रह्माऽसि मित्रोऽसि सुशेवो[१३] ब्रह्मा३न्[१४] त्वꣳ राजन् ब्रह्माऽसि वरुणोऽसि सत्यधर्मे[१५]न्द्रस्य वज्रोऽसि वार्त्रघ्नस्तेन मे रध्य[१६] दिशोऽभ्ययꣳ राजाऽभूत्[१७] सुश्लोका३[१८] सुमङ्गला३[१९] सत्यराजा३न्[२०] ॥ अपां नप्त्रे स्वाहो[२१]र्जो नप्त्रे स्वाहा[२२]ऽग्नये गृहपतये स्वाहा[२३] ॥ (सत्यौजा,--श्चत्वारिꣳशच्च) ॥ १६ ॥

संसृपां हवींषि ॥ विश्वेदेवा ऋषयः ।

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा सारस्वतं चरुं वत्सतरी दक्षिणा सावित्रं द्वादशकपालमुपध्वस्तो दक्षिणा पौष्णं चरुꣳ श्यामो दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वारुणं दशकपालं महानिरष्टो दक्षिणा सौम्यं चरुं बभ्रुर्दक्षिणा त्वाष्ट्रमष्टाकपालꣳ शुण्ठो दक्षिणा वैष्णवं त्रिकपालं वामनो दक्षिणा ॥ (आग्नेयं द्विचत्वारिꣳशत्) ॥ १७ ॥

दशपेयः ॥ विश्वेदेवा ऋषयः ।

सद्यो दीक्षयन्ति सद्यः सोमं क्रीणन्ति[१] पुण्डरिस्रजां प्र यच्छति[२] दशभिर्वत्सतरैः सोमं क्रीणाति[३] दशपेयो भवति[४] शतं ब्राह्मणाः पिबन्ति[५] सप्तदशꣳ स्तोत्रं भवति[६] प्राकाशावध्वर्यवे ददाति[७] स्रजमुद्गात्रे[८] रुक्मꣳ होत्रे[९]ऽश्वं प्रस्तोतृप्रतिहर्तृभ्यां[१०] द्वादश पष्ठौहीर्ब्रह्मणे[११] वशां मैत्रावरुणाय[१२]र्षभं ब्राह्मणाच्छꣳसिने[१३] वाससी नेष्टापोतृभ्याꣳ[१४] स्थूरि यवाचितमच्छावाकाया[१५]नड्वाहमग्नीधे[१६] भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं भवति वारवन्तीयम् (१) अग्निष्टोमसामꣳ सारस्वतीरपो गृह्णाति[१७] ॥ (वारवन्तीयं, चत्वारि च) ॥ १८ ॥

दिशामवेष्टयः, पशुद्वयबन्धः, सत्यदूतानां हवींषि च ॥ विश्वेदेवा ऋषयः ।

आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुꣳ शितिपृष्ठो दक्षिणाऽऽदित्यां मल्हां गर्भिणीमा लभते मारुतीं पृश्निं पष्ठौहीमश्विभ्यां पूष्णे पुरोडाशं द्वादशकपालं निर्वपति सरस्वते सत्यवाचे चरुꣳ सवित्रे सत्यप्रसवाय पुरोडाशं द्वादशकपालं तिसृधन्वꣳ शुष्कदृतिर्दक्षिणा ॥

( आग्नेयꣳ सप्तचत्वारिꣳशत् ) ॥ १९ ॥

प्रयुजां हवींषि ॥ विश्वेदेवा ऋषयः ।

आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुꣳ सावित्रं द्वादशकपालं बार्हस्पत्यं चरुं त्वाष्ट्रमष्टाकपालं वैश्वानरं द्वादशकपालं दक्षिणो रथ वाहनवाहो दक्षिणा सारस्वतं चरुं निर्वपति पौष्णं चरुं मैत्रं चरुं वारुणं चरुं क्षैत्रपत्यं चरुमादित्यं चरुमुत्तरो रथवाहनवाहो दक्षिणा ॥ ( आग्नेयं चतुस्त्रिꣳशत् ) ॥ २० ॥

सौत्रामणी ॥ २-३ गायत्री, ४ त्रिष्टुप्, ७ एकपदा त्रिष्टुप् । विश्वेदेवा ऋषयः ।

स्वाद्वीं त्वा स्वादुना तीव्रां तीव्रेणामृताममृतेन सृजामि सꣳ सोमेन सोमोऽस्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्व[1] पुनातु ते परिस्रुतꣳ सोमꣳ सूर्यस्य दुहिता ।

वारेण शश्वता तना[2] ॥

वायुः पूतः पवित्रेण प्रत्यङ् सोमो अतिद्रुतः । इन्द्रस्य युज्यः सखा[3] ॥

कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।

इहेहैषां कृणुत भोजनानि ( १ ) ये बर्हिषो नमोवृक्तिं न जग्मुः ॥

आश्विनं धूम्रमा लभते सारस्वतं मेषमैन्द्रमृषभ[5]मैन्द्रमेकादशकपालं निर्वपति सावित्रं द्वादशकपालं वारुणं दशकपालꣳ सोमप्रतीकाः तितरस्तृप्णुतं वडबा दक्षिणा ॥

( भोजनानि, षड्विꣳशतिश्च ) ॥ २१ ॥

काम्ययाज्यापुरोऽनुवाक्याः ॥ १-२,४,६-७,९, १६-१९ त्रिष्टुप् ३,५,८, गायत्री १० अनुष्टुप् ११ पङ्क्तिः १५ जगती । विश्वेदेवा ऋषयः ।

अग्नाविष्णू महि तद्वां महित्वं वीतं घृतस्य गुह्यानि नाम ।
दमेदमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमा चरण्येत् ॥
अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा ।
दमेदमे सुष्टुतीर्वावृधाना प्रति वां जिह्वा घृतमुच्चरण्येत्[2] ॥
प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती । धीनामवित्र्यवतु ।
आ नो दिवो बृहतः ( १ ) पर्वतादा सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची शग्मां नो वाचमुशती शृणोतु ॥
बृहस्पते जुषस्व नो हव्यानि विश्वदेव्य । रास्व रत्नानि दाशुषे[5] ॥

एवा पित्रे विश्वदेवाय वृष्णे यज्ञैर्विधेम नमसा हविर्भिः ।
बृहस्पते सुप्रजा वीरवन्तो वयꣳ स्याम पतयो रयीणाम्[६] ॥
बृहस्पते अति यदर्यो अर्हाद्द्युमद्विभाति क्रतुमज्जनेषु ।
यद्दीदयच्छवस ( २ ) र्तप्रजात तदस्मासु द्रविणं धेहि चित्रम् ॥
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू[८] ॥
प्र बाहवा सिसृतं जीवसे न आ नो गव्यूतिमुक्षतं घृतेन ।
आ नो जने श्रवयतं युवाना श्रुतं मे मित्रावरुणा हवेमा[९] ॥
अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् । सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम्[१०] ॥
मक्षू देववतो रथः ( ३ ) शूरो वा पृत्सु कासु चित् ।
देवानां य इन्मनो यजमान इयक्षत्यभीदयज्वनो भुवत्[११] ॥
न यजमान रिष्यसि न सुन्वान न देवयो[१२] ॥
असदत्र सुवीर्यमुत त्यदाश्वश्व्यम्[१३] ॥ नकिष्टं कर्मणा नशन्न प्र योषन्न योषति[१४] ॥
उप क्षरन्ति सिन्धवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः ।
पृणन्तं च पपुरिं च ( ४ ) श्रवस्यवो घृतस्य धारा उप यन्ति विश्वतः[१५] ॥
सोमारुद्रा वि वृहतं विषूचीममीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत्[१६] ॥
सोमारुद्रा युवमेतान्यस्मे विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो अस्ति तनूषु बद्धं कृतमेनो अस्मत्[१७] ॥
सोमापूषणा जनना रयीणां जनना दिवो जनना ( ५ ) पृथिव्याः ।
जातौ विश्वस्य भुवनस्य गोपौ देवा अकृण्वन्नमृतस्य नाभिम्[१८] ॥
इमौ देवौ जायमानौ जुषन्तेमौ तमाꣳसि गूहतामजुष्टा ।
आभ्यामिन्द्रः पक्वमामास्वन्तः सोमापूषभ्यां जनदुस्रियासु[१९]
बृहतः, शवसा, रथः, पपुरिं च, दिवो जनना, पञ्चविꣳशतिश्च ) ॥ २२ ॥

[ अनुमत्या ८४ । आग्नेय-१८।-मैन्द्राग्न-७०। मग्नये ८० । सोमाय१४४ । प्रतिपूरुष-१०३।-मैन्द्राग्नं ९५ । धात्रे ५८ । बार्हस्पत्यं-१३३।-मग्नये१२५। ऽर्थेतो ६१ । देवीः १४१। समिध॒१५०।सोमस्ये-१११। न्द्रस्य १०३। मित्र-९०। आग्नेयं ४२। सद्य ५४। आग्नेय-४७-माग्नेय॒३४ । स्वाद्वीं त्वा ७६। अग्नाविष्णू २७५ । द्वाविꣳशतिः ॥ २०९४ ]

[ ॥ इति प्रथमकाण्डे अष्टमः प्रपाठकः ॥ ८ ॥ ]

[ इष १५३० । आपो १६९० । देवस्या-१५६७।-ऽऽदंदे १८१० । देवासुराः२७२७। सं त्वा २५०९। पाकयज्ञ –२६५५ । मनुमत्या २०९४ । अष्टौ ॥८॥ १६५८२ ]

॥ इति प्रथमं काण्डं सम्पूर्णम् ॥ १ ॥

# अथ द्वितीयं काण्डम् ।

## पशुविधानम् ।

[ अथ प्रथमः प्रपाठकः ॥ १ ॥ ]

१-६ भूति-ग्राम-प्रजाकामस्य आमयाविनश्च, ७-९ प्रजाकामस्य, १० पशुकामस्य च पशवः । विश्वेदेवा ऋषयः ॥

वायव्यꣳ श्वेतमा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येवा[1]—ऽतिक्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नियुत्वत आ लभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्यप्रदाहाय भवत्येव[2] (१) वायवे नियुत्वत आ लभेत ग्रामकामो वायुर्वा इमाः प्रजा नस्योता नेनीयते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्रजा नस्योता नि यच्छति ग्राम्येव भवति[3] नियुत्वते भवति ध्रुवा एवास्मा अनपगाः करोति[4] वायवे नियुत्वत आ लभेत प्रजाकामः प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्य प्रजाया (२) अपक्रामतो योऽलं प्रजायै सन् प्रजां न विन्दते वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्राणापानाभ्यां प्रजां प्र जनयति विन्दते प्रजां[5] वायवे नियुत्वत आ लभेत ज्योगामयावी प्राणो वै वायुरपानो नियुत् प्राणापानौ खलु वा एतस्मादपक्रामतो यस्य ज्योगामयति वायुमेव नियुत्वन्तꣳ स्वेन भागधेयेनोप (३) धावति स एवास्मिन् प्राणापानौ दधात्युत यदीतासुर्भवति जीवत्येव[6] प्रजापतिर्वा इदमेक आसीत् सोऽकामयत प्रजाः पशून्त्सृजेयेति स आत्मनो वपामुदक्खिदत् तामग्नौ प्रागृह्णात् ततोऽजस्तूपरः समभवत् तꣳ स्वायै देवताया आऽलभत ततो वै स प्रजाः पशूनसृजत[7] यः प्रजाकामः (४) पशुकामः स्यात् स एतं प्राजापत्यमजं तूपरमा लभेत प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां पशून् प्र जनयति[8] यच्छ्मश्रुणस्तत् पुरुषाणाꣳ रूपं यत् तूपरस्तदश्वानां यदन्यतोदन् तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानामेतावन्तो वै ग्राम्याः पशवस्तान् (५) रूपेणैवाव रुन्धे[9] सोमापौष्णं त्रैतमा लभेत पशुकामो द्वौ वा अजायै स्तनौ नानेव द्वावभि जायेते ऊर्जं पुष्टिं तृतीयः सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः सोमो वै रेतोधाः पूषा पशूनां प्र जनयिता सोम एवास्मै रेतो दधाति पूषा पशून् प्र जनय[10]—त्यौदुम्बरो यूपो (६) भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे[11] ॥ ( एव, प्रजाया, उप, प्रजाकाम, स्तान्, यूप, -स्त्रयोदश च ) ॥१॥

१-४ जलोदरगृहीतस्य, ५ पशुप्रजाकामस्य, ६-१० ब्रह्मवर्चसकामस्य, ११-१२ विद्वत्सभाजयार्थिनः, १३-१६ तीव्ररोगसहितस्य, प्रजाकामस्य, विदुषो जनानुरागार्थिनः, पौरोहित्यस्पर्धावतश्च पशुविधानम् ॥ विश्वेदेवा ऋषयः ।

प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता वरुणमगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीद्वरं वृणीष्वाथ मे पुनर्देहीति तासां वरमाऽलभत स कृष्ण एकशितिपादभव[1]—द्यो वरुणगृहीतः स्यात् स एतं वारुणं कृष्णमेकशितिपादमा लभेत वरुण-(१)-मेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति[2] कृष्ण एकशितिपाद्भवति वारुणो देवतया समृद्ध्यै[3] सुवर्भानुरासुरः सूर्यं तमसाऽविध्यत् तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्य यत् प्रथमं तमोऽपाघ्नन्त्सा

कृष्णाऽविरभवद्यद् द्वितीयꣳ सा फल्गुनी यत् तृतीयꣳ सा वलक्षी यदध्यस्थाद्पाक्रन्तन्त्साऽविर्वशा ( २ ) समभवत् ते देवा अब्रुवन् देवपशुर्वा अयꣳ समभूत् कस्मा इममा लप्स्यामह इत्यथ वै तर्ह्यल्पा पृथिव्यासीदजाता ओषधयस्तामाविं वशामादित्येभ्यः कामायाऽलभन्त ततो वा अप्रथत पृथिव्यजायन्तौषधयो[4] यः कामयेत प्रथेय पशुभिः प्र प्रजया जायेयेति स एतामाविं वशामादित्येभ्यः कामाया- ( ३ ) -ऽऽलभेताऽऽदित्यानेव कामꣳ स्वेन भागधेयेनोप धावति त एवैनं प्रथयन्ति पशुभिः प्र प्रजया जनयन्त्य[5]—सावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एता मल्हा आऽलभन्ताऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यां ताभिरेवास्मिन् रुचमदधु[6]—र्यो ब्रह्मवर्चसकामः स्यात् तस्मा एता मल्हा आ लभेता- ( ४ ) -ऽऽग्नेयीं कृष्णग्रीवीꣳ सꣳहितामैन्द्रीꣳ श्वेतां बार्हस्पत्यामेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन् ब्रह्मवर्चसं दधति ब्रह्मवर्चस्येव भवति[7] वसन्ता प्रातराग्नेयीं कृष्णग्रीवीमा लभेत ग्रीष्मे मध्यन्दिने सꣳहितामैन्द्रीꣳ शरद्यपराह्णे श्वेतां बार्हस्पत्यां त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवा ( ५ ) ऽव रुन्धे[8] संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति[9] गर्भिणयो भवन्तीन्द्रियं वै गर्भ इन्द्रियमेवास्मिन् दधति[10] सारस्वतीं मेषीमा लभेत य ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन् ( ६ ) वाचं दधाति प्रवदिता वाचो भवत्य[11]—पन्नदती भवति तस्मान्मनुष्याः सर्वा वाचं वद[12]—न्त्याग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं ज्योगामयाव्यग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो यस्य ज्योगामयत्यग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसमुत यदीतासुर्भवति जीवत्येव[13] सौम्यं बभ्रुमा लभेताऽऽग्नेयं कृष्णग्रीवं प्रजाकामः सोमो ( ७ ) वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते प्रजा[14]—माग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुं यो ब्राह्मणो विद्यामनूच्य न विरोचेत यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेन कृष्णग्रीव आग्नेयो भवति तम एवास्मादप हन्ति श्वेतो भवति ( ८ ) रुचमेवास्मिन् दधाति बभ्रुः सौम्यो भवति ब्रह्मवर्चसमेवास्मिन् त्विषिं दधात्या[15]—ग्नेयं कृष्णग्रीवमा लभेत सौम्यं बभ्रुमाग्नेयं कृष्णग्रीवं पुरोधायाꣳ स्पर्धमान आग्नेयो वै ब्राह्मणः सौम्यो राजन्योऽभितः सौम्यमाग्नेयौ भवतस्तेजसैव ब्रह्मणोभयतो राष्ट्रं परि गृह्णात्येकधा समावृङ्क्त पुर एनं दधते[16] ॥ (लभेत वहणं, वशौ,-तामविं वशामादित्येभ्यः कामाय, मल्हा आ लभेत, तान्येव, सैवास्मिन्, सोमः, श्वेतो भवति, त्रिचत्वारिꣳशच्च ) ॥ २ ॥

१-३ स्पर्धमानस्य, ४ सङ्ग्रामार्थिनः, ५-७ ग्रामकामस्य, ८ अन्नकामस्य, १० राज्यकामस्य, ११ पुनः प्रतिष्ठाकामस्य, १२ पापक्षयार्थिनः, १३ राज्यार्थिनश्च पशुविधानम् ॥ विश्वेदेवा ऋषयः।

देवासुरा एषु लोकेष्वस्पर्धन्त स एतं विष्णुर्वामनमपश्यत् तꣳ स्वायै देवतायाः आऽलभत ततो वै स इमाँल्लोकानभ्यजय[1]—द्वैष्णवं वामनमा लभेत स्पर्धमानो विष्णुरेव भूत्वेमाँल्लोकानभि जयति[2] विषम आ लभेत विषमा इव हीमे लोकाः समृद्ध्यै[3] इन्द्राय मन्युमते मनस्वते ललामं प्राशृङ्गमा लभेत

संग्रामे ( १ ) संयत्त इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ संग्राम—मिन्द्राय मरुत्वते पृश्निसक्थमा लभेत ग्रामकाम इन्द्रमेव मरुत्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति[5] यदृषभस्तेनै-( २ )-न्द्रो यत् पृश्निस्तेन मारुतः समृद्ध्यै[6] पश्चात् पृश्निसक्थो भवति पश्चादन्ववसायिनीमेवास्मै विशं करोति[7] सौम्यं बभ्रुमा लभेतान्नकामः सौम्यं वा अन्नꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवति[8] बभ्रुर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै[9] सौम्यं बभ्रुमा लभेत यमलꣳ( ३ )राज्याय सन्तꣳ राज्यं नोपनमेत् सौम्यं वै राज्यꣳ सोममेव स्वेन भागधेयेनोप धावति स एवास्मै राज्यं प्र यच्छत्युपैनꣳ राज्यं नमति बभ्रुर्भवत्येतद्वै सोमस्य रूपꣳ समृद्ध्यै[10] इन्द्राय वृत्रतुरे ललामं प्राशृङ्गमा लभेत गतश्रीः प्रतिष्ठाकामः पाप्मानमेव वृत्रं तीर्त्वा प्रतिष्ठां गच्छती[11]—न्द्रायाभिमातिघ्ने ललामं प्राशृङ्गमा ( ४ ) लभेत यः पाप्मना गृहीतः स्यात् पाप्मा वा अभिमातिरिन्द्रमेवाभिमातिहनꣳ स्वेन भागधेयेनोप धावति स एवास्मात् पाप्मानमभिमातिं प्र णुदते[12] इन्द्राय वज्रिणे ललामं प्राशृङ्गमा लभेत यमलꣳ राज्याय सन्तꣳ राज्यं नोपनमेदिन्द्रमेव वज्रिणꣳ स्वेन भागधेयेनोप धावति स एवास्मै वज्रं प्र यच्छति स एनं ( ५ ) वज्रो भूत्या इन्ध उपैनꣳ राज्यं नमति ललामः प्राशृङ्गो भवत्येतद्वै वज्रस्य रूपꣳ समृद्ध्यै[13] ॥ ( सङ्ग्रामे, तेना,-ऽलं,-मभिमातिघ्ने ललामं प्राशृंगमे,-नं, पञ्चदश च ) ॥ ३ ॥

१–७ ब्रह्मवर्चसकामस्य, ८ त्वग्दोषनिवारणार्थिनः, ९-१० भ्रातृव्यवतः, ११ पापविमुक्तिकामस्य, १३–१५ भ्रष्टराज्यस्य पशुविधानम् । विश्वेदेवा ऋषयः ।

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतां दशर्षभामाऽलभन्त तयैवाऽस्मिन् रुचमदधु[1]—र्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतां दशर्षभामा लभेताममुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति[2] वसन्ता प्रातस्त्रीन् ललामाना लभेत ग्रीष्मे मध्यन्दिने ( १ ) त्रीञ्छितिपृष्ठाञ्छरद्यपराह्णे त्रीञ्छितिवारान्[3] त्रीणि वा आदित्यस्य तेजाꣳसि वसन्ता प्रातर्ग्रीष्मे मध्यन्दिने शरद्यपराह्णे यावन्त्येव तेजाꣳसि तान्येवाव रुन्धे[4] त्रयस्त्रय आ लभ्यन्तेऽभिपूर्वमेवास्मिन् तेजो दधाति[5] संवत्सरं पर्यालभ्यन्ते संवत्सरो वै ब्रह्मवर्चसस्य प्रदाता संवत्सर एवास्मै ब्रह्मवर्चसं प्र यच्छति ब्रह्मवर्चस्येव भवति[6] संवत्सरस्य परस्तात् प्राजापत्यं कद्रु-( २ )-मा लभेत प्रजापतिः सर्वा देवता देवतास्वेव प्रति तिष्ठति[7] यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णꣳ श्याममा लभेत सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति[8] देवाश्च वै यमश्चास्मिँल्लोकेऽस्पर्धन्त स यमो देवानामिन्द्रियं वीर्यमयुवत तद्यमस्य ( ३ ) यमत्वं ते देवा अमन्यन्त यमो वा इदमभूद्यद्वयꣳ स्म इति ते प्रजापतिमुपाधावन्त्स एतौ प्रजापतिरात्मन उक्षवशौ निरमिमीत ते देवा वैष्णावरुणीं वशामाऽलभन्तैन्द्रमुक्षाणं तं वरुणेनैव ग्राहयित्वा विष्णुना यज्ञेन प्राणुदन्तैन्द्रेणैवास्येन्द्रियमवृञ्जत यो भ्रातृव्यवान् स्यात् स स्पर्ध-

मानो वैष्णावरुणीं ( ४ ) वशामा लंभेतैन्द्रमुक्षाणं वरुणेनैव भ्रातृव्यं ग्राहयित्वा विष्णुना यज्ञेन प्र णुदत ऐन्द्रेणैवास्येन्द्रियं वृङ्क्ते भवत्यात्मना परास्य भ्रातृव्यो भवती[10]न्द्रो वृत्रमंहन् तं वृत्रो हृतः षोडशभिर्भो-गैरसिनात् तस्य वृत्रस्य शीर्षतो गाव उदायन् ता वैदेह्यो॑ऽभवन् तासामृषभो जघनेऽनुदैत् तमिन्द्रो ( ५ ) ऽचायत् सोऽमन्यत यो वा इममालभेत मुच्येतास्मात् पाप्मन इति स आग्नेयं कृष्णग्रीवमा लंभतैन्द्रमृषभं तस्याग्निरेव स्वेन भागधेयेनोपसृतः षोडशधा वृत्रस्य भोगानप्यदहदैन्द्रेणेन्द्रियमात्मन्नधत्त[11] यः पाप्मना गृहीतः स्यात् स आग्नेयं कृष्णग्रीवमा लंभेतैन्द्रमृषभमग्निरेवास्य स्वेन भागधेयेनोपसृतः ( ६ ) पाप्मान-मपि दहत्यैन्द्रेणेन्द्रियमात्मन् धत्ते मुच्यते पाप्मनो भवत्येव[12] द्यावापृथिव्यां धेनुमा लंभेत ज्योगपरुद्धोऽ-नयोर्हि वा एषोऽप्रतिष्ठितोऽथैष ज्योगपरुद्धो द्यावापृथिवी एव स्वेन भागधेयेनोप धावति ते एवैनं प्रतिष्ठां गमयतः प्रत्येव तिष्ठति[13] पर्यारिणी भवति पर्यारीव ह्येतस्य राष्ट्रं यो ज्योगपरुद्धः समृद्ध्यै[14] वायव्यं ( ७ ) वत्समा लंभेत वायुर्वा अनयोर्वत्स इमे वा एतस्मै लोका अपशुष्का विडपशुष्काऽथैष ज्योगपरुद्धो वायुमेव स्वेन भागधेयेनोप धावति स एवास्मा इमाँल्लोकान् विशं प्र दापयति प्रास्मा इमे लोकाः स्नुवन्ति भुञ्जत्येनं विडुप तिष्ठते[15] ॥ ( मध्यन्दिने, कद्रुं, यमस्य, स्पर्धमानो वैष्णावरुणीं, तमिन्द्रो, ऽस्य स्वेन भागधेयेनोपसृतो, वायव्यं, द्विचत्वारिंशच्च )॥ ४ ॥

१--५ पशुकामस्य, ६ प्रजाकामस्य, ७--८ भूतिकामस्य, ९--११ विच्छिन्नसोमपीथस्य, १२--१६ अभिचरतश्च पशवः । विश्वेदेवा ऋषयः ।

इन्द्रो वलस्य बिलमपौर्णोत् स य उत्तमः पशुरासीत् तं पृष्ठं प्रति संगृह्योदक्खिदत् तꣳ सहस्रं पश-वोऽनूदायन्त्स उन्नतोऽभव[1]द्यः पशुकामः स्यात् स एतमैन्द्रमुन्नतमा लंभेतेन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भव[2]त्युन्नतो ( १ ) भवति साहस्री वा एषा लक्ष्मी यदुन्नतो लक्ष्मियैव पशूनव रुन्धे[3] यदा सहस्रं पशून् प्राप्नुयादथ वैष्णवं वामनमा लंभेतैतस्मिन् वै तत् सहस्रमध्यतिष्ठत् तस्मादेष वामनः समीषितः पशुभ्य एव प्रजातेभ्यः प्रतिष्ठां दधाति[4] कोऽर्हति सहस्रं पशून् प्राप्तुमित्याहुरहोरात्राण्येव सहस्रꣳ सम्पाद्याऽऽ लंभेत पशवो ( २ ) वा अहोरात्राणि पशू-नेव प्रजातान् प्रतिष्ठां गमय[5]त्योषधीभ्यो वेहतमा लंभेत प्रजाकाम ओषधयो वा एतं प्रजायै परि बाध-न्ते योऽलं प्रजायै सन् प्रजां न विन्दत ओषधयः खलु वा एतस्यै सूतुमपि घ्नन्ति या वेहद्भवत्योषधीरेव स्वेन भागधेयेनोप धावति ता एवास्मै स्वाद्योनेः प्रजां प्र जनयन्ति विन्दते ( ३ ) प्रजामापो वा ओष-धयोऽसत् पुरुष आप एवास्मा असतः सद्दति तस्मादाहुर्यश्चैवं वेद यश्च नाऽऽपस्त्वावासतः सद्-दती[6]त्यैन्द्रीꣳ सूतवशामा लंभेत भूतिकामोऽजातो वा एष योऽलं भूत्यै सन् भूतिं न प्राप्नोतीन्द्रं खलु वा एषा सूत्वा वशाऽभव-( ४ )-दिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येव यꣳसूत्वा वशा स्यात् तमैन्द्रमेवाऽऽलंभेतैतद्वाव तदिन्द्रियꣳ साक्षादेवेन्द्रियमव रुन्धे ऐन्द्राग्नं पुनरु-त्सृष्टमा लंभेत य आ तृतीयात् पुरुषात् सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्ना ( ५ ) तृतीयात् पुरुषात् सोमं न पिबतीन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र

यच्छत उपैनꣳ सोमपीथो नमति[9] यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे यदाग्नेयो भवत्याग्नेयो वै ब्राह्मणः स्वामेव देवतामनु सं तनोति[10] पुनरुत्सृष्टो भवति पुनरुत्सृष्ट इव ह्येतस्य (६) सोमपीथः समृद्ध्यै[11] ब्राह्मणस्पत्यं तूपरमा लभेताभिचरन् ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमार्च्छति[12] तूपरो भवति क्षुरपविर्वा एषा लक्ष्मी यत् तूपरः समृद्ध्यै[13] स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति[14] शरमयं बर्हिः शृणात्येवैनं[15] वैभीदक इध्मो (७) भिनत्त्येवैनम्[16] ॥ (भवत्युन्नतः, पशवो, विन्दते, ऽभवत, सन्नै, -तस्ये, -ध्म, त्रीणि च) ॥ ५ ॥

१–२ ग्रामकामस्य समानेपूज्यत्वकामस्य च, ३–६ अन्नकामस्य, ७–८ इन्द्रियकामस्य, ९–१० परकर्तृक (स्वप्रतिग्रहीतृक) दानकामस्य, ११–१२ अन्नकामस्य, १३–१४ ग्रामकामस्य, १५–१६ अज्ञातचिररोगग्रस्तस्य च पशवः ॥ विश्वेदेवा ऋषयः।

बार्हस्पत्यꣳ शितिपृष्ठमा लभेत ग्रामकामो यः कामयेत पृष्ठꣳ समानानाꣳ स्यामिति बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनं पृष्ठꣳ समानानां करोति ग्राम्येव भवति[1] शितिपृष्ठो भवति बार्हस्पत्यो ह्येष देवतया समृद्ध्यै[2] पौष्णꣳ श्याममा लभेतान्नकामोऽन्नं वै पूषा पूषणमेव स्वेन भागधेयेनोप धावति स एवास्मा (१) अन्नं प्र यच्छत्यन्नाद एव भवति[3] श्यामो भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्यै[4] मारुतं पृश्निमा लभेतान्नकामोऽन्नं वै मरुतो मरुत एव स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति[5] पृश्निर्भवत्येतद्वा अन्नस्य रूपꣳ समृद्ध्या[6] ऐन्द्रमरुणमा लभेतेन्द्रियकाम इन्द्रमेव (२) स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं दधातीन्द्रियाव्येव भवँ—त्यरुणो भ्रूमान् भवत्येतद्वा इन्द्रस्य रूपꣳ समृद्ध्यै[8] सावित्रमुपध्वस्तमा लभेत सनिकामः सविता वै प्रसवानामीशे सवितारमेव स्वेन भागधेयेनोप धावति स एवास्मै सनिं प्र सुवति दानकामा अस्मै प्रजा भवँ—न्त्युपध्वस्तो भवति सावित्रो ह्येष (३) देवतया समृद्ध्यै[10] वैश्वदेवं बहुरूपमा लभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति[11] बहुरूपो भवति बहुरूपꣳ ह्यन्नꣳ समृद्ध्यै[12] वैश्वदेवं बहुरूपमा लभेत ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै (४) सजातान् प्र यच्छन्ति ग्राम्येव भवति[13] बहुरूपो भवति बहुदेवत्यो१ ह्येष समृद्ध्यै[14] प्राजापत्यं तूपरमा लभेत यस्यानाज्ञातमिव ज्योगामयेत् प्राजापत्यो वै पुरुषः प्रजापतिः खलु वै तस्य वेद यस्यानाज्ञातमिव ज्योगामयति प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवैनं तस्मात् स्रामान्मुञ्चति[15] तूपरो भवति प्राजापत्यो ह्ये-(५)-ष देवतया समृद्ध्यै[16] ॥ (अस्मा, एवै, –षो, –स्मै, हि, त्रीणि च) ॥ ६ ॥

१–३ ब्रह्मवर्चसकामस्य, ४ वृष्टिकामस्य, ५ प्रजाकामस्य, ६ अन्नकामस्य, ७ ग्रामकामस्य, ८–९ ब्रह्मवर्चसकामस्य, १०–११ अभिचरतश्च पशवः ॥ विश्वेदेवा ऋषयः।

वषट्कारो वै गायत्रियै शिरोऽच्छिनत् तस्यै रसः परापतत् तं बृहस्पतिरुपागृह्णात् सा शितिपृष्ठा वशाऽभवद्यो द्वितीयः परापतत् तं मित्रावरुणावुपागृह्णीताꣳ सा द्विरूपा वशाऽभवद्यस्तृतीयः परापतत्

तं विश्वे देवा उपागृह्णन्त्सा बहुरूपा वशा भवद्यश्चतुर्थः परापतत् स पृथिवीं प्राविशत् तं बृहस्पतिरभ्य- (१)-गृह्णादस्त्वेवायं भोगायेति स उक्षवशः समभवद्यल्लोहितं परापतत् तद्रुद्र उपागृह्णात् सा रौद्री रोहिणी वशाभवद्—बार्हस्पत्याँ शितिपृष्ठामा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति[2] छन्दसां वा एष रसो यद्वशा रस इव खलु (२) वै ब्रह्मवर्चसं छन्दसामेव रसेन रसं ब्रह्मवर्चसमव रुन्धे[3] मैत्रावरुणीं द्विरूपामा लभेत वृष्टिकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै पर्जन्यो वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्यां पर्जन्यं वर्षयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै वृष्टिश्छन्दसामेव रसेन (३) रसं वृष्टिमव रुन्धे[4] मैत्रावरुणीं द्विरूपामा लभेत प्रजाकामो मैत्रं वा अहर्वारुणी रात्रिरहोरात्राभ्यां खलु वै प्रजाः प्र जायन्ते मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अहोरात्राभ्यां प्रजां प्रजनयतश्छन्दसां वा एष रसो यद्वशा रस इव खलु वै प्रजा छन्दसामेव रसेन रसं प्रजामव (४) रुन्धे[5] वैश्वदेवीं बहुरूपामा लभेतान्नकामो वैश्वदेवं वा अन्नं विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वा अन्नं छन्दसामेव रसेन रसमन्नमव रुन्धे[6] वैश्वदेवीं बहुरूपामा लभेत ग्रामकामो वैश्वदेवा वै (५) सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति छन्दसां वा एष रसो यद्वशा रस इव खलु वै सजाताश्छन्दसामेव रसेन रसँ सजातानव रुन्धे[7] बार्हस्पत्यमुक्षवशमा लभेत ब्रह्मवर्चसकामो बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं (६) दधाति ब्रह्मवर्चस्येव भवति[8] वशं वा एष चरति यदुक्षा वश इव खलु वै ब्रह्मवर्चसं वशेनैव वशं ब्रह्मवर्चसमव रुन्धे[9] रौद्रीँ रोहिणीमा लभेताभिचरन् रुद्रमेव स्वेन भागधेयेनोप धावति तस्मा एवैनमा वृश्चति ताजगार्तिमार्छति रोहिणी भवति रौद्री ह्येषा देवतया समृद्ध्यै[10] स्फ्यो यूपो (७) भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्येवैनं वैभीदक इध्मो भिनत्त्येवैनम्[11] ॥ (अभि, खलु, रसेना,-ऽव, ब्रह्मवर्चसं, यूप, एकान्नविँशतिश्च ) ॥ ७ ॥

१-३ ब्रह्मवर्चसकामस्य, ४-७ अभिचरतः, ८ महायज्ञप्राप्तिकामिनः, ९-१० पशुकामस्य, ११-१२ समय ( -प्रतिज्ञा पूर्ति-सन्धि ) कामस्य, १३-१६ वृष्टिकामस्य च पशवः ॥ विश्वेदेवा ऋषयः।

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एताँ सौरीँ श्वेतां वशामाऽलभन्त तयैवास्मिन् रुचमदधुर्—यो ब्रह्मवर्चसकामः स्यात् तस्मा एताँ सौरीँ श्वेतां वशामा लभेतामुमेवाऽऽदित्यँ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवति[2] बैल्वो यूपो भवत्यसौ (१) वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत् सयोन्येव ब्रह्मवर्चसमव रुन्धे[3] ब्राह्मणस्पत्यां बभ्रुकर्णीमा लभेताभिचरन्[4] वारुणं दशकपालं पुरस्तान्निर्वपेद्वरुणेनैव भ्रातृव्यं ग्राहयित्वा ब्रह्मणा स्तृणुते[5] बभ्रुकर्णी भवत्येतद्वै ब्रह्मणो रूपँ समृद्ध्यै[6] स्फ्यो यूपो भवति वज्रो वै स्फ्यो वज्रमेवास्मै प्र हरति शरमयं बर्हिः शृणात्ये- (२)-वैनं वैभीदक इध्मो भिनत्त्येवैनं[7] वैष्णवं वामनमा लभेत

यं यज्ञो नोपनमेद्विष्णवे यज्ञो विष्णुमेव स्वेन भागधेयेनोप धावति स एवास्मै यज्ञं प्र यच्छत्युपैनं यज्ञो नमति वामनो भवति वैष्णवो ह्येष देवतया समृद्ध्यै[7] त्वाष्ट्रं वडबमा लभेत पशुकामस्त्वष्टा वै पशूनां मिथुनानां (३) प्रजनयिता[8] त्वष्टारमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् मिथुनान् प्र जनयति[9] प्रजा हि वा एतस्मिन् पशवः प्रविष्टा अथैष पुमान्त्सन् वडबः साक्षादेव प्रजां पशूनव रुन्धे[10] मैत्रꣳ श्वेतमा लभेत संग्रामे संयत्ते समयकामो मित्रमेव स्वेन भागधेयेनोप धावति स एवैनं मित्रेण सं नयति[11] (४) विशालो भवति व्यवसाययत्येवैनं[12] प्राजापत्यं कृष्णमा लभेत वृष्टिकामः प्रजापतिर्वै वृष्ट्या ईशे प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयति[13] कृष्णो भवत्येतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे[14] शबलो भवति विद्युतमेवास्मै जनयित्वा वर्षय[15]—त्यवाशृङ्गो भवति वृष्टिमेवास्मै नि यच्छति[16] ॥ (असौ, शृणाति, मिथुनानां, नयति, यच्छति) ॥ ८ ॥

१–२ अन्नाद्यकामस्य, ३–५ अन्नकामस्य, ६ दीर्घरोगिणः ७–८ पुष्टिकामस्य च पशुविधानम् ॥ विश्वेदेवा ऋषयः ।

वरुणꣳ सुषुवाणमन्नाद्यं नोपानमत् स एतां वारुणीं कृष्णां वशामपश्यत् ताꣳ स्वायै देवताया आऽलभत ततो वै तमन्नाद्यमुपानम[1]—द्यमलमन्नाद्याय सन्तमन्नाद्यं नोपनमेत् स एतां वारुणीं कृष्णां वशामा लभेत वरुणमेव स्वेन भागधेयेनोप धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद (१) एव भवति कृष्णा भवति वारुणी ह्येषा देवतया समृद्ध्यै[2] मैत्रꣳ श्वेतमा लभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकामो मैत्रीर्वा ओषधयो वारुणीरापोऽपां च खलु वा ओषधीनां च रसमुप जीवामो मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा अन्नं प्र यच्छतोऽन्नाद एव भवत्य[3]-(२)-पां चौषधीनां च संधावा लभत उभयस्यावरुद्ध्यै[4] विशाखो यूपो भवति द्वे ह्येते देवते समृद्ध्यै[5] मैत्रꣳ श्वेतमा लभेत वारुणं कृष्णं ज्योगामयावी यन्मैत्रो भवति मित्रेणैवास्मै वरुणꣳ शमयति यद्वारुणः साक्षादेवैनं वरुणपाशान्मुञ्चत्युत यदीतासुर्भवति जीवत्येव[6] देवा वै पुष्टिं नाविन्दन् (३) तां मिथुनेऽपश्यन् तस्यां न समराधयन्तावश्विनावब्रूतामावयोर्वा एषा मैतस्यां वदध्वमिति साश्विनोरेवाभव[7]—द्यः पुष्टिकामः स्यात् स एतामाश्विनीं यमीं वशामा लभेताश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मिन् पुष्टिं धत्तः पुष्यति प्रजया पशुभि[8]ः । (अन्नादो,ऽन्नाद एव भवत्य,-विन्दन्, पञ्चचत्वारिꣳशच्च) ॥ ९ ॥

१ दुर्ब्राह्मणस्य सोमपिपासोः, २ मृषाभिशस्तस्य, ३ आश्विनशस्त्रकाले सूर्यानाविर्भाववतश्च पशवः ।

आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेदश्विनौ वै देवानामसोमपावास्तां तौ पश्चा सोमपीथं प्राप्नुतामश्विनावेतस्य देवता यो दुर्ब्राह्मणः सोमं पिपासत्यश्विनावेव स्वेन भागधेयेनोप धावति तावेवास्मै सोमपीथं प्र यच्छत उपैनꣳ सोमपीथो नमति यद्धूम्रो भवति धूम्रिमाणमेवास्मादप हन्ति ललामो (१) भवति मुखत एवास्मिन् तेजो दधाति[1] वायव्यं गोमृगमा लभेत यमजघ्निवाꣳसमभिशꣳसेयुरपूता वा एतं वागृच्छति यमजघ्निवाꣳसमभिशꣳसन्ति नैष ग्राम्यः पशुर्नारण्यो यद्गोमृगो नेवैष ग्रामे नारण्ये यमजघ्निवाꣳसमभिशꣳसन्ति वायुर्वै देवानां पवित्रं वायुमेव स्वेन भागधेयेनोप धावति स एवै-(२)-नं पवयति[2] पराची वा एतस्मै व्युच्छन्ती व्युच्छति तमः पाप्मानं प्र विशति यस्या-

ऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूपमा लभेतामुमेवादित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मात् तमः पाप्मानमप हन्ति प्रतीच्यस्मै व्युच्छन्ती व्युच्छत्यप तमः पाप्मानꣳ हते[3]॥ ( ललामः, स एव, षट्चत्वारिꣳशच्च ) ॥ १० ॥

काम्येष्टियाज्यापुरोऽनुवाक्याः ॥ त्रिष्टुप्; ७ द्विपदा; ९ जगती; १२-१३ अनुष्टुप्; १८, २१ गायत्री । विश्वेदेवा ऋषयः

इन्द्रं वो विश्वतस्परी[1] *—इन्द्रं नरो[2] *— मरुतो यद्ध वो दिवो[3] *—या वः शर्म[4] *—॥

भरेष्विन्द्रꣳ सुहवꣳ हवामहे ऽꣳहोमुचꣳ सुकृतं दैव्यं जनम् ।

अग्निं मित्रं वरुणꣳ सातये भगं द्यावापृथिवी मरुतः स्वस्तये[5] ॥

ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् ।

शिशीतमिन्द्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यन्तु देवाः ॥

प्रिया वो नाम ( १ ) हुवे तुराणाम् । आ यत् तृपन्मरुतो वावशानाः ॥

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।

ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥

अग्निः प्रथमो वसुभिर्नो अव्यात् सोमो रुद्रेभिरभि रक्षतु त्मना ।

इन्द्रो मरुद्भिर्ऋतुधा कृणोत्वादित्यैर्नो वरुणः सꣳ शिशातु ॥

सं नो देवो वसुभिरग्निः सꣳ ( २ ) सोमस्तनूभी रुद्रियाभिः ।

समिन्द्रो मरुद्भिर्यज्ञियैः समादित्यैर्नो वरुणो अजिज्ञिपत् ॥

यथाऽऽदित्या वसुभिः संबभूवुर्मरुद्भी रुद्राः समजानताभि ।

एवा त्रिणामन्नहृणीयमाना विश्वे देवाः समनसो भवन्तु[11] ॥

कुत्रा चिद्यस्य समृतौ रण्वा नरो नृषदने । अर्हन्तश्चिद्यमिन्धते संजनयन्ति जन्तवः[12] ॥

सं यदिषो वनामहे सꣳ हव्या मानुषाणाम् ।

उत द्युम्नस्य शवस ( ३ ) ऋतस्य रश्मिमा ददे[13] ॥

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः ।

आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसत्[14] ॥

शुचिरपः सूयवसा अदब्ध उप क्षेति वृद्धवयाः सुवीरः ।

नकिष्टं घ्नन्त्यन्तितो न दूराद्य आदित्यानां भवति प्रणीतौ[15] ॥

धारयन्त आदित्यासो जगत्स्था देवा विश्वस्य भुवनस्य गोपाः ।

दीर्घाधियो रक्षमाणा ( ४ ) असुर्यमृतावानश्चयमाना ऋणानि[16] ॥

११। १-२ ( सं. १।६।१२ ); ११।३-४ ( सं. १।५।११ )

तिस्रो भूमीर्धारयन् त्रीꣳरुत द्यून् त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनाऽऽदित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु[17] ॥
त्यान्नु क्षत्रियाꣳ अव आदित्यान् याचिषामहे । सुमृडीकाꣳ अभिष्टये[18] ॥
न दक्षिणा वि चिकिते न सव्या न प्राचीनमादित्या नोत पश्चा ।
पाक्या चिद्वसवो धीर्या चिद् (५) युष्मानीतो अभयं ज्योतिरश्याम्[19] ॥
आदित्यानामवसा नूतनेन सक्षीमहि शर्मणा शन्तमेन ।
अनागास्त्वे अदितित्वे तुरास इमं यज्ञं दधतु श्रोषमाणाः[20] ॥
इमं मे वरुण श्रुधी हवमद्या च मृडय । त्वामवस्युरा चके[21] ॥
तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेडमानो वरुणेह बोध्युरुशꣳस मा न आयुः प्र मोषीः[22] ॥
( नाम, सꣳ, शवसो, रक्षमाणा, धीर्या चिदे,-कान्नपञ्चाशच्च ) ॥ ११ ॥

[ वायव्यं ३१३ । प्रजापति-४४३ ।-देवासुरा २६५ । असा-३९२ ।-विन्द्रो ३५३ । बार्हस्पत्यं २५३ । वषट्कारो ३६९ । ऽसौ २५० । वरुण-१५५ ।-माश्विन-१४६ ।-मिन्द्र-२९९ । -मेकादश ॥ ३२७८ ॥ ]

[ इति द्वितीयकाण्डे प्रथमः प्रपाठकः ॥ १ ॥ ]

## इष्टिविधानम् ।

[ अथ द्वितीयः प्रपाठकः ॥ २ ॥ ]

१-२ प्रजाकामस्य, ३ स्पर्धमानस्य, ४ सङ्ग्राममुपप्रयास्यतः, ५ जितशत्रोः, ६-७ सभामेष्यतः, ८-९ सभां प्राप्तस्य च पुरोडाशाश्चरवश्च ॥ विश्वेदेवा ऋषयः ॥

प्रजापतिः प्रजा असृजत ताः सृष्टा इन्द्राग्नी अपागूहताꣳ सोऽचायत् प्रजापतिरिन्द्राग्नी वै मे प्रजा अपाघुक्षतामिति स एतमैन्द्राग्नमेकादशकपालमपश्यत् तं निरवपत् तावस्मै प्रजाः प्रासाधयता[1] मिन्द्राग्नी वा एतस्य प्रजामप गूहतो योऽलं प्रजायै सन् प्रजां न विन्दत ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकाम इन्द्राग्नी (१) एव स्वेन भागधेयेनोप धावति तावेवास्मै प्रजां प्र साधयतो विन्दते प्रजा[2] मैन्द्राग्नमेकादशकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति ताभ्यामेवेन्द्रियं वीर्यं भ्रातृव्यस्य वृङ्क्ते वि पाप्मना भ्रातृव्येण जयते[3] ऽप वा एतस्मादिन्द्रियं वीर्यं क्रामति यः संग्राममुपप्रयात्यैन्द्राग्नमेकादशकपालं नि-(२)-र्वपेत् संग्राममुपप्रयास्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येणोप प्र याति जयति तꣳ संग्रामं[4] वि वा एष इन्द्रियेण वीर्येणर्ध्यते यः संग्रामं जयत्यैन्द्राग्नमेकादशकपालं निर्वपेत् संग्रामं जित्वेन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं (३) धत्तो नेन्द्रियेण वीर्येण व्यृध्यते[5] ऽप वा एतस्मादिन्द्रियं वीर्यं क्रामति य एति जनतामैन्द्राग्नमेकादशकपालं निर्वपेज्जनतामेष्यन्निन्द्राग्नी एव स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियं वीर्यं धत्तः सहेन्द्रियेण वीर्येण जनतामेति[6] पौष्णं चरुमनु निर्व

*

पेत् पूषा वा इन्द्रियस्य वीर्यस्यानुप्रदाता पूषणमेव ( ४ ) स्वेन भागधेयेनोप धावति स एवास्मा इन्द्रियं वीर्यमनु प्र यच्छति[७] क्षैत्रपत्यं चरुं निर्वपेज्जनतामागत्येयं वै क्षेत्रस्य पतिरस्यामेव प्रति तिष्ठत्यै[८]न्द्राग्नमेकादशकपालमुपरिष्टान्निर्वपेदस्यामेव प्रतिष्ठायेन्द्रियं वीर्यमुपरिष्टादात्मन् धत्ते[९] ॥ ( इन्द्राग्नी, नि,-वीर्यं,-मेवै,-कान्नचत्वारिꣳशच्च ) ॥ १ ॥

१ आहिताग्नेर्दर्शपूर्णमासातिक्रमे, २ अव्रत्याचरणे, ३-४ पिशाचग्रहबाधायाम्, ५ अभिचरतः, ६ गोपुरुषमृत्युतद्भयवतः, ७ युयुत्सोः, ८ अपमृत्युभीतस्य, ९ गृहदाहेन च पुरोडाशाः ॥ विश्वेदेवा ऋषयः ॥

अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत् पथो वा एषोऽध्यपथेनैति यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयत्यग्निमेव पथिकृतꣳ स्वेन भागधेयेनोप धावति स एवैनमपथात् पन्थामपि नयत्यनड्वान् दक्षिणा वही ह्येष समृद्ध्या[१] अग्नये व्रतपतये ( १ ) पुरोडाशमष्टाकपालं निर्वपेद्य आहिताग्निः सन्नव्रत्यमिव चरेदग्निमेव व्रतपतिꣳ स्वेन भागधेयेनोप धावति स एवैनं व्रतमा लम्भयति व्रत्यो भवत्य[२]ग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्नग्निमेव रक्षोहणꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳस्यप हन्ति[३] निशितायां निर्वपेत् ( २ ) निशितायाꣳ हि रक्षाꣳसि प्रेरते संप्रेर्णान्येवैनानि हन्ति परिश्रिते याजयेद्रक्षसामनन्ववचाराय रक्षोघ्नी याज्यानुवाक्ये भवतो रक्षसाꣳ स्तृत्या[४] अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्नेषा वा अस्य घोरा तनूर्यद्रुद्रस्तस्मा एवैनमा वृश्चति ताजगार्तिमार्छत्य[५]ग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा ( ३ ) वा प्रमीयेरन् यो वा बिभीयादेषा वा अस्य भेषज्या तनूर्यत् सुरभिमती तयैवास्मै भेषजं करोति सुरभिमते भवति पूतीगन्धस्यापहत्या[६] अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् संग्रामे संयत्ते भागधेयेनैवैनꣳ शमयित्वा परानभि निर्दिशति यमवरेषां विध्यन्ति जीवति स यं परेषां प्र स मीयते जयति तꣳ संग्राम- ( ४ ) -मभि वा एष एतानुच्यति येषां पूर्वापरा अन्वञ्चः प्रमीयन्ते पुरुषाहुतिर्ह्यस्य प्रियतमाग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति नैषां पुराऽऽयुषोऽपरः प्रमीयते[८] ऽभि वा एष एतस्य गृहानुच्यति यस्य गृहान् दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेद्भागधेयेनैवैनꣳ शमयति ना- ( ५ ) -स्यापरं गृहान् दहति[९] ॥ ( व्रतपतये, निशितायां निर्वपेत्, पुरुषाः, संग्रामं, न, चत्वारि च ) ॥ २ ॥

१ कामोपनमनेच्छोः, २ क्षेत्रादौ स्पर्धमानस्य, ३ अभिचर्यमाणस्य, ४ सर्वायुःप्राप्तिकामस्य, ५ भूतिकामस्य, ६ कान्तिकामस्य, ७ तेजःकामस्य, ८ पराभिभवेच्छोश्च पुरोडाशाः ॥ विश्वेदेवा ऋषयः ।

अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदग्निमेव कामꣳ स्वेन भागधेयेनोप धावति स एवैनं कामेन समर्धयत्युपैनं कामो नमत्य[१]ग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेत् स्पर्धमानः क्षेत्रे वा सजातेषु वाग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति तेनैवेन्द्रियं वीर्यं भ्रातृव्यस्य ( १ ) युवते वि पाप्मना भ्रातृव्येण जयते[२] ऽग्नये यविष्ठाय पुरोडाशमष्टाकपालं निर्वपेदभिचर्यमाणोऽग्निमेव यविष्ठꣳ स्वेन भागधेयेनोप धावति स एवास्माद्रक्षाꣳसि यवयति नैनमभिचरन्त्स्तृणुते[३] ऽग्नय आयुष्मते पुरो-

डाशमष्टाकपालं निर्वपेद्यः कामयेत सर्वमायुरियामित्यग्निमेवाऽऽयुष्मन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मि-( २ )-न्नायुर्दधाति सर्वमायुरेत्य[4]—ग्नये जातवेदसे पुरोडाशमष्टाकपालं निर्वपेद्भूतिकामोऽग्निमेव जातवेदसꣳ स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति भवत्येवा[5]—ग्नये रुक्मते पुरोडाशमष्टाकपालं निर्वपेद्रुक्कामोऽग्निमेव रुक्मन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् रुचं दधाति रोचत एवा[6]—ग्नये तेजस्वते पुरोडाश-( ३ )-मष्टाकपालं निर्वपेत् तेजस्कामोऽग्निमेव तेजस्वन्तꣳस्वेन भागधेयेनोप धावति स एवास्मिन् तेजो दधाति तेजस्व्येव भवत्य[7]—ग्नये साहन्त्याय पुरोडाशमष्टाकपालं निर्वपेत् सीक्षमाणोऽग्निमेव साहन्त्यꣳ स्वेन भागधेयेनोप धावति तेनैव सहते यꣳ सीक्षते[8] ॥ ( भ्रातृव्यस्या,-स्मिन्, तेजस्वते पुरोडाशं,--मष्टात्रिꣳशच्च ) ॥ ३ ॥

१ अन्नवत्वकामस्य, २ अन्नाशनशक्तिकामस्य, ३ अन्नपतित्वकामस्य, ४ दीर्घरोगयुक्तकामस्य, ५ चक्षुष्पाटवकामस्य, ६ पुत्रकामस्य पुरोडाशाः, ७ रसकामस्य चरुः, ८ धनकामस्य, ९ संग्रामजयपूर्वकमन्नकामस्य, १० द्विरग्न्युद्धरणे, ११-१८ उद्धृताग्निनाशे पुरोडाशाः ॥ १५ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

अग्नयेऽन्नवते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नवान्त्स्यामित्यग्निमेवान्नवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नवन्तं करोत्यन्नवानेव भवत्य[1]—ग्नयेऽन्नादाय पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नादः स्यामित्यग्निमेवान्नादꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नादं करोत्यन्नाद ( १ ) एव भवत्य[2]—ग्नयेऽन्नपतये पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेतान्नपतिः स्यामित्यग्निमेवान्नपतिꣳ स्वेन भागधेयेनोप धावति स एवैनमन्नपतिं करोत्यन्नपतिरेव भवत्य[3]—ग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये ज्योगामयावी यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये ( २ ) पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचय आयुरेवास्मिन् तेन दधात्युत यदीतासुर्भवति जीवत्येवै[4]—तामेव निर्वपेच्चक्षुष्कामो यदग्नये पवमानाय निर्वपति प्राणमेवास्मिन् तेन दधाति यदग्नये पावकाय वाचमेवास्मिन् तेन दधाति यदग्नये शुचये चक्षुरेवास्मिन् तेन दधात्यु-( ३ )-त यद्यन्धो भवति प्रैव पश्यत्य[5]—ग्नये पुत्रवते पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय पुत्रिणे पुरोडाशमेकादशकपालं प्रजाकामोऽग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छत्य[6]—ग्नये रसवतेऽजक्षीरे चरुं निर्वपेद्यः कामयेत रसवान्त्स्यामित्यग्निमेव रसवन्तꣳ स्वेन भागधेयेनोप धावति स एवैनꣳ रसवन्तं करोति ( ४ ) रसवानेव भवत्यजक्षीरे भवत्याग्नेयी वा एषा यदजा साक्षादेव रसमव रुन्धे[7] ऽग्नयेवसुमते पुरोडाशमष्टाकपालं निर्वपेद्यः कामयेत वसुमान्त्स्यामित्यग्निमेव वसुमन्तꣳ स्वेन भागधेयेनोप धावति स एवैनं वसुमन्तं करोति वसुमानेव भवत्य[8]—ग्नये वाजसृते पुरोडाशमष्टाकपालं निर्वपेत् संग्रामे संयत्ते वाजं ( ५ ) वा एष सिसीर्षति यः संग्रामं जिगीषत्यग्निः खलु वै देवानां वाजसृदग्निमेव वाजसृतꣳ स्वेन भागधेयेनोप धावति धावति वाजꣳ हन्ति वृत्रं जयति तꣳ संग्राममथो अग्निरिव न प्रतिधृषे भवत्य[9]—ग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुर्निर्दिष्टभागो वा एतयोरन्योऽनिर्दिष्टभागोऽन्यस्तौ संभवन्तौ यजमान- ( ६ ) मभि संभवतः स ईश्वर आर्तिमार्तोर्यदग्नयेऽग्निवते निर्वपति भागधेयेनैवैनौ शमयति नाऽऽर्तिमार्च्छति यजमानो[10] ऽग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वाये[11]—दपर

आदीप्यानुद्धृत्य इत्याहु[१२]स्तत् तथा न कार्यं यद्भागधेयमभि पूर्वं उद्ध्रियते किमपरोऽभ्युत् (७) द्ध्रियेतेति[१३] तान्येवावक्षाणानि सन्निधाय मन्थे[१४]—

—इतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः ।
स गायत्रिया त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति[१५]

छन्दोभिरेवैनꣳ स्वाद्योनेः प्र जनयत्ये[१६]ष वाव सोऽग्निरित्याहु[१७]र्ज्योतिस्त्वा अस्य परापतितमिति यदग्नये ज्योतिष्मते निर्वपति यदेवास्य (८) ज्योतिः परापतितं तदेवाव रुन्धे[१८] ॥ (अन्नादो, ऽग्नये, दधाति, करोति, वाजं, यजमान,-मुदं,-स्य, षट् च) ॥ ४ ॥

१-२ अभिशस्यमानस्य प्रजाकामस्य च पुरोडाशचरवः, ३ पुत्रजन्मवतः, ४-५ दर्शपूर्णमासातिक्रमवतः, ६-७ अग्निमुद्वासयिष्यतः, ८-१३ ग्रामकामस्य पुरोडाशाः ॥ विश्वेदेवा ऋषयः ।

वैश्वानरं द्वादशकपालं निर्वपेद्वारुणं चरुं दधिक्राव्णे चरुमभिशस्यमानो यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरेणैवैनꣳ स्वदयत्यप पापं वर्णꣳ हते वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनमाद्यमस्यान्नं भवत्ये[१]तामेव निर्वपेत् प्रजाकामः संवत्सरो (१) वा एतस्याशान्तो योनिं प्रजायै पशूनां निर्दहति योऽलं प्रजायै सन् प्रजां न विन्दते यद्वैश्वानरो द्वादशकपालो भवति संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव भागधेयेन शमयति सोऽस्मै शान्तः स्वाद्योनेः प्रजां प्र जनयति वारुणेनैवैनं वरुणपाशान्मुञ्चति दधिक्राव्णा पुनाति हिरण्यं दक्षिणा पवित्रं वै हिरण्यं पुनात्येवैनं (२) विन्दते प्रजां[२] वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति यद् द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति यस्मिन् जात एतामिष्टिं निर्वपति पूत (३) एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवत्य[३]व वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयति सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते[४] वैश्वानरं द्वादशकपालं निर्वपेदमावास्यां वा पौर्णमासीं वाऽतिपाद्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्या-(४)-थो देवता एवान्वारभ्य सुवर्गं लोकमेति[५] वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्ना[६]ग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन् यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्मा आतिथ्यं करोत्यथो यथा जनं यतेऽवसं करोति तादृ-(५)-गेव तद् द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरः खलु वा अग्नेर्योनिः स्वामेवैनं योनिं गमयत्याद्यमस्यान्नं भवति[७] वैश्वानरं द्वादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकाम आहवनीये वैश्वानरमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै[९] द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मै सजाताꣳश्च्यावयति[१०] मारुतो भवति (६) मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्य-

विशमव रुन्धे[11] सप्तकपालो भवति सप्त गणा वै मरुतो गणश एवास्मै सजातानव रुन्धे[12] ऽनूच्यमान आ सादयति विशमेवास्मा अनुवर्त्मानं करोति[13] ॥ (संवत्सर, एनं, पूतः, समष्ट्यै, तादृग्, भवत्ये,-कान्नत्रिंशच्च ) ॥ ५॥

१ संग्राममुपप्रयास्यतश्चरुः, २ संग्रामभूमिं प्राप्तस्य, ३ विद्विषतोरन्नं जग्धवतः, ४ शपथं कृत्वा द्रुह्यतः, ५ अविं प्रतिगृह्णानस्य, ६ उभयतोदन्तं प्रतिगृह्णानस्य, ७ याचयितुं प्रयास्यतः, ८-९ याचयित्वा प्रत्यागच्छतश्च पुरोडाशाः ॥ विश्वेदेवा ऋषयः।

आदित्यं चरुं निर्वपेत् संग्राममुपप्रयास्यन्नियं वा अदितिरस्यामेव पूर्वे प्रति तिष्ठन्ति[1] वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरः खलु वै देवानामायतनमेतस्माद्वा आयतनाद्देवा असुरानजयन् यद्वैश्वानरं द्वादशकपालं निर्वपति देवानामेवायतने यतते जयति तꣳ संग्राम—मेतस्मिन् वा एतौ मृजाते ( १ ) यो विद्विषाणयोरन्नमत्ति वैश्वानरं द्वादशकपालं निर्वपेद्विद्विषाणयोरन्नं जग्ध्वा संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेवात्ति नास्मिन् मृजाते[3] संवत्सराय वा एतौ समममाते यौ सममाते तयोर्यः पूर्वोऽभिद्रुह्यति तं वरुणो गृह्णाति वैश्वानरं द्वादशकपालं निर्वपेत् सममानयोः पूर्वोऽभिद्रुह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरमेवाऽऽप्त्वा निर्वरुणं ( २ ) परस्तादभि द्रुह्यति नैनं वरुणो गृह्णात्यो—व्यं वा एष प्रति गृह्णाति योऽविं प्रतिगृह्णाति वैश्वानरं द्वादशकपालं निर्वपेदाविं प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितामेव प्रति गृह्णाति नाऽऽव्यं प्रति गृह्णात्या—त्मनो वा एष मात्रामाप्नोति य उभयादत् प्रतिगृह्णात्यश्वं वा पुरुषं वा वैश्वानरं द्वादशकपालं निर्वपेदुभयादत् ( ३ ) प्रतिगृह्य संवत्सरो वा अग्निर्वैश्वानरः संवत्सरस्वदितमेव प्रतिगृह्णाति नात्मनो मात्रामाप्नोति[6] वैश्वानरं द्वादशकपालं निर्वपेत् सनिमेष्यन्त्संवत्सरो वा अग्निर्वैश्वानरो यदा खलु वै संवत्सरं जनतायां चरत्यथ स धनार्घो भवति यद्वैश्वानरं द्वादशकपालं निर्वपति संवत्सरसातामेव सनिमभि प्रच्यवते दानकामा अस्मै प्रजा भवन्ति यो वै संवत्सरं ( ४ ) प्रयुज्य न विमुञ्चत्यप्रतिष्ठानो वै स भवत्येतमेव वैश्वानरं पुनरागत्य निर्वपेद्यमेव प्रयुङ्क्ते तं भागधेयेन विमुञ्चति प्रतिष्ठित्यै[8] यया रज्ज्वोत्तमां गामाजेत् तां भ्रातृव्याय प्रहिणुयान्निर्ऋतिमेवास्मै प्र हिणोति[9] ॥ ( मृजाते, वरुण,-मुभयादत, संवत्सरꣳ, षट्त्रिꣳशच्च ) ॥ ६ ॥

१-२ पशुकामस्य चरुः, ३ पशुकामस्य, ४ ब्रह्मवर्चसकामस्य, ५ अन्नकामस्य, ६ भूतिकामस्य, ७ पाप्मनागृहीतस्य, ८ परैः पीडितस्य, ९ बद्धस्य परियत्तस्य वा, १० महायज्ञेच्छोः पुरोडाशाः ॥

ऐन्द्रं चरुं निर्वपेत् पशुकाम ऐन्द्रा वै पशव इन्द्रमेव स्वेन भागधेयेनोप धावति स एवास्मै पशून् प्र यच्छति पशुमानेव भवति[1] चरुर्भवति स्वादेवास्मै योनेः पशून् प्र जनयती[2]—न्द्रायेन्द्रियावते पुरोडाशमेकादशकपालं निर्वपेत् पशुकाम इन्द्रियं वै पशव इन्द्रमेवेन्द्रियावन्तꣳ स्वेन भागधेयेनोप धावति स ( १ ) एवास्मा इन्द्रियं पशून् प्र यच्छति पशुमानेव भवती[3]—न्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेद्ब्रह्मवर्चसकामो ब्रह्मवर्चसं वै घर्म इन्द्रमेव घर्मवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवती[4]—न्द्रायार्कवते पुरोडाशमेकादशकपालं निर्वपेदन्नकामोऽर्को वै देवानामन्नमिन्द्रमेवार्कवन्तꣳ स्वेन भागधेयेनो-( २ )-प धावति स एवास्मा अन्नं प्र यच्छत्यन्नाद एव भवती[5]—न्द्राय

घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूतिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवान्नाद्ये प्रति तिष्ठति भवत्येवे[6]—न्द्राया-( ३ )-ऽꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात् पाप्मा वा अꣳह इन्द्रमेवाꣳहोमुचꣳ स्वेन भागधेयेनोप धावति स एवैनं पाप्मनोऽꣳहसो मुञ्चती[7]—न्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभि प्रवेपेरन् राष्ट्राणि वाऽभि समियुरिन्द्रमेव वैमृधꣳ स्वेन भागधेयेनोप धावति स एवास्मान्मृधो ( ४ )ऽपहन्ती[8]—न्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायत[9] इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मा ( ५ ) अन्ततो महायज्ञं च्यावयत्युपैनं महायज्ञो नमति[10] ॥
( स, भागधेयेने,-न्द्राय, मृधो, ऽस्मै, सप्त च ) ॥ ७ ॥

१ ग्रामकामस्य पुरोडाशः, २–३ सेनाकामस्य चरुः, ४ युद्धार्थिनः, ५ नष्टधैर्यस्य, ६ अन्यकर्तृकदानकामस्य, ७ उत्तमर्णस्य, ८ राज्यभ्रष्टस्य भ्रश्यमानस्य वा, ९–११ अन्यसाम्यमनिच्छतः पुरोडाशाः ॥ विश्वेदेवा ऋषयः।

इन्द्रायान्वृजवे पुरोडाशमेकादशकपालं निर्वपेद् ग्रामकाम इन्द्रमेवान्वृजुꣳ स्वेन भागधेयेनोप धावति स एवास्मै सजाताननुकान् करोति ग्राम्येव भवती[1]—न्द्राण्यै चरुं निर्वपेद्यस्य सेनाऽसꣳशितेव स्यादिन्द्राणी वै सेनायै देवतेन्द्राणीमेव स्वेन भागधेयेनोप धावति सैवास्य सेनाꣳ सꣳ श्यति[2] बल्बजानपी-( १ )-ध्मे सं नह्येद्गौर्यत्राधिष्कन्नान्यमेहत् ततो बल्बजा उदतिष्ठन् गवामेवैनं न्यायमपिनीय गा वेदयती[3]-न्द्राय मन्युमते मनस्वते पुरोडाशमेकादशकपालं निर्वपेत् संग्रामे संयत्त इन्द्रियेण वै मन्युना मनसा संग्रामं जयतीन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति जयति तꣳ ( २ ) संग्राममे[4]—तामेव निर्वपेद्यो हतमनाः स्वयं पाप इव स्यादेतानि हि वा एतस्मादपक्रान्तान्यथैष हतमनाः स्वयं पाप इन्द्रमेव मन्युमन्तं मनस्वन्तꣳ स्वेन भागधेयेनोप धावति स एवास्मिन्निन्द्रियं मन्युं मनो दधाति न हतमनाः स्वयं पापो भवती[5]—न्द्राय दात्रे पुरोडाशमेकादशकपालं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्यु-( ३ )-रितीन्द्रमेव दातारꣳ स्वेन भागधेयेनोप धावति स एवास्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्ती[6]—न्द्राय प्रदात्रे पुरोडाशमेकादशकपालं निर्वपेद्यस्मै प्रत्तमिव सन्न प्रदीयेतेन्द्रमेव प्रदातारꣳ स्वेन भागधेयेनोप धावति स एवास्मै प्र दापयती[7]—न्द्राय सुत्राम्णे पुरोडाशमेकादशकपालं निर्वपेदपरुद्धो वा ( ४ ) ऽपरुध्यमानो वेन्द्रमेव सुत्रामाणꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायतेऽनपरुध्यो भवती[8]—न्द्रो वै सदृङ् देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत् तस्मा एतमैन्द्रमेकादशकपालं निरवपत् तेनैवास्मिन्निन्द्रियमदधाच्छक्वरी याज्यानुवाक्ये अकरोद्वज्रो वै शक्वरी स एनं वज्रो भूत्या ऐन्ध ( ५ ) सोऽभवत् सोऽबिभेद्भूतः प्र मा धक्ष्यतीति स प्रजापतिं पुनरुपाधावत् स प्रजापतिः शक्वर्या अधि रेवतीं निरमिमीत शान्त्या अप्रदाहाय योऽलꣳ श्रियै सन्त्सदृङ् समानैः स्यात् तस्मा एतमैन्द्रमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप

धावति स एवास्मिन्निन्द्रियं दधाति[१०] रेवती पुरोऽनुवाक्या भवति ( ६ ) शान्त्या अप्रदाहाय शक्वरी याज्या वज्रो वै शक्वरी स एनं वज्रो भूत्या इन्धे भवत्येव[११] ॥ ( अपि त९, स्युं,-वै,-न्ध, भवति, चतुर्दश च ) ॥ ८ ॥

१ अभिचरतः, २ प्रत्यभिचरतः, ३ पराभिचारपीडितस्य च चरुपुरोडाशौ, ४ यज्ञोपनतिकामस्य पुरोडाशः, ५-७ चक्षुष्कामस्य चरुः, ८-९ यज्ञकर्तृभ्रातृव्यवत इन्द्रियसामर्थ्याविनाशकामस्य, १०-११ भ्रातृव्योपाकृतवशातुल्यफलकामिनः पुरोडाशाः ॥ विश्वेदेवा ऋषयः ।

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्त्सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदाग्नावैष्णव एकादशकपालो भवत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन चाभि चरति सरस्वत्याज्यभागा भवति वाग्वै सरस्वती वाचैवैनमभि चरति बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि चरति[१] ( १ ) प्रति वै परस्तादभिचरन्तमभि चरन्ति द्वेद्वे पुरोऽनुवाक्ये कुर्यादतिप्रयुक्त्यां एतयैव यजेताभिचर्यमाणो देवताभिरेव देवताः प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म स देवताश्चैव यज्ञं च मध्यतो व्यवसर्पति तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुते[३] आग्नावैष्णवमेकादशकपालं निर्वपेद्यं यज्ञो नो-( २ )-पनमेदग्निः सर्वा देवता विष्णुर्यज्ञोऽग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवास्मै यज्ञं प्र यच्छत उपैनं यज्ञो नमत्या—ग्नावैष्णवं घृते चरुं निर्वपेच्चक्षुष्कामोऽग्नेर्वै चक्षुषा मनुष्या वि पश्यन्ति यज्ञस्य देवा अग्निं चैव विष्णुं च स्वेन भागधेयेनोप धावति तावेवा-( ३ )-ऽस्मिन् चक्षुर्धत्तश्चक्षुष्मानेव भवति[५] धेन्वै वा एतद्रेतो यदाज्यमनडुहस्तण्डुला मिथुनादेवास्मै चक्षुः प्र जनयति[६] घृते भवति तेजो वै घृतं तेजश्चक्षुस्तेजसैवास्मै तेजश्चक्षुरव रुन्धे इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानोऽयजमानस्याध्वरकल्पां प्रति निर्वपेद्भ्रातृव्ये यजमाने नास्येन्द्रियं ( ४ ) वीर्यं वृङ्क्ते पुरा वाचः प्रवदितोर्निर्वपेद्यावत्येव वाक् तामप्रोदितां भ्रातृव्यस्य वृङ्क्ते तामस्य वाचं प्रवदन्तीमन्या वाचोऽनु प्र वदन्ति ता इन्द्रियं वीर्यं यजमाने दधत्या—ग्नावैष्णवमष्टाकपालं निर्वपेत् प्रातःसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदष्टाकपालो भवत्यष्टाक्षरा गायत्री गायत्रं प्रातः सवनं प्रातः सवनमेव तेनाऽऽप्नोत्या-( ५ )-ग्नावैष्णवमेकादशकपालं निर्वपेन्माध्यंदिनस्य सवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यंदिनमेव सवनं तेनाऽऽप्नोत्याग्नावैष्णवं द्वादशकपालं निर्वपेत् तृतीयसवनस्याऽऽकाले सरस्वत्याज्यभागा स्याद्बार्हस्पत्यश्चरुर्यद् द्वादशकपालो भवति द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोति देवताभिरेव देवताः ( ६ ) प्रतिचरति यज्ञेन यज्ञं वाचा वाचं ब्रह्मणा ब्रह्म कपालैरेव छन्दाꣳस्याप्नोति पुरोडाशैः सवनानि[१०] मैत्रावरुणमेककपालं निर्वपेद्वशायै काले यैवासौ भ्रातृव्यस्य वशाऽनूबन्ध्या सो एवैषैतस्यैककपालो भवति न हि कपालैः पशुमर्हत्याप्तुम्[११] ॥ ( ब्रह्मणैवैनमभि चरति, यज्ञो न, तावेवा, -ऽस्येन्द्रिय, -माप्नोति देवताः, सप्तत्रिꣳशच्च ) ॥ ९ ॥

१-५ ब्रह्मवर्चसकामस्य, ६ चर्मरोगभीतस्य, ७ प्रजाकामस्य, ८ अभिचरतः, ९-१० दीर्घरोगयुतस्य, ११ परस्य वैरिजननकामस्य च चरवः ॥

असावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सौमारौद्रं चरुं निरवपन्

तेनैवास्मिन् रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ सौमारौद्रं चरुं निर्वपेत् सोमं चैव रुद्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव भवति[1] तिष्यापूर्णमासे निर्वपेद्रुद्रो (१) वै तिष्यः सोमः पूर्णमासः साक्षादेव ब्रह्मवर्चसमव रुन्धे[2] परिश्रिते याजयति ब्रह्मवर्चसस्य परिगृहीत्यै[3] श्वेतायै श्वेतवत्सायै दुग्धं मथितमाज्यं भवत्याज्यं प्रोक्षणमाज्येन मार्जयन्ते यावदेव ब्रह्मवर्चसं तत् सर्वं करोत्य—ति ब्रह्मवर्चसं क्रियत इत्याहुरीश्वरो दुश्चर्मा भवितोरिति मानवी ऋचौ धाय्ये कुर्याद्यद्वै किं च मनुरवदत् तद्भेषजं (२) भेषजमेवास्मै करोति[5] यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेत् सौम्यो वै देवतया पुरुषः पौष्णाः पशवः स्वयैवास्मै देवतया पशुभिस्त्वचं करोति न दुश्चर्मा भवति[6] सोमारौद्रं चरुं निर्वपेत् प्रजाकामः सोमो वै रेतोधा अग्निः प्रजानां प्रजनयिता सोम एवास्मै रेतो दधात्यग्निः प्रजां प्र जनयति विन्दते (३) प्रजाꣳ[7] सोमारौद्रं चरुं निर्वपेदभिचरन्त्सौम्यो वै देवतया पुरुष एष रुद्रो यदग्निः स्वाया एवैनं देवतायै निष्क्रीय रुद्रायापि दधाति ताजगार्तिमाच्छति[8] सोमारौद्रं चरुं निर्वपेज्ज्योगामयावी सोमं वा एतस्य रसो गच्छत्यग्निꣳ शरीरं यस्य ज्योगामयति सोमादेवास्य रसं निष्क्रीणात्यग्नेः शरीरमुत यदी-(४)-तासुर्भवति जीवत्येव[9] सौमारुद्रयोर्वा एतं ग्रसितꣳ होता निष्खिदति स ईश्वर आर्तिमार्तोरनड्वान् होत्रा देयो वह्निर्वा अनड्वान् वह्निर्होता वह्निनैव वह्निमात्मानꣳ स्पृणोति[10] सोमारौद्रं चरुं निर्वपेद्यः कामयेत स्वेऽस्मा आयतने भ्रातृव्यं जनयेयमिति वेदिं परिगृह्यार्धमुद्धन्यादर्धं नार्धं बर्हिषः स्तृणीयादर्धं (५) नार्धमिध्मस्याभ्यादध्यादर्धं न स्व एवास्मा आयतने भ्रातृव्यं जनयति[11] ॥ ( रुद्रो, भेषजं, विन्दते, यद्य,-र्धं, द्वादश च ) ॥ १० ॥

१ ग्रामकामस्य, २ प्रजाराजयोर्विरोधकामस्य, ३ उक्तविरोधसमाधानेच्छोः, ४ ग्रामकामस्य पुरोडाशाः, ५ ग्रामकामस्य चरुः, ६ समानैरप्रियस्य चरुपुरोडाशाः ॥ विश्वेदेवा ऋषयः ।

ऐन्द्रमेकादशकपालं निर्वपेन्मारुतꣳ सप्तकपालं ग्रामकाम इन्द्रं चैव मरुतश्च स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवत्याहवनीय ऐन्द्रमधि श्रयति गार्हपत्ये मारुतं पापवस्यसस्य विधृत्यै सप्तकपालो मारुतो भवति सप्तगणा वै मरुतो गणश एवास्मै सजातानव रुन्धेऽनूच्यमान आ सादयति विशमेवा-(१)-स्मा अनुवर्त्मानं करोत्य[1]—तामेव निर्वपेद्यः कामयेत क्षत्राय च विशे च समदं दध्यामित्यैन्द्रस्यावद्यन् ब्रूयादिन्द्रायानु ब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावद्यन् ब्रूयान्मरुद्भ्योऽनु ब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यजेति स्व एवैभ्यो भागधेये समदं दधाति वितृꣳहाणास्तिष्ठन्त्ये[2]—तामेव (२) निर्वपेद्यः कामयेत कल्पेरन्निति यथादेवतमवदाय यथादेवतं यजेद्भागधेयेनैवैनान् यथायथं कल्पयति कल्पन्त एवै[3]—न्द्रमेकादशकपालं निर्वपेद्वैश्वदेवं द्वादशकपालं ग्रामकाम इन्द्रं चैव विश्वाꣳश्च देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवत्यैन्द्रस्यावदाय वैश्वदेवस्याव द्येदथैन्द्रस्यो-(३)-परिष्टादिन्द्रियेणैवास्मा उभयतः सजातान् परि गृह्णात्युपाधाय्यपूर्वं वासो दक्षिणा सजातानामुपहित्यै[4] पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः पृश्नियै वै पयसो मरुतो जाताः पृश्नियै प्रियङ्गवो मारुताः खलु वै देवतया सजाता मरुत एव स्वेन भागधेयेनोप धावति

त एवास्मै सजातान् प्र यच्छन्ति ग्राम्येव भवति प्रियवती याज्यानुवाक्ये (४) भवतः प्रियमेवैनम्
समानानां करोति द्विपदा पुरोऽनुवाक्या भवति द्विपद एवाव रुन्धे चतुष्पदा याज्या चतुष्पद एव पशू-
नव रुन्धे[5] देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् ते[1]ऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठ-
मानाश्चतुर्धा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैः स इन्द्रः प्रजापतिमुपाधावत्
त-(५)-मेतया संज्ञान्याऽयाजयदग्नये वसुमते पुरोडाशमष्टाकपालं निरवपत् सोमाय रुद्रवते चरुमिन्द्राय
मरुत्वते पुरोडाशमेकादशकपालं वरुणायाऽऽदित्यवते चरुं ततो वा इन्द्रं देवा ज्यैष्ठ्यायाभि समजानत
यः समानैर्मिथो विप्रियः स्यात् तमेतया संज्ञान्या याजयेदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत् सोमाय
रुद्रवते चरुमिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वरुणाया-(६)-ऽऽदित्यवते चरुमिन्द्रमेवैनं भूतं
ज्यैष्ठ्याय समाना अभि सं जानते वसिष्ठः समानानां भवति[6] ॥ (एवै, वै,-न्द्रस्य, याज्यानुवाक्ये, तं
वरुणाय, चतुर्दश च) ॥ ११ ॥

काम्येष्टियाज्यापुरोनुवाक्याः ॥ ८,१०,१३-१९,२१,२७ त्रिष्टुप्; ७,९,२०,२८-२९गायत्री; ४,२० जगती; ११-१२,२६ अनुष्टुप्; २४ उष्णिक् पदपङ्क्तिर्वा; २५ पंक्तिः । विश्वेदेवा ऋषयः ।

हिरण्यगर्भ[1]*- आपो ह यत्[2]*- प्रजापते[3]*- ॥
स वेद पुत्रः पितरं स मातरं स सूनुर्भुवत् स भुवत् पुनर्मघः ।
स द्यामौर्णोदन्तरिक्षं स सुवः स विश्वा भुवो अभवत् स आऽभवत्[4] ॥
उदु त्यं[5]*- चित्रम्[6]*- ॥
स प्रत्नवन्नवीयसाऽग्ने द्युम्नेन संयता । बृहत् ततन्थ भानुना[7] ॥
नि काव्या वेधसः शश्वतस्कर्हस्ते दधानो (१) नर्या पुरूणि ।
अग्निर्भुवद्रयिपती रयीणां सत्रा चक्राणो अमृतानि विश्वा[8] ॥
हिरण्यपाणिमूतये सवितारमुप ह्वये । स चेत्ता देवता पदम्[9] ॥
वाममद्य सवितर्वाममु श्वो दिवेदिवे वाममस्मभ्यं सावीः ।
वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम[10] ॥
बडित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति मह्ना जिनोषि (२) महिनि[11] ॥
स्तोमासस्त्वा विचारिणि प्रति ष्टोभन्त्यक्तुभिः । प्र या वाजं न हेषन्तं पेरुमस्यस्यर्जुनि[12] ॥
ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यच्छ[13] ॥
आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।
सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः[14] ॥

१ (सं. ४।१।८।१३), २ (सं. ४।१।८।१९), ३ (सं. १।८।१४।१२), ५ (सं. १।४।४३।१), ६ (सं. १।४।४३।२)

*

प्र ( ३ ) सुवानः सोम ऋतयुश्चिकेतेन्द्राय ब्रह्म जमदग्निरर्चन् ।
वृषा यन्तासि शवसस्तुरस्यान्तर्यच्छ गृणते धर्तं दृꣳह[15] ॥
सबाधस्ते मदं च शुष्मयं च ब्रह्म नरो ब्रह्मकृतः सपर्यन् ।
अर्को वा यत् तुरते सोमचक्षास्तत्रेदिन्द्रो दधते पृत्सु तुर्याम्[16] ॥
वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ( ४ ) ।
वर्धन्तु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः[17] ॥
प्र तत् ते अद्य शिपिविष्ट नामार्यः शꣳसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके[18] ॥
किमित् ते विष्णो परिचक्ष्यं भूत् प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ[19] ( ५ ) ॥
अग्ने दा दाशुषे रयिं वीरवन्तं परीणसम् । शिशीहि नः सूनुमतः[20] ॥
दा नो अग्ने शतिनो दाः सहस्रिणो दुरो न वाजꣳ श्रुत्या अपा वृधि ।
प्राची द्यावापृथिवी ब्रह्मणा कृधि सुवर्ण शुक्रमुषसो वि दिद्युतः[21] ॥
अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ।
अग्निर्दिवि हव्यमा ततानाग्नेर्धामानि विभृता पुरुत्रा[22] ॥
मा ( ६ ) नो मर्धीः[23] *–रा तू भर[24] *– ॥
घृतं न पूतं तनूररेपाः शुचि हिरण्यम् । तत् ते रुक्मो न रोचत स्वधावः[25] ॥
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत् पुपूर्या उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर[26] ॥
वायो शतꣳ हरीणां युवस्व पोष्याणाम् । उत वा ते सहस्रिणो रथ आ यातु पाजसा[27] ॥
प्र याभि ( ७ )-र्यासि दाश्वाꣳसमच्छा नियुद्भिर्वायविष्टये दुरोणे ।
नि नो रयिꣳ सुभोजसं युवेह नि वीरवद्गव्यमश्वियं च राधः[28] ॥
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम[29] ॥
रेवाꣳ इद्रेवतः स्तोता स्यात् त्वावतो मघोनः । प्रेदु हरिवः श्रुतस्य[30] ॥
( दधानो, जिनोषि, देभुः प्र हव्यं, बभूथ, मा, याभि, ! -श्चत्वारिꣳशच्च ) ॥ १२ ॥

[ प्रजापति--२३९ ।--रग्नये २५४ । ऽग्नये १८८ । ऽग्नये ४०६ । वैश्वानर--३२९ ।--मादित्य--२३६ ।--मैन्द्र--२५७ ।--मिन्द्राया--३१४ ।--ऽऽग्नावैष्णव-३३७ ।--मसा -२६२।-वैन्द्र ꣳ३१४ । हिरण्यगर्भो ३९० । द्वादश ॥ ३५२६ ]

[ इति द्वितीयकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥ ]

---

२३ ( सं. १।७।१३।७। ), २४ ( १।७।१३।८ )

## इष्टिविधानम् ।

[ अथ तृतीयः प्रपाठकः ॥ ३ ॥ ] विश्वेदेवा ऋषयः ।

१ भूतिकामस्य, २ अपरुद्धस्यापरुद्ध्यमानस्य च चरवः, ३-१३ अपरुद्ध्यमानस्य प्रतिबन्धतारतम्येन प्रयोगविशेषाः ॥

आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम आदित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन् भूतिं न प्राप्नोत्यादित्यानेव भुवद्वतः स्वेन भागधेयेनोप धावति त एवैनं भूतिं गमयन्ति भवत्येवा[1]—ऽऽदित्येभ्यो धारयद्वद्भ्यश्चरुं निर्वपेदपरुद्धो वाऽपरुध्यमानो वाऽऽदित्या वा अपरोद्धार आदित्या अवगमयितार आदित्यानेव धारयद्वतः ( १ ) स्वेन भागधेयेनोप धावति त एवैनं विशि दाध्रत्यनपरुध्यो भवत्य[2]—दितेऽनु मन्यस्वेत्यपरुध्यमानोऽस्य पदमा ददीतेयं वा अदितिरियमेवास्मै राज्यमनु मन्यते[3] सत्याऽऽशीरित्याह सत्यामेवाऽऽशिषं कुरुत[4] इह मन इत्याह प्रजा एवास्मै समनसः करो[5]त्यु—प प्रेत मरुतः ( २ ) सुदानव एना विश्पतिनाऽभ्यमुꣳ राजानमित्याह मारुती वै विड् ज्येष्ठो विश्पतिर्विशैवैनꣳ राष्ट्रेण समर्धयति[6] यः परस्ताद् ग्राम्यवादी स्यात् तस्य गृहाद्व्रीहीनाहरेच्छुक्लाꣳश्च कृष्णाꣳश्च वि चिनुयाद्ये शुक्लाः स्युस्तमादित्यं चरुं निर्वपेदादित्या वै देवतया विड्विशमेवाव गच्छत्य[7] ( ३ ) वगताऽस्य विडनवगतꣳ राष्ट्रमित्याहुर्ये कृष्णाः स्युस्तं वारुणं चरुं निर्वपेद्वारुणं वै राष्ट्रमुभे एव विशं च राष्ट्रं चाव गच्छति[8] यदि नावगच्छेदिममहमादित्येभ्यो भागं निर्वपाम्याऽमुष्मादमुष्यै विशोऽवगन्तोरिति निर्वपेदादित्या एवैनं भागधेयं प्रेप्सन्तो विशमव ( ४ ) गमयन्ति[9] यदि नावगच्छेदाश्वत्थान् मयूखान् सप्त मध्यमेषायामुपहन्यादिदमहमादित्यान् बध्नाम्याऽमुष्मादमुष्यै विशोऽवगन्तोरित्यादित्या एवैनं बद्धवीरा विशमव गमयन्ति[10] यदि नावगच्छेदेतमेवाऽऽदित्यं चरुं निर्वपेदिध्मेऽपि मयूखान्त्सं नह्येदनपरुध्यमेवाव गच्छत्या[11]—श्वत्था भवन्ति मरुतां वा एत-( ५ )-दोजो यदश्वत्थ ओजसैव विशमव गच्छति[12] सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विशमव गच्छति[13] ॥ ( धारयद्वतो, मरुतो, गच्छति, विशमवै,-त,द्दृष्टादश च ॥ १ ॥

१-६ मृत्युभीतस्य, ७-९ ब्रह्मवर्चसकामस्य, १० हिरण्यार्थिनः, ११ हिरण्यं लब्धवतश्चोरादिभीतस्य, १२ विनष्टहिरण्यस्य च इष्टिविशेषाः । ॥ विश्वेदेवा ऋषयः ।

देवा वै मृत्योरबिभयुस्ते प्रजापतिमुपाधावन् तेभ्य एतां प्राजापत्याꣳ शतकृष्णलां निरवपत् तयैवैष्वमृतमदधा[1]—द्यो मृत्योर्बिभीयात् तस्मा एतां प्राजापत्याꣳ शतकृष्णलां निर्वपेत् प्रजापतिमेव स्वेन भागधेयेनोप धावति स एवास्मिन्नायुर्दधाति सर्वमायुरेति[2] शतकृष्णला भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये ( १ ) प्रति तिष्ठति[3] घृते भवत्यायुर्वै घृतममृतꣳ हिरण्यमायुश्चैवास्मा अमृतं च समीची दधाति[4] चत्वारिचत्वारि कृष्णलान्यव द्यति चतुरवत्त् तस्याऽऽप्त्या[5] एकधा ब्रह्मण उप हरत्येकधैव यजमान आयुर्दधात्य[6]—सावादित्यो न व्यरोचत तस्मै देवाः प्रायश्चित्तिमैच्छन् तस्मा एतꣳ सौर्यं चरुं निरवपन् तेनैवास्मिन् ( २ ) रुचमदधुर्यो ब्रह्मवर्चसकामः स्यात् तस्मा एतꣳ सौर्यं चरुं निर्वपेदमुमेवाऽऽदित्यꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् ब्रह्मवर्चसं दधाति ब्रह्मवर्चस्येव भवत्यु[7]—भयतो रुक्मौ भवत उभयत एवास्मिन् रुचं दधाति[8] प्रयाजेप्रयाजे कृष्णलं जुहोति दिग्भ्य एवास्मै ब्रह्मवर्चसमव रुन्ध[9] आग्नेयमष्टाकपालं निर्वपेत् सावित्रं द्वादशकपालं भूम्यै ( ३ ) चरुं यः कामयेत हिरण्यं विन्देय हिरण्यं मोप नमे-

दिति यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दते सावित्रो भवति सवितृप्रसूत एवैनद्विन्दते भूम्यै चरुर्भवत्यस्यामेवैनद्विन्दत उपैनं हिरण्यं नमति[10] वि वा एष इन्द्रियेण वीर्येणर्ध्यते यो हिरण्यं विन्दत एता-( ४ )-मेव निर्वपेद्धिरण्यं वित्त्वा नेन्द्रियेण वीर्येण व्यृध्यत[11] एतामेव निर्वपेद्यस्य हिरण्यं नश्येद्यदाग्नेयो भवत्याग्नेयं वै हिरण्यं यस्यैव हिरण्यं तेनैवैनद्विन्दति सावित्रो भवति सवितृप्रसूत एवैनद्विन्दति भूम्यै चरुर्भवत्यस्यां वा एतन्नश्यति यन्नश्यत्यस्यामेवैनद्विन्दती[12]—न्द्र-( ५ )-स्त्वष्टुः सोममभीषहाऽपिबत् स विष्वङ् व्यार्च्छत् स इन्द्रियेण सोमपीथेन व्यार्ध्यत स यदूर्ध्वमुदवमीत् ते श्यामाका अभवन्त्स प्रजापतिमुपाधावत् तस्मा एतꣳ सौमेन्द्रꣳ श्यामाकं चरुं निरवपत् तेनैवास्मिन्निन्द्रियꣳ सोमपीथमदधा[13]—द्वि वा एष इन्द्रियेण सोमपीथेनर्ध्यते यः सोमं वमिति यः सोमवामी स्यात् तस्मा ( ६ ) एतꣳ सौमेन्द्रꣳ श्यामाकं चरुं निर्वपेत् सोमं चैवेन्द्रं च स्वेन भागधेयेनोप धावति तावेवास्मिन्निन्द्रियꣳ सोमपीथं धत्तो नेन्द्रियेण सोमपीथेन व्यृध्यते[14] यत् सौम्यो भवति सोमपीथमेवाव रुन्धे यदैन्द्रो भवतीन्द्रियं वै सोमपीथ इन्द्रियमेव सोमपीथमव रुन्धे श्यामाको भवत्येष वाव स सोमः ( ७ ) साक्षादेव सोमपीथमव रुन्धे[15] ऽग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेदिन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामोऽग्निरेवास्मै पशून् प्रजनयति वृद्धानिन्द्रः प्र यच्छति[16] दधि मधु घृतमापो धाना भवन्त्येतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे[17] पञ्चगृहीतं भवति पाङ्क्ता हि पशवो बहुरूपं भवति बहुरूपा हि पशवः ( ८ ) समृद्ध्यै[18] प्राजापत्यं भवति प्राजापत्या वै पशवः प्रजापतिरेवास्मै पशून् प्र जनयत्या[19]—त्मा वै पुरुषस्य मधु यन्मध्वग्नौ जुहोत्यात्मानमेव तद्यजमानोऽग्नौ प्र दधाति पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तः पुरुषः पाङ्क्ताः पशव आत्मानमेव मृत्योर्निष्क्रीय पशूनव रुन्धे[20] ॥ ( इन्द्रियें,ऽस्मिन्, भूम्यां, एता, -मिन्द्रः, स्यात् तस्मै, सोमौ, बहुरूपा हि पशव, एकंचत्वारिꣳशच्च ) ॥ २ ॥

१-३ यज्ञविभ्रष्टस्य, ४ कामितार्थसिद्ध्यर्थिनः, ५ ब्रह्मवर्चसार्थिनः, ६ क्लैब्याद्बिभ्यतः, ७ ग्रामकामस्य, ८-९ भ्रातिक्रामतो वैश्यस्य वश्यार्थं च चरुपुरोडाशाः ॥ विश्वेदेवा ऋषयः ।

देवा वै सत्त्रमासतर्द्धिपरिमितं यशस्कामास्तेषाꣳ सोमꣳ राजानं यश आर्च्छत् स गिरिमुदैत् तमग्निरनूदैत् तावग्नीषोमौ समभवतां ताविन्द्रो यज्ञविभ्रष्टोऽनु परैत् तावब्रवीद्याजयतं मेति तस्मा एतामिष्टिं निरवपतामाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं तयैवास्मिन् तेज (१) इन्द्रियं ब्रह्मवर्चसमधत्तां[1] यो यज्ञविभ्रष्टः स्यात् तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालमैन्द्रमेकादशकपालꣳ सौम्यं चरुं यदाग्नेयो भवति तेज एवास्मिन् तेन दधाति यदैन्द्रो भवतीन्द्रियमेवास्मिन् तेन दधाति यत् सौम्यो ब्रह्मवर्चसं तेना[2]—ऽऽग्नेयस्य च सौम्यस्य चैन्द्रे समाश्लेषयेत् तेजश्चैवास्मिन् ब्रह्मवर्चसं च समीची ( २ ) दधात्य[3]—ग्नीषोमीयमेकादशकपालं निर्वपेद्यं कामो नोपनमेदाग्नेयो वै ब्राह्मणः स सोमं पिबति स्वामेव देवताꣳ स्वेन भागधेयेनोप धावति सैवैनं कामेन समर्धयत्युपैनं कामो नमत्य[4]—ग्नीषोमीयमष्टाकपालं निर्वपेद्ब्रह्मवर्चसकामोऽग्नीषोमावेव स्वेन भागधेयेनोप धावति तावेवास्मिन् ब्रह्मवर्चसं धत्तो ब्रह्मवर्चस्येव ( ३ ) भवति यदष्टाकपालस्तेनाऽऽग्नेयो यच्छ्यामाकस्तेन सौम्यः समृद्ध्यै[5] सोमाय वाजिने श्यामाकं चरुं निर्व-

पेद्यः क्लैब्याद्बिभीयाद् रेतो हि वा एतस्माद्वाजिनमपक्रामत्यथैष क्लैब्याद्बिभाय सोममेव वाजिनꣳ स्वेन भागधेयेनोप धावति स एवास्मिन् रेतो वाजिनं दधाति न क्लीबो भवति[6] ब्राह्मणस्पत्यमेकादशकपालं निर्वपेद् ग्रामकामो ( ४ ) ब्रह्मणस्पतिमेव स्वेन भागधेयेनोप धावति स एवास्मै सजातान् प्र यच्छति ग्राम्येव भवति[7] गणवती याज्यानुवाक्ये भवतः सजातैरेवैनं गणवन्तं करोत्ये[8]—तामेव निर्वपेद्यः कामयेत ब्रह्मन् विशं वि नाशयेयमिति[9] मारुती याज्यानुवाक्ये कुर्याद् ब्रह्मन्नेव विशं वि नाशयति[10] ॥ ( तेजः, समीचीं, एव, ग्रामकाम,-स्त्रिचत्वारिꣳशच्च ॥ ३ ॥

१ स्वर्गकामस्य, २ अन्यकर्तृकदानकामस्य, ३ सभां जिगमिषोः, ४-५ अतिनिकृष्टस्य राजन्यस्य, ६ तथाविधस्य ब्राह्मणस्य च इष्टयः ॥ विश्वेदेवा ऋषयः ।

अर्यम्णे चरुं निर्वपेत् सुवर्गकामोऽसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनꣳ सुवर्गं लोकं गमयत्य[1]—र्यम्णे चरुं निर्वपेद्यः कामयेत दानकामा मे प्रजाः स्युरित्यसौ वा आदित्योऽर्यमा यः खलु वै ददाति सोऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवा-( १ )-स्मै दानकामाः प्रजाः करोति दानकामा अस्मै प्रजा भवन्त्य[2]—र्यम्णे चरुं निर्वपेद्यः कामयेत स्वस्ति जनतामियामित्यसौ वा आदित्योऽर्यमाऽर्यमणमेव स्वेन भागधेयेनोप धावति स एवैनं तद्गमयति यत्र जिगमिषती[3]—न्द्रो वै देवानामानुजावर आसीत् स प्रजापतिमुपाधावत् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं नि-( २ )-रवपत् तेनैवैनमग्रं देवतानां पर्यणयद् बुध्नवती अग्रवती याज्यानुवाक्ये अकरोद् बुध्नादेवैनमग्रं पर्यणय[4]—द्यो राजन्य आनुजावरः स्यात् तस्मा एतमैन्द्रमानुषूकमेकादशकपालं निर्वपेदिन्द्रमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं ( ३ ) परि णयत्यानुषूको भवत्येषा ह्येतस्य देवता य आनुजावरः समृद्ध्यै[5] यो ब्राह्मण आनुजावरः स्यात् तस्मा एतं बार्हस्पत्यमानुषूकं चरुं निर्वपेद् बृहस्पतिमेव स्वेन भागधेयेनोप धावति स एवैनमग्रꣳ समानानां परि णयति बुध्नवती अग्रवती याज्यानुवाक्ये भवतो बुध्नादेवैनमग्रं परि णयत्यानुषूको भवत्येषा ह्येतस्य ( ४ ) देवताय आनुजावरः समृद्ध्यै[6] ॥ ( एव नि,- रग्रं, -मेतस्य, चत्वारि च ) ॥ ४ ॥

यक्ष्मगृहीतस्येष्टिः ॥ विश्वेदेवा ऋषयः ।

प्रजापतेस्त्रयस्त्रिꣳशद् दुहितर आसन् ताः सोमाय राज्ञेऽददात् तासाꣳ रोहिणीमुपैत् ता ईर्ष्यन्तीः पुनरगच्छन् ता अन्वैत् ताः पुनरयाचत ता अस्मै न पुनरददात् सोऽब्रवीदृतममीष्व यथा समावच्छ उपैष्याम्यथ ते पुनर्दास्यामीति स ऋतमामीत् ता अस्मै पुनरददात् तासाꣳ रोहिणीमेवोपै-( १ )-त् तं यक्ष्म आर्च्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्योऽविन्दत् तज्जायेन्यस्य य एतमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्मा विन्दन्ति स एता एव नमस्यन्नुपाधावत् ता अब्रुवन् वरं वृणामहै समावच्छ एव न उपाय इति तस्मा एत-( २ )-मादित्यं चरुं निरवपन् तेनैवैनं पापात् स्रामादमुञ्चन्[1] यः पापयक्ष्मगृहीतः स्यात् तस्मा एतमादित्यं चरुं निर्वपेदादित्यानेव स्वेन भागधेयेनोप धावति त एवैनं पापात् स्रामान्मुञ्चन्त्य[2]—मावास्यायां निर्वपेदमुमेवैनमाप्याय्यमानमन्वा प्यायय[3]ति

नवोनवो भवति जायमान इति पुरोऽनुवाक्या भवत्यायुरेवास्मिन् ( ३ ) तया दधाति यमादित्या
अꣳशुमाप्याययन्तीति याज्ययैवैनमेतया प्याययति[४] ॥ ( एवोपै,-त, -मस्मिन्, त्रयोदश च ) ॥ ५ ॥

अन्नादनशक्तिकामस्य त्रिधातुसंज्ञकयागः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिर्देवेभ्योऽन्नाद्यं व्यादिशत् सोऽब्रवीद्यदिमान् लोकानभ्यतिरिच्यातै तन्ममासदिति तदिमान्
लोकानभ्यत्यरिच्यतेन्द्रꣳ राजानमिन्द्रमधिराजमिन्द्रꣳ स्वराजानं ततो वै स इमान् लोकाꣳस्त्रेधाऽदुहत्
तत् त्रिधातोस्त्रिधातुत्वं[१] यं कामयेतान्नादः स्यादिति तस्मा एतं त्रिधातुं निर्वपेदिन्द्राय राज्ञे पुरोडाश
-( १ )-मेकादशकपालमिन्द्रायाधिराजायेन्द्राय स्वराज्ञेऽयं वा इन्द्रो राजाऽयमिन्द्रोऽधिराजोऽसाविन्द्रः
स्वराडिमानेव लोकान्त्स्वेन भागधेयेनोप धावति त एवास्मा अन्नं प्र यच्छन्त्यन्नाद एव भवति यथा
वत्सेन प्रत्तां गां दुह एवमेवेमान् लोकान् प्रत्तान् काममन्नाद्यं दुहे[२] उत्तानेषु कपालेष्वधि श्रयत्ययात-
यामत्वाय[३] त्रयः ( २ ) पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान्
भवत्येवमिव हीमे लोकाः समृद्ध्यै[५] सर्वेषामभिगमयन्नव द्यत्यच्छम्बट्कारं[६] व्यत्यासमन्वाहानिर्दा-
हाय[७] ॥ ( पुरोडाशं, त्रयः, षड्विꣳशतिश्च च ) ॥ ६ ॥

वीर्यकामस्य सर्वपृष्ठाख्येष्टिः, ९ अभिशस्यमानस्य इयमेवेष्टिः ॥ विश्वेदेवा ऋषयः ।

देवासुराः संयत्ता आसन् तान् देवानसुरा अजयन् ते देवाः पराजिग्याना असुराणां वैश्यमुपाऽऽयन्
तेभ्य इन्द्रियं वीर्यमपाक्रामत् तदिन्द्रोऽचायत् तदन्वपाक्रामत् तदवरुधं नाशक्नोत् तदस्मादभ्यर्धोऽचरत्
स प्रजापतिमुपाधावत् तमेतया सर्वपृष्ठयाऽयाजयत् तयैवास्मिन्निन्द्रियं वीर्यमदधा[१]—द्य इन्द्रियकामो ( १ )
वीर्यकामः स्यात् तमेतया सर्वपृष्ठया याजयेदेता एव देवताः स्वेन भागधेयेनोप धावति ता एवास्मिन्नि-
न्द्रियं वीर्यं दधति[२] यदिन्द्राय राथन्तराय निर्वपति यदेवाग्नेस्तेजस्तदेवाव रुन्धे यदिन्द्राय बार्हताय
यदेवेन्द्रस्य तेजस्तदेवाव रुन्धे यदिन्द्राय वैरूपाय यदेव सवितुस्तेजस्त-( २ )-देवाव रुन्धे यदिन्द्राय
वैराजाय यदेव धातुस्तेजस्तदेवाव रुन्धे यदिन्द्राय शाक्वराय यदेव मरुतां तेजस्तदेवाव रुन्धे यदिन्द्राय
रैवताय यदेव बृहस्पतेस्तेजस्तदेवाव रुन्ध एतावन्ति वै तेजाꣳसि तान्येवाव रुन्धे[३] उत्तानेषु कपालेष्वधि
श्रयत्ययातयामत्वाय[४] द्वादशकपालः पुरोडाशो ( ३ ) भवति वैश्वदेवत्वाय[५] समन्तं पर्यवद्यति समन्तमे-
वेन्द्रियं वीर्यं यजमाने दधाति[६] व्यत्यासमन्वाहानिर्दाहाया[७]—श्व ऋषभो वृष्णिर्बस्तः सा दक्षिणा वृष-
त्वायै[८]—तयैव यजेताभिशस्यमान एताश्चेद्वा अस्य देवता अन्नमदन्त्यदन्त्युवेवास्य मनुष्याः[९] ॥ ( इन्द्रियकामः,
सवितुस्तेजस्तत्, पुरोडाशो, ऽष्टात्रिꣳशच्च ) ॥ ७ ॥

चक्षुष्कामस्येष्टिः ॥ विश्वेदेवा ऋषयः ।

रजनो वै कौणेयः क्रतुजितं जानकिं चक्षुर्वन्यमयात् तस्मा एतामिष्टिं निरवपदग्नये भ्राजस्वते पुरो-
डाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाशमष्टाकपालं तयैवास्मिन् चक्षुरदधा[१]—द्यश्चक्षुष्कामः
स्यात् तस्मा एतामिष्टिं निर्वपेदग्नये भ्राजस्वते पुरोडाशमष्टाकपालꣳ सौर्यं चरुमग्नये भ्राजस्वते पुरोडाश-
मष्टाकपालमग्नेर्वै चक्षुषा मनुष्या वि ( १ ) पश्यन्ति सूर्यस्य देवा अग्निं चैव सूर्यं च स्वेन भागधेयेनोप
धावति तावेवास्मिन् चक्षुर्धत्तश्चक्षुष्मानेव भवति[२] यदाग्नेयौ भवतश्चक्षुषी एवास्मिन् तत् प्रति दधाति

यत् सौर्यौ नासिकां तेनाभितः सौर्यमाग्नेयौ भवतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते[3] समानी याज्यानुवाक्ये भवतः समानꣳ हि ( २ ) चक्षुः समृद्ध्यै[4] उदु त्यं जातवेदसꣳ सप्त त्वा हरितो रथे चित्रं देवानामुदगादनीकमिति पिण्डान् प्र यच्छति चक्षुरेवास्मै प्र यच्छति यदेव तस्य तत्[5] ॥ ( वि, ह्यं,-ष्टाविꣳशतिश्च ) ॥ ८ ॥

ग्रामकामस्य सांग्रहणीष्टिः ॥ विश्वेदेवा ऋषयः ।

ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासं धीरश्चेत्ता वसुविद् ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमुग्रश्चेत्ता वसुविद् ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमभिभूश्चेत्ता वसुवि[3]दामनमस्यामनस्य देवा ये सजाताः*-- --*कुमाराः समनसस्तानहं कामये हृदा ते मा कामयन्ताꣳ हृदा तान् म आमनसः कृधि स्वाहा ऽऽमनमस्या-( १ )-मनस्य देवा याः स्त्रियः समनसस्ता अहं कामये हृदा ता मा कामयन्ताꣳ हृदा ता म आमनसः कृधि स्वाहा[6] वैश्वदेवीꣳ सांग्रहणीं निर्वपेद्ग्रामकामो वैश्वदेवा वै सजाता विश्वानेव देवान्त्स्वेन भागधेयेनोप धावति त एवास्मै स जातान् प्र यच्छन्ति ग्राम्येव भवति[7] सांग्रहणी भवति मनोग्रहणं वा एतत् ग्रहणं मन एव सजातानाम् ( २ ) गृह्णाति[8] ध्रुवोऽसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परि दधात्याशिषमेवैतामा शास्तेऽथो एतदेव सर्वꣳ सजातेष्वधि भवति यस्यैवं विदुष एते परिधयः परिधीयन्त[9] आम नमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोत्येतावन्तो वै सजाता ये महान्तो ये क्षुल्लका याः स्त्रियस्तानेवाव रुन्धे ( ३ ) त एनमवरुद्धा उप तिष्ठन्ते[10] ॥ ( असि, सजातानाꣳ, रुन्धे पञ्च च ) ॥ ९ ॥

आयुष्कामेष्टिमन्त्राः ॥ ६ प्रस्तारपङ्क्तिः १० त्रिष्टुप् । विश्वेदेवा ऋषयः ।

यन्नवमैत् तन्नवनीतमभवद्यदसर्पत् तत् सर्पिरभवद्यदध्रियत तद् घृत[1]मभवदश्विनोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहे[2]न्द्रस्य प्राणोऽसि तस्य ते ददातु यस्य प्राणोऽसि स्वाहा[3] मित्रावरुणयोः प्राणोऽसि तस्य ते दत्तां ययोः प्राणोऽसि स्वाहा[4] विश्वेषां देवानां प्राणोऽसि ( १ ) तस्य ते ददतु येषां प्राणोऽसि स्वाहा[5]

घृतस्य धारामृमृतस्य पन्थामिन्द्रेण दत्तां प्रयतां मरुद्भिः ।
तत् त्वा विष्णुः पर्यपश्यत् तत् त्वेडा गव्यैरयत्[6] ॥

पावमानेन त्वा स्तोमेन गायत्रस्य वर्तन्योपाꣳशो वीर्येण देवस्त्वा सवितोत् सृजतु जीवातवे जीवनस्यायै[7] बृहद्रथन्तरयोस्त्वा स्तोमेन त्रिष्टुभो वर्तन्या शुक्रस्य वीर्येण देवस्त्वा सवितोत् ( २ ) सृजतु जीवातवे जीवनस्यायै[8] अग्नेस्त्वा मात्रया जगत्यै वर्तन्याऽऽग्रयणस्य वीर्येण देवस्त्वा सवितोत् सृजतु जीवातवे जीवनस्यायै[9]

इममग्न आयुषे वर्चसे कृधि प्रियꣳ रेतो वरुण सोम राजन् ।

( ९४ ) -*समं... स्वाहा; ( ९५ ) -*आनमस्य... ये

मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत् ॥

अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान् तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि[११] सोम आयुष्मान् (३) स ओषधीभिर्[१२]—*— यज्ञ आयुष्मान्त्स दक्षिणाभिर्[१३]—*— ब्रह्माऽऽयुष्मत् तद्ब्राह्मणैरायुष्मद्[१४]*— देवा आयुष्मन्तस्तेऽमृतेन[१५]*-- पितर आयुष्मन्तस्ते स्वधयाऽऽयुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि[१६] ॥ ( अस्यु,-दा,--युष्मान्, पञ्चत्रिंशच्च ) ॥ १० ॥

आयुरारोग्यकामयोरिष्टिः ॥ विश्वेदेवा ऋषयः ।

अग्निं वा एतस्य शरीरं गच्छति सोमꣳ रसो वरुण एनं वरुणपाशेन गृह्णाति सरस्वतीं वागग्नाविष्णू आत्मा यस्य ज्योगामयति[१] यो ज्योगामयावी स्याद्यो वा कामयेत सर्वमायुरियामिति तस्मा एतामिष्टिं निर्वपेदाग्नेयमष्टाकपालꣳ सौम्यं चरुं वारुणं दशकपालꣳ सारस्वतं चरुमाग्नावैष्णवमेकादशकपालमग्नेरेवास्य शरीरं निष्क्रीणाति सोमाद्रसम् (१) वारुणेनैवैनं वरुणपाशान्मुञ्चति सारस्वतेन वाचं दधात्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताभिश्चैवैनं यज्ञेन च भिषज्यत्युत यदीतासुर्भवति जीवत्येव[२] यन्नवमैत् तन्नवनीतमभवदित्याज्यमवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे[३] ऽश्विनोः प्राणोऽसीत्याहाश्विनौ वै देवानां (२) भिषजौ ताभ्यामेवास्मै भेषजं करोतीन्द्रस्य प्राणोऽसीत्याहेन्द्रियमेवास्मिन्नेतेन दधाति मित्रावरुणयोः प्राणोऽसीत्याह प्राणापानावेवास्मिन्नेतेन दधाति विश्वेषां देवानां प्राणोऽसीत्याह वीर्यमेवास्मिन्नेतेन दधाति[४] घृतस्य धारामृतस्य पन्थामित्याह यथायजुरेवैतत्[५] पावमानेन त्वा स्तोमेनेत्या-(३) -ह प्राणमेवास्मिन्नेतेन दधाति बृहद्रथन्तरयोस्त्वा स्तोमेनेत्याहौज एवास्मिन्नेतेन दधात्यग्नेस्त्वा मात्रयेत्याहाऽऽत्मानमेवास्मिन्नेतेन दधात्यृ[६]—त्विजः पर्याहुर्यावन्त एवर्त्विजस्त एनं भिषज्यन्ति[७] ब्रह्मणो हस्तमन्वारभ्य पर्याहुरेकधैव यजमान आयुर्दधति यदेव तस्य त—द्धिरण्यात् (४) घृतं निष्पिबत्यायुर्वै घृतममृतꣳ हिरण्यममृतादेवाऽऽयुर्निष्पिबति[८] शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठत्यथो खलु यावतीः समा एष्यन् मन्येत तावन्मानꣳ स्यात् समृद्ध्यै[९] इममग्न आयुषे वर्चसे कृधीत्याहाऽऽयुरेवास्मिन् वर्चो दधाति विश्वे देवा जरदष्टिर्यथाऽसदित्या-(५)-ह जरदष्टिमेवैनं करोत्य[१०]—ग्निरायुष्मानिति हस्तं गृह्णात्येते वै देवा आयुष्मन्तस्त एवास्मिन्नायुर्दधति सर्वमायुरेति[११] ॥ ( रसं, देवानाꣳ, स्तोमेनेति, हिरण्या,--दसदिति द्वाविꣳशतिश्च ) ॥ ११ ॥

अश्वदानवतो वारुणीष्टिः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्छत् स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत् तं निरवपत् ततो वै स वरुणपाशादमुच्यत[१] वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेद्वरुणमेव स्वेन भागधेयेनोप धावति स एवैनं वरुणपाशान्मुञ्चति[२] (१) चतुष्कपाला भवन्ति चतुष्पाद्ध्यश्वः समृद्ध्यै[३] एकमतिरिक्तं निर्वपेद्यमेव प्रतिग्राही भवति यं वा नाध्येति तस्मादेव वरुणपाशान्मुच्यते[४] यद्यपरं प्रतिग्राही स्यात् सौर्यमेककपालमनु निर्वपेदमुमेवाऽऽदित्यमुच्चारं कुरुते[५] ऽपोऽवभृथमवैत्यप्सु वै वरुणः साक्षादेव वरुणमव यजते[६]

( १० । १२-१५ ) *- आयुष्मान्...करोमि ।

ऽपोनप्त्रीयं चरुं ( २ ) पुनरेत्य निर्वपेदप्सुयोनिर्वा अश्वः स्वामेवैनं योनिं गमयति स एनꣳ शान्त उप तिष्ठते[७] ॥ ( मुञ्चति, चरुꣳ, सप्तदश च ) ॥ १२ ॥

पाप्मना गृहीतस्येष्टिः ७ विश्वेदेवा ऋषयः ।

या वामिन्द्रावरुणा यतव्या तनूस्तयेममꣳहसो मुञ्चतं[१] या वामिन्द्रावरुणा सहस्या[२]*- -*रक्षस्या[३]*- -* तेजस्या तनूस्तयेममꣳहसो मुञ्चतं[४] यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यजे[५] यो वामिन्द्रावरुणा द्विपात्सु पशुषु[६]*- -*चतुष्पात्सु[७]*- -*गोष्ठे[८]*- -*गृहेष्व[९]*- -*प्स्वो[१०]*- -*षधीषु[११]*- -*वनस्पतिषु स्रामस्तं वामेतेनाव यजे[१२] इन्द्रो वा एतस्यै-( १ )-न्द्रियेणाप क्रामति वरुण एनं वरुणपाशेन गृह्णाति यः पाप्मना गृहीतो भवति यः पाप्मना गृहीतः स्यात् तस्मा एतामैन्द्रावरुणीं पयस्यां निर्वपेदिन्द्र एवास्मिन्निन्द्रियं दधाति वरुण एनं वरुणपाशान्मुञ्चति[१३] पयस्या भवति पयो हि वा एतस्मादपक्रामत्यथैष पाप्मना गृहीतो यत् पयस्या भवति पय एवास्मिन् तया दधाति[१४] पयस्यायां ( २ ) पुरोडाशमव दधात्यात्मन्वन्तमेवैनं करोत्यथो आयतनवन्तमेव चतुर्धा व्यूहति दिक्ष्वेव प्रति तिष्ठति[१६] पुनः समूहति दिग्भ्य एवास्मै भेषजं करोति[१७] समूह्याव द्यति यथाऽऽविद्धं निष्कृन्तति तादृगवे तत्—द्यो वामिन्द्रावरुणावग्नौ स्रामस्तं वामेतेनाव यज इत्याह दुरिष्ट्या एवैनं पाति[१९] ( ३ ) यो वामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनाव यज इत्याहैतावतीर्वा आप ओषधयो वनस्पतयः प्रजाः पशव उपजीवनीयास्ता एवास्मै वरुणपाशान्मुञ्चति[२०] ॥ ( एतस्यै, पयस्यायां, पाति, षड्विꣳशतिश्च ) ॥ १३ ॥

काम्या याज्यापुरोनुवाक्याः ॥ त्रिष्टुप्; ५,७ गायत्री; ९ अनुष्टुप्; १४-१५ जगती। विश्वेदेवा ऋषयः ।

स प्रत्नव*-न्नि काव्ये[२]*-न्द्रं वो विश्वतस्परी[३]*-न्द्रं नरः[४] *- ॥
त्वं नः सोम विश्वतो रक्षा राजन्नघायतः । न रिष्येत् त्वावतः सखा[५] ॥
या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ॥
तेभिर्नो विश्वैः सुमना अहेडन् राजन्त्सोम प्रति हव्या गृभाय[६] ॥
अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥
युवमे--( १ )--तानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तम् ॥
युवꣳ सिन्धूꣳरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान् ॥
अग्नीषोमाविमꣳ सु मे शृणुतं वृषणा हवम् ।
प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः[९] ॥
आऽन्यं दिवो मातरिश्वा जभाराऽमथ्नादन्यं परि श्येनो अद्रेः ।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकम्[१०] ॥

( १३।२-३ ) तनू...मुञ्चतं; ( १३।६-११ ) स्राम...यजे; ( १३।७-१२ )--* यो वा...रुणा । ( १४।१-२ ) ( तै. सं. २।२।१२।७-८ ); ( १४।३-४ ) ( तै. सं. १।६।१२।१-२ )

❀

अग्नीषोमा हविषः प्रस्थितस्य वीतꣳ (२) हर्यतं वृषणा जुषेथाम् ।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः[11] ॥
आ प्यायस्व[12]*- सं ते[13] *- ॥
गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम्[14] ।
स इज्जनेन स विशा स जन्मना स पुत्रैर्वाजं भरते धना नृभिः ।
देवानां यः पितरमाविवासति (३) श्रद्धामना हविषा ब्रह्मणस्पतिम्[15] ॥
स सुष्टुभा स ऋक्वता गणेन वलꣳ रुरोज फलिगꣳ रवेण ।
बृहस्पतिरुस्रिया हव्यसूदः कनिक्रदद्वावशतीरुदाजत्[16] ॥
मरुतो यद्ध वो दिवः[17] *- या वः शर्म[18] *-
अर्यमाऽऽयाति वृषभस्तुविष्मान् दाता वसूनां पुरुहूतो अर्हन् ।
सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं दधातु[19] ॥
ये तेऽर्यमन् बहवो देवयानाः पन्थानो (४) राजन् दिव आचरन्ति ।
तेभिर्नो देव महि शर्म यच्छ शं न एधि द्विपदे शं चतुष्पदे[20] ॥
बुध्नादग्रमङ्गिरोभिर्गृणानो वि पर्वतस्य दृꣳहितान्यैरत् ।
रुजद्रोधाꣳसि कृत्रिमाण्येषाꣳ सोमस्य ता मद इन्द्रश्चकार[21] ।
बुध्नादग्रेण वि मिमाय मानैर्वज्रेण खान्यतृणन्नदीनाम् ।
वृथाऽसृजत् पथिभिर्दीर्घयाथैः सोमस्य ता मद इन्द्रश्चकार[22] (५) ॥
प्र यो जज्ञे विद्वाꣳ अस्य बन्धुं विश्वानि देवो जनिमा विवक्ति ।
ब्रह्म ब्रह्मण उज्जभार मध्यान्नीचादुच्चा स्वधयाऽभि प्र तस्थौ[23] ॥
महान् मही अस्तभायद्वि जातो द्याꣳ सद्म पार्थिवं च रजः ।
स बुध्नादाष्ट जनुषाऽभ्यग्रं बृहस्पतिर्देवता यस्य सम्राट्[24] ॥
बुध्नाद्यो अग्रमभ्यर्त्योजसा बृहस्पतिमा विवासन्ति देवाः (६) ।
भिनद्वलं वि पुरो दर्दरीति कनिक्रदत् सुवरपो जिगाय[25] ॥

( युवं, वीतं, विवासति, पन्थान,-श्चकार, देवा, नव च ) ॥ १४ ॥

आदित्येभ्यो २६८ । देवा ४४१ । देवा २४३ । अर्यम्णे २०४ । प्रजापतेः १६३ । प्रजापति–१२६ । –दैवासुरा १८८ । रजनो १२८ । ध्रुवो १५५ । य–१७५ ।–दुम्नि २७२ । प्रजापति– ११७ ।–र्या १७६ । स ३०९ । चतुर्दश ॥ २५६५ ॥

[ इति द्वितीयकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥ ]

---

१४ । १२–१३ (तै. सं. ४।२।७।१२-१३); १४ । १७–१८ (तै. सं. १।५।११।१५-१६)

## इष्टिविधानम् ।

[ अथ चतुर्थः प्रपाठकः ॥ ४ ॥ ]

भ्रातृव्यैः स्पर्धमानस्येष्टिः ॥

देवा मनुष्याः पितरस्तेऽन्यत आसन्नसुरा रक्षाꣳसि पिशाचास्तेऽन्यतस्तेषां देवानामुत यदल्पं लोहितमकुर्वन् तद्रक्षाꣳसि रात्रीभिरसुभ्नन् तान्त्सुब्धान् मृतानभि व्यौच्छत् ते देवा अविदुर्यो वै नोऽयं म्रियते रक्षाꣳसि वा इमं घ्नन्तीति ते रक्षाꣳस्युपामन्त्रयन्त तान्यब्रुवन् वरं वृणामहै य-( १ )-दसुरान् जयाम तन्नः सहासदिति ततो वै देवा असुरानजयन् तेऽसुरान् जित्वा रक्षाꣳस्यपानुदन्त तानि रक्षाꣳस्यनृतमकर्तेति समन्तं देवान् पर्यविशन् ते देवा अग्नावनाथन्त तेऽग्नये प्रवते पुरोडाशमष्टाकपालं निरवपन्नग्नये विबाधवतेऽग्नये प्रतीकवते यदग्नये प्रवते निरवपन् यान्येव पुरस्ताद्रक्षाꣳस्या-( २ )-सन् तानि तेन प्राणुदन्त यदग्नये विबाधवते यान्येवाभितो रक्षाꣳस्यासन् तानि तेन व्यबाधन्त यदग्नये प्रतीकवते यान्येव पश्चाद्रक्षाꣳस्यासन् तानि तेनापानुदन्त ततो देवा अभवन् पराऽसुरा[1] यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये प्रवते पुरोडाशमष्टाकपालं निर्वपेदग्नये विबाधवते ( ३ ) ऽग्नये प्रतीकवते यदग्नये प्रवते निर्वपति य एवास्माच्छ्रेयान् भ्रातृव्यस्तं तेन प्र णुदते यदग्नये विबाधवते य एवैनेन सदृङ् तं तेन वि बाधते यदग्नये प्रतीकवते य एवास्मात् पापीयान् तं तेनाप नुदते[2] प्र श्रेयाꣳसं भ्रातृव्यं नुदतेऽति सदृशं क्रामति नैनं पापीयानाप्नोति य एवं ( ४ ) विद्वानेतयेष्ट्या यजते[3] ॥ ( य,- द्रक्षाꣳसि, विबाधवत, एवं, चत्वारि च । ॥ १ ॥

भ्रातृव्यवतः स्पर्धमानस्य विजितीष्टिः ॥ विश्वेदेवा ऋषयः ।

देवासुराः संयत्ता आसन् ते देवा अब्रुवन् यो नो वीर्यावत्तमस्तमनु समारभामहा इति इन्द्रमब्रुवन् त्वं वै नो वीर्यावत्तमोऽसि त्वामनु समारभामहा इति सोऽब्रवीत् तिस्रो म इमास्तनुवो वीर्यावतीस्ताः प्रीणीताथासुरानभि भविष्यथेति ता वै ब्रूहीत्यब्रुवन्नियमꣳहोमुगियं विमृधेयमिन्द्रियावती-( १ )-त्यब्रवीत् त इन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निरवपन्निन्द्राय वैमृधायेन्द्रायेन्द्रियावते यदिन्द्रायाꣳहोमुचे निरवपन्नꣳहस एव तेनामुच्यन्त यदिन्द्राय वैमृधाय मृध एव तेनापाघ्नत यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन्नदधत त्रयस्त्रिꣳशत्कपालं पुरोडाशं निरवपन् त्रयस्त्रिꣳशद्वै देवतास्ता इन्द्र आत्मन्ननु समारम्भयत भूत्यै ( २ ) तां वाव देवा विजितिमुत्तमामसुरैर्व्यजयन्त[1] यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेतेन्द्रायाꣳहोमुचे पुरोडाशमेकादशकपालं निर्वपेदिन्द्राय वैमृधायेन्द्रायेन्द्रियावतेऽꣳहसा वा एष गृहीतो यस्माच्छ्रेयान् भ्रातृव्यो यदिन्द्रायाꣳहोमुचे निर्वपत्यꣳहस एव तेन मुच्यते मृधा वा एषोऽभिषण्णो यस्मात् समानेष्वन्यः श्रेयानुता-( ३ )- भ्रातृव्यो यदिन्द्राय वैमृधाय मृध एव तेनाप हते यदिन्द्रायेन्द्रियावत इन्द्रियमेव तेनाऽऽत्मन् धत्ते त्रयस्त्रिꣳशत्कपालं पुरोडाशं निर्वपति त्रयस्त्रिꣳशद्वै देवतास्ता एव यजमान आत्मन्ननु समारम्भयते भूत्यै[2] सा वा एषा विजितिर्नामेष्टिर्य एवं विद्वानेतयेष्ट्या यजत उत्तमामेव विजितिं भ्रातृव्येण वि जयते ॥ ( इन्द्रियावती, भूत्या, उतै,--कान्नपञ्चाशच्च ) ॥२॥

भ्रातृव्यवतः स्पर्धमानस्य संवर्गेष्टिः ॥ विश्वेदेवा ऋषयः ।

देवासुराः संयत्ता आसन् तेषां गायत्र्योजो बलमिन्द्रियं वीर्यं प्रजां पशून्त्संगृह्याऽऽदायापक्रम्यातिष्ठत् तेऽमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तां व्यह्वयन्त विश्वकर्मन्निति देवा दाभी-त्यसुराः सा नान्यतराꣳश्चनोपावर्तत ते देवा एतद्यजुरपश्यन्—

ओजोऽसि सहोऽसि बलमसि ( १ ) भ्राजोऽसि देवानां धाम

नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभू—

रिति वाव देवा असुराणामोजो बलमिन्द्रियं वीर्यं प्रजां पशूनवृञ्जत यद्गायत्र्यपक्रम्यातिष्ठत् तस्मा-देतां गायत्रीतीष्टिमाहुः संवत्सरो वै गायत्री संवत्सरो वै तदपक्रम्यातिष्ठद्यदेतया देवा असुराणामोजो बलमिन्द्रियं वीर्यं ( २ ) प्रजां पशूनवृञ्जत तस्मादेताꣳ संवर्ग इतीष्टिमाहु—र्यो भ्रातृव्यवान्त्स्यात् स स्पर्धमान एतयेष्ट्या यजेताग्नये संवर्गाय पुरोडाशमष्टाकपालं निर्वपेत् तꣳ शृतमासन्नमेतेन यजुषाऽभि मृशेदोज एव बलमिन्द्रियं वीर्यं प्रजां पशून् भ्रातृव्यस्य वृङ्क्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[६] ॥

( असि, वीर्यं, पञ्चचत्वारिꣳशच्च ) ॥ ३ ॥

प्रजाकामस्य पशुकामस्य च गार्मुतश्चरुः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिः प्रजा असृजत ता अस्मात् सृष्टाः पराचीरायन् ता यत्रावसन् ततो गर्मुदुदतिष्ठत् ता बृहस्पतिश्चान्ववैताꣳ सोऽब्रवीद् बृहस्पतिरनया त्वा प्रतिष्ठान्यथ त्वा प्रजा उपावर्त्स्यन्तीति तं प्रातिष्ठत् ततो वै प्रजापतिं प्रजा उपावर्तन्त यः प्रजाकामः स्यात् तस्मा एतं प्राजापत्यं गार्मुतं चरुं निर्वपेत् प्रजापति-( १ )-मेव स्वेन भागधेयेनोप धावति स एवास्मै प्रजां प्र जनयति[२] प्रजापतिः पशूनसृजत तेऽस्मात् सृष्टाः पराञ्च आयन् ते यत्रावसन् ततो गर्मुदुदतिष्ठत् तान् पूषा चान्ववैताꣳ सोऽब्रवीत् पूषा-ऽनया मा प्र तिष्ठाथ त्वा पशव उपावर्त्स्यन्तीति मां प्र तिष्ठेति सोमोऽब्रवीन्मम वा ( २ ) अकृष्टपच्य-मित्युभौ वां प्र तिष्ठानीत्यब्रवीत् तौ प्रातिष्ठत् ततो वै प्रजापतिं पशव उपावर्तन्त[३] यः पशुकामः स्यात् तस्मा एतꣳ सौमापौष्णं गार्मुतं चरुं निर्वपेत् सोमापूषणावेव स्वेन भागधेयेनोप धावति तावेवास्मै पशून् प्र जनयतः सोमो वै रेतोधाः पूषा पशूनां प्रजनयिता सोम एवास्मै रेतो दधाति पूषा ( ३ ) पशून् प्र जनयति[४] ॥ ( वपेत् प्रजापतिं, वै, पूषा, त्रीणि च ) ॥ ४ ॥

चित्रायागोपहोममन्त्राः ॥ गायत्री, ५ उपरिष्टाद्बृहती । विश्वेदेवा ऋषयः ।

अग्ने गोभिर्न आ गहीन्दो पुष्ट्या जुषस्व नः । इन्द्रो धर्ता गृहेषु नः ॥

सविता यः सहस्रियः स नो गृहेषु रारणत् । आ पूषा एत्वा वसु[२] ॥

धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत्[३] ॥

त्वष्टा यो वृषभो वृषा स नो गृहेषु रारणत् । सहस्रेणायुतेन च[४] ॥

येन देवा अमृतं ( १ ) दीर्घꣳ श्रवो दिव्यैरयन्त ।

रायस्पोष त्वमस्मभ्यं गवां कुल्मिं जीवस आ युवस्व ॥

अग्निर्गृहपतिः सोमो विश्ववनिः सविता सुमेधाः स्वाहा[६] ॥

अग्ने गृहपते यस्ते घृत्यो भागस्तेन सह ओज आक्रममाणाय धेहि श्रैष्ठ्यात् पथो मा योषं मूर्धा भूयासꣳ स्वाहा[७] ॥ (अमृतं,-सप्तत्रिꣳशच्च) ॥ ५ ॥

पशुकामस्य चित्राख्यो यागः ॥ विश्वेदेवा ऋषयः ।

चित्रया यजेत पशुकाम इयं वै चित्रा यद्वा अस्यां विश्वं भूतमधि प्रजायते तेनेयं चित्रा य एवं विद्वा-ꣳश्चित्रया पशुकामो यजते प्र प्रजया पशुभिर्मिथुनैर्जायते[१] प्रैवाऽऽग्नेयेन वापयति रेतः सौम्येन दधाति रेत एव हितं त्वष्टा रूपाणि वि करोति सारस्वतौ भवत एतद्वै दैव्यं मिथुनं दैव्यमेवास्मै (१) मिथुनं मध्यतो दधाति पुष्ट्यै प्रजननाय सिनीवाल्यै चरुर्भवति वाग्वै सिनीवाली पुष्टिः खलु वै वाक् पुष्टिमेव वाचमुपैत्यैन्द्र उत्तमो भवति तेनैव तन्मिथुनꣳ सप्तैतानि हवीꣳषि भवन्ति सप्त ग्राम्याः पशवः सप्ता-ऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुध्या अथैता आहुतीर्जुहोत्येते वै देवाः पुष्टिपतयस्त एवा-(२)-स्मिन् पुष्टिं दधति पुष्यति प्रजया पशुभिरथो यदेता आहुतीर्जुहोति प्रतिष्ठित्यै[४] ॥ (अस्मै, त एव, द्वादश च) ॥ ६ ॥

कारीरीष्टिप्राच्याङ्गमन्त्राः ॥ २ त्रिष्टुप्, ११ पङ्क्तिः । विश्वेदेवा ऋषयः ।

मारुतमसि मरुतामोजोऽपां धारां भिन्धि
रमयत मरुतः श्येनमायिनं मनोजवसं वृषणꣳ सुवृक्तिम् ॥
येन शर्ध उग्रमवसृष्टमेति तदश्विना परि धत्तꣳ स्वस्ति ।

पुरोवातो वर्षन् जिन्वरावृत् स्वाहा[३] वातावद्वर्षन्नुग्ररावृत् स्वाहा[४] स्तनयन् वर्षन् भीमरावृत् स्वाहा[५] ऽनशन्यवस्फूर्जन् दिद्युद्वर्षन् त्वेषरावृत् स्वाहा[६] ऽतिरात्रं वर्षन् पूर्तिरावृत् (१) स्वाहा[७] बहु हायमवृषादिति श्रुतरावृत् स्वाहा[८] ऽऽतपति वर्षन् विराडावृत् स्वाहा[९] ऽवस्फूर्जन् दिद्युद्वर्षन् भूतरावृत् स्वाहा[१०] मान्दा वाशाः शुन्ध्यूरजिराः ।
ज्योतिष्मतीस्तमस्वरीरुन्दतीः सुफेनाः । मित्रभृतः क्षत्रभृतः सुराष्ट्रा इह माऽवत[११] ॥
वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामि[१२] ॥ (पूर्तिरावृद्, द्विचत्वारिꣳशच्च) ॥ ७ ॥

कारीर्युत्तरभागमन्त्राः ॥ १-२ विषमपदाबृहती, ३ विषमपदापङ्क्तिः, ४ गायत्री, ५ सतःपङ्क्तिः, ६ जगती, ७ द्विपदा विराट् गायत्री, ८ द्विपदा गायत्री, ९ अनुष्टुप्, १० विराण्महापङ्क्तिः । विश्वेदेवा ऋषयः ।

देवा वसव्या अग्ने सोम सूर्य[१] ॥ देवाः शर्मण्या मित्रावरुणाऽर्यमन्[२] ॥
देवाः सपीतयोऽपां नपादाशुहेमन् ।
उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽवत[३] ॥
दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन । पृथिवीं यद् व्युन्दन्ति[४] ॥
आ यं नरः सुदानवो ददाशुषे दिवः कोशमचुच्यवुः ।
वि पर्जन्याः सृजन्ति रोदसी अनु धन्वना यन्ति (१) वृष्टयः[५] ।
उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः ।

न वो दस्रा उप दस्यन्ति धेनवः शुभं यातामनु रथा अवृत्सत[६] ॥
सृजा वृष्टिं दिव आऽद्भिः समुद्रं पृण[७] ॥
अब्जा असि प्रथमजा बलमसि समुद्रियम्[८] ॥
उन्नम्भय पृथिवीं भिन्द्धीदं दिव्यं नभः ।
उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्[९] ॥
ये देवा ( २ ) दिविभागा येऽन्तरिक्षभागा ये पृथिविभागाः ।
त इमं यज्ञमवन्तु त इदं क्षेत्रमा विशन्तु त इदं क्षेत्रमनु वि विशन्तु[१०] ॥
( यन्ति, देवा, विंशतिश्च ) ॥ ८ ॥

कारीरीपूर्वभागविधानम् ॥ विश्वेदेवा ऋषयः ।

मारुतमसि मरुतामोज इति कृष्णं वासः कृष्णतूषं परि धत्त एतद्वै वृष्ट्यै रूपꣳ सरूप एव भूत्वा पर्जन्यं वर्षयति[१] रमयत मरुतः श्येनमायिनमिति पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति वर्षस्यावरुद्ध्यै[२] वातनामानि जुहोति वायुर्वै वृष्ट्या ईशे वायुमेव स्वेन भागधेयेनोप धावति स एवास्मै पर्जन्यं वर्षयत्य[३]ष्टौ ( १ ) जुहोति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव वृष्टिꣳ सं प्र च्यावयति[४] कृष्णाजिने सं यौति हविरेवाक[५]र्न्तर्वेदि यं यौत्यवरुद्ध्यै[६] यतीनामद्यमानानाꣳ शीर्षाणि पराऽपतन् ते खर्जूरा अभवन् तेषाꣳ रस ऊर्ध्वोऽपतत् तानि करीराण्यभवन्त्सौम्यानि वै करीराणि सौम्या खलु वा आहुतिर्दिवो वृष्टिं च्यावयति[७] यत् करीराणि भवन्ति ( २ ) सौम्ययैवाऽऽहुत्या दिवो वृष्टिमव रुन्धे[८] मधुषा सं यौत्यपां वा एष ओषधीनाꣳ रसो यन्मध्वद्भ्य एवौषधीभ्यो वर्षत्यथो अद्भ्य एवौषधीभ्यो वृष्टिं नि नयति[९] मान्दा वाशा इति सं यौति नामधेयैरेवैना अच्छैत्यथो यथा ब्रूयादसावेहीत्येवमेवैना नामधेयैरा ( ३ ) च्यावयति[१०] वृष्णो अश्वस्य संदानमसि वृष्ट्यै त्वोप नह्यामीत्याह वृषा वा अश्वो वृषा पर्जन्यः कृष्ण इव खलु वै भूत्वा वर्षति रूपेणैवैनꣳ समर्धयति वर्षस्यावरुद्ध्यै[११] ॥
( अष्टौ, भवन्ति, नामधेयैरे,--कान्नत्रिꣳशच्च ) ॥ ९ ॥

कारीर्युत्तरभागविधानम् ॥ विश्वेदेवा ऋषयः ।

देवा वसव्या देवाः शर्मण्या देवाः सपीतय इत्या बध्नाति देवताभिरेवान्वहं वृष्टिमिच्छति[१] यदि वर्षेत् तावत्येव होतव्यं यदि न वर्षेच्छ्वो भूते हविर्निर्वपे[२]दहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति नक्तं वा हि दिवा वा वर्षति मित्रावरुणावेव स्वेन भागधेयेनोप धावति तावेवास्मा ( १ ) अहोरात्राभ्यां पर्जन्यं वर्षयतो[३] ऽग्नये धामच्छदे पुरोडाशमष्टाकपालं निर्वपेन्मारुतꣳ सप्तकपालꣳ सौर्यमेककपालमग्निर्वा इतो वृष्टिमुदीरयति मरुतः सृष्टां नयन्ति यदा खलु वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्ततेऽथ वर्षति धामच्छदिव खलु वै भूत्वा वर्षत्येता वै देवता वृष्ट्या ईशते ता एव स्वेन भागधेयेनोप धावति ता ( २ ) एवास्मै पर्जन्यं वर्षयन्त्युतावर्षिष्यन् वर्षत्येव सृजा वृष्टिं दिव

आऽद्भिः समुद्रं पृणेत्याहेमाश्चैवामूश्चापः समर्धयत्यथो आभिरेवामूरच्छैत्यब्जा असि प्रथमजा बलमसि समुद्रियमित्याह यथायजुरेवैतदुन्नम्भय पृथिवीमिति वर्षाह्वां जुहोत्येषा वा ( ३ ) ओषधीनां वृष्टिवनिस्तयैव वृष्टिमा च्यावयति ये देवा दिविभागा इति कृष्णाजिनमव धूनोतीम एवास्मै लोकाः प्रीता अभीष्टा भवन्ति ॥ ( अस्मै, श्रावति ता, वा, एकविंशतिश्च ) ॥ १० ॥

सर्वकामार्थिनः, अभिचरतः, अभिचर्यमाणस्य, सहस्रेण यक्ष्यमाणस्य, बहुविधयज्ञसाधनद्रव्यार्थिनश्च त्रैधातवीष्टिः ॥ विश्वेदेवा ऋषयः ।

सर्वाणि छन्दाꣳस्येतस्यामिष्ट्यामनूच्यानीत्याहुस्त्रिष्टुभो वा एतद्वीर्यं यत् ककुदुष्णिहा जगत्यै यदुष्णिहककुभावन्वाह तेनैव सर्वाणि छन्दाꣳस्यव रुन्धे गायत्री वा एषा यदुष्णिहा यानि चत्वार्यध्यक्षराणि चतुष्पाद एव ते पशवो यथा पुरोडाशे पुरोडाशोऽध्येवमेव यद्यदृच्यध्यक्षराणि यज्जगत्या ( १ ) परिदध्यादन्तं यज्ञं गमयेत् त्रिष्टुभा परि दधातीन्द्रियं वै वीर्यं त्रिष्टुगिन्द्रिय एव वीर्ये यज्ञं प्रतिष्ठापयति नान्तं गमयत्यग्ने त्री ते वाजिना त्री षधस्थेति त्रिवत्या परि दधाति सरूपत्वाय सर्वो वा एष यज्ञो यत् त्रैधातवीयं कामायकामाय प्र युज्यते सर्वेभ्यो हि कामेभ्यो यज्ञः प्रयुज्यते त्रैधातवीयेन यजेताभिचरन्त्सर्वो वा ( २ ) एष यज्ञो यत् त्रैधातवीयꣳ सर्वेणैवैनं यज्ञेनाभि चरति स्तृणुत एवैनमेतयैव यजेताभिचर्यमाणः सर्वो वा एष यज्ञो यत् त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते नैनमभिचरन्त्स्तृणुत एतयैव यजेत सहस्रेण यक्ष्यमाणः प्रजातमेवैनद्ददात्येतयैव यजेत सहस्रेणेजानोऽन्तं वा एष पशूनां गच्छति ( ३ ) यः सहस्रेण यजते प्रजापतिः खलु वै पशूनसृजत ताꣳस्त्रैधातवीयेनैवासृजत य एवं विद्वाꣳस्त्रैधातवीयेन पशुकामो यजते यस्मादेव योनेः प्रजापतिः पशूनसृजत तस्मादेवैनान्त्सृजत उपैनमुत्तरꣳ सहस्रं नमति देवताभ्यो वा एष आ वृश्च्यते यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेत सर्वो वा एष यज्ञो ( ४ ) यत् त्रैधातवीयꣳ सर्वेणैव यज्ञेन यजते न देवताभ्य आ वृश्च्यते द्वादशकपालः पुरोडाशो भवति ते त्रयश्चतुष्कपालास्त्रिषमृद्धत्वाय त्रयः पुरोडाशा भवन्ति त्रय इमे लोका एषां लोकानामाप्त्या उत्तरउत्तरो ज्यायान् भवत्येवमिव हीमे लोका यवमयो मध्य एतद्वा अन्तरिक्षस्य रूपꣳ समृद्ध्यै सर्वेषामभिगमयन्नव द्यत्यछम्बट्कारꣳ हिरण्यं ददाति तेज एवा ( ५ ) ऽव रुन्धे तार्प्यं ददाति पशूनेवाव रुन्धे धेनुं ददात्याशिष एवाव रुन्धे साम्नो वा एष वर्णो यद्धिरण्यं यजुषां तार्प्यमुक्थामदानां धेनुरेतानेव सर्वान् वर्णानव रुन्धे ॥ ( जगत्या, भिचरन्त्सर्वो वै, गच्छति, यज्ञ,-स्तेज एव, त्रिꣳशच्च ) ॥ ११ ॥

त्रैधातवीयेष्टेर्देवतार्थमाख्यायिका ॥ विश्वेदेवा ऋषयः ।

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति स यावदूर्ध्वः पराविध्यति तावति स्वयमेव व्यरमत यदि वा तावत् प्रवण-( १ )-मासीद्यदि वा तावदध्यग्नेरासीत् स संभवन्नग्नीषोमावभि समभवत् स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँ-

ल्लोकानवृणोद्यत् इमाँल्लोकानवृणोत् तद्वृत्रस्य वृत्रत्वं[3] तस्मादिन्द्रोऽबिभेदपि त्वष्टा तस्मै त्वष्टा वज्रमसिञ्चत् तपो वै स वज्र आसीत्[4] तमुद्यन्तुं नाशक्नोदथ वै तर्हि विष्णु-(२)-रन्या देवताऽऽसीत् सोऽब्रवीद्विष्णवेहीदमा हरिष्यावो येनायमिदमिति[5] स विष्णुस्त्रेधाऽऽत्मानं वि न्यधत्त पृथिव्यां तृतीयमन्तरिक्षे तृतीयं दिवि तृतीयमभिपर्यावर्ताद्ध्यबिभेद्यत्[6] पृथिव्यां तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हारस्ति वा इदं (३) मयि वीर्यं तत् ते प्र दास्यामीति तदस्मै प्रायच्छत् तत् प्रत्यगृह्णादधा मेति तद्विष्णवेऽति प्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति[7] यदन्तरिक्षे तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हारस्ति वा इदं (४) मयि वीर्यं तत् ते प्र दास्यामीति तदस्मै प्रायच्छत् तत् प्रत्यगृह्णाद् द्विर्माऽधा इति तद्विष्णवेऽति प्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति[8] यद्दिवि तृतीयमासीत् तेनेन्द्रो वज्रमुदयच्छद्विष्णवनुस्थितः सोऽब्रवीन्मा मे प्र हार्येनाह--(५)--मिदमस्मि तत् ते प्र दास्यामीति त्वी३ इत्यब्रवीत्[9] सन्धां तु सं दधावहै त्वामेव प्र विशानीति यन्मां प्रविशेः किं मा भुञ्ज्या इत्यब्रवीत् त्वामेवेन्धीय तव भोगाय त्वां प्र विशेयमित्यब्रवीत् तं वृत्रः प्राविशदुदरं वै वृत्रः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो य (६) एवं वेद हन्ति क्षुधं भ्रातृव्यं[10] तदस्मै प्रायच्छत् तत् प्रत्यगृह्णात् त्रिर्माऽधा इति तद्विष्णवेऽति प्रायच्छत् तद्विष्णुः प्रत्यगृह्णादस्मास्विन्द्र इन्द्रियं दधात्विति[11] यत् त्रिः प्रायच्छत् त्रिः प्रत्यगृह्णात् तत् त्रिधातोस्त्रिधातुत्वं[12] यद्विष्णुरन्वातिष्ठत विष्णवेऽति प्रायच्छत् तस्मादैन्द्रावैष्णवꣳ हविर्भवति[13] (७) यद्वा इदं किं च तदस्मैतत् प्रायच्छदृचः सामानि यजूꣳषि[14] सहस्रं वा अस्मै तत् प्रायच्छत् तस्मात् सहस्रदक्षिणम्[15]॥

( प्रवणं, विष्णु,-र्वा इद,-मिद,-मह, यो, भवत्ये,--कविꣳशतिश्च ) १२ ॥

राजन्यस्य शक्तिस्तम्भनिवारकश्चरुः ॥ विश्वेदेवा ऋषयः ।

देवा वै राजन्याज्जायमानादबिभयुस्तमन्तरेव सन्तं दाम्नाऽपौम्भन्त्स वा एषोऽपोब्धो जायते यद्राजन्यो यद्वा एषोऽनपोब्धो जायेत वृत्रान् घ्नꣳश्चरे[1]-द्यं कामयेत राजन्यमनपोब्धो जायेत वृत्रान् घ्नꣳश्चरेदिति तस्मा एतमैन्द्राबार्हस्पत्यं चरुं निर्वपेदैन्द्रो वै राजन्यो ब्रह्म बृहस्पतिर्ब्रह्मणैवैनं (१) दाम्नोऽपोम्भनान्मुञ्चति[2] हिरण्मयं दाम दक्षिणा साक्षादेवैनं दाम्नोऽपोम्भनान्मुञ्चति[3] ॥ ( एनं, द्वादश च ) ॥ १३ ॥

काम्येष्टियाज्यापुरोऽनुवाक्याः ॥ १-५, १५, १७ त्रिष्टुप्; ६-८ बृहती; ९ उष्णिक्; १०, १४, १६ गायत्री। विश्वेदेवा ऋषयः।

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरति दीर्घमायुः[1] ॥
यमादित्या अꣳशुमाप्याययन्ति यमक्षितमक्षितयः पिबन्ति ।
तेन नो राजा वरुणो बृहस्पतिरा प्यायन्तु भुवनस्य गोपाः[2] ॥
प्राच्यां दिशि त्वमिन्द्रासि राजोतोदीच्यां वृत्रहन् वृत्रहाऽसि ।
यत्र यन्ति स्रोत्यास्त-(१)-ज्जितं ते दक्षिणतो वृषभ एधि हव्यः[3]

इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयाति ।
विश्वा हि भूयाः पृतना अभिष्टीरुपसद्यो नमस्यो यथाऽसत् ॥
अस्येदेव प्र रिरिचे महित्वं दिवः पृथिव्याः पर्यन्तरिक्षात् ।
स्वराडिन्द्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥
अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशान-( २ )-मस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः[६] ॥
त्वामिद्धि हवामहे साता वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥
यद् द्याव इन्द्र ते शतꣳ शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रꣳ सूर्या अनु न जातमष्ट रोदसी ॥
पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ( ३ ) । सोतुर्बाहुभ्याꣳ सुयतो नार्वा[१०] ॥
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः । क्षुमन्तो याभिर्मदेम ॥
उदग्ने शुचयस्तव[११]*- वि ज्योतिषा[१२]-*-दु त्यं जातवेदसꣳ[१३]*-
सप्त त्वा हरितो रथे वहन्ति देव सूर्य । शोचिष्केशं विचक्षण[१४] ॥
चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुष-( ४ )--श्च ॥
विश्वे देवा ऋतावृध ऋतुभिर्हवनश्रुतः । जुषन्तां युज्यं पयः[१६] ॥
विश्वे देवाः शृणुतेमꣳ हवं मे ये अन्तरिक्षे य उप द्यवि ष्ठ ।
ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन् बर्हिषि मादयध्वम् ॥
( त,-दीशान,-मद्रिः,-स्तस्थुष,-स्त्रिꣳशच्च ) ॥ १४ ॥

[ देवा २०४ । देवासुरा १९९ । देवासुराः १४५ । प्रजापति-१५३ ।-रग्ने ८८ । चित्रया ११२ । मारुतं ९२ । देवा १२० । मारुतं १७९ । देवाः १७१ । सर्वाणि २८० । त्वष्टा ३७१ । देवा ६२ । नवोनव-२३० । -श्चतुर्दश ॥ २४०६ ॥ ]

[ इति द्वितीयकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥ ]

## इष्टिविधानम् ।

[ अथ पञ्चमः प्रपाठकः ॥ ५ ॥ ]

विश्वरूपवधाख्यायिका, रजस्वलाव्रतानि च ॥ प्रजापतिर्ऋषिः ।

विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्वस्रीयोऽसुराणां तस्य त्रीणि शीर्षाण्यासन्त्सोमपानꣳ सुरापानमन्नादनꣳ स प्रत्यक्षं देवेभ्यो भागमवदत् परोक्षमसुरेभ्यः सर्वस्मै वै प्रत्यक्षं भागं वदन्ति यस्मा एव परोक्षं वदन्ति तस्य भाग उदितस्तस्मादिन्द्रोऽबिभेदीदृङ् वै राष्ट्रं वि पर्यावर्तयतीति तस्य

( १४।११ ) तै. सं. १।३।१४।२८ ( १४।१२ ) तै. सं. १।२।१४।१७ ( १४।१३ ) तै. सं. १।४।४३।१

❀

वज्रमादाय शीर्षाण्यच्छिनद्यत् सोमपान-( १ )-मासीत् स कपिञ्जलोऽभवद्यत् सुरापानꣳ स कलविङ्को यदन्नादनꣳ स तित्तिरि[१]स्तस्याञ्जलिना ब्रह्महत्यामुपागृह्णात् ताꣳ संवत्सरमबिभस्तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति[२] स पृथिवीमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृहाणेति साऽब्रवीद्वरं वृणै खातात् पराभविष्यन्ती मन्ये ततो मा परा भूवमिति पुरा ते ( २ ) संवत्सरादपि रोहादित्यब्रवीत् तस्मात् पुरा संवत्सरात् पृथिव्यै खातमपि रोहति वारेवृतꣳ ह्यस्यै तृतीयं ब्रह्महत्यायै प्रत्यगृह्णात् तत् स्वकृतमिरिणमभवत् तस्मादाहिताग्निः श्रद्धादेवः स्वकृत इरिणे नाव स्येद्ब्रह्महत्यायै ह्येष वर्णः[३] स वनस्पतीनुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति तेऽब्रुवन् वरं वृणामहै वृक्णात् ( ३ ) पराभविष्यन्तो मन्यामहे ततो मा परा भूमेत्याव्रश्चनाद्वो भूयाꣳस उत्तिष्ठानित्यब्रवीत् तस्मादाव्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति वारेवृतꣳ ह्येषां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्स निर्यासोऽभवत् तस्मान्निर्यासस्य नाऽऽश्यं ब्रह्महत्यायै ह्येष वर्णोऽथो खलु य एव लोहितो यो वाऽऽव्रश्चनान्निर्येषति तस्य नाऽऽश्यं ( ४ ) काममन्यस्य स स्त्रीषꣳसादमुपासीददस्यै ब्रह्महत्यायै तृतीयं प्रति गृह्णीतेति ता अब्रुवन् वरं वृणामहा ऋत्वियात् प्रजां विन्दामहै काममा विजनितोः सं भवामेति तस्मादृत्वियात् स्त्रियः प्रजां विन्दते काममा विजनितोः सं भवन्ति वारेवृतꣳ ह्यासां तृतीयं ब्रह्महत्यायै प्रत्यगृह्णन्त्सा मलवद्वासा अभवत् तस्मान्मलवद्वाससा न सं वदेत ( ५ ) न सहाऽऽसीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्याऽऽस्तेऽथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदिति[४] यां मलवद्वाससꣳ सम्भवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो यां पराचीं तस्यै ह्रीतमुख्यपगल्भो या स्नाति तस्या अप्सु मारुको या ( ६ ) ऽभ्यङ्क्ते तस्यै दुश्चर्मा या प्रलिखते तस्यै खलतिरपमारी याऽऽङ्क्ते तस्यै काणो या दतो धावते तस्यै श्यावदन् या नखानि निकृन्तते तस्यै कुनखी या कृणत्ति तस्यै क्लीबो या रज्जुꣳ सृजति तस्या उद्बन्धुको या पर्णेन पिबति तस्या उन्मादुको या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेदञ्जलिना वा पिबेदखर्वेण वा ( ७ ) पात्रेण प्रजायै गोपीथाय[५] ॥ ( सोमपानं, ते, वृक्णा,-दाश्यं, वदेत, या, वा, त्रीणि च ) ॥ १ ॥

पूर्णिमायामग्नीषोमीयपुरोडाशः ॥ प्रजापतिर्ऋषिः ।

त्वष्टा हतपुत्रो वीन्द्रꣳ सोममाऽहरत् तस्मिन्निन्द्र उपहवमैच्छत तं नोपाह्वयत पुत्रं मेऽवधीरिति स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत् तस्य यदत्यशिष्यत तत् त्वष्टाऽऽहवनीयमुप प्रावर्तयत् स्वाहेन्द्रशत्रुर्वर्धस्वेति यदवर्तयत् तद्वृत्रस्य वृत्रत्वं यदब्रवीत् स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्ये-( १ )-न्द्रः शत्रुरभवत् स सम्भवन्नग्नीषोमावभि समभवत् स इषुमात्रमिषुमात्रं विष्वङ्ङवर्धत स इमाँल्लोकानवृणोद्यदिमाँल्लोकानवृणोत् तद्वृत्रस्य वृत्रत्वं तस्मादिन्द्रोऽबिभेत्[१] स प्रजापतिमुपाधावच्छत्रुर्मेऽजनीति तस्मै वज्रꣳ सिक्त्वा प्रायच्छदेतेन जहीति तेनाभ्यायत[२] तावब्रूतामग्नीषोमौ मा ( २ ) प्र हार्ावमन्तः स्व इति मम वै युवꣳ स्थ इत्यब्रवीन्मामभ्येतमिति तौ भागधेयमैच्छेतां ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्[३] तावब्रूतामभि संदष्टौ वै स्वो न शक्नुव ऐतुमिति स इन्द्र आत्मनः शीतरूरावजनयत्

तच्छीतरूरयोर्जन्म य एवꣳ शीतरूरयोर्जन्म वेद (३) नैनꣳ शीतरूरौ हतस्ताभ्यामेनमभ्यनयत् तस्मा-
ज्जञ्जभ्यमानादग्नीषोमौ निरक्रामतां[4] प्राणापानौ वा एनं तदजहितां प्राणो वै दक्षोऽपानः क्रतुस्त-
स्माज्जञ्जभ्यमानो ब्रूयान्मयि दक्षक्रतू इति प्राणापानावेवाऽऽत्मन् धत्ते सर्वमायुरेति[5] स देवता वृत्रान्नि-
र्हूय वार्त्रघ्नꣳ हविः पूर्णमासे निरवपद् घ्नन्ति वा एनं पूर्णमास आ (४) ऽमावास्यायां प्याययन्ति तस्मा-
द्वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायां[6] तत् सꣳस्थाप्य वार्त्रघ्नꣳ हविर्वज्रमादाय पुनरभ्यायत
ते अब्रूतां द्यावापृथिवी मा प्र हार्षावयोर्वै श्रित इति ते अब्रूतां वरं वृणावहै नक्षत्रविहिताऽहमसानीत्यसावब्र-
वीच्चित्रविहिताऽहमितीयं तस्मान्नक्षत्रविहिताऽसौ चित्रविहितेयं य एवं द्यावापृथिव्यो- (५) -र्वरं वेदैनं
वरो गच्छति स आभ्यामेव प्रसूत इन्द्रो वृत्रमहन्[7] ते देवा वृत्रꣳ हत्वाऽग्नीषोमावब्रुवन् हव्यं नो वहत-
मिति तावब्रूतामपतेजसौ वै त्यौ वृत्रे वै त्ययोस्तेज इति तेऽब्रुवन् क इदमच्छैतीति गौरित्यब्रुवन् गौर्वाव
सर्वस्य मित्रमिति साऽब्रवीत् (६) वरं वृणै मय्येव सतोभयेन भुनजाध्वा इति तद्गौराऽहरत् तस्माद्गवि
सतोभयेन भुञ्जत एतद्वा अग्नेस्तेजो यद् घृतमेतत् सोमस्य यत् पयो य एवमग्नीषोमयोस्तेजो वेद तेजस्व्येव
भवति[8] ब्रह्मवादिनो वदन्ति किंदेवत्यं पौर्णमासमिति प्राजापत्यमिति ब्रूयात् तेनेन्द्रं ज्येष्ठं पुत्रं निरवा-
साययदिति तस्मा- (७) -ज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति[9] ॥ (अस्य, मा, वेद्रा,-ऽऽ, द्यावापृथिव्यो,-रब्रवीत्,
तस्मा,-च्चत्वारि च) ॥ २ ॥

पौर्णमासेऽनुनिर्वाप्यो वैमृधपुरोडाशः, अमावास्यायां सान्नाय्यदधियागश्च ॥ प्रजापतिर्ऋषिः ।

इन्द्रं वृत्रं जघ्निवाꣳसं मृधोऽभि प्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत् तं निरवपत्
तेन वै स मृधोऽपाहत यद्वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति मृध एव तेन यजमानोऽप हते इन्द्रो
वृत्रꣳ हत्वा देवताभिश्चेन्द्रियेण च व्यार्ध्यत स एतमाग्नेयमष्टाकपालममावास्यायामपश्यदैन्द्रं दधि (१)
तं निरवपत् तेन वै स देवताश्चेन्द्रियं चावारुन्ध[1] यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवत्यैन्द्रं दधि
देवताश्चैव तेनेन्द्रियं च यजमानोऽव रुन्धे[2] इन्द्रस्य वृत्रं जघ्नुष इन्द्रियं वीर्यं पृथिवीमनु व्यार्छत् तदो-
षधयो वीरुधोऽभवन्त्स प्रजापतिमुपाधावद्वृत्रं मे जघ्नुष इन्द्रियं वीर्यं (२) पृथिवीमनु व्यारत् तदोष-
धयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै सं नयतेति तत् पशव ओषधीभ्योऽध्यात्मन्त्सम-
नयन् तत् प्रत्यदुहन् यत् समनयन् तत् सांनाय्यस्य सांनाय्यत्वं यत् प्रत्यदुहन् तत् प्रतिधुषः प्रतिधु-
क्त्वꣳ[5] समनैषुः प्रत्यधुक्षन् न तु मयि श्रयत इत्यब्रवीदेतदस्मै (३) शृतं कुरुतेत्यब्रवीत् तदस्मै शृत-
मकुर्वन्निन्द्रियं वावास्मिन् वीर्यं तदश्रयन् तच्छृतस्य शृतत्वꣳ[6] समनैषुः प्रत्यधुक्षञ्छृतमक्रन् न तु मा
धिनोतीत्यब्रवीदेतदस्मै दधि कुरुतेत्यब्रवीत् तदस्मै दध्यकुर्वन् तदेनमधिनोत् तद्दध्नो दधित्वं[8] ब्रह्मवादि-
नो वदन्ति दध्नः पूर्वस्यावदेयं (४) दधि हि पूर्वं क्रियत इत्य—नादृत्य तच्छृतस्यैव पूर्वस्याव द्येदि-
न्द्रियमेवास्मिन् वीर्यꣳ श्रित्वा दध्नोपरिष्टाद्धिनोति यथापूर्वमुपैति[9] यत् पूतीकैर्वा पर्णवल्कैर्वाऽऽतञ्च्यात्
सौम्यं तद्यत् क्वलै राक्षसं तद्यत् तण्डुलैर्वैश्वदेवं तद्यदातञ्चनेन मानुषं तद्यद्दध्ना तत् सेन्द्रं दध्नाऽऽतनक्ति
(५) सेन्द्रत्वाया[10] —ग्निहोत्रोच्छेषणमभ्यातनक्ति यज्ञस्य संतत्यै[11] इन्द्रो वृत्रꣳ हत्वा परां परावतमगच्छद-

पाराग्निमिति मन्यमानस्तं देवताः प्रैषमैच्छन्त्सोऽब्रवीत् प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात् पितृभ्यः पूर्वेद्युः क्रियते[१२] सोऽमावास्यां प्रत्याऽगच्छत् तं देवा अभि समगच्छन्तामा वै नो ( ६ ) ऽद्य वसु वसतीतीन्द्रो हि देवानां वसु तदमावास्याया अमावास्यत्वं[१३] ब्रह्मवादिनो वदन्ति किंदेवत्यꣳ सांनाय्यमिति वैश्वदेवमिति ब्रूयाद्विश्वे हि तद्देवा भागधेयमभि समगच्छन्तेत्यथो खल्वैन्द्रमित्येव ब्रूयादिन्द्रं वाव ते तद्भिषज्यन्तोऽभि समगच्छन्तेति[१४] ॥ दधि, वीर्यं,-मस्मा, अवदेयं, तनक्ति, नो, द्विचत्वारिꣳशच्च ) ॥ ३ ॥

भ्रातृव्यवतः पशुकामस्य च यागौ, साम्नाय्यदेवता च ॥ प्रजापतिर्ऋषिः ।

ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासौ यजेत य एनौ सेन्द्रौ यजेतेति वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्रं दध्यमावास्यायां तेनामावास्या सेन्द्रा य एवं विद्वान् दर्शपूर्णमासौ यजते सेन्द्रावेवैनौ यजते श्वःश्वोऽस्मा ईजानाय वसीयो भवति[१] देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता-( १ )-मिष्टिमपश्यन्नाग्नावैष्णवमेकादशकपालꣳ सरस्वत्यै चरुꣳ सरस्वते चरुं तां पौर्णमासꣳसꣳस्थाप्यानु निरवपन् ततो देवा अभवन् पराऽसुरा[२] यो भ्रातृव्यवान्त्स्यात् स पौर्णमासꣳसꣳस्थाप्यैतामिष्टिमनु निर्वपेत् पौर्णमासेनैव वज्रं भ्रातृव्याय प्रहृत्याऽऽग्नावैष्णवेन देवताश्च यज्ञं च भ्रातृव्यस्य वृङ्क्ते मिथुनान् पशून्त्सारस्वताभ्यां यावदेवास्यास्ति तत् ( २ ) सर्वं वृङ्क्ते[३] पौर्णमासीमेव यजेत भ्रातृव्यवान्नामावास्याꣳ हत्वा भ्रातृव्यं नाऽऽप्याययति[४] साकम्प्रस्थायीयेन यजेत पशुकामो यस्मै वा अल्पेनाऽऽहरन्ति नाऽऽत्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णꣳहोतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति[५] दारुपात्रेण जुहोति न हि मृन्मयमाहुतिमानशे[६] औदुम्बरं ( ३ ) भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे[७] नागतश्रीर्महेन्द्रं यजेत त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यस्तेषां महेन्द्रो देवता यो वै स्वां देवतामतियजते प्र स्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान् भवति[८] संवत्सरमिन्द्रं यजेत संवत्सरꣳ हि व्रतं नाति स्वे-( ४ )-वैनं देवतेज्यमाना भूत्या इन्धे वसीयान् भवति[९] संवत्सरस्य परस्तादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् संवत्सरमेवैनं वृत्रं जघ्निवाꣳसमग्निर्व्रतपतिर्व्रतमा लम्भयति[१०] ततोऽधि कामं यजेत[११] ॥ ( एतां, त,-दौदुम्बरꣳ, स्वा, त्रिꣳशच्च ) ॥ ४ ॥

अभ्युदयेष्टिः, ५ स्वर्गकामस्य दाक्षायणयज्ञः, १० व्यावृत्कामस्य संवेष्टिः ॥ प्रजापतिर्ऋषिः ।

नासोमयाजी सं नयेदनागतं वा एतस्य पयो योऽसोमयाजी यदसोमयाजी सं नयेत् परिमोष एव सोऽनृतं करोत्यथो परैव सिच्यते सोमयाज्येव सं नयेत् पयो वै सोमः पयः सांनाय्यं पयसैव पय आत्मन् धत्ते[१] वि वा एतं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा ( १ ) अभ्युदेति त्रेधा तण्डुलान् वि भजेद्ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्याद्ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधꣳश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुमग्निरेवास्मै प्रजां प्रजनयति वृद्धामिन्द्रः प्र यच्छति यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रति तिष्ठति[२] न द्वे ( २ ) यजेत यत् पूर्वया सम्प्रति यजेतो-

त्तरया छम्बट्कुर्याद्यदुत्तरया सम्प्रति यजेत पूर्वया छम्बट्कुर्यान्नेष्टिर्भवति न यज्ञस्तदनु ह्रीतमुख्यपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते[3] ऽनादृत्य तद् द्वे एव यजते यज्ञमुखमेव पूर्वया ऽऽलभते यजत उत्तरया देवता एव पूर्वया ऽवरुन्ध इन्द्रियमुत्तरया देवलोकमेव ( ३ ) पूर्वयाऽभिजयति मनुष्यलोकमुत्तरया भूयसो यज्ञक्रतूनुपैत्येषा वै सुमना नामेष्टिर्यमद्येजानं पश्चाच्चन्द्रमा अभ्युदेत्यस्मिन्नेवास्मै लोकेऽर्धुकं भवति[4] दाक्षायणयज्ञेन सुवर्गकामो यजेत[5] पूर्णमासे सं नयेन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजेत[6] पूर्णमासे वै देवानाꣳ सुतस्तेषामेतमर्धमासं प्रसुतं—स्तेषां मैत्रावरुणी वशाऽमावास्यायामनूबन्ध्या यत् ( ४ ) पूर्वेद्युर्यजते वेदिमेव तत् करोति यद् वत्सानपाकरोति सदोहविर्धाने एव सं मिनोति यद्यजते देवैरेव सुत्याꣳ सं पादयति स एतमर्धमासꣳ सधमादं देवैः सोमं पिबति यन्मैत्रावरुण्याऽऽमिक्षयाऽमावास्यायां यजते यैवासौ देवानां वशाऽनूबन्ध्या सो एवैषैतस्य[8] साक्षाद्वा एष देवानभ्यारोहति य एषां यज्ञ-( ५ )-मभ्यारोहति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति[9] यद्यवविध्यति पापीयान् भवति यदि नावविध्यति सदृङ् व्यावृत्काम एतेन यज्ञेन यजेत क्षुरपविर्ह्येष यज्ञस्ताजक् पुण्यो वा भवति प्र वा मीयते[10] तस्यैतद्व्रतं नानृतं वदेन्न माꣳसमश्नीयान्न स्त्रियमुपेयान्नास्य पल्पूलनेन—वासः पल्पूलयेयुः ( ६ )—रेताद्धि देवाः सर्वं न कुर्वन्ति[11] ॥ ( चन्द्रमा, द्वे, एव, य,—यज्ञं, पल्पूलयेयुः, षट् च ) ॥ ५ ॥

दर्शपूर्णमासयोः सोमयागेन सह पौर्वापर्यम ॥ प्रजापतिर्ऋषिः ।

एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामव स्यत्ये[1]—तानि वा अङ्गापरूꣳषि संवत्सरस्य यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजतेऽङ्गापरूꣳष्येव संवत्सरस्य प्रति दधात्ये[2]—ते वै संवत्सरस्य चक्षुषी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते ताभ्यामेव सुवर्गं लोकमनु पश्यत्ये[3] -( १ )- षा वै देवानां विक्रान्तिर्यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते देवानामेव विक्रान्तिमनु वि क्रमत[4] एष वै देवयानः पन्था यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते य एव देवयानः पन्थास्तꣳ समारोहत्ये[5]—तौ वै देवानाꣳ हरी यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते यावेव देवानाꣳ हरी ताभ्या-( २ )-मेवैभ्यो हव्यं वहत्ये[6]—तद्वै देवानामास्यं यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते साक्षादेव देवानामास्ये जुहोत्ये[7]—ष वै हविर्धानी यो दर्शपूर्णमासयाजी सायंप्रातरग्निहोत्रं जुहोति यजते दर्शपूर्णमासावहरहर्हविर्धानिनाꣳ सुतो य एवं विद्वान् दर्शपूर्णमासौ यजते हविर्धान्यस्मीति सर्वमेवास्य बर्हिष्यं दत्तं भवति[8] देवा वा अह-( ३ )-र्यज्ञियं नाविन्दन् ते दर्शपूर्णमासावपुनन् तौ वा एतौ पूतौ मेध्यौ यद्दर्शपूर्णमासौ य एवं विद्वान् दर्शपूर्णमासौ यजते पूतावेवैनौ मेध्यौ यजते[9] नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयाद्यदुपेयान्निरिन्द्रियः स्यात्[10] सोमस्य वै राज्ञोऽर्धमासस्य रात्रयः पत्नय आसन् तासाममावास्यां च पौर्णमासीं च नोपैत् ( ४ ) ते एनमभि समनह्येतां तं यक्ष्म आर्च्छद्राजानं यक्ष्म आरदिति तद्राजयक्ष्मस्य जन्म यत् पापीयानभवत् तत् पापयक्ष्मस्य यज्जायाभ्यामविन्दत् तज्जायेन्यस्य य एवमेतेषां यक्ष्माणां जन्म वेद नैनमेते यक्ष्माविन्द-

न्ति स एते एव नमस्यन्नुपाधावत् ते अब्रूतां वरं वृणावहा आवं देवानां भागधे असावा-( ५ )-वदधि देवा इज्यान्ता इति तस्मात् सदृशीना ँ रात्रीणाममावास्यायां च पौर्णमास्यां च देवा इज्यन्त एते हि देवानां भागधे भागधा अस्मै मनुष्या भवन्ति य एवं वेद[११] भूतानि क्षुधमघ्नन्त्सद्यो मनुष्या अर्धमासे देवा मासि पितरः संवत्सरे वनस्पतयस्तस्मादहरहर्मनुष्या अशनमिच्छन्तेऽर्धमासे देवा इज्यन्ते मासि पितृभ्यः क्रियते संवत्सरे वनस्पतयः फलं ( ६ ) गृह्णन्ति य एवं वेद हन्ति क्षुधं भ्रातृव्यम्[१२] ॥ ( पश्यति, ताभ्या,-महे-रै,-दसाव, फलँ, सह च ) ॥ ६ ॥

सामिधेनीमन्त्रव्याख्यानम् ॥ प्रजापतिर्ऋषिः ।

देवा वै नर्चि न यजुष्यश्रयन्त ते सामन्नेवाश्रयन्त हिं करोति सामैवाकर्हिं करोति यत्रैव देवा अश्रयन्त तत एवैनान् प्र युङ्क्ते हिं करोति वाच एवैष योगो हिं करोति प्रजा एव तद्यजमानः सृजते[१] त्रिः प्रथमामन्वाह त्रिरुत्तमां यज्ञस्यैव तद्बर्सं ( १ ) नह्यत्यप्रस्रँसाय[२] संततमन्वाह प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै[३] राथन्तरीं प्रथमामन्वाह राथन्तरो वा अयं लोक इममेव लोकमभि जयति[४] त्रिर्वि गृह्णाति त्रय इमे लोका इमानेव लोकानभि जयति[५] बार्हतीमुत्तमामन्वाह बार्हतो वा असौ लोकोऽमुमेव लोकमभि जयति[६] प्र वो ( २ ) वाजा इत्यनिरुक्तां प्राजापत्यामन्वाह यज्ञो वै प्रजापतिर्यज्ञमेव प्रजापतिमा रभते[७] प्र वो वाजा इत्यन्वाहान्नं वै वाजोऽन्नमेवाव रुन्धे[८] प्र वो वाजा इत्यन्वाह तस्मात् प्राचीनँ रेतो धीयते[९] ऽग्न आ याहि वीतय इत्याह तस्मात् प्रतीचीः प्रजा जायन्ते[१०] प्र वो वाजा ( ३ ) इत्यन्वाह मासा वै वाजा अर्धमासा अभिद्यवो देवा हविष्मन्तो गौर्घृताची यज्ञो देवाञ्जिगाति यजमानः सुम्नयु[११]—रिदमसीदमसीत्येव यज्ञस्य प्रियं धामाव रुन्धे[१२] यं कामयेत सर्वमायुरियादिति प्र वो वाजा इति तस्यानूच्याग्न आ याहि वीतय इति सन्ततमुत्तरमर्धर्चमा लभेत ( ४ ) प्राणेनैवास्यापानं दाधार सर्वमायुरेति[१३] यो वा अरत्निँ सामिधेनीनां वेदारत्नावेव भ्रातृव्यं कुरुतेऽर्धर्चौ सं दधात्येष वा अरत्निः सामिधेनीनां य एवं वेदारत्नावेव भ्रातृव्यं कुरुते[१४] ऋषेर्ऋषेर्वा एता निर्मिता यत् सामिधेन्यस्ता यदसंयुक्ताः स्युः प्रजया पशुभिर्यजमानस्य वि तिष्ठेरन्नर्धर्चौ सं दधाति सं ( ५ ) युनक्त्येवैनास्ता अस्मै संयुक्ता अवरुद्धाः सर्वामाशिषं दुह्रे[१५] ॥ ( बर्सं, वो, वाजा, लभेत, सं, दश च ) ॥ ७ ॥

द्वितीयादिसामिधेनीमन्त्रव्याख्यानम् ॥ प्रजापतिर्ऋषिः ।

अयज्ञो वा एष योऽसामाऽग्न आ याहि वीतय इत्याह रथन्तरस्यैष वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह वामदेव्यस्यैष वर्णो बृहदग्ने सुवीर्यमित्याह बृहत एष वर्णो यदेतं तृचमन्वाह यज्ञमेव तत् सामन्वन्तं करोत्य[१]—ग्निरमुष्मिन् लोक आसीदादित्योऽस्मिन् ताविमौ लोकावशान्ता ( १ ) वास्तां ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यग्न आ याहि वीतय इत्यस्मिन् लोकेऽग्निमदधुर्बृहदग्ने सुवीर्यमित्यमुष्मिन् लोक आदित्यं ततो वा इमौ लोकावशाम्यतां यदेवमन्वाहानयोर्लोकयोः शान्त्यै शाम्यतोऽस्मा इमौ लोकौ य एवं वेद[२] पञ्चदश सामिधेनीरन्वाह पञ्चदश ( २ ) वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते[३] तासां त्रीणि च शतानि षष्टिश्चाक्षराणि तावतीः संवत्सरस्य रात्रयोऽक्षरश एव संवत्सरमाप्नोति[४] नृमेधश्च परुच्छेपश्च

ब्रह्मवाद्यमवदेतामस्मिन् दारावाद्रेऽग्निं जनयाव यतरो नौ ब्रह्मीयानिति नूमेधोऽभ्यवदत् स धूममजनयत् परुच्छेपोऽभ्यवदत् सोऽग्निमजनयदष इत्यब्रवीत् ( ३ ) यत् समावद्विद्म कथा त्वमग्निमजीजनो नाहमिति सामिधेनीनामेवाहं वर्णं वेदेत्यब्रवीद्यद् घृतवत् पदमनूच्यते स आसां वर्णस्तं त्वा समिद्भिरङ्गिर इत्याह सामिधेनीष्वेव तज्ज्योतिर्जनयति स्त्रियस्तेन यदृचः स्त्रियस्तेन यद्गायत्रियः स्त्रियस्तेन यत् सामिधेन्यो वृषण्वतीमन्वाह ( ४ ) तेन पुꣳस्वतीस्तेन सेन्द्रास्तेन मिथुना अग्निर्देवानां दूत आसीदुशना काव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिरग्निं दूतं वृणीमह इत्यभि पर्यावर्तत ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषोऽग्निं दूतं वृणीमह इत्यन्वाह भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्य—ध्वरवतीमन्वाह भ्रातृव्यमेवैतया ( ५ ) ध्वरति शोचिष्केशस्तमीमह इत्याह पवित्रमेवैतद्यजमानमेवैतया पवयति समिद्धो अग्न आहुतेत्याह परिधिमेवैतं परि दधात्यस्कन्दाय यदतं ऊर्ध्वमभ्यादध्याद्यथा बहिःपरिधि स्कन्दति तादृगेव तत्[10] त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितृणाꣳ सहरक्षा असुराणां त एतर्ह्या शꣳसन्ते मां वरिष्यते मा–( ६ )–मिति वृणीध्वꣳ हव्यवाहनमित्याह य एव देवानां तं वृणीत[11] आर्षेयं वृणीते बन्धोरेव नैत्यथो संतत्यै[12] परस्तादर्वाचो वृणीते तस्मात् परस्तादर्वाञ्चो मनुष्यान् पितरोऽनु प्र पिपते[13] ॥ ( अशान्तौ, पञ्चदश,–ऽब्रवी,–दन्वाहै,–तया, मा,–मेकान्नत्रिꣳशच्च ) ॥ ८ ॥

प्रवरमन्त्रस्य निगदस्य, ९–१५ स्रुगादापननिगदस्य च व्याख्यानम् ॥ प्रजापतिर्ऋषिः ।

अग्ने महाꣳ असीत्याह महान् ह्येष यदग्निर्ब्राह्मणेत्याह ब्राह्मणो ह्येष भारतेत्याहैष हि देवेभ्यो हव्यं भरति[1] देवेद्ध इत्याह देवा ह्येतमैन्धत[2] मन्विद्ध इत्याह मनुर्ह्येतमुत्तरो देवेभ्य ऐन्ध[3]—र्षिष्टुत इत्याहर्षयो ह्येतमस्तुवन् विप्रानुमदित इत्याह ( १ ) विप्रा ह्येते यच्छुश्रुवाꣳसः कविशस्त इत्याह कवयो ह्येते यच्छुश्रुवाꣳसो ब्रह्मसꣳशित इत्याह ब्रह्मसꣳशितो ह्येष घृताहवन इत्याह घृताहुतिर्ह्यस्य प्रियतमा प्रणीर्यज्ञानामित्याह प्रणीर्ह्येष यज्ञानाꣳ रथीरध्वराणामित्याहैष हि देवरथोऽस्तृतो होतेत्याह न ह्येतं कश्चन ( २ ) तरति तूर्णिर्हव्यवाडित्याह सर्वꣳ ह्येष तरत्या—स्पात्रं जुहूर्देवानामित्याह जुहूर्ह्येष देवानां चमसो देवपान इत्याह चमसो ह्येष देवपानोऽराꣳ इवाग्ने नेमिर्देवाꣳस्त्वं परिभूरसीत्याह देवान् ह्येष परिभूर्यद्ब्रूयादा वह देवान् देवयते यजमानायेति भ्रातृव्यमस्मै ( ३ ) जनयेदा वह देवान् यजमानायेत्याह यजमानमेवैतेन वर्धयत्य[6]—ग्निमग्न आ वह सोममा वहेत्याह देवता एव तद्यथापूर्वमुप ह्वयत आ चाग्ने देवान् वह सुयजा च यज जातवेद इत्याहाग्निमेव तत् सꣳ श्यति सोऽस्य सꣳशितो देवेभ्यो हव्यं वहत्य—ग्निर्होते–( ४ )–त्याहाग्निर्वै देवानाꣳ होता य एव देवानाꣳ होता तं वृणीते[9] स्मो वयमित्याहाऽऽत्मानमेव सत्त्वं गमयति[10] साधु ते यजमान देवतेत्याहाऽऽशिषमेवैतामा शास्ते[11] यद्ब्रूयाद्योऽग्निꣳ होतारमवृथा इत्यग्निनोभयतो यजमानं परि गृह्णीयात् प्रमायुकः स्या[12]—द्यजमानदेवत्या वै जुहूर्भ्रातृव्यदेवत्योपभृत् ( ५ ) यद् द्वे इव ब्रूयाद् भ्रातृव्यमस्मै जनयेद् घृतवतीमध्वर्यो स्रुचमाऽस्यस्वेत्याह यजमानमेवैतेन वर्धयति[13] देवायुवमित्याह देवान् ह्येषाऽवति विश्ववारामित्याह विश्वꣳ ह्येषाऽवती[14]—डामहै देवाꣳ ईडेन्यान्नमस्याम नमस्यान् यजाम यज्ञियानित्याह मनुष्या वा ईडेन्याः पितरो नमस्या देवा यज्ञिया देवता एव ( ६ ) तद्यथाभागं यजति[15] ॥ ( आह, चना,–ऽस्मै,–होतो,–पभृ,–द्देव, त्रीणि च ) ॥ ९ ॥

नैमित्तिक्यः काम्याश्च सामिधेन्यः ॥ प्रजापतिर्ऋषिः ।

त्रीꣳस्तृचाननु ब्रूयाद्राजन्यस्य त्रयो वा अन्ये राजन्यात् पुरुषा ब्राह्मणो वैश्यः शूद्रस्तानेवास्मा अनुकान् करोति[1] पञ्चदशाननु ब्रूयाद्राजन्यस्य पञ्चदशो वै राजन्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति[2] त्रिष्टुभा परि दध्यादिन्द्रियं वै त्रिष्टुगिन्द्रियकामः खलु वै राजन्यो यजते त्रिष्टुभैवास्मा इन्द्रियं परि गृह्णाति[3] यदि कामयेत (१) ब्रह्मवर्चसमस्त्विति गायत्रिया परि दध्याद्ब्रह्मवर्चसं वै गायत्री ब्रह्मवर्चसमेव भवति[4] सप्तदशाननु ब्रूयाद्वैश्यस्य सप्तदशो वै वैश्यः स्व एवैनꣳ स्तोमे प्रति ष्ठापयति[5] जगत्या परि दध्याज्जागता वै पशवः पशुकामः खलु वै वैश्यो यजते जगत्यैवास्मै पशून् परि गृह्णात्ये[6]—कविꣳशतिमनु ब्रूयात् प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै[7] (२) चतुर्विꣳशतिमनु ब्रूयाद्ब्रह्मवर्चसकामस्य चतुर्विꣳशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैवास्मै ब्रह्मवर्चसमव रुन्धे[8] त्रिꣳशतमनु ब्रूयादन्नकामस्य त्रिꣳशदक्षरा विराडन्नं विराड्विराजैवास्मा अन्नाद्यमव रुन्धे[9] द्वात्रिꣳशतमनु ब्रूयात् प्रतिष्ठाकामस्य द्वात्रिꣳशदक्षराऽनुष्टुगनुष्टुप् छन्दसां प्रतिष्ठा प्रतिष्ठित्यै[10] षट्त्रिꣳशतमनु ब्रूयात् पशुकामस्य षट्त्रिꣳशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशू-(३)-नव रुन्धे[11] चतुश्चत्वारिꣳशतमनु ब्रूयादिन्द्रियकामस्य चतुश्चत्वारिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभैवास्मा इन्द्रियमव रुन्धे[12] ऽष्टाचत्वारिꣳशतमनु ब्रूयात् पशुकामस्याष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे[13] सर्वाणि छन्दाꣳस्यनु ब्रूयाद्बहुयाजिनः सर्वाणि वा एतस्य छन्दाꣳस्यवरुद्धानि यो बहुयाज्य[14]—परिमितमनु ब्रूयादपरिमितस्यावरुद्ध्यै[15] ॥ ( कामयेत, प्रतिष्ठित्यै, पशून्, सप्तचत्वारिꣳशच्च ) ॥ १० ॥

सामिधेनीषु होतुर्नियमविशेषः, ९--२५ आध्वर्यव आघारश्च ॥ प्रजापतिर्ऋषिः ।

निवीतं मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवाना—मुप व्ययते देवलक्ष्ममेव तत् कुरुते[2] तिष्ठन्नन्वाह तिष्ठन् ह्याश्रुततरं वदति[3] तिष्ठन्नन्वाह सुवर्गस्य लोकस्याभिजित्या आसीनो यजत्यस्मिन्नेव लोके प्रति तिष्ठति[5] यत् क्रौञ्चमन्वाहाऽऽसुरं तद्यन्मन्द्रं मानुषं तद्यदन्तरा तत् सदेवमन्तराऽनूच्यꣳ सदेवत्वाय[6] विद्वाꣳसो वै (१) पुरा होतारोऽभूवन् तस्माद्विधृता अध्वानोऽभूवन् न पन्थानः समरुक्षन्नन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्योऽथान्वाहाध्वनां विधृत्यै पथामसꣳरोहाया[7]—थो भूतं चैव भविष्यच्चाव रुन्धेऽथो परिमितं चैवापरिमितं चाव रुन्धेऽथो ग्राम्याꣳश्चैव पशूनारण्याꣳश्चाव रुन्धेऽथो (२) देवलोकं चैव मनुष्यलोकं चाभि जयति[8] देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघारमा ऽघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत् तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्या अथो सामिधेनीरेवाभ्यनक्त्य[10]—लूक्षो भवति य एवं वेदा[11]—थो तर्पयत्यैवैना[12]—स्तृप्यति प्रजया पशुभि-(३)-र्य एवं वेद[13] यदेकया ऽऽघारयेदेकां प्रीणीयाद्यद् द्वाभ्यां द्वे प्रीणीयाद्यद् तिसृभिरति तद्रेचयेन्मनसा ऽऽघारयति मनसा ह्यनाप्तमाप्यते[14] तिर्यञ्चमा घारयत्यछम्बट्कारं[15] वाक् च मनश्चाऽऽर्तीयेतामहं देवेभ्यो हव्यं वहामीति वागब्रवीदहं देवेभ्य इति मनस्तौ प्रजापतिं प्रश्नमैताꣳ सोऽब्रवीत् (४) प्रजापतिर्दूतीरेव त्वं मनसोऽसि यद्धि मनसा ध्यायति तद्वाचा वदतीति तत् खलु तुभ्यं न वाचा

जुहवन्नित्यब्रवीत् तस्मान्मनसा प्रजापतये जुह्वति मन इव हि प्रजापतिः प्रजापतेराप्त्यै[१८] परिधीन्त्सं मार्ष्टि पुनात्येवैनान्[१९] त्रिर्मध्यमं त्रयो वै प्राणाः प्राणानेवाभि जयति त्रिर्दक्षिणार्धं त्रयः (५) इमे लोका इमानेव लोकानभि जयति त्रिरुत्तरार्धं त्रयो वै देवयानाः पन्थानस्तानेवाभि जयति[२०] त्रिरुप वाजयति त्रयो वै देवलोका देवलोकानेवाभि जयति[२१] द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै आघारमा घारयति तिर इव (६) वै सुवर्गो लोकः सुवर्गमेवास्मै लोकं प्र रोचयत्यृ[२१]—जुमा घारयत्यृजुरिव हि प्राणः संततमा घारयति प्राणानामन्नाद्यस्य संतत्या अथो रक्षसामपहत्यै[२२] यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्याऽऽ घारयेत् प्राणमेवास्माज्जिह्मं नयति ताजक् प्र मीयते[२३] शिरो वा एतद्यज्ञस्य यदाघार आत्मा ध्रुवा (७) ऽऽघारमाघार्य ध्रुवाꣳ समनक्त्यात्मन्नेव यज्ञस्य शिरः प्रति दधात्य[२४]—ग्निर्देवानां दूत आसीद् दैव्योऽसुराणां तौ प्रजापतिं प्रश्नमैताꣳ स प्रजापतिर्ब्राह्मणमब्रवीदेतद्वि ब्रूहीत्या श्रावयेतीदं देवाः शृणुतेति वाव तदब्रवीदग्निर्देवो होतेति य एव देवानां तमवृणीत ततो देवा (८) अभवन् पराऽसुरा यस्यैवं विदुषः प्रवरं प्रवृणते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[२५] यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयातां ब्राह्मणायाधि ब्रूयाद्यद्ब्राह्मणायाध्याहाऽऽत्मनेऽध्याह यद्ब्राह्मणं पराहाऽऽत्मानं पराऽऽह तस्माद्ब्राह्मणो न परोच्यः[२६] ॥ (वा, अथो, पशुभि,-रब्रवीत, त्रयं, इव, ध्रुवा, देवा,-श्चत्वारिꣳशच्च) ॥ ११ ॥

काम्येष्टियाज्यापुरोऽनुवाक्याः । विश्वेदेवा ऋषयः ।

आयुष्ट[१]*-आयुर्दा अग्ने[२]*-आ प्यायस्व[३]*- सं ते[४]*-ऽव ते हेड[५]*- उदुत्तमं[६]*- प्र णो देव्या[७]*-नो दिवो[८]*-ऽग्नाविष्णू[९]*- अग्नाविष्णू[१०]*- इमं मे वरुण[११]*- तत् त्वा याम्यु[१२]—*-दुत्यं[१३]*- चित्रम्[१४]*- ॥

अपां नपादा ह्यस्थादुपस्थं जिह्मानामूर्ध्वो विद्युतं वसानः ।
तस्य ज्येष्ठं महिमानं वहन्तीर्हिरण्यवर्णाः परि यन्ति यह्वीः[१५] ॥
स-(१)-मन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिꣳ शुचयो दीदिवाꣳसमपां नपातं परि तस्थुरापः[१६] ।
तमस्मेरा युवतयो युवानं मर्मृज्यमानाः परि यन्त्यापः ।
स शुक्रेण शिक्वना रेवदग्निर्दीदायानिध्मो घृतनिर्णिगप्सु ॥
इन्द्रावरुणयोरहꣳ सम्राजोरव आ वृणे । ता नो मृडात ईदृशे[१८] ॥
इन्द्रावरुणा युवमध्वराय नो (२) विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः[१९] ॥

---

(१२-१।२) १।३।१४।११-१२, (१२।३-४) ४।२।७।१२-१३, (१२।५-६) १।५।११।९-१०, (१२।७-८,९-१०) १।८।२२।३-४, १-२, (१२।११-१२) २।१।११।२१-२२, (१२।१३-१४) १।४।४३।१-२ ।

*

आ नो मित्रावरुणा[30]*--प्र बाहवा[31]*-
त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडोऽव यासिसीष्ठाः ।
यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांꣳसि प्र मुमुग्ध्यस्मत्[22] ॥
स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ।
अव यक्ष्व नो वरुणꣳ (३) रराणो वीहि मृडीकꣳ सुहवो न एधि[23] ॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः[24] ॥
प्र ते यक्षि प्र त इयर्मि मन्म भुवो यथा वन्द्यो नो हवेषु ।
धन्वन्निव प्रपा असि त्वमग्न इयक्षवे पूरवे प्रत्न राजन् (४) ॥
वि पाजसा[26]*-वि ज्योतिषा[27]*- ॥
स त्वमग्ने प्रतीकेन प्रत्योष यातुधान्यः । उरुक्षयेषु दीद्यत्[28] ॥
तꣳ सुप्रतीकꣳ सुदृशꣳ स्वञ्चमविद्वाꣳसो विदुष्टरꣳ सपेम ।
स यक्षद्विश्वा वयुनानि विद्वान् प्र हव्यमग्निरमृतेषु वोचत्[29] ॥
अꣳहोमुचे[30] *- विवेष यन्मा[31]*- वि न इन्द्रे[32] *-न्द्रं क्षत्र[33] *- मिन्द्रियाणि शतक्रतो[34] *- ऽनु ते दायि[35] *- ॥ ( सं, नो, वरुणꣳ, राजꣳ,- श्चतुश्चत्वारिꣳशच्च ) ॥ १२ ॥

[ विश्वरूप-३५३ ।-स्त्वष्टे-३५४ ।-न्द्रं ३४२ । ब्रह्मवादिनो २३० । नै--३०६ ।-ष ३०७ । देवा २६० । अयज्ञो ३२९। ऽग्ने ३०३ । श्रीन् १९७ । निवीत-४४० ।-मायु-२४४ -द्वादश ॥ ३६६५ ) ]

[ इति द्वितीयकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥ ]

## अवशिष्टकर्माभिधानम् ।

[ अथ षष्ठः प्रपाठकः ॥ ६ ॥ ]

प्रयाजविधिः ॥ प्रजापतिर्ऋषिः ।

समिधो यजति वसन्तमेवर्तूनामव रुन्धे तनूनपातं यजति ग्रीष्ममेवाव रुन्ध इडो यजति वर्षा एवाव रुन्धे बर्हिर्यजति शरदमेवाव रुन्धे स्वाहाकारं यजति हेमन्तमेवाव रुन्धे तस्मात् स्वाहाकृता हेमन् पशवोऽव सीदन्ति[1] समिधो यजत्युषस एव देवतानामव रुन्धे तनूनपातं यजति यज्ञमेवाव रुन्ध (१) इडो यजति पशूनेवाव रुन्धे बर्हिर्यजति प्रजामेवाव रुन्धे[2] समानयत उपभृतस्तेजो वा आज्यं प्रजा बर्हिः प्रजास्वेव तेजो दधाति[3] स्वाहाकारं यजति वाचमेवाव रुन्धे[4] दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड्विराजैवान्नाद्यमव रुन्धे[5] समिधो यजत्यस्मिन्नेव लोके प्रति तिष्ठति तनूनपातं यजति (२) यज्ञ एवान्तरिक्षे प्रति तिष्ठतीडो यजति पशुष्वेव प्रति तिष्ठति बर्हिर्यजति य एव देवयानाः पन्थानस्तेष्वेव प्रति तिष्ठति स्वाहाकारं यजति सुवर्ग एव लोके प्रति तिष्ठत्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठति[6]

( १२।२०-२१ ) १।८।२२।८-९, ( १२।२६-२७ ) ४।१।५।१, १।२।१४।१, ( १२।३०-३५ ) १।६।१२।९-१०, १२-१३, ३-४

देवासुरा एषु लोकेष्वस्पर्धन्त ते देवाः प्रयाजैरेभ्यो लोकेभ्योऽसुरान् प्राणुदन्त तत् प्रयाजानां (३) प्रयाजत्वं यस्यैवं विदुषः प्रयाजा इज्यन्ते प्रैभ्यो लोकेभ्यो भ्रातृव्यान्नुदते[७] ऽभिक्रामं जुहोत्यभिजित्यै[८] यो वै प्रयाजानां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते समिधो बह्वीरिव यजति तनूनपातमेकमिव मिथुनं तदिडो बह्वीरिव यजति बर्हिरेकमिव मिथुनं तदेतद्वै प्रयाजानां मिथुनं य एवं वेद प्र (४) प्रजया पशुभिर्मिथुनैर्जायते[९] देवानां वा अनिष्टा देवता आसन्नथासुरा यज्ञमजिघांसन् ते देवा गायत्रीं व्यौहन् पञ्चाक्षराणि प्राचीनानि त्रीणि प्रतीचीनानि ततो वर्म यज्ञायाभवद्वर्म यजमानाय यत् प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै तस्माद्वरूथं पुरस्ताद्वर्षीयः पश्चाद्ध्रसीयो[१०] देवा वै पुरा रक्षोभ्य (५) इति स्वाहाकारेण प्रयाजेषु यज्ञꣳ सꣳस्थाप्यमपश्यन् तꣳ स्वाहाकारेण प्रयाजेषु समस्थापयन् वि वा एतद्यज्ञं छिन्दन्ति यत् स्वाहाकारेण प्रयाजेषु सꣳस्थापयन्ति प्रयाजानिष्ट्वा हवीꣳष्यभि घारयति यज्ञस्य संतत्या अथो हविरेवाकरथो यथापूर्वमुपैति[११] पिता वै प्रयाजाः प्रजाऽनूयाजा यत् प्रयाजानिष्ट्वा हवीꣳष्यभिघारयति पितैव तत् पुत्रेण साधारणं (६) कुरुते[१२] तस्मादाहुर्यश्चैवं वेद यश्च न कथा पुत्रस्य केवलं कथा साधारणं पितुरित्य[१३]—स्कन्नमेव तद्यत् प्रयाजेष्विष्टेषु स्कन्दति[१४] गायत्र्येव तेन गर्भं धत्ते सा प्रजां पशून् यजमानाय प्र जनयति[१५] ॥

( रुन्धे, यजति, प्रयाजानां, प्र, रक्षोभ्यः, साधारणं, पञ्चत्रिꣳशच्च ) ॥ १ ॥

आज्यभागौ; ६ तदीये याज्यानुवाक्ये; ७-१७ प्रधानस्य हविषो याज्यानुवाक्ये च ॥ प्रजापतिर्ऋषिः ।

चक्षुषी वा एते यज्ञस्य यदाज्यभागौ यदाज्यभागौ यजति चक्षुषी एव तद्यज्ञस्य प्रति दधाति[१] पूर्वार्धे जुहोति तस्मात् पूर्वार्धे चक्षुषी[२] प्रबाहुग्जुहोति तस्मात् प्रबाहुक् चक्षुषी[३] देवलोकं वा अग्निना यजमानोऽनु पश्यति पितृलोकꣳ सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमायैवमिव हीमौ लोकावनयोर्लोकयोरनुख्यात्यै[४] राजानौ वा एतौ देवतानां (१) यदग्नीषोमावन्तरा देवता इज्येते देवतानां विधृत्यै तस्माद्राज्ञा मनुष्या विधृता ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येनान्यतोदतश्च पशून् दाधारोभयतोदतश्चेत्यृचमनूच्याऽऽज्यभागस्य जुषाणेन यजति तेनान्यतोदतो दाधारर्चमनूच्य हविष ऋचा यजति तेनोभयतोदतो दाधार[५] मूर्धन्वती पुरोऽनुवाक्या भवति मूर्धानमेवैनꣳ समानानां करोति (२) नियुत्वत्या यजति भ्रातृव्यस्यैव पशून् नि युवते[७] केशिनꣳह दार्भ्यं केशी सात्यकामिरुवाच सप्तपदां ते शक्वरीꣳ श्वो यज्ञे प्रयोक्तासे यस्यै वीर्येण प्र जातान् भ्रातृव्यान्नुदते प्रति जनिष्यमाणान् यस्यै वीर्येणोभयोर्लोकयोर्ज्योतिर्धत्ते यस्यै वीर्येण पूर्वार्धेनानड्वान् भुनक्ति जघनार्धेन धेनुरिति[८] पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति जातानेव भ्रातृव्यान् प्र णुदत उपरिष्टाल्लक्ष्मा (३) याज्या जनिष्यमाणानेव प्रति नुदते[९] पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवत्यस्मिन्नेव लोके ज्योतिर्धत्त उपरिष्टाल्लक्ष्मा याज्याऽमुष्मिन्नेव लोके ज्योतिर्धत्ते ज्योतिष्मन्तावस्मा इमौ लोकौ भवतो य एवं वेद पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या भवति तस्मात् पूर्वार्धेनानड्वान् भुनक्त्युपरिष्टाल्लक्ष्मा याज्या तस्माज्जघनार्धेन धेनुर्य एवं वेद भुङ्क्त एनमेतौ[१०] वज्र आज्यं वज्र आज्यभागौ (४) वज्रो वषट्कारस्त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरत्यछम्बट्कार[११]मपगूर्य वषट्करोति स्तृत्यै[१२] गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग् याज्या ब्रह्मन्नेव क्षत्रमन्वारम्भयति

तस्माद्ब्राह्मणो मुख्यो[१३] मुख्यो भवति य एवं वेद[१४] प्रैवैनं पुरोऽनुवाक्ययाऽऽह प्र णयति याज्यया गमयति वषट्कारेणै[१५]-वैनं पुरोऽनुवाक्यया दत्ते प्र यच्छति याज्यया प्रति (५) वषट्कारेण स्थापयति[१६] त्रिपदा पुरोऽनुवाक्या भवति त्रय इमे लोका एष्वेव लोकेषु प्रति तिष्ठति चतुष्पदा याज्या चतुष्पद एव पशूनव रुन्धे द्व्यक्षरो वषट्कारो द्विपाद्यजमानः पशुष्वेवोपरिष्टात् प्रति तिष्ठति[१७] गायत्री पुरोऽनुवाक्या भवति त्रिष्टुग् याज्यैषा वै सप्तपदा शक्वरी यद्वा एतया देवा अशिक्षन् तदशक्नुवन् य एवं वेद शक्नोत्येव (६) यच्छिक्षति[१८] ॥ ( देवतानां, करोत्यु, परिष्टाल्लक्ष्मा, ऽऽज्यभागौ प्रत्ये,-व, द्वे च ) ॥ २ ॥

आग्नेयपुरोडाशविधिः, १०-११ कपालनाशे प्रायश्चित्तं च ॥ प्रजापतिर्ऋषिः ।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स आत्मन्नाज्यमधत्त तं देवा अब्रुवन्नेष वाव यज्ञो यदाज्यमप्येव नोऽत्रास्त्विति सोऽब्रवीद्यजान् व आज्यभागावुप स्तृणानभि घारयानिति तस्माद्यजन्त्याज्यभागावुप स्तृणन्त्यभि घारयन्ति[१] ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्यातयामान्यन्यानि हवीꣳष्ययातयाममाज्यमिति प्राजापत्य-( १ )-मिति ब्रूयादयातयामा हि देवानां प्रजापतिरिति[२] छन्दाꣳसि देवेभ्योऽपाक्रामन् न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुरवत्तमधारयन् पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुरवत्तं जुहोति छन्दाꣳस्येव तत् प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्त्य[३]-ङ्गिरसो वा इत उत्तमाः सुवर्गं लोकमायन् तदृषयो यज्ञवास्त्वभ्यवायन् ते ( २ ) ऽपश्यन् पुरोडाशं कूर्मं भूतꣳ सर्पन्तं तमब्रुवन्निन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति स नाध्रियत तमब्रुवन्नग्नये ध्रियस्वेति सोऽग्नयेऽध्रियत यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति सुवर्गस्य लोकस्याभिजित्यै[४] तमब्रुवन् कथाऽहास्था इत्यनुपाक्तोऽभूवमित्यब्रवीद्यथाऽक्षोऽनुपाक्तो ( ३ ) ऽवाच्छैत्येवमवाऽऽरमित्युपरिष्टादभ्यज्याधस्तादुपानक्ति सुवर्गस्य लोकस्य समष्ट्यै[५] सर्वाणि कपालान्यभि प्रथयति तावतः पुरोडाशानमुष्मिँल्लोकेऽभि जयति[६] यो विदग्धः स नैर्ऋतो योऽशृतः स रौद्रो यः शृतः स सदेवस्तस्मादविदहता शृतंकृत्यः सदेवत्वाय[७] भस्मनाऽभि वासयति तस्मान्माꣳसेनास्थि छन्नं वेदेनाभि वासयति तस्मात् ( ४ ) केशैः शिरश्छन्नं[८] प्रच्युतं वा एतदस्माँल्लोकादगतं देवलोकं यच्छृतꣳ हविरनभिघारितमभिघार्योद्वासयति देवत्रैवैनद्गमयति[९] यद्येकं कपालं नश्येदेको मासः संवत्सरस्यानवेतः स्यादथ यजमानः प्र मीयेत यद् द्वे नश्येतां द्वौ मासौ संवत्सरस्यानवेतौ स्यातामथ यजमानः प्र मीयेत संख्यायोद्वासयति यजमानस्य ( ५ ) गोपीथाय[१०] यदि नश्येदाश्विनं द्विकपालं निर्वपेद् द्यावापृथिव्यमेककपालमश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति द्यावापृथिव्य एककपालो भवत्यनयोर्वा एतन्नश्यति यन्नश्यत्यनयोरेवैनद्विन्दति प्रतिष्ठित्यै[११] ॥ ( प्राजापत्यं, ते, ऽनुपाक्त,-स्तस्मा-द्यजमानस्य, द्वात्रिꣳशच्च ) ॥ ३ ॥

वेदिनिर्माणम् ॥ प्रजापतिर्ऋषिः ।

देवस्य त्वा सवितुः प्रसव इति स्फ्यमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै[१] शतभृष्टिरसि वानस्पत्यो द्विषतो वध इत्याह वज्रमेव तत् सꣳ

इयति भ्रातृव्याय प्रहरिष्यन्[2]त्स्तम्बयजुर्हरत्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भजति (१) तस्मान्नाभागं निर्भजन्ति[3] त्रिर्हरति त्रय इमे लोका एभ्य एवैनं लोकेभ्यो निर्भजति[4] तूष्णीं चतुर्थꣳ हरत्यपरिमितादेवैनं निर्भजत्यु[5]द्धन्ति यदेवास्या अमेध्यं तदप हन्त्यु[6]द्धन्ति तस्मादोषधयः परा भवन्ति[7] मूलं छिनत्ति भ्रातृव्यस्यैव मूलं छिनत्ति[8] पितृदेवत्याऽतिखातेयतीं खनति प्रजापतिना (२) यज्ञमुखेन संमिता[9]मा प्रतिष्ठायै खनति यजमानमेव प्रतिष्ठां गमयति[10] दक्षिणतो वर्षीयसीं करोति देवयजनस्यैव रूपमकः[11] पुरीषवतीं करोति प्रजा वै पशवः पुरीषं प्रजयैवैनं पशुभिः पुरीषवन्तं करोत्यु[12]त्तरं परिग्राहं परि गृह्णात्येतावती वै पृथिवी यावती वेदिस्तस्या एतावत एव भ्रातृव्यं निर्भज्याऽऽत्मन उत्तरं परिग्राहं परि गृह्णाति[13] क्रूरमिव वा (३) एतत् करोति यद्वेदिं करोति धा असि स्वधा असीति योयुप्यते शान्त्यै[14] प्रोक्षणीरा सादयत्यापो वै रक्षोघ्नी रक्षसामपहत्यै स्फ्यस्य वर्त्मन्त्सादयति यज्ञस्य संतत्यै[15] यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति[16] ॥ (भजति, प्रजापतिना, वै, त्रयस्त्रिꣳशच्च) ॥ ४ ॥

बर्हिः प्रयोगः ॥ प्रजापतिर्ऋषिः ।

ब्रह्मवादिनो वदन्त्यद्भिर्हवीꣳषि प्रौक्षीः केनाप इति ब्रह्मणेति ब्रूयादद्भिर्ह्येव हवीꣳषि प्रोक्षति ब्रह्मणाऽप[1] इध्माबर्हिः प्रोक्षति मेध्यमेवैनत् करोति[2] वेदिं प्रोक्षत्यृक्षा वा एषाऽलोमकाऽमेध्या यद्वेदिर्मेध्यामेवैनां करोति[3] दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति बर्हिरासाद्य प्रो-(१)-क्षत्येभ्य एवैनल्लोकेभ्यः प्रोक्षति[4] क्रूरमिव वा एतत् करोति यत् खनत्यपो नि नयति शान्त्यै[5] पुरस्तात् प्रस्तरं गृह्णाति मुख्यमेवैनं करोती[6]यन्तं गृह्णाति प्रजापतिना यज्ञमुखेन सम्मितं[7] बर्हिः स्तृणाति प्रजा वै बर्हिः पृथिवी वेदिः प्रजा एव पृथिव्यां प्रति ष्ठापयत्य[8]नतिदृश्नꣳ स्तृणाति प्रजयैवैनं पशुभिरनतिदृश्नं करोत्यु[9]-(२)-त्तरं बर्हिषः प्रस्तरꣳ सादयति प्रजा वै बर्हिर्यजमानः प्रस्तरो यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरो[10]ऽन्तर्दधाति व्यावृत्त्या[11] अनक्ति हविष्कृतमेवैनꣳ सुवर्गं लोकं गमयति[12] त्रेधाऽनक्ति त्रय इमे लोका एभ्य एवैनं लोकेभ्योऽनक्ति[13] न प्रति शृणाति यत् प्रतिशृणीयादनूर्ध्वंभावुकं यजमानस्य स्यादुपरीव प्र हरत्यु-(३)-परीव हि सुवर्गो लोको[14] नि यच्छति वृष्टिमेवास्मै नि यच्छति[15] नात्यग्रं प्र हरेद्यदत्यग्रं प्रहरेदत्यासारिण्यध्वर्योर्नाशुका स्या[16]न्न पुरस्तात् प्रत्यस्येद्यत् पुरस्तात् प्रत्यस्येत् सुवर्गाल्लोकाद्यजमानं प्रति नुदेत्[17] प्राञ्चं प्र हरति यजमानमेव सुवर्गं लोकं गमयति[18] न विष्वञ्चं वि युयाद्यद्विष्वञ्चं वियुयात् (४) स्त्र्यस्य जायेतो[19]र्ध्वमुद्यौत्यूर्ध्वमिव हि पुꣳसः पुमानेवास्य जायते[20] यत् स्फ्येन वोपवेषेण वा योयुप्येत स्तृतिरेवास्य सा हस्तेन योयुप्यते यजमानस्य गोपीथाय[21] ब्रह्मवादिनो वदन्ति किं यज्ञस्य यजमान इति प्रस्तर इति तस्य क्व सुवर्गो लोक इत्याहवनीय इति ब्रूयाद्यत् प्रस्तरमाहवनीये प्रहरति यजमानमेव (५) सुवर्गं लोकं गमयति[22] वि वा एतद्यजमानो लिशते यत् प्रस्तरं योयुप्यन्ते बर्हिरनु प्र हरति शान्त्या[23] अनारम्भण इव वा एतर्ह्यध्वर्युः स ईश्वरो वेपनो भवितोर्ध्रुवाऽसीतीमामभि मृशतीयं वै ध्रुवाऽस्यामेव प्रति तिष्ठति न वेपनो भवत्य[24]गा३न्नग्नीदित्याह यद्ब्रूयादगन्नग्निरित्य-(६)-ग्नावग्निं गमयेन्निर्यजमानꣳ सुवर्गाल्लोकाद्वजेदगान्नित्येव ब्रूयाद्यजमानमेव सुवर्गं लोकं गमयति[25] ॥

(प्र, करोति, हरति, वियुया,-द्वेवे,-तिं, सप्तदश च) ॥ ५ ॥

उपांशुयाजः, ९-१३ स्विष्टकृत् च ॥ प्रजापतिर्ऋषिः ।

अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत सोऽपः प्राविशत् तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीत् तमशपद्धियाधिया त्वा वध्यासुर्यो मा प्रावोच इति तस्मान्मत्स्यं धियाधिया घ्नन्ति शप्तो (१) हि तमन्वविन्दन् तमब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति[1] परिधीन् परि दधाति रक्षसामपहत्यै[2] सꣳ स्पर्शयति (२) रक्षसामनन्ववचाराय[3] न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यपहन्त्यू[4]र्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति[5] यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय[6] द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै[7] ब्रह्मवादिनो वदन्ति स त्वै यजेत यो यज्ञस्याऽऽर्त्या वसीयान्त्स्यादिति भूपतये स्वाहा भुवनपतये स्वाहा भूतानां (३) पतये स्वाहेति स्कन्नमनु मन्त्रयेत यज्ञस्यैव तदार्त्या यजमानो वसीयान् भवति भूयसीर्हि देवताः प्रीणाति[8] जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपाꣳशुयाजमन्तरा यजत्यजामित्वायाथो मिथुनत्वाया[9]ग्निरमुष्मिँल्लोक आसीद्यमोऽस्मिन् ते देवा अब्रुवन्नेतेमौ वि पर्यूहामेत्यन्नाद्येन देवा अग्नि-(४)-मुपामन्त्रयन्त राज्येन पितरो यमं तस्मादग्निर्देवानामन्नादो यमः पितृणाꣳ राजा य एवं वेद प्र राज्यमन्नाद्यमाप्नोति तस्मा एतद्भागधेयं प्रायच्छन् यदग्नये स्विष्टकृतेऽवद्यन्ति यदग्नये स्विष्टकृतेऽवद्यति भागधेयेनैव तद्रुद्रꣳ समर्धयति[10] सकृत्सकृदव द्यति सकृदिव हि रुद्र उत्तरार्धादव द्यत्येषा वै रुद्रस्य (५) दिक् स्वायामेव दिशि रुद्रं निरवदयते[11] द्विरभि घारयति चतुरवत्तस्याऽऽप्त्यै[12] पशवो वै पूर्वा आहुतय एष रुद्रो यदग्निर्यत् पूर्वा आहुतीरभि जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्यादतिहाय पूर्वा आहुतीर्जुहोति पशूनां गोपीथाय[13] ॥ (शप्तः, स्पर्शयति, भूतानां,-मग्निꣳ, रुद्रस्य, सप्तत्रिꣳशच्च ॥ ६ ॥

इडोपाह्वानम् ॥ प्रजापतिर्ऋषिः ।

मनुः पृथिव्या यज्ञियमैच्छत् स घृतं निषिक्तमविन्दत् सोऽब्रवीत् कोऽस्येश्वरो यज्ञेऽपि कर्तोरिति तावब्रूतां मित्रावरुणौ गोरेवाऽऽवमीश्वरौ कर्तोः स्व इति तौ ततो गाꣳ समैरयताꣳ सा यत्रयत्र न्यक्रामत् ततो घृतमपीडयत तस्माद्घृतपद्युच्यते तदस्यै जन्मो[1]पहूतꣳ रथन्तरꣳ सह पृथिव्येत्याहे(१)-यं वै रथन्तरमिमामेव सहान्नाद्येनोप ह्वयत[2] उपहूतं वामदेव्यꣳ सहान्तरिक्षेणेत्याह पशवो वै वामदेव्यं पशूनेव सहान्तरिक्षेणोप ह्वयत[3] उपहूतं बृहत् सह दिवेत्याहैरं वै बृहदिरामेव सह दिवोप ह्वयत[4] उपहूताः सप्त होत्रा इत्याह होत्रा एवोप ह्वयत[5] उपहूता धेनुः (२) सहर्षभेत्याह मिथुनमेवोप ह्वयत[6] उपहूतो भक्षः सखेत्याह सोमपीथमेवोप ह्वयत[7] उपहूताꣳ३ हो इत्याहाऽऽत्मानमेवोप ह्वयत आत्मा ह्युपहूतानां वसिष्ठ[8] इडामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते चतुष्पादो हि पशवो[10] मानवीत्याह मनुर्ह्येता-(३)-मग्रेऽपश्यद्घृतपदीत्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह मैत्रावरुणीत्याह मित्रावरुणौ ह्येनाꣳ समैरयता[11] ब्रह्म देवकृतमुपहूतमित्याह ब्रह्मैवोप ह्वयते[12] दैव्या अध्वर्यव उपहूता

उपहूता मनुष्या इत्याह देवमनुष्यानेवोप ह्वयते[13] य इमं यज्ञमवान् ये यज्ञपतिं वर्धानित्याह (४) यज्ञायं चैव यजमानाय चाऽऽशिषमा शास्ते[14] उपहूते द्यावापृथिवी इत्याह द्यावापृथिवी एवोप ह्वयते[15] पूर्वजे ऋतावरी इत्याह पूर्वजे ह्येते ऋतावरी देवी देवपुत्रे इत्याह देवी ह्येते देवपुत्रे[16] उपहूतोऽयं यजमान इत्याह यजमानमेवोप ह्वयते[17] उत्तरस्यां देवयज्यायामुपहूतो भूयसि हविष्करण उपहूतो दिव्ये धामन्नु-पहूत (५) इत्याह प्रजा वा उत्तरा देवयज्या पशवो भूयो हविष्करणꣳ सुवर्गो लोको दिव्यं धामे[18]—दमसीदमसीत्येव यज्ञस्य प्रियं धामोप ह्वयते[19] विश्वमस्य प्रियमुपहूतमित्याहाछम्बट्कारमेवोप ह्वयते[20] ॥ ( आह, धेनु,-रेता,-माहो,-पहूत,-श्चतुस्त्रिꣳशच्च ) ॥ ७ ॥

इडाभक्षणं, ७-१५ प्राशित्रभक्षणं च ॥ प्रजापतिर्ऋषिः ।

पशवो वा इडा स्वयमा दत्ते काममेवाऽऽत्मना पशूनामा दत्ते न ह्यन्यः कामं पशूनां प्रयच्छति[1] वाचस्पतये त्वा हुतं प्राश्नामीत्याह वाचमेव भागधेयेन प्रीणाति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै[2] चतुरवत्तं भवति हविर्वै चतुरवत्तं पशवश्चतुरवत्तं[3] यद्धोता प्राश्नीयाद्धोता (१) ऽऽर्तिमार्च्छेद्यदग्नौ जुहुयाद्रुद्राय पशूनपि दध्यादपशुर्यजमानः स्याद्वाचस्पतये त्वा हुतं प्राश्नामीत्याह परोक्षमेवैनज्जुहोति सदसस्पतये त्वा हुतं प्राश्नामीत्याह स्वगाकृत्यै[4] प्राश्नन्ति तीर्थ एव प्राश्नन्ति दक्षिणां ददाति तीर्थ एव दक्षिणां ददाति[5] वि वा एतद्यज्ञं (२) छिन्दन्ति यन्मध्यतः प्राश्नन्त्यद्भिर्मार्जयन्त आपो वै सर्वा देवता देवताभिरेव यज्ञꣳ सं तन्वन्ति[6] देवा वै यज्ञाद्रुद्रमन्तरायन्त्स यज्ञमविध्यत् तं देवा अभि समगच्छन्त कल्पतां न इदमिति तेऽब्रुवन्त्स्विष्टं वै न इदं भविष्यति यदिमꣳ राधयिष्याम इति तत् स्विष्टकृतः स्विष्टकृत्त्वं तस्याऽऽविद्धं नि-(३)-रकृन्तन् यवेन सम्मितं तस्माद्यवमात्रमव द्ये[7]—द्यज्ज्यायोऽवद्येद्रोपयेत् तद्यज्ञस्य यदुप च स्तृणीयादभि च घारयेदुभयतः सꣳश्वायि कुर्यादवदायाभि घारयति द्विः सं पद्यते द्विपाद्यजमानः प्रतिष्ठित्यै[8] यत् तिरश्चीनमतिहरेदनभिविद्धं यज्ञस्याभि विध्येदग्रेण परि हरति तीर्थेनैव परि हरति[10] तत् पूष्णे पर्यहरन् तत् (४) पूषा प्राश्य दतोऽरुणत् तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि तं देवा अब्रुवन् वि वा अयमार्ध्यप्राशित्रियो वा अयमभूदिति तद्बृहस्पतये पर्यहरन्त्सोऽबिभेद्बृहस्पतिरित्थं वाव स्य आर्तिमाऽरिष्यतीति[11] स एतं मन्त्रमपश्यत् सूर्यस्य त्वा चक्षुषा प्रति पश्यामीत्यब्रवीन्न हि सूर्यस्य चक्षुः (५) किं चन हिनस्ति[12] सोऽबिभेत् प्रतिगृह्णन्तं मा हिꣳसिष्यतीति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रति गृह्णामीत्यब्रवीत् सवितृप्रसूत एवैनद्ब्रह्मणा देवताभिः प्रत्यगृह्णात्[13] सोऽबिभेत् प्राश्नन्तं मा हिꣳसिष्यतीत्यग्नेस्त्वाऽऽस्येन प्राश्नामीत्यब्रवीन्न ह्यग्नेरास्यं किं चन हिनस्ति सोऽबिभेत् (६) प्राशितं मा हिꣳसिष्यतीति ब्राह्मणस्योदरेणेत्यब्रवीन्न हि ब्राह्मणस्योदरं किं चन हिनस्ति बृहस्पतेर्ब्रह्मणेति स हि ब्रह्मिष्ठो[14] ऽप वा एतस्मात् प्राणाः क्रामन्ति यः प्राशित्रं प्राश्नात्यद्भिर्मार्जयित्वा प्राणान्त्सं मृशतेऽमृतं वै प्राणा अमृतमापः प्राणानेव यथास्थानमुप ह्वयते[15] ॥ ( होता, यज्ञं, नि,-ष्ट,- चक्षु,-रबिभे,-च्चतुश्चत्वारिꣳशच्च ) ॥ ८ ॥

अनूयाजाः, १२-२२ सूक्तवाकाश्च ॥ प्रजापतिर्ऋषिः ।

अग्नीध आ दधात्यग्निमुखानेवर्तून् प्रीणाति[1] समिधमा दधात्युत्तरासामाहुतीनां प्रतिष्ठित्या अथो
समिद्वत्येव जुहोति[2] परिधीन्त्सं मार्ष्टि पुनात्येवैना[3]—न्त्सकृत्सकृत् सं मार्ष्टि पराङिव ह्येतर्हि यज्ञ[4]—
श्चतुः सं पद्यते चतुष्पादः पशवः पशूनेवाव रुन्धे[5] ब्रह्मन् प्र स्थास्याम इत्याहात्र वा एतर्हि यज्ञः
श्रितो ( १ ) यत्र ब्रह्मा यत्रैव यज्ञः श्रितस्तत एवैनमा रभते[6] यद्धस्तेन प्रमीवेद्वेपनः स्याद्यच्छीर्ष्णा शीर्ष-
क्तिमान्त्स्याद्यत् तूष्णीमासीतासम्प्रत्तो यज्ञः स्यात् प्रतिष्ठेत्येव ब्रूयाद्वाचि वै यज्ञः श्रितो यत्रैव यज्ञः श्रित-
स्तत एवैनꣳ सं प्र यच्छति[7] देव सवितरेतत् ते प्रा-( २ )-ऽऽहेत्याह प्रसूत्यै बृहस्पतिर्ब्रह्मेत्याह स हि
ब्रह्मिष्ठः स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहीत्याह यज्ञाय यजमानायाऽऽत्मने तेभ्य एवाऽऽशिषमा
शास्तेऽनार्त्या[8] आश्राव्याऽऽह देवान् यजेति[9] ब्रह्मवादिनो वदन्तीष्टा देवता अथ कतम एते देवा इति
छन्दाꣳसीति ब्रूयाद्गायत्रीं त्रिष्टुभं ( ३ ) जगतीमित्यथो खल्वाहुर्ब्राह्मणा वै छन्दाꣳसीति तानेव तद्यजति[10]
देवानां वा इष्टा देवता आसन्नथाग्निर्नोदज्वलत् तं देवा आहुतीभिरनूयाजेष्वन्वविन्दन् यदनूयाजान्
यजत्यग्निमेव तत् समिन्धे[11] एतदुर्वै नामाऽऽसुर आसीत् स एतर्हि यज्ञस्याऽऽशिषमवृङ्क्त यद्ब्रूयादेत
-( ४ )-दु द्यावापृथिवी भद्रमभूदित्येतदुमेवाऽऽसुरं यज्ञस्याऽऽशिषं गमयेदिदं द्यावापृथिवी भद्रमभूदित्येव
ब्रूयाद्यजमानमेव यज्ञस्याऽऽशिषं गमयत्या[12]—र्ध्म सूक्तवाकमुत नमोवाकमित्याहेदमराद्स्मेति वावैतदाहो[13]—
पश्रितो दिवः पृथिव्योरित्याह द्यावापृथिव्योर्हि यज्ञ उपश्रित[14] ओमन्वती तेऽस्मिन् यज्ञे यजमान
द्यावापृथिवी ( ५ ) स्तामित्याहाऽऽशिषमेवैतामा शास्ते[15] यद्ब्रूयात् सूपावसाना च स्वध्यवसाना चेति
प्रमायुको यजमानः स्याद्यदा हि प्रमीयतेऽथेमामुपावस्यति सूपचरणा च स्वधिचरणा चेत्येव ब्रूयाद्वरी-
यसीमेवास्मै गव्यूतिमा शास्ते न प्रमायुको भवति[16] तयोराविद्यग्निरिदꣳ हविरजुषतेत्याह या अयाक्ष्म
( ६ ) देवतास्ता अरीरधामेति वावैतदाह[17] यन्न निर्दिशेत् प्रतिवेशं यज्ञस्याऽऽशीर्गच्छेदा शास्तेऽयं
यजमानोऽसावित्याह निर्दिश्यैवैनꣳ सुवर्गं लोकं गमयत्या[18]—युरा शास्ते सुप्रजास्त्वमा शास्त इत्याहाऽऽ-
शिषमेवैतामा शास्ते[19] सजातवनस्यामा शास्त इत्याह प्राणा वै सजाताः प्राणानेव ( ७ ) नान्तरेति[20]
तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषा इत्याहाग्निर्देवेभ्यो वनुते वयं मनुष्येभ्य इति वावैतदाहे[21]—ह गति-
र्वामस्येदं च नमो देवेभ्य इत्याह याश्चैव देवता यजति याश्च न ताभ्य एवोभयीभ्यो नमस्करोत्यात्मनो-
ऽनार्त्यै[22] ॥ ( श्रितः, प्र, त्रिष्टुभं,–मेतद्, द्यावापृथिवी, अयाक्ष्म, व, षट्चत्वारिꣳशच्च ) ॥ ९ ॥

शंयुवाकमन्त्रव्याख्या, ४-७ पत्नीसंयाजाश्च ॥ प्रजापतिर्ऋषिः ।

देवा वै यज्ञस्य स्वगाकर्तारं नाविन्दन् ते शंयुं बार्हस्पत्यमब्रुवन्निमं नो यज्ञꣳ स्वगा कुर्विति सोऽ-
ब्रवीद्वरं वृणै यदेवाब्राह्मणोक्तोऽश्रद्दधानो यजातै सा मे यज्ञस्याऽऽशीरसदिति तस्माद्यदब्राह्मणोक्तोऽश्रद्द-
धानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छत्येतन्ममेत्यब्रवीत् किं मे प्रजाया ( १ ) इति योऽ-
पगुरातै शतेन यातयाद्यो निहनत् सहस्रेण यातयाद्यो लोहितं करवद्यावतः प्रस्कद्य पाꣳसून्त्संगृह्णात्
तावतः संवत्सरान् पितृलोकं न प्र जानादिति तस्माद्ब्राह्मणाय नाप गुरेत न नि हन्यान्न लोहितं कुर्या-

देतावता हैनसा भवति[1] तच्छंयोरा वृणीमह इत्याह. यज्ञमेव तत् स्वगा करोति[2] त–( २ )–च्छंयोरा वृणीमह इत्याह शंयुमेव बार्हस्पत्यं भागधेयेन समर्धयति[3] गातुं यज्ञाय गातुं यज्ञपतय इत्याहा-ऽऽशिषमेवैतामा शास्ते[4] सोमं यजति रेत एव तद्दधाति त्वष्टारं यजति रेत एव हितं त्वष्टा रूपाणि वि करोति देवानां पत्नीर्यजति मिथुनत्वायाग्निं गृहपतिं यजति प्रतिष्ठित्यै[5] जामि वा एतद्यज्ञस्य क्रियते( ३ ) यदाज्येन प्रयाजा इज्यन्त आज्येन पत्नीसंयाजा ऋचमनूच्य पत्नीसंयाजानामृचा यजत्यजामित्वायाथो मिथुनत्वाय[6] पङ्क्तिप्रायणो वै यज्ञः पङ्क्त्युदयनः पञ्च प्रयाजा इज्यन्ते चत्वारः पत्नीसंयाजाः समिष्टयजुः पञ्चमं पङ्क्तिमेवानु प्रयन्ति पङ्क्तिमनूद्यन्ति[7] ॥ ( प्रजाया,–स्तत्, क्रियते, त्रयस्त्रिंशच्च ) ॥ १० ॥

संवर्गेष्टिहौत्रमन्त्रः ॥ गायत्री, १८–१९ अनुष्टुप् । विश्वेदेवा ऋषयः ।

युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः[1] ॥
उत नो देव देवाꣳ अच्छा वोचो विदुष्टरः । श्रद्विश्वा वार्या कृधि[2] ॥
त्वꣳ ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः[3] ॥
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम्[4] ॥
तं नेमिमृभवो यथा ऽऽ नमस्व सहूतिभिः । नेदीयो यज्ञ–( १ )–मङ्गिरः[5] ॥
तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम्[6] ॥
कमु ष्विदस्य सेनयाऽग्नेरपाकचक्षसः । पणिं गोषु स्तरामहे[7] ॥
मा नो देवानां विशः प्रस्नातीरिवोस्राः । कृशं न हासुरघ्नियाः[8] ॥
मा नः समस्य दूढ्यः परिद्वेषसो अꣳहतिः । ऊर्मिर्न नावमा वधीत्[9] ॥
नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः । अमैः–( २ )–रमित्रमर्दय[10] ॥
कुवित् सु नो गविष्टयेऽग्ने संवेषिषो रयिम् । उरुकृदुरु णस्कृधि[11] ॥
मा नो अस्मिन् महाधने परा वर्ग्भारभृद्यथा । संवर्गꣳ सꣳ रयिं जय[12] ॥
अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना । वर्धा नो अमवच्छवः[13] ॥
यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा । तं घेदग्निर्वृधाऽवति[14] ॥
परस्या अधि ( ३ ) संवतोऽवराꣳ अभ्या तर । यत्राहमस्मि ताꣳ अव[15] ॥
विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः । अधा ते सुम्नमीमहे[16] ॥
य उग्र इव शर्यहा तिग्मशृङ्गो न वꣳसगः । अग्ने पुरो रुरोजिथ[17] ॥
सखायः सं वः सम्यञ्चमिषꣳ स्तोमं चाग्नये ।
वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते[18] ॥

*

सꣳ समिद्युवसे वृषन्न- ( ४ )-ग्ने विश्वान्यर्य आ ।
इडस्पदे समिध्यसे स नो वसून्या भर[१९] ॥
प्रजापते[२०] *-स वेद[२१]*-सोमापूषणे[२२]*-मौ देवौ[२३]*- ॥
( युज्ञ,-मस्मै,-रधि, वृष,-न्नेकान्नविꣳशतिश्च ) ॥ ११ ॥

पितृयज्ञहविषां हौत्रमन्त्राः ॥ त्रिष्टुप्, १,१२ अनुष्टुप्, ५ जगती । विश्वेदेवा ऋषयः ।

उशन्तस्त्वा हवामह उशन्तः समिधीमहि ।
उशन्नुशत आ वह पितॄन् हविषे अत्तवे[१] ॥
त्वꣳ सोम प्रचिकितो मनीषा त्वꣳ रजिष्ठमनु नेषि पन्थाम् ।
तव प्रणीती पितरो न इन्दो देवेषु रत्नमभजन्त धीराः[२] ॥
त्वया हि नः पितरः सोम पूर्वे कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः परिधीꣳरपोर्णु वीरेभिरश्वैर्मघवा भवा ( १ ) नः[३] ॥
त्वꣳ सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।
तस्मै त इन्दो हविषा विधेम वयꣳ स्याम पतयो रयीणाम्[४] ॥
अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्ता हवीꣳषि प्रयतानि बर्हिष्यथा रयिꣳ सर्ववीरं दधातन[५] ॥
बर्हिषदः पितर ऊत्यर्वागिमा वो हव्या चकृमा जुषध्वम् ।
त आ गतावसा शन्तमेनाथास्मभ्यꣳ ( २ ) शं योररपो दधात[६] ॥
आऽहं पितॄन्त्सुविदत्राꣳ अवित्सि नपातं च विक्रमणं च विष्णोः ।
बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहाऽऽगमिष्ठाः[७] ॥
उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु ।
त आ गमन्तु त इह श्रुवन्त्वधि ब्रुवन्तु तेऽवन्त्वस्मान्[८] ॥
उदीरतामवर उत् परास उन्मध्यमाः पितरः सोम्यासः ।
असुं ( ३ ) य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु[९] ॥
इदं पितृभ्यो नमो अस्त्वद्य ये पूर्वासो य उपरास ईयुः ।
ये पार्थिवे रजस्या निषत्ता ये वा नूनꣳ सुवृजनासु विक्षु[१०] ॥
अधा यथा नः पितरः परासः प्रत्नासो अग्न ऋतमाशुषाणाः ।
शुचीदयन् दीधितिमुक्थशासः क्षामा भिन्दन्तो अरुणीरप व्रन्[११] ॥

११।२० ( १।८।१४।१२ ), ११।२१ ( २।२।१२।४ ), ११।२२-२३ ( १।८।२२।१८-१९ )

यदग्ने (४) कव्यवाहन पितृन् यक्ष्यृतावृधः ।
प्र च हव्यानि वक्ष्यसि देवेभ्यश्च पितृभ्य आ ॥[12]
त्वमग्न ईडितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वा ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि[13] ।
मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।
याꣳश्च देवा वावृधुर्ये च देवान्त्स्वाहाऽन्ये स्वधयाऽन्ये मदन्ति[14] (५) ॥
इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः ॥
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व[15] ॥
अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व ।
विवस्वन्तꣳ हुवे यः पिता तेऽस्मिन् यज्ञे बर्हिष्या निषद्य[16] ॥
अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे (६) स्याम[17] ॥
( भवा,-ऽस्मभ्य,-मसु,-मग्ने, मदन्ति, सौमनस, एकं च ) ॥ १२ ॥

[ समिध-३३५ ।-श्चक्षुषी ३०२ । प्रजापति-२८२ ।-र्दैवस्य १८३ । ब्रह्मवादिनो ३१७ । ऽग्ने- २८७ ।-र्मनुः २८४ । पशवो ३४४ । ऽग्नीधे ३९६ । देवा १८३ । युक्ष्वो २१९ । शन्ते- ३०१ । द्वादश ॥ ३४२३ ]

[ ॥ इति द्वितीयकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥ ]

[ वायव्यं ३२७८ । प्रजापति-३५२६ ।-रादित्येभ्यो २९६५ । देवा २४०६ । विश्वरूपः ३६६५ । समिधः ३४२३ । ( षट् ॥ ६ ॥ १९२७३ ) ]

॥ इति द्वितीयं काण्डं सम्पूर्णम् ॥ २ ॥

# अथ तृतीयं काण्डम् ।

## न्यूनकर्माभिधानम् ।

[ अथ प्रथमः प्रपाठकः ॥ १ ॥ ]

दीक्षितेन वक्तव्यमन्त्रेषु अमेध्यदर्शने वर्षणे च वक्तव्यौ ॥ विश्वेदेवा ऋषयः ।

प्रजापतिरकामयत प्रजाः सृजेयेति स तपोऽतप्यत स सर्पानसृजत सोऽकामयत प्रजाः सृजेयेति स द्वितीयमतप्यत स वयाꣳस्यसृजत सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं दीक्षितवादमपश्यत् तमवदत् ततो वै स प्रजा असृजत[1] यत् तपस्तप्त्वा दीक्षितवादं वदति प्रजा एव तद्यजमानः (१) सृजते[2] यद्वै दीक्षितोऽमेध्यं पश्यत्यपास्माद्दीक्षा क्रामति नीलमस्य हरो व्येत्यबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाꣳ श्रेष्ठो दीक्षे मा मा हासीरित्याह नास्माद्दीक्षाऽप क्रामति नास्य नीलं न हरो व्येति[3] यद्वै दीक्षितमभिवर्षति दिव्या आपोऽशान्ता ओजो बलं दीक्षां (२) तपोऽस्य निर्घ्नन्त्युन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्याहैतदेव सर्वमात्मन् धत्ते नास्यौजो बलं न दीक्षां न तपो निर्घ्नन्त्य[4]—ग्निर्वै दीक्षितस्य देवता सोऽस्मादेतर्हि तिर इव यर्हि याति तमीश्वरꣳ रक्षाꣳसि हन्तो—(३)—र्भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्त्वित्याह ब्रह्म वै देवानां बृहस्पतिस्तमेवान्वारभते स एनꣳ सं पारयत्ये[5]—दमगन्म देवयजनं पृथिव्या इत्याह देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजते[6] विश्वे देवा यदजुषन्त पूर्व इत्याह विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा (४) ऋक्सामाभ्यां यजुषा सन्तरन्त इत्याहर्क्सामाभ्याꣳ ह्येष यजुषा सन्तरति यो यजते[7] रायस्पोषेण समिषा मदेमेत्याहाऽऽशिषमेवैतामा शास्ते[8] ॥ ( यजमानो, दीक्षाꣳ, हन्तो,—र्ब्राह्मणा,—श्चतुर्विꣳशतिश्च ) ॥ १ ॥

सोमोपस्थानमन्त्राः, अध्वर्युकर्तव्यविधयश्च ॥ विश्वेदेवा ऋषयः ।

एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूता[1]—द्यो वै सोमꣳ राजानꣳ साम्राज्यं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं छन्दाꣳसि खलु वै सोमस्य राज्ञः साम्राज्यो लोकः[2] पुरस्तात् सोमस्य क्रयादेवमभि मन्त्रयेत साम्राज्यमेवै—(१)—नं लोकं गमयित्वा क्रीणाति गच्छति स्वानाꣳ साम्राज्यं[3] यो वै तानूनप्त्रस्य प्रतिष्ठां वेद प्रत्येव तिष्ठति ब्रह्मवादिनो वदन्ति न प्राश्नन्ति न जुह्वत्यथ क्व तानूनप्त्रं प्रति तिष्ठतीति प्रजापतौ मनसीति ब्रूयात्[4] त्रिरव जिघ्रेत् प्रजापतौ त्वा मनसि जुहोमीत्येषा वै तानूनप्त्रस्य प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति[5] यो (२) वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत् तिष्ठन्ना श्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति[6] यदभिक्रम्य जुहुयात् प्रतिष्ठाया इयात् तस्मात् समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै[7] यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य (३) स्वं चमसोऽस्य स्वं यद्वायव्यं वा चमसं वाऽनन्वारभ्याऽऽश्रावयेत् स्वादियात् तस्मादन्वारभ्याऽऽश्राव्यꣳ स्वादेव नैति यो वै सोममप्र-

तिष्ठाप्य स्तोत्रमुपाकरोत्यप्रतिष्ठितः सोमो भवत्यप्रतिष्ठितः स्तोमोऽप्रतिष्ठितान्युक्थान्यप्रतिष्ठितो यजमानोऽप्रतिष्ठितोऽध्वर्युर्वायव्यं वै सोमस्य प्रतिष्ठा चमसोऽस्य प्रतिष्ठा सोमः स्तोमस्य स्तोम उक्थानां ग्रहं वा (४) गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात् प्रत्येव सोमँ स्थापयति प्रति स्तोमं प्रत्युक्थानि प्रति यजमानस्तिष्ठति प्रत्यध्वर्युः[1] ॥ (एव, यो, ऽस्य, वै,-क्रान्नविँशतिश्च ) ॥ २ ॥

सोमक्रयणीपदाञ्जनम्, २-३ पशुश्रपणार्थस्याग्नेः प्रणयनम्, ४ पशोरवदाननाशे प्रायश्चित्तं, ५ पश्वपहर्तृनाशार्थं होमश्च ॥ विश्वेदेवा ऋषयः।

यज्ञं वा एतत् सं भरन्ति यत् सोमक्रयण्यै पदं यज्ञमुखँ हविर्धाने यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्याद्यज्ञमुख एव यज्ञमनु सं तनोति[1] प्राञ्चमग्निं प्र हरन्त्युत् पत्नीमा नयन्त्यन्वनाँसि प्र वर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनु ध्यायति स ईश्वरो रुद्रो भूत्वा (१) प्रजां पशून् यजमानस्य शमयितोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणँ हरेत् तेनैवैनं भागिनं करोति[2] यजमानो वा आहवनीयो यजमानं वा एतद्वि कर्षन्ते यदाहवनीयात् पशुश्रपणँ हरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वाय[3] यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमव द्येत् सैव ततः (२) प्रायश्चित्तिर्[4]—ये पशुं विमथ्नीरन् यस्तान् कामयेताऽऽर्तिमाच्छेयुरिति कुविदङ्गेति नमोवृक्तिवत्यर्चाऽऽग्नीध्रे जुहुयान्नमोवृक्तिमेवैषां वृङ्क्ते ताजगार्तिमाच्छन्ति ॥ (भूत्वा, ततः, षड्विँशतिश्च) ॥ ३ ॥

पशूपाकरणमन्त्राः ॥ त्रिष्टुप्, १, ९-१० अनुष्टुप्, ११-१२ द्विपदा । विश्वेदेवा ऋषयः।

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ।
तस्मै प्रति प्र वेदय चिकित्वाँ अनु मन्यताम्[1] ॥
इमं पशुं पशुपते ते अद्य बध्नाम्यग्ने सुकृतस्य मध्ये ।
अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्[2] ॥
प्रजानन्तः प्रति गृह्णन्ति पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम् ।
सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रति तिष्ठा शरीरैः[3] ॥
येषामीशे (१) पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् ।
निष्क्रीतोऽयं यज्ञियं भागमेतु रायस्पोषा यजमानस्य सन्तु[4] ॥
ये बध्यमानमनु बध्यमाना अभ्यैक्षन्त मनसा चक्षुषा च ।
अग्निस्ताँ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः[5] ॥
य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः ।
वायुस्ताँ अग्रे प्र मुमोक्तु देवः प्रजापतिः प्रजया संविदानः[6] ॥
प्रमुञ्चमाना (२) भुवनस्य रेतो गातुं धत्त यजमानाय देवाः ।
उपाकृतँ शशमानं यदस्थाज्जीवं देवानामप्येतु पाथः[7] ॥

नाना प्राणो यजमानस्य पशुना यज्ञो देवेभिः सह देवयानः ।
जीवं देवानामप्येतु पाथः सत्याः सन्तु यजमानस्य कामाः[८] ॥
यत् पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहसः[९] ॥
शमितार उपेतन यज्ञं ( ३ ) देवेभिरिन्वितम् । पाशात् पशुं प्र मुञ्चत बन्धाद्यज्ञपतिं परि[१०] ॥
अदितिः पाशं प्र मुमोक्त्वेतं नमः पशुभ्यः पशुपतये करोमि[११] ॥
अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन् प्रति मुञ्चामि पाशम्[१२] ॥
त्वामु ते दधिरे हव्यवाहं शृतंकर्तारमुत यज्ञियं च ।
अग्ने सदक्षः सतनुर्हि भूत्वाऽथ हव्या जातवेदो जुषस्व[१३] ॥
जातवेदो वपया गच्छ देवान् त्वं ( ४ ) हि होता प्रथमो बभूथ ।
घृतेन त्वं तनुवो वर्धयस्व स्वाहाकृतं हविरदन्तु देवाः[१४] ॥
स्वाहा देवेभ्यो[१५] देवेभ्यः स्वाहा[१६] ॥ ( ईशे, प्रमुञ्चमाना, यज्ञं, त्वं, षोडश च ) ॥ ४ ॥

पशूपाकरणविधिः । विश्वेदेवा ऋषयः ।

प्राजापत्या वै पशवस्तेषां रुद्रोऽधिपतिर्यदेताभ्यामुपाकरोति ताभ्यामेवैनं प्रतिप्रोच्याऽऽलभत आत्मनोऽनाव्रस्काय[१] द्वाभ्यामुपाकरोति द्विपाद्यजमानः प्रतिष्ठित्यै[२] उपाकृत्य पञ्च जुहोति पाङ्क्ताः पशवः पशूनेवाव रुन्धे[३] मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्यान्नाना प्राणो यजमानस्य पशुनेत्याह व्यावृत्त्यै[४] ( १ ) यत् पशुर्मायुमकृतेति जुहोति शान्त्यै[५] शमितार उपेतनेत्याह यथायजुरेवैतद्[६] वपायां वा आह्रियमाणायामग्नेर्मेधोऽप क्रामति त्वामु ते दधिरे हव्यवाहमिति वपामभि जुहोत्यग्नेरेव मेधमव रुन्धेऽथो शृतत्वाय[७] पुरस्तात् स्वाहाकृतयो वा अन्ये देवा उपरिष्टात् स्वाहाकृतयोऽन्ये स्वाहा देवेभ्यो देवेभ्यः स्वाहेत्यभितो वपां ( २ ) जुहोति तानेवोभयान् प्रीणाति ॥ ( व्यावृत्त्यै, वपां, पञ्च च ) ॥ ५ ॥

आग्नीध्राभिमर्शनादिविधयः, द्रोणकलशाद्यासादनमन्त्रविशेषाश्च ॥ विश्वेदेवा ऋषयः ।

यो वा अयथादेवतं यज्ञमुपचरत्या देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान् भवत्याग्नेय्यर्चाऽऽग्नीध्रमभि मृशेद् वैष्णव्या हविर्धानमाग्नेय्या स्रुचो वायव्यया वायव्यान्यैन्द्रिया सदो यथादेवतमेव यज्ञमुप चरति न देवताभ्य आ वृश्च्यते वसीयान् भवति[१] युनज्मि ते पृथिवीं ज्योतिषा सह[२] युनज्मि वायुमन्तरिक्षेण ( १ ) ते सह[३] युनज्मि वाचं सह सूर्येण ते[४] युनज्मि तिस्रो विपृचः सूर्यस्य ते[५] । अग्निर्देवता गायत्री छन्द उपांशोः पात्रमसि[६] सोमो देवता त्रिष्टुप् छन्दोऽन्तर्यामस्य पात्रमसी[७]न्द्रो देवता जगती छन्द इन्द्रवायुवोः पात्रमसि[८] बृहस्पतिर्देवताऽनुष्टुप् छन्दो मित्रावरुणयोः पात्रमस्यश्विनौ[९] देवता पङ्क्तिश्छन्दोऽश्विनोः पात्रमसि[१०] सूर्यो देवता बृहती ( २ ) छन्दः शुक्रस्य पात्रमसि[११] चन्द्रमा देवता सतो बृहती छन्दो मन्थिनः पात्रमसि[१२] विश्वे देवा देवतोष्णिहा छन्द आग्रयणस्य पात्रमसी[१३]न्द्रो देवता ककुच्छन्द उक्थानां पात्रमसि[१४] पृथिवी देवता विराट् छन्दो ध्रुवस्य पात्रमसि[१५] ॥ ( अन्तरिक्षेण, बृहती, त्रयस्त्रिंशच्च ) ॥ ६ ॥

स्पर्धावतोर्यजमानयोः प्रयोगाः केचिन्मन्त्राश्च । विश्वेदेवा ऋषयः ।

इष्टर्गो वा अध्वर्युर्यजमानस्येष्टर्गः खलु वै पूर्वोऽर्ष्टुः क्षीयत आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्या इति पुरा प्रातरनुवाकाज्जुहुयादात्मन एव तदध्वर्युः पुरस्ताच्छर्म नह्यतेऽनात्यै संवेशाय त्वोपवेशाय त्वा गायत्रियाः*– –*त्रिष्टुभो*– –*जगत्या अभिभूत्यै स्वाहा प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा मा हासिष्टं देवतासु वा एते प्राणापानयोः-( १ )-व्यायच्छन्ते येषा२ँ सोमः समृच्छते संवेशाय त्वोपवेशाय त्वेत्याह छन्दा२ँसि वै संवेश उपवेशश्छन्दोभिरेवास्य छन्दा२ँसि वृङ्क्ते प्रेतिवन्त्याज्यानि भवन्त्यभिजित्यै मरुत्वतीः प्रतिपदो विजित्या उभे बृहद्रथन्तरे भवत इयं वाव रथन्तरमसौ बृहदाभ्यामेवैनमन्तरेत्यद्य वाव रथन्तर२ँ श्वो बृहदद्याश्वादेवैनमन्तरेति भूतं ( २ ) वाव रथन्तरं भविष्यद्बृहद् भूताच्चैवैनं भविष्यतश्चान्तरेति परिमितं वाव रथन्तरमपरिमितं बृहत् परिमिताच्चैवैनमपरिमिताच्चान्तरेति विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेता२ँ स एतज्जमदग्निर्विहव्यमपश्यत् तेन वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्य२ँ शस्यत इन्द्रियमेव तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते ( ३ ) यस्य भूया२ँसो यज्ञक्रतव इत्याहुः स देवता वृङ्क्त इति यद्यग्निष्टोमः सोमः परस्तात् स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीत यज्ञक्रतुभिरेवास्य देवता वृङ्क्ते वसीयान् भवति ॥ ( प्राणापानयो,-र्भूतं, वृङ्क्ते, ऽष्टाविंशतिश्च ) ॥ ७ ॥

उपांशुग्रहाभिषवः विधिः, मन्त्राश्च ॥ २, ४ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

निग्राभ्याः स्थ देवश्रुत आयुर्मे तर्पयत प्राणं मे तर्पयतापानं मे तर्पयत व्यानं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयत मनो मे तर्पयत वाचं मे तर्पयताऽऽत्मानं मे तर्पयताङ्गानि मे तर्पयत प्रजां मे तर्पयत पशून् मे तर्पयत गृहान् मे तर्पयत गणान् मे तर्पयत सर्वगणं मा तर्पयत तर्पयन्त मा ( १ ) गणा मे मा वि तृषन्नोषधयो वै सोमस्य विशो विशः खलु वै राज्ञः प्रदातोरीश्वरा ऐन्द्रः सोमोऽ-

वीवृधं वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम ।

इन्द्रेण देवीर्वीरुधः संविदाना अनु मन्यन्ता२ँ सवनाय सोम–

–मित्याहौषधीभ्य एवैन२ँ स्वायै विशः स्वायै देवतायै निर्याच्याभि षुणोति यो वै सोमस्याभिषूयमाणस्य ( २ ) प्रथमोऽ२ँशुः स्कन्दति स ईश्वर इन्द्रियं वीर्यं प्रजां पशून् यजमानस्य निर्हन्तोस्तमभि मन्त्रयेताऽऽ मोऽस्कान्त्सह प्रजया सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधीरित्याशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्य प्रजायै पशूनामनिर्घाताय

द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च ( ३ ) पूर्वः ।

तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥ ( मा,ऽभिषूयमाणस्य, च, दश च ) ॥८॥

ग्रहमन्त्रोच्चारणादिधर्माः, आधारसंस्रावमन्त्राश्च ॥ २-४ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

यो वै देवान् देवयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येषु यान् प्राचीनमाग्रयणाद् ग्रहान् गृह्णीयात् तानुपा२ँशु गृह्णीयाद्यानूर्ध्वा२ँस्तानुपब्दिमतो देवानेव तद्दे-

( ७।२-३ ) अभि...स्वाहा, ( ७।३-४ ) संवेशा... त्वा ।

वयशसेनार्पयति मनुष्यान् मनुष्ययशसेन देवयशस्येव देवेषु भवति मनुष्ययशसी मनुष्येष्व॑

अग्निः प्रातः सवने पात्वस्मान् वैश्वानरो महिना विश्वशंभूः ।

स नः पावको द्रविणं दधात्वा-( १ )-युष्मन्तः सहभक्षाः स्याम ॥

विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवने न जह्युः ।

आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाꣳ सुमतौ स्याम ॥

इदं तृतीयꣳ सवनं कवीनामृतेन ये चमसमैरयन्त ।

ते सौधन्वनाः सुवरानशानाः स्विष्टिं नो अभि वसीयो नयन्तु ॥

आयतनवतीर्वा अन्या आहुतयो हूयन्तेऽनायतना अन्या या आघारवतीस्ता आयतनवतीर्याः ( २ ) सौम्यास्ता अनायतना ऐन्द्रवायवमादायाऽऽघारमा घारयेदध्वरो यज्ञोऽयमस्तु देवा ओषधीभ्यः पशवे नो जनाय विश्वस्मै भूतायाध्वरोऽसि स पिन्वस्व घृतवद्देव सोमेति सौम्या एव तदाहुतीरायतनवतीः करोत्यायतनवान् भवति य एवं वेदाथो द्यावापृथिवी एव घृतेन व्युनत्ति ते व्युत्ते उपजीवनीये भवत उपजीवनीयो भवति ( ३ ) य एवं वेदै॒ष ते रुद्र भागो यं निरयाचथास्तं जुषस्व विदेर्गौपत्यꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिम् ॥

मनुः पुत्रेभ्यो दायं व्यभजत् स नाभानेदिष्ठं ब्रह्मचर्यं वसन्तं निरभजत् स आऽगच्छत् सोऽब्रवीत् कथा मा निरभागिति न त्वा निरभाक्षमित्यब्रवीदङ्गिरस इमे सत्रमासते ते ( ४ ) सुवर्गं लोकं न प्र जानन्ति तेभ्य इदं ब्राह्मणं ब्रूहि ते सुवर्गं लोकं यन्तो य एषां पशवस्ताꣳस्ते दास्यन्तीति तदेभ्योऽब्रवीत् ते सुवर्गं लोकं यन्तो य एषां पशव आसन् तानस्मा अददु-स्तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आऽगच्छत् सोऽब्रवीन्मम वा इमे पशव इत्यदुर्वै ( ५ ) मह्यमिमानित्यब्रवीन्न वै तस्य त ईशत इत्यब्रवीद्यद्यज्ञवास्तौ हीयते मम वै तदिति तस्माद्यज्ञवास्तु नाभ्यवेत्यꣳ सोऽब्रवीद्यज्ञे माऽऽभजाथ ते पशून् नाभि मꣳस्य इति तस्मा एतं मन्थिनः सꣳस्रावमजुहोत् ततो वै तस्य रुद्रः पशून् नाभ्यमन्यत यत्रैत-( ६ )-मेवं विद्वान् मन्थिनः सꣳस्रावं जुहोति न तत्र रुद्रः पशूनभि मन्यते ॥ ( दधातु, या, भवति, ते, वा, एत,-मेकादश च ) ॥ ९ ॥

अवभृथहोमादिमन्त्राभिधानम् ॥ २ गायत्री, ३-५ त्रिष्टुप्, ९ अनुष्टुप् ।

जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् ।

यद्वाचो मधुमत् तस्मिन् मा धाः स्वाहा सरस्वत्यै ॥

ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि ॥

यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुर्बाहुच्युतो धिषणयोरुपस्थात् ।

अध्वर्योर्वा परि यस्ते पवित्रात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥

यो द्रप्सो अꣳशुः पतितः पृथिव्यां परिवापात ( १ ) पुरोडाशात् करम्भात् ।

धानासोमान्मन्थिनं इन्द्र शुक्रात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥

यस्ते द्रप्सो मधुमाꣳ इन्द्रियावान्त्स्वाहाकृतः पुनरप्येति देवान् ।

दिवः पृथिव्याः पर्यन्तरिक्षात् स्वाहाकृतमिन्द्राय तं जुहोमि ॥

अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान् पशुषु प्रजां मयि (२) च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान् गृहीत्वा बहिष्पवमानꣳ सर्पन्ति पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योप तिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाक—

—र्विष्णो त्वं नो अन्तमः शर्म यच्छ सहन्त्य । प्र ते धारा मधुश्चुत उत्सं दुह्रते (३) अक्षित—

—मित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाऽऽप्याययति ॥

( परिवापा,-न्मथि, दुह्रते, चतुर्दश च ) ॥ १० ॥

चित्रादिग्याज्यापुरोऽनुवाक्याः ॥ त्रिष्टुप्, १,५,७, ११-१२, २२, ३३-३५ गायत्री, १५-१६, २५ अनुष्टुप् । विश्वेदेवा ऋषयः ।

अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ॥

गोमाꣳ अग्नेऽविमाꣳ अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः ।

इडावाꣳ एषो असुर प्रजावान् दीर्घो रयिः पृथुबुध्नः सभावान् ॥

आ प्यायस्व*- सं ते*- ॥

इह त्वष्टारमग्रियं विश्वरूपमुप ह्वये । अस्माकमस्तु केवलः ॥

तन्नस्तुरीपमध पोषयित्नु देव त्वष्टर्वि रराणः स्यस्व ।

यतो वीरः (१) कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः ॥

शिवस्त्वष्टरिहाऽऽ गहि विभुः पोष उत त्मना । यज्ञेयज्ञे न उदव ॥

पिशङ्गरूपः सुभरो वयोधाः श्रुष्टी वीरो जायते देवकामः ।

प्रजां त्वष्टा वि ष्यतु नाभिमस्मे अथा देवानामप्येतु पाथः ॥

प्र णो दे—*—व्या नो दिवः*— ॥

पीपिवाꣳसꣳ सरस्वतः स्तनं यो विश्वदर्शतः । धुक्षीमहि प्रजामिषम् (२)

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः । तेषां ते सुम्नमीमहे ॥

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः ।

यस्य व्रते पुष्टिपतिर्निविष्टस्तꣳ सरस्वन्तमवसे हुवेम ॥

दिव्यꣳ सुपर्णं वयसं बृहन्तमपां गर्भं वृषभमोषधीनाम् ।

---

(१११३-४) ४।२।७।१२-१३, (१११९-१०) १।८।२२।३-४ ।

*

अभीपतो वृष्ट्या तर्पयन्तं तꣳ सरस्वन्तमवसे हुवेम[१४] ॥
सिनीवालि पृथुष्टुके या देवानामसि स्वसा ।
जुषस्व हव्य-( ३ )- माहुतं प्रजां देवि दिदिड्ढि नः[१५] ॥
या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी । तस्यै विश्पत्नियै हविः सिनीवाल्यै जुहोतन[१६] ॥
इन्द्रं वो विश्वतस्परि[१७] —*— न्द्रं नरः[१८] *— ॥
असितवर्णा हरयः सुपर्णा मिहो वसाना दिवमुत् पतन्ति ॥
त आऽववृत्रन्त्सदनानि कृत्वाऽऽदित् पृथिवी घृतैर्व्युद्यते[१९] ॥
हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिभ्राजा उषसो ( ४ ) नवेदा यशस्वतीरपस्युवो न सत्याः[२०] ॥
आ ते सुपर्णा अमिनन्त एवैः कृष्णो नोनाव वृषभो यदीदम् ।
शिवाभिर्न स्मयमानाभिराऽगात् पतन्ति मिहः स्तनयन्त्यभ्रा[२१] ॥
वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति । यदेषां वृष्टिरसर्जि[२२] ॥
पर्वतश्चिन्महि वृद्धो बिभाय दिवश्चित् सानु रेजत स्वने वः ।
यत् क्रीडथ मरुत ( ५ ) ऋष्टिमन्त आप इव सध्रियञ्चो धवध्वे[२३] ॥
अभि क्रन्द स्तनय गर्भमा धा उदन्वता परि दीया रथेन ।
दृतिꣳ सु कर्ष विषितं न्यञ्चꣳ समा भवन्तूद्वता निपादाः[२४] ॥
त्वं त्या चिदच्युताऽग्ने पशुर्न यवसे । धामा ह यत् ते अजर वना वृश्चन्ति शिक्वसः[२५] ॥
अग्ने भूरीणि तव जातवेदो देव स्वधावोऽमृतस्य धाम ।
याश्च ( ६ ) माया मायिनां विश्वमिन्व त्वे पूर्वीः संदधुः पृष्टबन्धो[२६] ॥
दिवो नो वृष्टिं मरुतो ररीध्वं प्र पिन्वत वृष्णो अश्वस्य धाराः ।
अर्वाङेतेन स्तनयित्नुनेह्यपो निषिञ्चन्नसुरः पिता नः[२७] ॥
पिन्वन्त्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः ।
अत्यं न मिहे वि नयन्ति वाजिनमुत्सं दुहन्ति स्तनयन्तमक्षितम्[२८] ॥
उदप्रुतो मरुतस्ताꣳ इयर्त वृष्टिं ( ७ ) ये विश्वे मरुतो जुनन्ति ।
क्रोशाति गर्दा कन्येव तुन्ना पेरुं तुञ्जाना पत्येव जाया[२९] ॥
घृतेन द्यावापृथिवी मधुना समुक्षत पयस्वतीः कृणुताऽऽप ओषधीः ।
ऊर्जं च तत्र सुमतिं च पिन्वथ यत्रा नरो मरुतः सिञ्चथा मधु[३०] ॥

( ११।१७-१८ ) १।६।१२।१-२

उदु त्यं[31] *- चित्रम्[32] *- ॥
औंर्वभृगुवच्छुचिमप्नवानवदा हुंवे । अग्निꣳ संमुद्रवांससम्[33] ॥
आ सवꣳ संवितुर्यथा भगंस्ये-(८)-व भुजिꣳ हुंवे । अग्निꣳ संमुद्रवांससम्[34] ॥
हुवे वातस्वनं कविं पर्जन्यक्रन्द्युꣳ सहः । अग्निꣳ संमुद्रवांससम्[35] ॥
( वीर, इषꣳ, हव्य,-मुषलौं, मरुत,-श्च, वृष्टिं, भगंस्य, द्वादंश च ) ॥ ११ ॥

[ प्रजापति- २२४ ।-रेष २१९। युञ्जं १२६। प्रजापतेः २१६ । प्राजापत्या १०५। य १३३ । इष्टर्गो १७८ । निग्राभ्यां १६० । यो ३११ । जुष्टो १६४। ऽग्निनै-४१२ -कादश ॥ २२४८ ]

[ इति तृतीयकाण्डे प्रथमः प्रपाठकः ॥ १ ॥ ]

## पवमानग्रहादीनां व्याख्यानम् ।

[ अथ द्वितीयः प्रपाठकः ॥ २ ॥ ]

पवमानग्रहत्रयम् ॥ विश्वेदेवा ऋषयः ।

यो वै पवंमानानामन्वारोहान् विद्वान् यजतेऽनु पवंमानाना रोंहति न पवंमानेभ्योऽवं च्छिद्यते
श्येनोंऽसि गायत्रछंन्दा अनु त्वा ऽऽ रंभे स्वस्ति मा सं पांरय
सुपर्णोंऽसि त्रिष्टुप्छंन्दा अनु त्वा ऽऽ रंभे स्वस्ति मा सं पांरय
सघांऽसि जगतीछन्दा अनु त्वा ऽऽ रंभे स्वस्ति मा सं पांरयेत्यांहै-ते (१) वै पवंमानानामन्वारोहास्तान् य एवं विद्वान् यजतेऽनु पवंमानाना रोंहति न पवंमानेभ्योऽवं च्छिद्यते[1] यो वै पवंमानस्य सन्तंतिं वेद सर्वमायुरेति न पुरा ऽऽयुंषः प्र मीयते पशुमान् भंवति विन्दते प्रजां पवंमानस्य ग्रहा गृह्यन्तेऽथ वा अंस्यैतेऽगृहीता द्रोणकलश आधवनीयः पूतभृत् तान् यदगृहीत्वोपाकुर्यात् पवंमानं वि (२) च्छिन्द्यात् तं विच्छिद्यमानमध्वर्योः प्राणोऽनु वि च्छिद्येतो[2]-पयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभि मृंशेदि[3] *- न्द्रांय त्वेत्यांधवनीयं[4] *- विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं[5] पवंमानमेव तत् सं तंनोति सर्वमायुरेति न पुरा ऽऽयुंषः प्र मीयते पशुमान् भंवति विन्दते प्रजाम्[6] ॥ ( एते, वि, द्विचत्वारिꣳशच्च ) ॥ १ ॥

सवननिरूपणम्, तन्मन्त्राश्च ॥ २-३ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

त्रीणि वाव सवंनान्यथं तृतीयꣳ सवंनमवं लुम्पन्त्यनꣳशु कुर्वन्त उपाꣳशुꣳ हुत्वोपाꣳशुपात्रेꣳऽशुमवास्य तं तृतीयसवनेऽपिसृज्याभि षुंणुयाद्यदांप्याययंति तेनाꣳशुमद्यदंभिषुणोति तेनंर्जीषि सर्वाण्येव तत् सवंनान्यꣳशुमन्ति शुक्रवंन्ति समावद्वीर्याणि करोति[1]
द्वौ संमुद्रौ वितंतावजूर्यौ पर्यावर्तेते जठरेव पादाः ।
तयोः पश्यंन्तो अति यन्त्यन्यमपंश्यन्तः (१) सेतुनाऽति यन्त्यन्यम्[2] ॥
द्वे द्रधंसी सततीं वस्त एकः केशी विश्वा भुवनानि विद्वान् ।

---

(११।३१-३२) १।४।४३।१-२, ( १।४-५ ) —* उपयाम...तोऽसि ।

तिरोधायैत्यसितं वसानः शुक्रमा दत्ते अनुहार्य जार्ये[3] ॥

देवा वै यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतं महायज्ञमपश्यन् तमतन्वताग्निहोत्रं व्रतमकुर्वत तस्माद् द्विव्रतः स्याद् द्विर्ह्यग्निहोत्रं जुह्वति पौर्णमासं यज्ञमग्नीषोमीयं ( २ ) पशुमकुर्वत दार्श्यं यज्ञमाग्नेयं पशुमकुर्वत वैश्वदेवं प्रातःसवनमकुर्वत वरुणप्रघासान् माध्यन्दिन२ं सवन२ं साकमेधान् पितृयज्ञं त्र्यम्बका२ंस्तृतीयसवनमकुर्वत तमेषामसुरा यज्ञमन्ववाजिगा२ंसन् तं नान्ववायन् तेऽब्रुवन्नध्वर्तव्या वा इमे देवा अभूवन्निति तदध्वरस्याध्वरत्वं ततो देवा अभवन् परासुराः य एवं विद्वान्त्सोमेन यजते भवत्यात्मना परा ( ३ )ऽस्य भ्रातृव्यो भवति[5] ॥ ( अपश्यन्तो, ऽग्नीषोमीयं, परा, त्रीणि च ) ॥ २ ॥

सोमावेक्षणम् ॥ विश्वेदेवा ऋषयः ।

परिभूरग्निं परिभूरिन्द्रं परिभूर्विश्वान् देवान् परिभूर्मा२ं सह ब्रह्मवर्चसेन
स नः पवस्व शं गवे शं जनाय शमर्वते श२ं राजन्नोषधीभ्यो
ऽच्छिन्नस्य ते रयिपते सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ।
तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे ॥

प्राणाय मे वर्चोदा वर्चसे पवस्वा—पानाय[3] *- व्यानाय[4] *- वाचे[5] *- ( १ ) दक्षक्रतुभ्यां *- चक्षुर्भ्यां मे वर्चोदौ वर्चसे पवेथा२ं श्रोत्राया—*- ऽऽत्मने[9] *- ऽङ्गेभ्य[10] *- आयुषे[11] *- वीर्याय[12] *- विष्णो[13]—रिन्द्रस्य[14] विश्वेषां देवानां जठरमसि वर्चोदा मे वर्चसे पवस्व[15] कोऽसि को नाम कस्मै त्वा काय त्वा यं त्वा सोमेनातीतृपं यं त्वा सोमेनामीमद२ं सुप्रजाः प्रजया भूयास२ं सुवीरो वीरैः सुवर्चा वर्चसा सुपोषः पोषै[16]—र्विश्वेभ्यो मे रूपेभ्यो वर्चोदा ( २ ) वर्चसे पवस्व तस्य मे रास्व तस्य ते भक्षीय तस्य त इदमुन्मृजे[17] ॥

बुभूषन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो भूत्याऽभि पवते ब्रह्मवर्चसकामोऽवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तो ब्रह्मवर्चसेनाभि पवत आमयाव्य—( ३ )—वेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्त आयुषाऽभि पवतेऽभिचरन्नवेक्षेतैष वै पात्रियः प्रजापतिर्यज्ञः प्रजापतिस्तमेव तर्पयति स एनं तृप्तः प्राणापानाभ्यां वाचो दक्षक्रतुभ्यां चक्षुर्भ्या२ं श्रोत्राभ्यामात्मनोऽङ्गेभ्य आयुषोऽन्तरेति ताजक् प्र धन्वति[18] ॥ ( वाचे, वर्चोदा, आमयावी, पञ्चचत्वारि२ंशच्च ) ॥ ३ ॥

स्फ्याद्युपस्थानमन्त्राः विधिश्च ॥ विश्वेदेवा ऋषयः ।

स्फ्यः स्वस्तिर्विघनः स्वस्तिः पर्शुर्वेदिः परशुर्नः स्वस्तिः ।
यज्ञिया यज्ञकृतः स्थ ते माऽस्मिन् यज्ञ उप ह्वयध्व—
—मुप मा द्यावापृथिवी ह्वयेता—मुपाऽऽस्ताव[3]ः *- —*कलशः *- —*सोमो[5] *- —*अग्नि[6] *-

( ३।३-५,८-१२ ) *- मे वर्चोदा... पवस्व, ( ३।६ ) वर्चोदौ... पवेथाम्, ( ३।१३-१४ ) *- जठर... पवस्व ।
( ४।३-६,७ ) *- ह्वयताम्, ( ३।४-६ )

रूपं देवाँ॥- उपं यज्ञ॥- उपं मा होत्रा उपहवे ह्वयन्ताम्[9] नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपं तिष्ठते यज्ञो वै मखो (१) यज्ञं वाव स तद्दहन् तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै[10] नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रं तस्मा एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै[11] नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयमाशिषमेवैतामा शास्त इन्द्रियस्य वीर्यस्यानिर्घाताय[12] या वै (२) देवताः सदस्यार्तिमार्पयन्ति यस्ता विद्वान् प्रसर्पति न सदस्यार्तिमार्छति नमोऽग्नये मखघ्न इत्याहैता वै देवताः सदस्यार्तिमाऽर्पयन्ति ता य एवं विद्वान् प्रसर्पति न सदस्यार्तिमार्छति[13] दृढे स्थः शिथिरे समीची माऽꣳहसस्पातꣳ[14] सूर्यो मा देवो दिव्यादꣳहसस्पातु॥-[15] वायुरन्तरिक्षाद्[16]॥- (३) अग्निः पृथिव्या[17]॥- यमः पितृभ्यः[18]॥- सरस्वती मनुष्येभ्यो[19] देवी द्वारौ मा मा सं ताप्तं[20] नमः सदसे[21] नमः सदसस्पतये[22] नमः सखीनां पुरोगाणां चक्षुषे[23] नमो दिवे[24] नमः पृथिव्यै[25] अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत् पाकतरः[26] उन्निवत उदुद्वतश्च गेषं[27] पातं मा द्यावापृथिवी अद्याह्नः[28] सदो वै प्रसर्पन्तं (४) पितरोऽनु प्र सर्पन्ति त एनमीश्वरा हिꣳसितोः सदः प्रसृप्य दक्षिणार्धं परेक्षेताऽगन्त पितरः पितृमानहं युष्माभिर्भूयासꣳ सुप्रजसो मया यूयं भूयास्तेति तेभ्य एव नमस्कृत्य सदः प्र सर्पत्यात्मनोऽनार्त्यै[29] ॥

( मखो, वा, अन्तरिक्षात्, प्रसर्पन्तं, त्रयस्त्रिꣳशच्च ) ॥ ४ ॥

भक्षमन्त्राः ॥ ८ गायत्री; ९ बृहती; १०, २० त्रिष्टुप्; १२ अनुष्टुप्; १४ द्विपदा गायत्री । विश्वेदेवा ऋषयः ।

भक्षेहि मा ऽऽ विश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्याꣳ सघ्यासं[2] नृचक्षसं त्वा देव सोम सुचक्षा अव ख्येषं[3] मन्द्राऽभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे (१) शम्भूर्मयोभूः स्वस्ति मा हरिवर्ण प्र चर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन् वि बीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायाऽऽयुषे वर्चसे[4] ॥

वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि[5] रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य नराशꣳसपीतस्य (२) पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयाम्या[6]दित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य नराशꣳसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि[7] ॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे ॥

हिन्व मे गात्रा हरिवो गणान् मे मा वि तीतृषः ।

शिवो मे सप्तर्षीनुप तिष्ठस्व मा मेऽवाङ्नाभिमति (३) गाः[8] ॥

( ४।७ ) ॥- ह्वयंताम्, ( ४।२-९ ) अन्येषां मतं अयमेक एव मन्त्रः । ( ४।१५-१८ ) ॥- पातु ।

अपाम सोममृमृता अभूमादर्श्म ज्योतिरविदाम देवान् ।
किमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य[१०] ॥
यन्म आत्मनो मिन्दाऽभूदग्निस्तत् पुनराऽहार्जातवेदा विचर्षणिः[११] ॥
पुनरग्निश्चक्षुरदात् पुनरिन्द्रो बृहस्पतिः ।
पुनर्मे अश्विना युवं चक्षुरा धत्तमक्ष्योः[१२] ॥
इष्टयजुषस्ते देव सोम स्तुतस्तोमस्य ( ४ ) शस्तोक्थस्य हरिवत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि[१३] ॥
आपूर्याः स्थाऽऽ मा पूरयत प्रजया च धनेन च ॥[१४]

एतत् ते तत ये च त्वामन्वे[१५]तत् ते पितामह[१६] प्रपितामह ये च त्वामन्व[१७]त्र पितरो यथाभागं मन्दध्वम्[१८]

नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः ( ५ ) स्वधायै नमो वः पितरो मन्यवे नमो वः पितरो घोराय पितरो नमो वो य एतस्मिँल्लोके स्थ युष्मांस्तेऽनु येऽस्मिँल्लोके मां तेऽनु य एतस्मिँल्लोके स्थ यूयं तेषां वसिष्ठा भूयास्त येऽस्मिँल्लोकेऽहं तेषां वसिष्ठो भूयासं[१९]

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव ( ६ ) ।
यत् कामास्ते जुहुमस्तन्नो अस्तु वयꣳ स्याम पतयो रयीणाम्[२०] ॥

देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमस्य[२१]प्सु धौतस्य सोम देव ते नृभिः सुतस्येष्टयजुषः स्तुतस्तोमस्य शस्तोक्थस्य यो भक्षो अश्वसनिर्यो गोसनिस्तस्य ते पितृभिर्भक्षंकृतस्योपहूतस्योपहूतो भक्षयामि[२२] ॥ ( विश्वचर्षणे, नराशꣳसपीतस्या,-ऽति, स्तुतस्तोमस्य, पितरो, बभूव, चतुश्चत्वारिꣳशच्च ) ॥ ५ ॥

पृषदाज्यम्, दधिघर्ममन्त्रश्च ॥ २ बृहती । विश्वेदेवा ऋषयः ।

महीनां पयोऽसि विश्वेषां देवानां तनूरृध्यासमद्य पृषतीनां ग्रहं पृषतीनां ग्रहोऽसि विष्णोर्हृदयमस्येकमिष विष्णुस्त्वानु वि चक्रमे भूतिर्दध्ना घृतेन वर्धतां तस्य मेष्टस्य वीतस्य द्रविणमा गम्याज्ज्योतिरसि वैश्वानरं पृश्निये दुग्धं[१]

यावती द्यावापृथिवी महित्वा यावच्च सप्त सिन्धवो वितस्थुः ।
तावन्तमिन्द्र ते ( १ ) ग्रहꣳ सहोर्जा गृह्णाम्यस्तृतम्[२] ॥

यत् कृष्णशकुनः पृषदाज्यमवमृशेच्छूद्रा अस्य प्रमायुकाः स्युर्यच्छ्वाऽवमृशेच्चतुष्पादोऽस्य पशवः प्रमायुकाः स्युर्यत् स्कन्देद्यजमानः प्रमायुकः स्यात् पशवो वै पृषदाज्यं पशवो वा एतस्य स्कन्दन्ति यस्य पृष-

दाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति पशूनेवास्मै पुनर्गृह्णाति[३] प्राणो वै पृषदाज्यं प्राणो वा ( २ ) एतस्य स्कन्दति यस्य पृषदाज्यꣳ स्कन्दति यत् पृषदाज्यं पुनर्गृह्णाति प्राणमेवास्मै पुनर्गृह्णाति[४] हिरण्यमवधाय गृह्णात्यमृतं वै हिरण्यं प्राणः पृषदाज्यममृतमेवास्य प्राणे दधाति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्यश्वमव घ्रापयति प्राजापत्यो वा अश्वः प्राजापत्यः प्राणः स्वादेवास्मै योनेः प्राणं ( ३ ) निर्मिमीते[६] वि वा एतस्य यज्ञश्छिद्यते यस्य पृषदाज्यꣳ स्कन्दति वैष्णव्यर्चा पुनर्गृह्णाति यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोति[७] ॥ ( ते, वै, प्राणं, द्वाविꣳशतिश्च ) ॥ ६ ॥

स्तुतशस्त्रयोरभिधानम् ॥ विश्वेदेवा ऋषयः ।

देव सवितरेतत् ते प्राऽऽह तत् प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपात् साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे[१] स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्या[२]च्छस्त्रस्य शस्त्र-( १ )-मस्यूर्जं मह्यꣳ शस्त्रं दुहामा मा शस्त्रस्य शस्त्रं गम्यादि—

—न्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम् ॥
सा मे सत्याऽऽशीर्देवेषु भूयाद्ब्रह्मवर्चसं मा ऽऽ गम्यात् ॥
यज्ञो बभूव स आ बभूव स प्र जज्ञे स वावृधे ।
स देवानामधिपतिर्बभूव सो अस्माꣳ अधिपतीन् करोतु वयꣳ स्याम पतयो रयीणाम्[३] ॥

यज्ञो वा वै ( २ ) यज्ञपतिं दुहे यज्ञपतिर्वा यज्ञं दुहे स यः स्तुतशस्त्रयोर्दोहमविद्वान् यजते तं यज्ञो दुहे स इष्ट्वा पापीयान् भवति य एनयोर्दोहं विद्वान् यजते स यज्ञं दुहे स इष्ट्वा वसीयान् भवति स्तुतस्य स्तुतमस्यूर्जं मह्यꣳ स्तुतं दुहामा मा स्तुतस्य स्तुतं गम्याच्छस्त्रस्य शस्त्रमस्यूर्जं मह्यꣳ शस्त्रं दुहा-( ३ )-मा मा शस्त्रस्य शस्त्रं गम्यादित्याहैष वै स्तुतशस्त्रयोर्दोहस्तं य एवं विद्वान् यजते दुह एव यज्ञमिष्ट्वा वसीयान् भवति[४] ॥ ( शस्त्रं, वै, दुहा, द्वाविꣳशतिश्च ) ॥ ७ ॥

प्रस्थितयाज्याख्यहोमादिमन्त्राः ॥ १६-२०, २४-२५ त्रिष्टुप्, २२-२३ जगती; २९ अनुष्टुप् । विश्वेदेवा ऋषयः ।

श्येनाय पत्वने स्वाहा[१] वट्स्वयमभिगूर्ताय नमो[२] विष्टम्भाय धर्मणे स्वाहा[३] वट्स्वयमभिगूर्ताय नमः[४] परिधये जनप्रथनाय स्वाहा[५] वट्स्वयमभिगूर्ताय नम[६] ऊर्जे होत्राणाꣳ स्वाहा[७] वट्स्वयमभिगूर्ताय नमः पयसे होत्राणाꣳ स्वाहा[९] वट्स्वयमभिगूर्ताय नमः[१०] प्रजापतये मनवे स्वाहा[११] वट्स्वयमभिगूर्ताय नम[१२] ऋतमृतपाः सुवर्वाट्स्वाहा[१३] वट्स्वयमभिगूर्ताय नम[१४]—

—स्तृम्पन्ताꣳ होत्रा मधोर्घृतस्य[१५]
यज्ञपतिमृषय एनसा ( १ ) ऽऽहुः ।
प्रजा निर्भक्ता अनुतप्यमाना मधव्यौ स्तोकावप तौ रराध ॥
सं नस्ताभ्याꣳ सृजतु विश्वकर्मा[१६]

घोरा ऋषयो नमो अस्त्वेभ्यः ।
चक्षुष एषां मनसश्च सन्धौ बृहस्पतये महि षद् द्युमन्नमः ॥
नमो विश्वकर्मणे स उ पात्वस्मा[१७]—
नन्यान्त्सोमपान् मन्यमानः ।
प्राणस्य विद्वान्त्समरे न धीर एनश्चकृवान् महि बद्ध एषाम् ॥
तं विश्वकर्मन् ( २ ) प्र मुञ्चा स्वस्तये[१८]
ये भक्षयन्तो न वसून्यानृहुः ।
यानग्नयोऽन्वतप्यन्त धिष्णिया इयं तेषामवया दुरिष्ट्यै स्विष्टिं नस्तां कृणोतु विश्वकर्मा[१९] ॥
नमः पितृभ्यो अभि ये नो अख्यन् यज्ञकृतो यज्ञकामाः सुदेवा
अकामा वो दक्षिणां न नीनिम मा नस्तस्मादेनसः पापयिष्ट ।

यावन्तो वै सदस्यास्ते सर्वे दक्षिण्यास्तेभ्यो यो दक्षिणां न ( ३ ) नयेदैभ्यो वृश्च्येत यद्वैश्वकर्मणानि जुहोति सदस्यानेव तत् प्रीणात्य[२१]—

—स्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः ।
पुमान् पुत्रो जायते विन्दते वस्वथ विश्वे अरपा एधते गृहः[२२] ॥
आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचताꣳ समोकसा ।
य आऽसिचत् संदुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः[२३] ॥
सर्पिर्ग्रीवी ( ४ ) पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य ।
सहजानिर्यः सुमखस्यमान इन्द्रायाऽऽशिरꣳ सह कुम्भ्याऽदात्[२४] ॥
आशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सवर्चसम् ।
सञ्जयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानो अन्याꣳ अधरान्त्सपत्नान्[२५] ॥
भूतमसि भूते मा धा मुखमसि मुखं भूयासं[२६] द्यावापृथिवीभ्यां त्वा परि गृह्णामि[२७] विश्वे त्वा देवा वैश्वानराः ( ५ ) प्र च्यावयन्तु दिवि देवान् दृꣳहान्तरिक्षे वयाꣳसि पृथिव्यां पार्थिवान्[२८]
ध्रुवं ध्रुवेण हविषाऽव सोमं नयामसि । यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत् ।
यथा न इन्द्र इद्विशः केवलीः सर्वाः समनसः करत् ।
यथा नः सर्वा इद्दिशोऽस्माकं केवलीरसन्[२९] ॥

( एनसा, विश्वकर्मन्, न, सर्पिर्ग्रीवी, वैश्वानरा,-श्चत्वारिꣳशच्च ) ॥ ८ ॥

प्रतिगरः, तन्मन्त्राश्च ॥ विश्वेदेवा ऋषयः ।

यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयत्युक्थशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्य-

क्षराणि त्रिपदा गायत्री गायत्रं प्रातःसवनं गायत्रियैव प्रातःसवने वज्रमन्तर्धत्त[1] उक्थं वाचीत्याह माध्यं-
न्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं त्रिष्टुभैव माध्यन्दिने
सवने वज्रमन्तर्धत्ते[2] ( १ ) उक्थं वाचीन्द्रायेत्याह तृतीयसवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी
शाक्वरो वज्रो वज्रेणैव तृतीयसवने वज्रमन्तर्धत्ते[3] ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यो यथा-
सवनं प्रतिगरे छन्दाꣳसि सम्पादयेत् तेजः प्रातःसवन आत्मन् दधीतेन्द्रियं माध्यन्दिने सवने पशूꣳस्तृ-
तीयसवन इत्यु[4]—क्थꣳशा इत्याह प्रातःसवनं प्रतिगीर्य त्रीण्येतान्यक्षराणि ( २ ) त्रिपदा गायत्री गायत्रं प्रातः-
सवनं प्रातःसवन एव प्रतिगरे छन्दाꣳसि सं पादयत्यथो तेजो वै गायत्री तेजः प्रातःसवनं तेज एव
प्रातःसवन आत्मन् धत्ते[5] उक्थं वाचीत्याह माध्यन्दिनꣳ सवनं प्रतिगीर्य चत्वार्येतान्यक्षराणि चतुष्पदा
त्रिष्टुप् त्रैष्टुभं माध्यन्दिनꣳ सवनं माध्यन्दिन एव सवने प्रतिगरे छन्दाꣳसि सं पादयत्यथो इन्द्रियं वै त्रिष्टुगि-
न्द्रियं माध्यन्दिनꣳ सवन-( ३ )-मिन्द्रियमेव माध्यन्दिने सवन आत्मन् धत्ते[6] उक्थं वाचीन्द्रायेत्याह तृतीय-
सवनं प्रतिगीर्य सप्तैतान्यक्षराणि सप्तपदा शक्वरी शाक्वराः पशवो जागतं तृतीयसवनं तृतीयसवन एव
प्रतिगरे छन्दाꣳसि सं पादयत्यथो पशवो वै जगती पशवस्तृतीयसवनं पशूनेव तृतीयसवन आत्मन् धत्ते[7]
यद्वै होताऽध्वर्युमभ्याह्वयत आव्यमस्मिन् दधाति तद्यन्ना-( ४ )-पहनीत पुराऽस्य संवत्सराद्गृह आ वेवी-
रञ्छोꣳसा मोद इवेति प्रत्याह्वयते तेनैव तदप हते[8] यथा वा आयतां प्रतीक्षत एवमध्वर्युः प्रतिगरं
प्रतीक्षते[9] यदभिप्रतिगृणीयाद्यथाऽऽयतया समृच्छते तादृगेव त[10]—दर्धर्चाल्लुप्येत यथा धावद्भ्यो हीयते
तादृगेव तत्[11] प्रबाहुग्वा ऋत्विजामुद्गीथा उद्गीथ एवोद्गातृणा-( ५ )-मृचः प्रणव उक्थशꣳसिनां प्रतिगरो-
ऽध्वर्यूणां[12] य एवं विद्वान् प्रतिगृणात्यन्नाद एव भवत्याऽस्य प्रजायां वाजी जायते[13] इयं वै होताऽ-
सावध्वर्युर्यदासीनः शꣳसत्यस्या एव तद्धोता नैत्यास्त इव हीयमथो इमामेव तेन यजमानो दुहे यत्
तिष्ठन् प्रतिगृणात्यमुष्या एव तदध्वर्युर्नैति ( ६ ) तिष्ठतीव ह्यसावथो अमूमेव तेन यजमानो दुहे[14] यदा-
सीनः शꣳसति तस्मादितः प्रदानं देवा उप जीवन्ति यत् तिष्ठन् प्रतिगृणाति तस्मादमुतः प्रदानं मनुष्या
उप जीवन्ति[15] यत् प्राङासीनः शꣳसति प्रत्यङ् तिष्ठन् प्रतिगृणाति तस्मात् प्राचीनꣳ रेतो धीयते
प्रतीचीः प्रजा जायन्ते[16] यद्वै होताऽध्वर्युमभ्याह्वयते वज्रमेनमभि प्र वर्तयति ( ७ ) पराङा वर्तते वज्रमेव
तन्नि करोति[17] ॥ ( धत्ते, क्षराणि, सवनं, नो,-द्गातृणा,-मेति, वर्तयत्यु, द्वौ च ) ॥ ९ ॥

प्रतिनिग्राह्यमन्त्राः ॥ विश्वेदेवा ऋषयः ।

उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णा-
म्यु[1]—पयामगृहीतोऽस्यृतसदसि चक्षुष्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णा-
म्यु[2]—पयामगृहीतोऽसि श्रुतसदसि श्रोत्रपाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि[3]
देवेभ्यस्त्वा[4] विश्वदेवेभ्यस्त्वा[5] विश्वेभ्यस्त्वा देवेभ्यो[6] विष्णवुरुक्रमैष ते सोमस्तꣳ रक्षस्व ( १ )
तं ते दुश्चक्षा माऽव ख्य[7]—न्मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि[8] मयि वसुर्विदद्वसुश्चक्षुष्पा-

--*

श्चक्षुर्मे पाहि मयि वसुः संयद्वसुः श्रोत्रपाः श्रोत्रं मे पाहि भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि यो न इन्द्रवायू मित्रावरुणौ अश्विनावभिदासति भ्रातृव्य (२) उत्पिपीते शुभस्पती इदमहं तमधरं पादयामि यथेन्द्राहमुत्तमश्चेतयानि ॥ (रक्षस्व, भ्रातृव्य,-स्त्रयोदश च) ॥ १० ॥

त्रेधातवीयेष्टिमन्त्राः ॥ १ ककुप्; २ उष्णिक्; ३-६, ९-१० त्रिष्टुप्; ७-८गायत्री । विश्वेदेवा ऋषयः ।

प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः । यस्य त्वꣳ सख्यमाविथ ॥
प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् । विपां ज्योतीꣳषि बिभ्रते न वेधसे ॥
अग्ने त्री ते वाजिना त्री षधस्था तिस्रस्ते जिह्वा ऋतजात पूर्वीः ।
तिस्र उ ते तनुवो देववातास्ताभिर्नः पाहि गिरो अप्रयुच्छन् ॥
सं वां कर्मणा समिषा (१) हिनोमीन्द्राविष्णू अपसस्पारे अस्य ।
जुषेथां यज्ञं द्रविणं च धत्तमरिष्टैर्नः पथिभिः पारयन्ता ॥
उभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथाम् ॥
त्रीण्यायूꣳषि तव जातवेदस्तिस्र आजानीरुषसस्ते अग्ने ।
ताभिर्देवानामवो यक्षि विद्वानथा (२) भव यजमानाय शं योः ॥
अग्निस्त्रीणि त्रिधातून्या क्षेति विदथा कविः । स त्रीꣳरेकादशाꣳ इह ॥
यक्षच्च पिप्रयच्च नो विप्रो दूतः परिष्कृतः । नभन्तामन्यके समे ॥
इन्द्राविष्णू दृꣳहिताः शम्बरस्य नव पुरो नवतिं च श्नथिष्टम् ।
शतं वर्चिनः सहस्रं च साकꣳ हथो अप्रत्यसुरस्य वीरान् ॥
उत माता महिषमन्ववेनदमी त्वा (३) जहति पुत्र देवाः ।
अथाब्रवीद्वृत्रमिन्द्रो हनिष्यन्त्सखे विष्णो वितरं वि क्रमस्व ॥

(इषा, ऽथ, त्वा, त्रयोदश च) ॥ ११ ॥

[ य-१४२ । -स्त्रीणि १५३ । परिभूः १९५ । स्फ्यो २६३ । भक्ष ३४४ । महीनां १७२ । देव १७२ । श्येनाय २५० । ब-३५८ । -दुपयामगृहीतः ११३ । प्रै-१६३ । कादश ॥ २३३१ ]

[ इति तृतीयकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥ ]

## वैकृतविधीनामभिधानम् ।

[ अथ तृतीयः प्रपाठकः ॥ ३ ॥ ]

अतिग्राह्यगतमन्त्राः ॥ ७-९ द्विपदा गायत्री । विश्वेदेवा ऋषयः ।

अग्ने तेजस्विन् तेजस्वी त्वं देवेषु भूयास्तेजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु दीक्षायै च त्वा तपसश्च तेजसे जुहोमि तेजोविदसि तेजो मा मा हासीन्माऽहं तेजो हासिषं मा मां तेजो

हासी[२]दिन्द्रौजस्विन्नोजस्वी त्वं देवेषु भूया ओजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु ब्रह्मणश्च त्वा क्षत्रस्य चौ-(२)-जसे जुहोम्यो[३]जोविदुस्योजो मा मा हासीन्माऽहमोजो हासिषं मा मामोजो हासीत्[४] त्वयि भ्राजस्विन् भ्राजस्वी त्वं देवेषु भूया भ्राजस्वन्तं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु वायोश्च त्वाऽपां च भ्राजसे जुहोमि[५] सुवर्विदसि सुवर्मा मा हासीन्माहꣳ सुवर्हासिषं मा माꣳसुवर्हासी[६]न्मयि (२) मेधां मयि प्रजां मय्यग्निस्तेजो दधातु[७] मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु[८] मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु[९] ॥ (च, मयि, त्रयोविꣳशतिश्च) ॥ १ ॥

स्तोत्रोपाकरणं, प्रतिगराङ्गमन्त्रश्च ॥ विश्वेदेवा ऋषयः ।

वायुर्हिंकर्ताऽग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वे देवा उपगातारो मरुतः प्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधत्वे[१]तद्वै सर्वमध्वर्युरुपाकुर्वन्नुद्गातृभ्य उपाकरोति ते देवाः प्राणभृतः प्राणं मयि दधत्वित्याहैतदेव सर्वमात्मन् धत्ते[२] इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शꣳसिषद्विश्वे देवाः (१) सूक्तवाचः पृथिवि मातर्मा मा हिꣳसीर्मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳ शुश्रूषेण्यां मनुष्येभ्यस्तं मा देवा अवन्तु शोभायै पितरोऽनु मदन्तु[३] ॥ (विश्वे देवा, अष्टाविꣳशतिश्च) ॥ २ ॥

अदाभ्यांशुग्रहमन्त्राः ॥ २३--२५ अनुष्टुप्, आद्या स्वराट् । विश्वेदेवा ऋषयः ।

वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसाऽग्नेः प्रियं पाथ उपेहि[१] रुद्रास्त्वा प्र वृहन्तु त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथ उपेह्या[२]दित्यास्त्वा प्र वृहन्तु जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथ उपेहि[३] मान्दासु ते शुक्र शुक्रमा धूनोमि[४] भन्दनासु[५]- कोतनासु[६]- नूतनासु[७]- रेशीषु[८]- मेषीषु[९]- वाशीषु[१०]- विश्वभृत्सु[११]- माध्वीषु[१२]- ककुहासु[१३]- शक्वरीषु[१४]- (१) शुक्रासु ते शुक्र शुक्रमा धूनोमि[१५]

शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिः[१६] ॥

आ ऽस्मिन्नुग्रा अचुच्यवुर्दिवो धारा असश्चत[१७] ॥

ककुहꣳरूपं वृषभस्य रोचते बृहत् सोमः सोमस्य पुरोगाः शुक्रः शुक्रस्य पुरोगाः ॥

यत् ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहो[१९]

शिक् त्वं देव सोम गायत्रेण छन्दसाऽग्नेः (२) प्रियं पाथो अपीहि[२०] वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीहि[२१]स्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीह्या[२२]

नः प्राण एतु परावत आऽन्तरिक्षाद्दिवस्परि । आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा ॥

इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः (३) । वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥

---

(३१५-१४) ते शुक्र... धूनोमि

दुधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् । परि विश्वानि काव्या नेमिश्चक्रमिवाभवत्[२५] ॥
( शंकरीष्व,-अ-,बृहस्पतिः, पञ्चविंशतिश्च ) ॥ ३ ॥

अदाभ्यांशुग्रहमन्त्रब्राह्मणम् ॥ विश्वेदेवा ऋषयः ।

एतद्वा अपां नामधेयं गुह्यं यदाधावा मान्दासु ते शुक्र शुक्रमा धूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमव रुन्धे[१] शुक्रं ते शुक्रेण गृह्णामीत्याहैतद्वा अह्नो रूपं यद्रात्रिः सूर्यस्य रश्मयो वृष्ट्या ईशतेऽह्न एव रूपेण सूर्यस्य रश्मिभिर्दिवो वृष्टिं च्यावयत्या[२]ऽस्मिन्नुग्रा (१) अचुच्यवुरित्याह यथायजुरेवैतत्[३] ककुहꣳ रूपं वृषभस्य रोचते बृहदित्याहैतद्वा अस्य ककुहꣳ रूपं यद्वृष्टी रूपेणैव वृष्टिमव रुन्धे[४] यत्ते सोमादाभ्यं नाम जागृवीत्याहैष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति[५] परा वा एतस्याऽऽयुः प्राण एति (२) योऽꣳशुं गृह्णात्या नः प्राण एतु परावत इत्याहाऽऽयुरेव प्राणमात्मन् धत्ते[६]ऽमृतमसि प्राणाय त्वेति हिरण्यमभि व्यनित्यमृतं वै हिरण्यमायुः प्राणोऽमृतेनैवाऽऽयुरात्मन् धत्ते[७] शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठत्य[८]प उप स्पृशति भेषजं वा आपो (३) भेषजमेव कुरुते[९] ॥ ( उग्रा, एत्या, -प, -स्त्रीणि च ) ॥ ४ ॥

द्वादशाहशेषाः पृश्निग्रहाख्या उन्मानविशेषाः ॥ विश्वेदेवा ऋषयः ।

वायुरसि प्राणो नाम सवितुराधिपत्येऽपानं मे दा[१]श्चक्षुरसि श्रोत्रं नाम धातुराधिपत्य आयुर्मे दा[२] रूपमसि वर्णो नाम बृहस्पतेराधिपत्ये प्रजां मे दा[३] ऋतमसि सत्यं नामेन्द्रस्याऽऽधिपत्ये क्षत्रं मे दा[४] भूतमसि भव्यं नाम पितृणामाधिपत्येऽपामोषधीनां गर्भं धा[५] ऋतस्य त्वा व्योमन[६] ऋतस्य (१) त्वा विभूमन[७] ऋतस्य त्वा विधर्मण[८] ऋतस्य त्वा सत्याय[९]र्तस्य त्वा ज्योतिषे[१०] प्रजापतिर्विराजमपश्यत् तया भूतं च भव्यं चासृजत तामृषिभ्यस्तिरोऽधात् तां जमदग्निस्तपसाऽपश्यत् तया वै स पृश्नीन् कामानसृजत तत् पृश्नीनां पृश्नित्वं[११] यत् पृश्नयो गृह्यन्ते पृश्नीनेव तैः कामान् यजमानोऽव रुन्धे[१२] वायुरसि प्राणो (२) नामेत्याह प्राणापानावेवाव रुन्धे[१३] चक्षुरसि श्रोत्रं नामेत्याहाऽऽयुरेवाव रुन्धे[१४] रूपमसि वर्णो नामेत्याह प्रजामेवाव रुन्धे[१५] ऋतमसि सत्यं नामेत्याह क्षत्रमेवाव रुन्धे[१६] भूतमसि भव्यं नामेत्याह पशवो वा अपामोषधीनां गर्भः पशूनेवा-(३)-व रुन्धे[१७] एतावद्वै पुरुषं परितस्तदेवाव रुन्धे[१८] ऋतस्य त्वा व्योमन इत्याहेयं वा ऋतस्य व्योमेमामेवाभि जयत्यृतस्य त्वा विभूमन इत्याहान्तरिक्षं वा ऋतस्य विभूमान्तरिक्षमेवाभि जयत्यृतस्य त्वा विधर्मण इत्याह द्यौर्वा ऋतस्य विधर्म दिवमेवाभि जयत्यृतस्य (४) त्वा सत्यायेत्याह दिशो वा ऋतस्य सत्यं दिश एवाभि जयत्यृतस्य त्वा ज्योतिष इत्याह सुवर्गो वै लोक ऋतस्य ज्योतिः सुवर्गमेव लोकमभि जयत्येतावन्तो वै देवलोकास्तानेवाभि जयति[१९] दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठति[२०] ॥ ( ऋतस्य, प्राण, एव, -र्तस्य, षट्चत्वारिꣳशच्च ) ॥ ५ ॥

गवामयनिका परः संज्ञका अतिग्राह्याः ॥ विश्वेदेवा ऋषयः ।

देवा वै यज्ञेन नावारुन्धत तत् परैरवारुन्धत तत् पराणां परत्वं[१] यत् परे गृह्यन्ते यदेव यज्ञेन

नावरुन्धे तस्यावरुद्ध्यै[२] यं प्रथमं गृह्णातीममेव तेन लोकमभि जयति यं द्वितीयमन्तरिक्षं तेन यं तृती-यममुमेव तेन लोकमभि जयति यदेते गृह्यन्त एषां लोकानामभिजित्यै[३] ( १ ) उत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्तेऽभिजित्यैवेमाँल्लोकान् पुनरिमं लोकं प्रत्यवरोहन्ति[४] यत् पूर्वेष्वहःस्वितः पराञ्चो गृह्यन्ते तस्मा-दितः पराञ्च इमे लोका यदुत्तरेष्वहःस्वमुतोऽर्वाञ्चो गृह्यन्ते तस्मादमुतोऽर्वाञ्च इमे लोकास्तस्मादयात-याम्नो लोकान् मनुष्या उप जीवन्ति[५] ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्द्वय ओषधयः सं भव-न्त्योषधयो ( २ ) मनुष्याणामन्नं प्रजापतिं प्रजा अनु प्र जायन्त इति परानन्विति ब्रूयात्[६] यद्गृह्णात्यद्भ्यस्त्वौ-षधीभ्यो गृह्णामीति तस्माद्द्वय ओषधयः सं भवन्ति[७] यद् गृह्णात्योषधीभ्यस्त्वा प्रजाभ्यो गृह्णामीति तस्मादोषधयो मनुष्याणामन्नं[८] यद्गृह्णाति प्रजाभ्यस्त्वा प्रजापतये गृह्णामीति तस्मात् प्रजापतिं प्रजा अनु प्र जायन्ते[९]॥ ( अभिजित्या, ओषधयो, ऽष्टाचत्वारिंशच्च )॥ ६ ॥

सोमाङ्गाश्रावणादिमन्त्रविधानम् ॥ विश्वेदेवा ऋषयः ।

प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यत यज्ञं छन्दांसि ते विष्वञ्चो व्यक्रामन्त्सोऽसुराननु यज्ञोऽपाक्रामद्यज्ञं छन्दांसि ते देवा अमन्यन्तामी वा इदमभूवन् यद्वयं स्म इति ते प्रजापतिमुपाधा-वन्त्सोऽब्रवीत् प्रजापतिश्छन्दसां वीर्यमादाय तद्वः प्र दास्यामीति स छन्दसां वीर्य-( १ )-मादाय तदेभ्यः प्रायच्छत् तदनु छन्दांस्यपाक्रामन् छन्दांसि यज्ञस्ततो देवा अभवन् पराऽसुरा[१] य एवं छन्दसां वीर्यं वेदाऽऽश्रावयास्तु श्रौषड् यज ये यजामहे वषट्कारो भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[२] ब्रह्मवादिनो वदन्ति कस्मै कमध्वर्युरा श्रावयतीति छन्दसां वीर्यायेति ब्रूयादे तद्वै ( २ ) छन्दसां वीर्यमा श्रावयास्तु श्रौषड् यज ये यजामहे वषट्कारो[३] य एवं वेद सवीर्यैरेव छन्दोभिरर्चति यत् किं चार्चति[४] यदिन्द्रो वृत्रमहन्नमेध्यं तद्यद्यतीनपावपदमेध्यं तदथ कस्मादैन्द्रो यज्ञ आ संस्थातोरित्याहुरिन्द्रस्य वा एषा यज्ञिया तनूर्यद्यज्ञस्तामेव त-( ३ )-द्यजन्ति[५] य एवं वेदोपैनं यज्ञो नमति[६]॥ ( वीर्यं, वै, त,-द्वौ च )॥ ७॥

अवभृथाङ्गवेदिदाहादिमन्त्राः ॥ १,३ त्रिष्टुप्; ५-६ अनुष्टुप् ॥ विश्वेदेवा ऋषयः ।

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि ।
घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् ॥

आ वृश्च्यते वा एतद्यजमानोऽग्निभ्यां यदेनयोः शृतंकृत्याथान्यात्रवभृथमवैत्यायुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादाहुत्यैवैनौ शमयति नाऽऽर्तिमार्च्छति यजमानो[२]

यत् कुसीद--( १ )--मप्रतीत्तं मयि येन यमस्य बलिना चरामि ।
इहैव सन् निरवदये तदेतत् तदग्ने अनृणो भवामि[३] ।
विश्वलोप विश्वदावस्य त्वा ऽऽसञ्जुहोम्यग्धादेकोऽहुतादेकः समसनादेकः ।
ते नः कृण्वन्तु भेषजं सदः सहो वरेण्यम् ॥
अयं नो नभसा पुरः संस्फानो अभि रक्षतु । गृहाणामसमर्त्यै बहवो नो गृहा असन् ॥

स त्वं नो (२) नभसस्पत ऊर्जं नो धेहि भद्रया ।
पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि[६] ॥

देव संस्फान सहस्रपोषस्येशिषे स नो रास्वाज्यानिं रायस्पोषं सुवीर्यं संवत्सरीणाꣳ स्वस्तिम् ॥

अग्निर्वाव यम इयं यमी कुसीदं वा एतद्यमस्य यजमान आ दत्ते यदोषधीभिर्वेदिं स्तृणाति यदनुपौष्य प्रयायाद्ग्रीवबद्धमेन-(३)-ममुष्मिँल्लोके नेनीयेरन् यत् कुसीदमप्रतीत्तं मयीत्युपौषतीहैव सन् यमं कुसीदं निरवदायानृणः सुवर्गं लोकमेति[७] यदि मिश्रमिव चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत् प्रदाव्यः स एवैनꣳ स्वदयत्यं—ह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपौषेद्यदि (४) दहति पुण्यसमं भवति यदि न दहति पापसमं[११]—मेतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्रमुप यन्ति[१२] यो वा उपद्रष्टारमुपश्रोतारमनुख्यातारं विद्वान् यजते समुमुष्मिँल्लोक इष्टापूर्तेन गच्छतेऽग्निर्वा उपद्रष्टा वायुरुपश्रोताऽऽदित्योऽनुख्याता तान् य एवं विद्वान् यजते सममुष्मिँल्लोक इष्टापूर्तेन गच्छते[१३] ऽयं नो नभसा पुर (५) इत्याहाग्निर्वै नभसा पुरोऽग्निमेव तदाहैतन्मे गोपायेति स त्वं नो नभसस्पत इत्याह वायुर्वै नभसस्पतिर्वायुमेव तदाहैतन्मे गोपायेति देव संस्फानेत्याहासौ वा आदित्यो देवः संस्फान आदित्यमेव तदाहैतन्मे गोपायेति[१४] (६) ॥ (कुसीदं, न, एनं, यदि पुर, इति) ॥ ८ ॥

जीर्णवृषभालम्भः ॥ १-५ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

एतं युवानं परि वो ददामि तेन क्रीडन्तीश्चरत प्रियेण ।
मा नः शाप्त जनुषा सुभागा रायस्पोषेण समिषा मदेम[१] ॥
नमो महिम्न उत चक्षुषे ते मरुतां पितस्तदहं गृणामि ।
अनु मन्यस्व सुयजा यजाम जुष्टं देवानामिदमस्तु हव्यम्[२] ॥
देवानामेष उपनाह आसीदपां गर्भ ओषधीषु न्यक्तः ।
सोमस्य द्रप्समवृणीत पूषा (१) बृहन्नद्रिरभवत् तदेषाम्[३] ॥
पिता वत्सानां पतिरघ्नियानामथो पिता महतां गर्गराणाम् ।
वत्सो जरायु प्रतिधुक् पीयूष आमिक्षा मस्तु घृतमस्य रेतः[४] ॥
त्वां गावोऽवृणत राज्याय त्वां हवन्त मरुतः स्वर्काः ।
वर्ष्मन् क्षत्रस्य ककुभि शिश्रियाणस्ततो न उग्रो वि भजा वसूनि[५] ॥

व्यृद्धेन वा एष पशुना यजते यस्यैतानि न क्रियन्त एष (२) ह त्वै समृद्धेन यजते यस्यैतानि क्रियन्ते[६] ॥ (पूषै,-षो, ऽष्टौ च) ॥ ९ ॥

पाशुकगर्भप्रायश्चित्तम् ॥ १ बृहती; २, ४ अनुष्टुप्; ३ न्यङ्कुसारिणी; ५ एकपदा गायत्री; ६ द्विपदा विराट्; ८ गायत्री ॥ विश्वेदेवा ऋषयः ।

सूर्यो देवो दिविषद्भ्यो धाता क्षत्राय वायुः प्रजाभ्यः ।
बृहस्पतिस्त्वा प्रजापतये ज्योतिष्मतीं जुहोतु[1] ॥
यस्यास्ते हरितो गर्भोऽथो योनिर्हिरण्ययी । अङ्गान्यह्रुता यस्यै तां देवैः समजीगमम्[2] ॥
आ वर्तन वर्तय नि निवर्तन वर्तयेन्द्र नर्दबुद । भूम्याश्चतस्रः प्रदिशस्ताभिरा वर्तया पुनः[3] ॥
वि ते भिनद्मि तकरीं वि योनिं वि गवीन्यौ । वि (१) मातरं च पुत्रं च वि गर्भं च जरायु च[4] ॥
बहिस्ते अस्तु बालिति[5] ॥
उरुद्रप्सो विश्वरूप इन्दुः पवमानो धीर आनञ्ज गर्भम्[6] ॥
एकपदी द्विपदी त्रिपदी चतुष्पदी पञ्चपदी षट्पदी सप्तपद्यष्टापदी भुवनाऽनु प्रथताꣳ स्वाहा[7]
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः[8] ॥
( वि, चतुश्चत्वारिꣳशच्च ) ॥ १० ॥

याज्यापुरोऽनुवाक्याः ॥ त्रिष्टुप्; १-३ गायत्री; ७, ९, ११-१२ अनुष्टुप् । विश्वेदेवा ऋषयः ।

इदं वामास्ये हविः प्रियमिन्द्राबृहस्पती । उक्थं मदश्च शस्यते[1] ॥
अयं वां परि षिच्यते सोम इन्द्राबृहस्पती । चारुर्मदाय पीतये[2] ॥
अस्मे इन्द्राबृहस्पती रयिं धत्तꣳ शतग्विनम् । अश्वावन्तꣳ सहस्रिणम्[3] ॥
बृहस्पतिर्नः परि पातु पश्चादुतोत्तरस्मादधरादघायोः ।
इन्द्रः पुरस्तादुत मध्यतो नः सखा सखिभ्यो वरिवः कृणोतु[4] ॥
वि ते विष्वग्वातजूतासो अग्ने भामासः (१) शुचे शुचयश्चरन्ति ।
तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः[5] ॥
त्वामग्ने मानुषीरीडते विशो होत्राविदं विविचिꣳ रत्नधातमम् ।
गुहा सन्तꣳ सुभग विश्वदर्शतं तुविष्मणसꣳ सुयजं घृतश्रियम्[6] ॥
धाता ददातु नो रयिमीशानो जगतस्पतिः । स नः पूर्णेन वावनत्[7] ॥
धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान ।
धाता पुत्रं यजमानाय दाता (२) तस्मा उ हव्यं घृतवद्विधेम[8] ॥
धाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् । वयं देवस्य धीमहि सुमतिꣳ सत्यराधसः[9] ॥
धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ।
तस्मै देवा अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः[10] ॥

अनु॑ नो॒ऽद्यानु॑मतिर्य॒ज्ञं दे॒वेषु॑ मन्यताम् । अ॒ग्निश्च॑ हव्य॒वाह॑नो॒ भव॑तां दा॒शुषे॒ मय॑ः[११] ॥
अन्विद॑नुमते॒ त्वं ( ३ ) मन्या॑सै॒ शं च॑ नः कृधि ।
क्रत्वे॒ दक्षा॑य नो हिनु॒ प्र ण॒ आयू॑ꣳषि तारिषः[१२] ॥
अनु॑ मन्यतामनु॒मन्य॑माना प्र॒जाव॑न्तꣳ र॒यिमक्षी॑यमाणम् ।
तस्यै॑ व॒यꣳ हेड॑सि॒ माऽपि॑ भूम॒ सा नो॑ दे॒वी सु॒हवा॒ शर्म॑ यच्छतु[१३] ॥
यस्या॑मि॒दं प्र॒दिशि॒ यद्वि॒रोच॒तेऽनु॑मतिं॒ प्रति॑ भूष॒न्त्याय॑वः ।
यस्या॑ उ॒पस्थ॑ उ॒र्व॑न्तरि॑क्षꣳ सा नो॑ दे॒वी सु॒हवा॒ शर्म॑ यच्छतु[१४] ( ४ ) ॥
रा॒काम॒हꣳ सु॒हवा॑ꣳ सुष्टु॒ती हु॑वे शृ॒णोतु॑ नः सु॒भगा॒ बोध॑तु॒ त्मना॑ ।
सी॒व्यत्वप॑ः सू॒च्याऽच्छि॑द्यमानया॒ ददा॑तु वी॒रꣳ श॒तदा॑यमु॒क्थ्य॑म्[१५] ॥
यास्ते॑ राके सु॒मत॒य॑ः सु॒पेश॑सो॒ याभि॒र्ददा॑सि दा॒शुषे॒ वसू॑नि ।
ताभि॑र्नो अ॒द्य सु॒मना॑ उ॒पाग॑हि सहस्रपो॒षꣳ सु॑भगे॒ ररा॑णा[१६] ॥
सिनी॑वालि[१७] *- या सु॑पा॒णिः[१८] *- ॥
कु॒हूम॒हꣳ सु॒भगां॑ विद्म॒नाप॑समस्मिन् य॒ज्ञे सु॒हवां॑ जोहवीमि ।
सा नो॑ ददातु॒ श्रव॑णं ( ५ ) पितृ॒णां तस्या॑स्ते देवि ह॒विषा॑ विधेम[१९] ॥
कु॒हूर्दे॒वाना॑मॄत॑स्य॒ पत्नी॒ हव्या॑ नो अ॒स्य ह॒विष॑श्चिकेतु ।
सं दा॒शुषे॑ कि॒रतु॒ भूरि॑ वा॒मꣳ रा॒यस्पोष॑ं चिकि॒तुषे॑ दधातु ॥

( आमा॑सो, दाता, त्वं, य॑च्छतु, श्रव॑णं, चतु॑र्विꣳशतिश्च ) ॥ ११ ॥

[ अग्ने॑ १२३ । वा॒युं ७८ । वस॑व १७५ । ए॒त-१७३ ।-द्वा॒यु-२४६ ।-दे॒वाः १४८ । प्र॒जाप॑ति-१५८ ।-रा॒यु॒र्दा ३०० । ए॒तꣳ १०८ । सू॒र्यं ९४ । इ॒द-२७४ । -मेका॑दश ॥ १८५७ ]

[ ॥ इति तृतीयकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥ ]

## इष्टिहोमाभिधानम् ।

[ अथ चतुर्थः प्रपाठकः ॥ ४ ॥ ] विश्वेदेवा ऋषयः ।
वशागर्भदर्शननिमित्तकहोमविधिः ॥

वि वा ए॒तस्य॑ य॒ज्ञ ऋ॑ध्यते॒ यस्य॑ ह॒विर॑ति॒रिच्य॑ते॒ सूर्यो॑ दे॒वो दि॑वि॒षद्भ्य॒ इत्या॑ह॒ बृह॒स्पति॑ना॒ चैवास्य॑ प्र॒जाप॑तिना च य॒ज्ञस्य॒ व्यृ॑द्धमपि॑ वपति[१] रक्षा॑ꣳसि॒ वा ए॒तत् प॒शुꣳ स॑चन्ते॒ यदे॑कदेव॒त्य॑ आल॑ब्धो॒ भूया॑न् भव॑ति॒ यस्या॑स्ते॒ हरि॑तो॒ गर्भ॒ इत्या॑ह देव॒त्रैवैना॑ं गमयति॒ रक्ष॑सा॒मप॑हत्यै[२] आ व॑र्तन वर्तयेत्या॑ह॒ ( १ ) ब्रह्म॑णै॒वैन॒मा व॑र्तयति[३] वि ते॑ भिनद्मि तक॒रीमित्या॑ह यथाय॒जुरे॒वैत॑त्—दु॒रुद्र॒प्सो वि॒श्वरू॑प॒ इन्दु॒रित्या॑ह प्र॒जा वै प॒शव॒ इन्दु॑ः प्र॒जयै॒वैन॑ं प॒शुभि॑ः सम॑र्धयति[५] दिवं॑ वै य॒ज्ञस्य॒ व्यृ॑द्धं गच्छति पृथि॒वीमति॑रिक्तं तद्यन्न

---

( ११।१७-१८ ) ३।१।११।१५-१६

शमयेदार्तिमाच्छेद्यजमानो मही द्यौः पृथिवी च न इत्या- ( २ ) -ह द्यावापृथिवीभ्यामेव यज्ञस्य व्यृद्धं चातिरिक्तं च शमयति नाऽऽर्तिमाच्छति यजमानो[६] भस्मनाऽभि समूहति स्वगाकृत्या अथो अनयोर्वा एष गर्भो-ऽनयोरेवैनं दधाति[७] यदवद्येदति तद्रेचयेद्यन्नावद्येत् पशोरालब्धस्य नाव द्येत् पुरस्तान्नाभ्या अन्यदवद्ये-दुपरिष्टादन्यत् पुरस्ताद्वै नाभ्यै ( ३ ) प्राण उपरिष्टादपानो यावानेव पशुस्तस्याव द्यति[८] विष्णवे शिपिविष्टाय जुहोति यद्वै यज्ञस्यातिरिच्यते यः पशोर्भूमा या पुष्टिस्तद्विष्णुः शिपिविष्टोऽतिरिक्त एवातिरिक्तं दधात्यतिरिक्तस्य शान्त्यै[९] अष्टाप्रुड्ढिरण्यं दक्षिणाऽष्टापदी ह्येषाऽऽत्मा नवमः पशोराप्त्यै[१०] अन्तरकोश उष्णीषेणाऽऽविष्टितं भवत्येवमिव हि पशुरुल्बमिव ( ४ ) चर्मेव माꣳसमिवास्थीव यावानेव पशुस्तमाप्त्वाऽव रुन्धे[११] यस्यैषा यज्ञे प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान् भवति[१२] ॥ ( आह,-ति, नाभ्यै, इवै,-कविꣳशतिश्च ) ॥ १ ॥

वशालम्भनमन्त्राः ॥ १, ७, ९-१० त्रिष्टुप्, ८ तनुशिरा । विश्वेदेवा ऋषयः ।

आ वायो भूष शुचिपा उप नः सहस्रं ते नियुतो विश्ववार ।
उपो ते अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् ॥

आकूत्यै त्वा कामाय त्वा समृधे त्वा किक्किटा ते मनः प्रजापतये स्वाहा[२] किक्किटा ते प्राणं वायवे स्वाहा[३] किक्किटा ते चक्षुः सूर्याय स्वाहा[४] किक्किटा ते श्रोत्रं द्यावापृथिवीभ्याꣳ स्वाहा[५] किक्किटा ते वाचꣳ सरस्वत्यै स्वाहा[६] ( १ )

त्वं तुरीया वशिनी वशाऽसि सकृद्यत् त्वा मनसा गर्भ आऽशयत् ।
वशा त्वं वशिनी गच्छ देवान्त्सत्याः सन्तु यजमानस्य कामाः[७] ॥
अजाऽसि रयिष्ठा पृथिव्याꣳ सीदोर्ध्वाऽन्तरिक्षमुप तिष्ठस्व दिवि ते बृहद्भाः ॥
तन्तुं तन्वन् रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ॥
अनुल्बणं वयत जोगुवामपो मनु- ( २ ) -र्भव जनया दैव्यं जनम्[१०] ॥
मनसो हविरसि प्रजापतेर्वर्णो गात्राणां ते गात्रभाजो भूयास्म[११] ॥

( स्वाहा मनु,-स्त्रयोदश च ) ॥ २ ॥

काम्याजावशाविधानम् ॥ विश्वेदेवा ऋषयः ।

इमे वै सहाऽऽस्तां ते वायुर्व्यवात् ते गर्भमदधातां तꣳ सोमः प्राजनयदग्निरग्रसत स एतं प्रजापतिराग्नेयमष्टाकपालमपश्यत् तं निरवपत् तेनैवैनामग्नेरधि निरक्रीणात्[१] तस्मादप्यन्यदेवत्यामालभमान आग्नेयमष्टाकपालं पुरस्तान्निर्वपेदग्नेरेवैनामधि निष्क्रीयाऽऽलभते[२] य- ( १ ) द्वायुर्व्यवात् तस्माद्वायव्या यदिमे गर्भमदधातां तस्माद् द्यावापृथिव्या यत् सोमः प्राजनयदग्निरग्रसत तस्मादग्नीषोमीया यदनयोर्वियत्योर्वागवदत् तस्मात् सारस्वती यत् प्रजापतिरग्नेरधि निरक्रीणात् तस्मात् प्राजापत्या सा वा एषा सर्वदेवत्या यदजा वशा[३] वायव्यामा लभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन ( २ ) भाग-

*

धेयेनोप धावति स एवैनं भूतिं गमयति[५] द्यावापृथिव्यामा लभेत कृषमाणः प्रतिष्ठाकामो दिव एवास्मै पर्जन्यो वर्षति व्यस्यामोषधयो रोहन्ति समर्धुकमस्य सस्यं भवत्य[६]ग्नीषोमीयामा लभेत यः कामयेतान्नवानन्नादः स्यामित्यग्निनैवान्नमव रुन्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति[७] सारस्वतीमा लभेत य ( ३ ) ईश्वरो वाचो वदितोः सन् वाचं न वदेद्वाग्वै सरस्वती सरस्वतीमेव स्वेन भागधेयेनोप धावति सैवास्मिन् वाचं दधाति[८] प्राजापत्यामा लभेत यः कामयेतानभिजितमभि जयेयमिति प्रजापतिः सर्वा देवता देवताभिरेवानभिजितमभि जयति[९] वायव्ययोपाकरोति वायोरेवैनामवरुध्याऽऽ लभत[१०] आकूत्यै त्वा कामाय त्वे-( ४ )-त्याह यथायजुरेवैतत्[११] किक्किटाकारं जुहोति किक्किटाकारेण वै ग्राम्याः पशवो रमन्ते प्राऽरण्याः पतन्ति यत् किक्किटाकारं जुहोति ग्राम्याणां पशूनां धृत्यै[१२] पर्यग्नौ क्रियमाणे जुहोति जीवन्तीमेवैनाꣳ सुवर्गं लोकं गमयति त्वं तुरीया वशिनी वशाऽसीत्याह देवत्रैवैनां गमयति[१३] सत्याः सन्तु यजमानस्य कामा इत्याहैष वै कामो ( ५ ) यजमानस्य यदनार्त उदृचं गच्छति तस्मादेवमाहा[१४]ऽजाऽसि रयिष्ठेत्याहैष्वेवैनां लोकेषु प्रति ष्ठापयति[१५] दिवि ते बृहद्भा इत्याह सुवर्ग एवास्मै लोके ज्योतिर्दधाति[१६] तन्तुं तन्वन् रजसो भानुमन्विहीत्याहेमानेवास्मै लोकान् ज्योतिष्मतः करोत्य[१७]नुल्बणं वयत जोगुवामप इत्या-( ६ )-ह यदेव यज्ञ उल्बणं क्रियते तस्यैवैषा शान्ति[१८]र्मनुर्भव जनया दैव्यं जनमित्याह मानव्यो वै प्रजास्ता एवाऽऽद्याः कुरुते[१९] मनसो हविरसीत्याह स्वगाकृत्यै[२०] गात्राणां ते गात्रभाजो भूयास्मेत्याहाऽऽशिषमेवैतामा शास्ते[२१] तस्यै वा एतस्या एकमेवादेवयजनं यदालब्धायामभ्रो ( ७ ) भवति[२२] यदालब्धायामभ्रः स्यादप्सु वा प्रवेशयेत् सर्वां वा प्राश्नीया[२३]द्यदप्सु प्रवेशयेद्यज्ञवेशसं कुर्यात् सर्वामेव प्राश्नीयादिन्द्रियमेवाऽऽत्मन् धत्ते[२४] सा वा एषा त्रयाणामेवावरुद्धा संवत्सरसदः सहस्रयाजिनो गृहमेधिनस्त एवैतया यजेरन् तेषामेवैषाऽऽप्ता[२५] ॥ ( यत्, स्वेन, य,-त्वा, काम, इत्य, अभ्रो, द्विचत्वारिꣳशच्च ) ॥ ३ ॥

जयहोममन्त्राः तत्प्रशंसा च ॥ १३ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

चित्तं च[१] चित्तिश्चा[२]ऽऽकूतं चा[३]ऽऽकूतिश्च[४] विज्ञातं च[५] विज्ञानं च[६] मनश्च[७] शक्वरीश्च[८] दर्शश्च[९] पूर्णमासश्च[१०] बृहच्च[११] रथन्तरं च[१२] प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशः समनमन्त सर्वाः स उग्रः स हि हव्यो बभूव[१३]

देवासुराः संयत्ता आसन्त्स इन्द्रः प्रजापतिमुपा-( १ )-धावत् तस्मा एताञ्जयान् प्रायच्छत् तानजुहोत् ततो वै देवा असुरानजयन् यदजयन् तज्जयानां जयत्व[१४]ꣳ स्पर्धमानेनैते होतव्या जयत्येव तां पृतनाम्[१५] ॥ ( उप, पञ्चविꣳशतिश्च ) ॥ ४ ॥

अभ्यातानमन्त्राः ॥ विश्वेदेवा ऋषयः ।

अग्निर्भूतानामधिपतिः स माऽवत्वि[१]न्द्रो ज्येष्ठानां[२] *- यमः पृथिव्या[३] *- वायुरन्तरिक्षस्य[४] *- सूर्यो दिव[५] *- श्चन्द्रमा नक्षत्राणां[६] *- बृहस्पतिर्ब्रह्मणो[७] *- मित्रः सत्यानां[८] *- वरुणोऽपाꣳ[९] *- समुद्रः स्रोत्यानां[१०] *- मन्नꣳ साम्राज्यानामधिपति तन्माऽवतु[११] सोम ओषधीनाꣳ[१२] *- सविता प्रसवानाꣳ[१३] *- रुद्रः

( ५।२-१०, १२-१६ ) अधिपतिः... वतु । अग्रे च ' अस्मिन् ब्रह्मन्० ' ( ५।१८ ) इत्याद्यनुषज्यते ।

पशूनां[14] ※- त्वष्टा रूपाणां[15] ※- विष्णुः पर्वतानां[16] ※- मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ( १ ) ततास्ततामहा इह माऽवत । अस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्[17] ॥ ( अवरे, सप्तदश च ) ॥ ५ ॥

जयाभ्यातानराष्ट्रभृद्धोमविधानम् ॥ विश्वेदेवा ऋषयः ।

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एतानभ्यातानानपश्यन् तानभ्यातन्वत यद्देवानां कर्माऽऽसीदार्ध्यत तद्यदसुराणां न तदार्ध्यत येन कर्मणेर्त्सेत् तत्र होतव्या ऋध्नोत्येव तेन कर्मणा यद्विश्वे देवाः समभरन् तस्मादभ्यातानां वैश्वदेवा यत् प्रजापतिर्जयान् प्रायच्छत् तस्माज्जयाः प्राजापत्याः ( १ ) यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृतां राष्ट्रभृत्त्वं ते देवा अभ्यातानैरसुरानभ्यातन्वत जयैरजयन् राष्ट्रभृद्भी राष्ट्रमाऽददत यद्देवा अभ्यातानैरसुरानभ्यातन्वत तदभ्यातानानामभ्यातानत्वं यज्जयैरजयन् तज्जयानां जयत्वं यद्राष्ट्रभृद्भी राष्ट्रमाऽददत तद्राष्ट्रभृतां राष्ट्रभृत्त्वं ततो देवा अभवन् पराऽसुरा[3] यो भ्रातृव्यवान्त्स्यात् स ( २ ) एतान् जुहुयादभ्यातानैरेव भ्रातृव्यानभ्यातनुते जयैर्जयति राष्ट्रभृद्भी राष्ट्रमा दत्ते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[4] ॥ ( प्राजापत्याः, सो, ऽष्टादश च ) ॥ ६ ॥

राष्ट्रभृन्मन्त्राः ॥ विश्वेदेवा ऋषयः

ऋताषाडृतधामाऽग्निर्गन्धर्वस्तस्यौषधयोऽप्सरस ऊर्जो नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा[1] ताभ्यः स्वाहा[2] संहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवः[3-4] ※- सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो बेकुरयो[5-6] ※- भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसः स्तवाः[7-8] ※- प्रजापतिर्विश्वकर्मा मनो ( १ ) गन्धर्वस्तस्यर्क्सामान्यप्सरसो वह्नय[9-10] ※- इषिरो विश्वव्यचा वातो गन्धर्वस्तस्याऽऽपोऽप्सरसो मुदा[11-12] ※-

भुवनस्य पते यस्य त उपरि गृहा इह च ।

स नो रास्वाज्यानिं रायस्पोषं सुवीर्यं संवत्सरीणां स्वस्तिम्[13] ॥

परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वस्तस्य विश्वमप्सरसो भुवः[14-15] ※- सुक्षितिः सुभूतिर्भद्रकृत् सुवर्वान् पर्जन्यो गन्धर्वस्तस्य विद्युतोऽप्सरसो रुचो[16-17] ※- दूरेहेतिरमृडयो ( २ ) मृत्युर्गन्धर्वस्तस्य प्रजा अप्सरसो भीरुवः[18-19] ※- चारुः कृपणकाशी कामो गन्धर्वस्तस्याऽऽधयोऽप्सरसः शोचयन्तीर्नाम स इदं ब्रह्म क्षत्रं पातु ता इदं ब्रह्म क्षत्रं पान्तु तस्मै स्वाहा[20] ताभ्यः स्वाहा[21]

स नो भुवनस्य पते यस्य त उपरि गृहा इह च ।

उरु ब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ[22] ॥ ( मनोऽमृडयः, षट्चत्वारिंशच्च ) ॥ ७ ॥

राष्ट्रभृन्मन्त्राणां काम्यप्रयोगाः ॥ विश्वेदेवा ऋषयः ।

राष्ट्रकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रेणैवास्मै राष्ट्रमव रुन्धे राष्ट्रमेव भवत्या—त्मने होतव्या

( ७।२-१२,१४-१५ ) नाम...ताभ्यः स्वाहा ।

राष्ट्रं वै राष्ट्रभृतो राष्ट्रं प्रजा राष्ट्रं पशवो राष्ट्रं यच्छ्रेष्ठो भवति राष्ट्रेणैव राष्ट्रमव रुन्धे वसिष्ठः समानानां भवति[2] ग्रामकामाय होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रꣳ सजाता राष्ट्रेणैवास्मै राष्ट्रꣳ सजातानव रुन्धे ग्राम्ये-( १ )-व भवत्य[3]धिदेवने जुहोत्यधिदेवन एवास्मै सजातानव रुन्धे त एनमवरुद्धा उप तिष्ठन्ते[4] रथमुख ओजस्कामस्य होतव्या ओजो वै राष्ट्रभृत ओजो रथ ओजसैवास्मा ओजोऽव रुन्ध ओजस्व्येव भवति[5] यो राष्ट्रादपभूतः स्यात् तस्मै होतव्या यावन्तोऽस्य रथाः स्युस्तान् ब्रूयाद् युङ्ध्वमिति राष्ट्रमेवास्मै युनक्त्या-( २ )-हुतयो वा एतस्याक्लृप्ता यस्य राष्ट्रं न कल्पते स्वरथस्य दक्षिणं चक्रं प्रवृह्य नाडीमभि जुहुयादाहुतीरेवास्य कल्पयति ता अस्य कल्पमाना राष्ट्रमनु कल्पते[7] संग्रामे संयत्ते होतव्या राष्ट्रं वै राष्ट्रभृतो राष्ट्रे खलु वा एते व्यायच्छन्ते ये संग्रामꣳ संयन्ति यस्य पूर्वस्य जुह्वति स एव भवति जयति तꣳ संग्रामं मान्धुक इध्मो ( ३ ) भवत्यङ्गारा एव प्रतिवेष्टमाना अमित्राणामस्य सेनां प्रति वेष्टयन्ति य उन्माद्येत् तस्मै होतव्या गन्धर्वाप्सरसो वा एतमुन्मादयन्ति य उन्माद्यत्येते खलु वै गन्धर्वाप्सरसो यद्राष्ट्रभृतस्तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति तेनैवैनाञ्छमयति[10] नैयग्रोध औदुम्बर आश्वत्थः प्लाक्ष इतीध्मो भवत्येते वै गन्धर्वाप्सरसां गृहाः स्व एवैना-( ४ )-नायतने शमयत्य[11]भिचरता प्रतिलोमꣳ होतव्याः प्राणानेवास्य प्रतीचः प्रति यौति तं ततो येन केन च स्तृणुते[12] स्वकृत इरिणे जुहोति प्रदरे वैतद्वा अस्यै निर्ऋतिगृहीतं निर्ऋतिगृहीत एवैनं निर्ऋत्या ग्राहयति यद्वाचः क्रूरं तेन वषट् करोति वाच एवैनं क्रूरेण प्र वृश्चति ताजगार्तिमार्छति[13] यस्य कामयेतान्नाद्य-( ५ )-मा ददीयेति तस्य सभायामुत्तानो निपद्य भुवनस्य पत इति तृणानि सं गृह्णीयात् प्रजापतिर्वै भुवनस्य पतिः प्रजापतिनैवास्यान्नाद्यमा दत्त इदमहममुष्याऽऽमुष्यायणस्यान्नाद्यꣳ हरामीत्याहान्नाद्यमेवास्य हरति[14] षड्भिर्हरति षड्वा ऋतवः प्रजापतिनैवास्यान्नाद्यमादायर्तवोऽस्मा अनु प्र यच्छन्ति[15] ( ६ ) यो ज्येष्ठबन्धुरपभूतः स्यात् तꣳ स्थलेऽवसाय्य ब्रह्मौदनं चतुःशरावं पक्त्वा तस्मै होतव्या वर्ष्म वै राष्ट्रभृतो वर्ष्म स्थलं वर्ष्मणैवैनं वर्ष्म समानानां गमयति[16] चतुःशरावो भवति दिक्ष्वेव प्रति तिष्ठति[17] क्षीरे भवति रुचमेवास्मिन् दधात्यु[18]द्धरति शृतत्वाय[19] सर्पिष्वान् भवति मेध्यत्वाय[20] चत्वार आर्षेयाः प्राश्नन्ति दिशामेव ज्योतिषि जुहोति[21] ॥ ( ग्राम्ये, युनक्त्या,-ध्म, एवैना,-न्नाद्यं, यच्छन्त्ये,-कान्नपञ्चाशच्च ) ॥ ८ ॥

देविकाख्यहविषां काम्यप्रयोगाः ॥ विश्वेदेवा ऋषयः ।

देविका निर्वपेत् प्रजाकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै प्रजाश्छन्दोभिरेवास्मै प्रजाः प्र जनयति[1] प्रथमं धातारं करोति मिथुनी एव तेन करोत्यन्वेवास्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति प्रजास्वेव प्रजातासु कुह्वा वाचं दधात्ये[2]ता एव निर्वपेत् पशुकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसी-( १ )-व खलु वै पशवश्छन्दोभिरेवास्मै पशून् प्र जनयति प्रथमं धातारं करोति प्रैव तेन वापयत्यन्वेवास्मा अनुमतिर्मन्यते राते राका प्र सिनीवाली जनयति पशूनेव प्रजातान् कुह्वा प्रति ष्ठापयत्ये[3]ता एव निर्वपेद्ग्रामकामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै ग्रामश्छन्दोभिरेवास्मै ग्राम-( २ )-मव रुन्धे मध्यतो धातारं करोति मध्यत एवैनं ग्रामस्य दधात्ये[4]ता एव निर्वपेज्ज्योगामयावी छन्दा-

ꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतमभि मन्यन्ते यस्य ज्योगामयति छन्दोभिरेवैनमगदं करोति मध्यतो धातारं करोति मध्यतो वा एतस्याक्लृप्तं यस्य ज्योगामयति मध्यत एवास्य तेन कल्पयत्ये[५]—ता एव नि-( ३ )-र्वपेद्यं यज्ञो नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोप नमन्ति यं यज्ञो नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं यज्ञो नमत्ये[६]—ता एव निर्वपेदीजानश्छन्दाꣳसि वै देविका यातयामानीव खलु वा एतस्य छन्दाꣳसि य ईजान उत्तमं धातारं करोत्यु-( ४ )-परिष्टादेवास्मै छन्दाꣳस्ययातयामान्यव रुन्ध उपैनमुत्तरो यज्ञो नमत्ये[७]—ता एव निर्वपेद्यं मेधा नोपनमेच्छन्दाꣳसि वै देविकाश्छन्दाꣳसि खलु वा एतं नोप नमन्ति यं मेधा नोपनमति प्रथमं धातारं करोति मुखत एवास्मै छन्दाꣳसि दधात्युपैनं मेधा नमत्ये[८]—ता एव निर्वपे- (५)-द्रुक्कामश्छन्दाꣳसि वै देविकाश्छन्दाꣳसीव खलु वै रुक् छन्दोभिरेवास्मिन् रुचं दधाति क्षीरे भवन्ति रुचमेवास्मिन् दधति मध्यतो धातारं करोति मध्यत एवैनꣳ रुचो दधाति[९] गायत्री वा अनुमतिस्त्रिष्टुग्राका जगती सिनीवाल्यनुष्टुप् कुहूर्धाता वषट्कारः[१०] पूर्वपक्षो राकाऽपरपक्षः कुहूरमावास्या सिनीवाली पौर्णमास्यनुमतिश्चन्द्रमा धाता[११] ऽष्टौ ( ६ ) वसवोऽष्टाक्षरा गायत्र्येकादश रुद्रा एकादशाक्षरा त्रिष्टुब् द्वादशादित्या द्वादशाक्षरा जगती प्रजापतिरनुष्टुब् धाता वषट्कारं[१२] एतद्वै देविकाः सर्वाणि च छन्दाꣳसि सर्वाश्च देवता वषट्कारं[१३]—स्ता यत् सह सर्वा निर्वपेदीश्वरा एनं प्रदहो द्वे प्रथमे निरुप्य धातुस्तृतीयं निर्वपेत् तथो एवोत्तरे निर्वपेत् तथैनं न प्र दहन्त्य-( ७ )-थो यस्मै कामाय निरुप्यन्ते तमेवाऽऽभिरुपाऽऽप्नोति[१४] ॥
( छन्दाꣳसि, ग्रामं, नि,-ष्करोति, वपे,-दृष्टौ, दहन्ति, नव च ) ॥ ९ ॥

प्रवत्स्यतोऽग्निहोत्रिणो होमः, समारोपश्च ॥ १-२ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

वास्तोष्पते प्रति जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः ।
यत् त्वेमहे प्रति तन्नो जुषस्व शं न एधि द्विपदे शं चतुष्पदे ॥
वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या ।
आवः क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः[२] ॥

यत् सायंप्रातरग्निहोत्रं जुहोत्याहुतीष्टका एव ता उप धत्ते (१) यजमानोऽहोरात्राणि वा एतस्येष्टका य आहिताग्निर्यत् सायंप्रातर्जुहोत्यहोरात्राण्येवाऽऽप्त्वेष्टकाः कृत्वोप धत्ते[३] दश समानत्र जुहोति दशाक्षरा विराड्विराजमेवाऽऽप्त्वेष्टकां कृत्वोप धत्तेऽथो विराज्येव यज्ञमाप्नोति चित्यश्चित्योऽस्य भवति[४] तस्माद्यत्र दशोषित्वा प्रयाति तद्यज्ञवास्त्ववास्त्वेव तद्यत् ततोऽर्वाचीनꣳ (२) रुद्रः खलु वै वास्तोष्पतिर्यदहुत्वा वास्तोष्पतीयं प्रयायाद् रुद्र एनं भूत्वाऽग्निरनूत्थाय हन्याद्वास्तोष्पतीयं जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्च्छति यजमानो[५] यद्युक्ते जुहुयाद्यथा प्रयाते वास्तावाहुतिं जुहोति तादृगेव तद्यदयुक्ते जुहुयाद्यथा क्षेम आहुतिं जुहोति तादृगेव तदहुतमस्य वास्तोष्पतीयꣳ स्या-( ३ )-द्दक्षिणो युक्तो भवति सव्योऽयुक्तोऽथ वास्तोष्पतीयं जुहोत्युभयमेवाकरपरिवर्गमेवैनꣳ शमयति[६] यदेकया जुहुयाद्दर्वि-

होमं कुर्यात् पुरोऽनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वाय यद्धुत आदध्याद् रुद्रं गृहानन्वारोहयेद्यद्-वक्षाणान्यसंप्रक्षाप्य प्रयायाद्यथा यत्रवेशसं वाऽऽदहनं वा तादृगेव तदयं ते योनिर्ऋत्विय इत्यरण्योः समारोहयत्ये-(४)-ष वा अग्नेर्योनिः स्व एवैनं योनौ समारोहयत्यथो खल्वाहुर्यदरण्योः समारूढो नश्ये-दुदस्याग्निः सीदेत् पुनराधेयः स्यादिति या ते अग्ने यज्ञिया तनूस्तयेह्या रोहेत्यात्मन्त्समारोहयते यजमानो वा अग्नेर्योनिः स्वायामेवैनं योन्याꣳ समारोहयते[1] ( धत्ते, ऽर्वाचीनꣳ, स्यात्, समारोहयति, पञ्चचत्वारिꣳशच्च ) ॥१०॥

राजसूयगता याज्यापुरोऽनुवाक्याः ॥ त्रिष्टुप्; १,३,५,७,११,१५,१८ गायत्री; ८ जगती। विश्वेदेवा ऋषयः।

त्वमग्ने बृहद्वयो दधासि देव दाशुषे । कविर्गृहपतिर्युवा[1] ॥
हव्यवाडग्निरजरः पिता नो विभुर्विभावा सुदृशीको अस्मे ।
सुगार्हपत्याः समिषो दिदीह्यस्मद्रियक् सं मिमीहि श्रवाꣳसि[2] ॥
त्वं च सोम नो वशो जीवातुं न मरामहे । प्रियस्तोत्रो वनस्पतिः[3] ॥
ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ।
श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳ सोमः (१) पवित्रमत्येति रेभन्[4] ॥
आ विश्वदेवꣳ सत्पतिꣳ सूक्तैरद्या वृणीमहे । सत्यसवꣳ सवितारम्[5] ॥
आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेनाऽऽ देवो याति भुवना विपश्यन्[6] ॥
यथा नो अदितिः करत् पश्वे नृभ्यो यथा गवे । यथा तोकाय रुद्रियम्[7] ॥
मा नस्तोके तनये मा न आयुषि मा नो गोषु मा (२) नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते[8] ॥
उदप्रुतो न वयो रक्षमाणा वावदतो अभ्रियस्येव घोषाः ।
गिरिभ्रजो नोर्मयो मदन्तो बृहस्पतिमभ्यर्का अनावन्[9] ॥
हꣳसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन् ।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाꣳ अगायत्[10] ॥
एन्द्र सानसिꣳ रयिꣳ (३) सजित्वानꣳ सदासहम् । वर्षिष्ठमूतये भर[11] ॥
प्र ससाहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु ।
इन्द्राऽऽ भर दक्षिणेना वसूनि पतिः सिन्धूनामसि रेवतीनाम्[12] ॥
त्वꣳ सुतस्य पीतये सद्यो वृद्धो अजायथाः । इन्द्र ज्यैष्ठ्याय सुक्रतो[13] ॥
भुवस्त्वमिन्द्र ब्रह्मणा महान् भुवो विश्वेषु सवनेषु यज्ञियः ।
भुवो नृꣳश्च्यौत्नो विश्वस्मिन् भरे ज्येष्ठश्च मन्त्रो (४) विश्वचर्षणे[14] ॥

मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । सत्यं चित्रश्रवस्तमम्[15] ॥
मित्रो जनान् यातयति प्रजानन् मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाऽभि चष्टे सत्याय हव्यं घृतवद्विधेम[16] ॥
प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतो नैनमꣳहो अश्नोत्यन्तितो न दूरात्[17] ॥
य-(५)-च्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् । मिनीमसि द्यविद्यवि[18] ॥
यत् किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरामसि ।
अचित्ती यत् तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः[19] ॥
कितवासो यद्रिरिपुर्न दीवि यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरे-(६)-व देवाथा ते स्याम वरुण प्रियासः[20] ॥
( सोमो, मा, रयिं, मन्त्रो, य,-च्छिथिरा, सप्त च ) ॥ ११ ॥

[ वि वा २२१ । आ वायो ११३ । इमे ३९२ चित्त-७५ । -सम्नि-६७ । देवा ११८ । ऋताषा-१४६ इष्टकामायु ३४९ । देविका ३५९ । वास्तो-२४५ । स्व-३०७ । मेकादश ॥ २३९२ ]

[ इति तृतीयकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥ ]

## इष्टिशेषाभिधानम् ।

[ अथ पञ्चमः प्रपाठकः ॥ ५ ॥ ]

दर्शपूर्णमासाङ्गभूतारम्भणीयेष्टिः ॥ १-३ त्रिष्टुप्; ४ शक्वरी । विश्वेदेवा ऋषयः ।

पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।
तस्यां देवा अधि संवसन्त उत्तमे नाक इह मादयन्ताम्[1] ॥
यत् ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा ।
सा नो यज्ञं पिपृहि विश्ववारे रयिं नो धेहि सुभगे सुवीरम्[2] ॥
निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती ।
सहस्रपोषꣳ सुभगा रराणा सा न आ गन् वर्चसा (१) संविदाना[3] ॥
अग्नीषोमौ प्रथमौ वीर्येण वसून् रुद्रानादित्यानिह जिन्वतम् ।
माध्यꣳ हि पौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथास्मभ्यꣳ
सहवीराꣳ रयिं नि यच्छतम्[4] ॥

आदित्याश्चाङ्गिरसश्चाग्नीनाऽदधत ते दर्शपूर्णमासौ प्रैप्सन् तेषामङ्गिरसां निरुप्तꣳ हविरासीदथाऽऽदित्या एतौ होमावपश्यन् तावजुहवुस्ततो वै ते दर्शपूर्णमासौ (२) पूर्व आऽलभन्त दर्शपूर्णमासावालभमान एतौ होमौ पुरस्ताज्जुहुयात् साक्षादेव दर्शपूर्णमासावा लभते ब्रह्मवादिनो वदन्ति स त्वै दर्शपूर्णमासावा लभेत य एनयोरनुलोमं च प्रतिलोमं च विद्यादित्यमावास्याया ऊर्ध्वं तदनुलोमं पौर्णमास्यै प्रती-

चीनं तत् प्रतिलोमं यत् पौर्णमासीं पूर्वामालभेत प्रतिलोममेनावा लभेतामुमपक्षीयमाणमन्वप ( ३ ) क्षीयेत[८] सारस्वतौ होमौ पुरस्ताज्जुहुयादमावास्या वै सरस्वत्यनुलोममेवैनावा लभतेऽमुमाप्यायमानमन्वा प्यायत आग्नावैष्णवमेकादशकपालं पुरस्तान्निर्वपेत् सरस्वत्यै चरुꣳ सरस्वते द्वादशकपालं[९] यदाग्नेयो भवत्यग्निर्वै यज्ञमुखमेवार्द्धिं पुरस्ताद्धत्ते यद्वैष्णवो भवति यज्ञो वै विष्णुर्यज्ञमेवाऽऽरभ्य प्र तनुते सरस्वत्यै ( ४ ) चरुर्भवति सरस्वते द्वादशकपालोऽमावास्या वै सरस्वती पूर्णमासः सरस्वान् तावेव साक्षादा रभत ऋध्नोत्याभ्यां[९] द्वादशकपालः सरस्वते भवति मिथुनत्वाय प्रजात्यै[१०] मिथुनौ गावौ दक्षिणा समृद्ध्यै[११] ॥ ( ऋचैसा, दर्शपूर्णमासा,-वप, सरस्वत्यै, पञ्चविꣳशतिश्च ) ॥ १ ॥

सौमिकब्रह्मत्वविधिः ॥ विश्वेदेवा ऋषयः ।

ऋषयो वा इन्द्रं प्रत्यक्षं नापश्यन् तं वसिष्ठः प्रत्यक्षमपश्यत् सोऽब्रवीद्ब्राह्मणं ते वक्ष्यामि यथा त्वत्पुरोहिताः प्रजाः प्रजनिष्यन्तेऽथ मेतरेभ्य ऋषिभ्यो मा प्र वोच इति तस्मा एतान्त्स्तोमभागानब्रवीत् ततो वसिष्ठपुरोहिताः प्रजाः प्राजायन्त[१] तस्माद्वासिष्ठो ब्रह्मा कार्यः प्रैव जायते[२] रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्या-( १ )-ह देवा वै क्षयो देवेभ्य एव यज्ञं प्राऽऽह[३] प्रेतिरसि धर्माय त्वा धर्मं जिन्वेत्याह मनुष्या वै धर्मो मनुष्येभ्य एव यज्ञं प्राऽऽहा[४]-न्वितिरसि दिवे त्वा दिवं जिन्वेत्याहैभ्य एव लोकेभ्यो यज्ञं प्राऽऽह[५] विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्वेत्याह वृष्टिमेवाव ( २ ) रुन्धे[६] प्रवाऽस्यनुवाऽसीत्याह मिथुनत्वायो[७]-शिगसि वसुभ्यस्त्वा वसूञ्जिन्वेत्याहाष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्या एतावन्तो वै देवास्तेभ्य एव यज्ञं प्राऽऽहौ[८]-जोऽसि पितृभ्यस्त्वा पितॄञ्जिन्वेत्याह देवानेव पितॄननु सं तनोति[९] तन्तुरसि प्रजाभ्यस्त्वा प्रजा जिन्वे-( ३ )-त्याह पितॄनेव प्रजा अनु सं तनोति[१०] पृतनाषाडसि पशुभ्यस्त्वा पशूञ्जिन्वेत्याह प्रजा एव पशूननु सं तनोति[११] रेवदस्योषधीभ्यस्त्वौषधीर्जिन्वेत्याहौषधीष्वेव पशून् प्रति ष्ठापयत्य[१२]-भिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्वेत्याहाभिजित्या[१३] अधिपतिरसि प्राणाय त्वा प्राणं ( ४ ) जिन्वेत्याह प्रजास्वेव प्राणान् दधाति[१४] त्रिवृदसि प्रवृदसीत्याह मिथुनत्वाय[१५] सꣳरोहोऽसि नीरोहोऽसीत्याह प्रजात्यै[१६] वसुकोऽसि वेषश्रिरसि वस्यष्टिरसीत्याह प्रतिष्ठित्यै[१७] ॥ ( इत्य,-व, जिन्व, प्राणं, त्रिꣳशच्च ) ॥२॥

विष्णुक्रमाः ॥ विश्वेदेवा ऋषयः ।

अग्निना देवेन पृतना जयामि गायत्रेण छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान् पादयाम्यवैनान् बाधे प्रत्येनान्नुदेऽस्मिन् क्षयेऽस्मिन् भूमिलोके योऽस्मान् द्वेष्टि यं च वयं द्विष्मो विष्णोः क्रमेणात्येनान् क्रामामी[१]-न्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण वज्रेण ( १ ) सहजान्[२]*- विश्वेभिर्देवेभिः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेणापरजा[३]-*-न्निन्द्रेण सयुजो वयꣳ सासह्याम पृतन्यतः । घ्नन्तो वृत्राण्यप्रति । यत् ते अग्ने तेजस्तेनाहं तेजस्वी भूयासं यत् ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासं यत् ते अग्ने हरस्तेनाहꣳ हरस्वी भूयासम्[४] ॥ ( वज्रेण, षट्चत्वारिꣳशच्च ) ॥ ३ ॥

---

( ३।२-३ ) भ्रातृव्या... क्रामामि ।

अतिमोक्षमन्त्राः ॥ अनुष्टुप्, ३, ६, ९ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

ये देवा यज्ञहनो[1] यज्ञमुषः पृथिव्यामध्यासते । अग्निर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
आऽगन्म मित्रावरुणा वरेण्या रात्रीणां भागो युवयोर्यो अस्ति ।
नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः[3] ॥
ये देवा यज्ञहनो[4] यज्ञमुषोऽन्तरिक्षेऽध्यासते । वायुर्मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
यास्ते रात्रीः सवित-( १ )-र्देवयानीरन्तरा द्यावापृथिवी वियन्ति ।
गृहैश्च सर्वैः प्रजया न्वग्रे सुवो रुहाणास्तरता रजाꣳसि[6] ॥
ये देवा यज्ञहनो[7] यज्ञमुषो दिव्यध्यासते । सूर्यो मा तेभ्यो रक्षतु गच्छेम सुकृतो वयम् ॥
येनेन्द्राय समभरः पयाꣳस्युत्तमेन हविषा जातवेदः ।
तेनाग्ने त्वमुत वर्धयेमꣳ सजातानाꣳ श्रैष्ठ्य आ धेह्येनम् ॥

यज्ञहनो वै देवा यज्ञमुषः ( २ ) सन्ति त एषु लोकेष्वासत आददाना विमथ्नाना यो ददाति यो यजते तस्य[10] । ये देवा यज्ञहनः पृथिव्यामध्यासते ये अन्तरिक्षे ये दिवीत्याहेमानेव लोकाꣳस्तीर्त्वा सगृहः सपशुः सुवर्गं लोकमेत्य[11]—प वै सोमेनेजानाद्देवताश्च यज्ञश्च क्रामन्त्याग्नेयं पञ्चकपालमुदवसानीयं निर्वपेदग्निः सर्वा देवताः ( ३ ) पाङ्क्तो यज्ञो देवताश्चैव यज्ञं चाव रुन्धे[12] गायत्रो वा अग्निर्गायत्रछन्दास्तं छन्दसा व्यर्धयति यत् पञ्चकपालं करोत्यष्टाकपालः कार्योऽष्टाक्षरा गायत्री गायत्रोऽग्निर्गायत्रछन्दाः स्वेनैवैनं छन्दसा समर्धयति[13] पङ्क्त्यौ याज्यानुवाक्ये भवतः पाङ्क्तो यज्ञस्तेनैव यज्ञान्नैति[14] ॥ ( सवित,-यज्ञमुषो, देवता,-स्त्रिचत्वारिꣳशच्च )॥ ४ ॥

आदित्यग्रहमन्त्राः ॥ १ धाष्टिः, २ शक्वरी, ४ अनुष्टुप्, ६–७ त्रिष्टुप्, ८ बृहती । विश्वेदेवा ऋषयः ।

सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोऽग्निर्मा पातु चक्षुषः ।
सक्ष शूष सवितर्विश्वचर्षण एतेभिः सोम नामभिर्विधेम ते तेभिः सोम नामभिर्विधेम ते[1] ॥
अहं परस्तादहमवस्तादहं ज्योतिषा वि तमो ववार । यदन्तरिक्षं तदु मे पिताऽभूदहꣳ सूर्यमुभयतो ददर्शाहं भूयासमुत्तमः समानानां[2]-( १ )-मा समुद्रादाऽन्तरिक्षात् प्रजापतिरुदधिं च्यावयातीन्द्रः प्र स्नौतु मरुतो वर्षयन्तु[3]—
—न्नभय पृथिवीं भिन्धीदं दिव्यं नभः । उद्नो दिव्यस्य नो देहीशानो वि सृजा दृतिम्[4] ॥

पशवो वा एते यदादित्य एष रुद्रो यदग्निरोषधीः प्रास्याग्नावादित्यं जुहोति रुद्रादेव पशूनन्तर्दधात्यथो ओषधीष्वेव पशून् ( २ ) प्रति ष्ठापयति[5]

कविर्यज्ञस्य वि तनोति पन्थां नाकस्य पृष्ठे अधि रोचने दिवः ।
येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान्[6] ॥
यास्ते विश्वाः समिधः सन्त्यग्ने याः पृथिव्यां बर्हिषि सूर्ये याः ।

*

तास्ते गच्छन्त्वाहुतिं घृतस्य देवायते यजमानाय शर्म ॥
आशासानः सुवीर्यं रायस्पोषं स्वश्वियम् ।
बृहस्पतिना राया स्वगाकृतो मह्यं यजमानाय (२) तिष्ठ ॥
(समानानां, पशून्, यजमानायै,-कं च) ॥ ५ ॥

पत्नीविषयका योक्त्रबन्धादिमन्त्राः ॥१, ४ त्रिष्टुप्, २-३ अनुष्टुप् । विश्वेदेवा ऋषयः ।

सं त्वा नह्यामि पयसा घृतेन सं त्वा नह्याम्यप ओषधीभिः ।
सं त्वा नह्यामि प्रजयाऽहमद्य सा दीक्षिता सनवो वाजमस्मे ॥
प्रैतु ब्रह्मणस्पत्नी वेदिं वर्णेन सीदतु । अथाहमनुकामिनी स्वे लोके विशा इह ॥
सुप्रजसस्त्वा वयं सुपत्नीरुप सेदिम । अग्ने सपत्नदम्भनमदब्धासो अदाभ्यम् ॥
इमं वि ष्यामि वरुणस्य पाशं (१) यमबध्नीत सविता सुकेतः ।
धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ॥

प्रेद्धुदेहृतस्य वामीरन्वग्निस्तेऽग्रं नयत्वदितिर्मध्यं ददतां रुद्रावसृष्टाऽसि युवा नाम मा मा हिंसी-र्वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीः -*सादयामि*- विश्वस्य ते विश्वावतो वृष्णियावत-(२)-स्तवाग्ने वामीरनु सन्दृशि विश्वा रेतांसि धिषीया-गन् देवान् यज्ञो नि देवीर्देवेभ्यो यज्ञमशिषन्नस्मिन्त्सुन्वति यजमान आशिषः स्वाहाकृताः समुद्रेष्ठा गन्धर्वमा तिष्ठतानु । वातस्य पत्मन्निड ईडिताः ॥ (पाशं, वृष्णियावत,-स्त्रिंशच्च) ॥ ६ ॥

स्रुचां वृक्षावशेषविधानम् ॥ विश्वेदेवा ऋषयः ।

वषट्कारो वै गायत्रियै शिरोऽच्छिनत् तस्यै रसः पराऽपतत् स पृथिवीं प्राविशत् स खदिरोऽभवद्यस्य खादिरः स्रुवो भवति छन्दसामेव रसेनाव द्यति सरसा अस्याऽऽहुतयो भवन्ति तृतीयस्यामितो दिवि सोम आसीत् तं गायत्र्याऽहरत् तस्य पर्णमच्छिद्यत तत् पर्णोऽभवत् तत् पर्णस्य पर्णत्वं यस्य पर्णमयी जुहू-(१)-र्भवति सौम्या अस्याऽऽहुतयो भवन्ति जुषन्तेऽस्य देवा आहुती-र्देवा वै ब्रह्मन्नवदन्त तत् पर्ण उपाशृणोत् सुश्रवा वै नाम यस्य पर्णमयी जुहूर्भवति न पापं श्लोकं शृणोति ब्रह्म वै पर्णो विण्मरु-तोऽन्नं विण्मारुतोऽश्वत्थो यस्य पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्ब्रह्मणैवान्नमव रुन्धेऽथो ब्रह्मै-(२)-व विश्यध्यू-हति राष्ट्रं वै पर्णो विडश्वत्थो यत् पर्णमयी जुहूर्भवत्याश्वत्थ्युपभृद्राष्ट्रमेव विश्यध्यूहति प्रजापतिर्वा अजुहोत् सा यत्राऽऽहुतिः प्रत्यतिष्ठत् ततो विकङ्कत उदतिष्ठत् ततः प्रजा असृजत यस्य वैकङ्कती ध्रुवा भवति प्रत्येवास्याऽऽहुतयस्तिष्ठन्त्यथो प्रैव जायते एतद्वै स्रुचां (३) रूपं यस्यैवं रूपाः स्रुचो भवन्ति सर्वाण्येवैनं रूपाणि पशूनामुप तिष्ठन्ते नास्यापरूपमात्मञ्जायते ॥ (जुहू,-र्ब्रह्म, स्रुचां, सप्तदश च) ॥७॥

दधिग्रहमन्त्राः ॥ विश्वेदेवा ऋषयः ।

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि दक्षाय दक्षवृधे रातं देवेभ्योऽ-ग्निजिह्वेभ्यस्त्वर्तायुभ्य इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो वातापिभ्यः पर्जन्यात्मभ्यो दिवे त्वाऽन्तरिक्षाय

(६।८) -* वसुभ्यो... नेजनीः *- यज्ञाय... नेजनीः ।

त्वा पृथिव्यै त्वा ऽपेन्द्र द्विषतो मनोऽप जिज्यासतो जह्यप यो नोऽरातीयति तं जहि प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यो (१) विश्वेभ्यस्त्वा भूतेभ्यो यतः प्रजा अक्खिद्रा अजायन्त तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमि ॥ (ओषधीभ्य, श्चतुर्दश च ) ॥ ८ ॥

दधिग्रहविधानम् ॥ विश्वेदेवा ऋषयः ।

यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितस्तस्या आ वृश्च्येते प्राजापत्यं दधिग्रहं गृह्णीयात् प्रजापतिः सर्वा देवता देवताभ्य एव नि ह्नुवाते ज्येष्ठो वा एष ग्रहाणां यस्यैष गृह्यते ज्यैष्ठ्यमेव गच्छति सर्वासां वा एतद्देवतानाꣳ रूपं यदेष ग्रहो यस्यैष गृह्यते सर्वाण्येवैनꣳ रूपाणि पशूनामुप तिष्ठन्त उपयामगृहीतो (१) ऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीत्याह ज्योतिरेवैनꣳ समानानां करोत्य— ग्निजिह्वेभ्यस्त्वर्तायुभ्य इत्याहैतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्य—पेन्द्र द्विषतो मन इत्याह भ्रातृव्यापनुत्त्यै प्राणाय त्वाऽपानाय त्वेत्याह प्राणानेव यजमाने दधाति तस्मै त्वा प्रजापतये विभूदाव्ने ज्योतिष्मते ज्योतिष्मन्तं जुहोमी-(२)-त्याह प्रजापतिः सर्वा देवताः सर्वाभ्य एवैनं देवताभ्यो जुहोत्या—ज्यग्रहं गृह्णीयात् तेजस्कामस्य तेजो वा आज्यं तेजस्व्येव भवति सोमग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्य ब्रह्मवर्चसं वै सोमो ब्रह्मवर्चस्येव भवति दधिग्रहं गृह्णीयात् पशुकामस्योर्ग्वै दध्यूर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनव रुन्धे ॥ ( उपयामगृहीतो, जुहोमि, त्रिचत्वारिꣳशच्च ) ॥ ९ ॥

अग्निग्राह्याः प्राणग्रहाश्च ॥ १ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
स्वादोः स्वादीयः स्वादुना सृजा समतं ऊ षु मधु मधुनाऽभि योधि ।
उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णाम्येष ते योनिः प्रजापतये त्वा ॥

प्राणग्रहान् गृह्णात्येतावद्वा अस्ति यावदेते ग्रहाः स्तोमाश्छन्दाꣳसि पृष्ठानि दिशो यावदेवास्ति त-(१)-दव रुन्धे ज्येष्ठा वा एतान् ब्राह्मणाः पुरा विदामक्रन् तस्मात् तेषाꣳ सर्वा दिशोऽभिजिता अभूवन् यस्यै ते गृह्यन्ते ज्यैष्ठ्यमेव गच्छत्यभि दिशो जयति पञ्च गृह्यन्ते पञ्च दिशः सर्वास्वेव दिक्ष्वृध्नुवन्ति नवनव गृह्यन्ते नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधति प्रायणीये चोदयनीये च गृह्यन्ते प्राणा वै प्राणग्रहाः (२) प्राणैरेव प्रयन्ति प्राणैरुद्यन्ति दशमेऽहन् गृह्यन्ते प्राणा वै प्राणग्रहाः प्राणेभ्यः खलु वा एतत् प्रजा यन्ति यद्वामदेव्यं योनेश्च्यवते दशमेऽहन् वामदेव्यं योनेश्च्यवते यद्दशमेऽहन् गृह्यन्ते प्राणेभ्य एव तत् प्रजा न यन्ति ॥ ( तत, प्राणग्रहाः, सप्तत्रिꣳशच्च ) ॥ १० ॥

पाशुकहौत्रोपयोगिमन्त्राः ॥ गायत्री; २-४ अनुष्टुप्; ६-८, २१ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

प्र देवं देव्या धिया भरता जातवेदसम् । हव्या नो वक्षदानुषक् ॥
अयमु ष्य प्र देवयुर्होता यज्ञाय नीयते । रथो न योरभीवृतो घृणीवान् चेतति त्मना ॥
अयमग्निरुरुष्यत्यमृतादिव जन्मनः । सहसश्चित् सहीयान् देवो जीवातवे कृतः ॥

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि । जातवेदो नि धीमह्यग्ने हव्याय वोढवे[४] (१) ॥
अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम् ।
कुलायिनं घृतवन्तꣳ सवित्रे यज्ञं नय यजमानाय साधु[५] ॥
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ ।
देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः[६] ॥
नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत् सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः[७] ॥
त्वं दूतस्त्व-( २ )-मु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।
अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन् दीद्यद्बोधि गोपाः[८] ॥
अभि त्वा देव सवितरीशानं वार्याणाम् । सदाऽवन् भागमीमहे[९] ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः[१०] ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः[११] ॥
तमु ( ३ ) त्वा दध्यङ् ऋषिः पुत्र ईधे अथर्वणः । वृत्रहणं पुरन्दरम्[१२] ॥
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयꣳ रणेरणे[१३] ॥
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाऽजनि । धनञ्जयो रणेरणे[१४] ॥
आ यꣳ हस्ते न खादिनꣳ शिशुं जातं न बिभ्रति । विशामग्निꣳ स्वध्वरम्[१५] ॥
प्र देवं देववीतये भरता वसुवित्तमम् । आ स्वे योनौ नि षीदतु[१६] ॥
आ ( ४ ) जातं जातवेदसि प्रियꣳ शिशीतातिथिम् । स्योन आ गृहपतिम्[१७] ॥
अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः[१८] ॥
त्वꣳ ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता । सखा सख्या समिध्यसे[१९] ॥
तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु । स्वेषु क्षयेषु वाजिनम्[२०] ॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते यत्र ( ५ ) पूर्वे साध्याः सन्ति देवाः[२१] ॥

( वोढवे, त्वं, त, स्वा, यत्र, चत्वारि च ) ॥ ११ ॥

[ पूर्ण-२२५ ।-यो २३० । ऽग्निना ९६ । ये १९३ । सूर्यः १५१ । सं १३० । वषट्कार १६७ । उपयामगृहीतो ६४ । यां १४३ । त्वे १३७ । प्रै-२५४ । कादश ॥ १७९० ]

[ ॥ इति तृतीयकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥ ]

[ प्रजापति- २२४८ ।-यो वा २३३५ । अग्ने १८५७ । वि वै २३९२ । पूर्णा १७९० । ( पञ्च ॥ ५ ॥ १०६२२ ) ]

॥ इति तृतीयं काण्डं सम्पूर्णम् ॥ ३ ॥

# अथ चतुर्थं काण्डम् ।

## अग्निचित्यङ्गमन्त्रपाठाभिधानम् ।

[ अथ प्रथमः प्रपाठकः ॥ १ ॥ ] अग्निर्ऋषिः ।

अभ्र्यादानम् ॥ ३, ९ गायत्री; १-२, १३ अनुष्टुप्; ५ त्रिष्टुप्; ४, ६ जगती ।

युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नि ज्योतिर्निचाय्य पृथिव्या अध्याऽभरत् ॥
युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम् ।
बृहज्ज्योतिः करिष्यतः सविता प्र सुवाति तान् ॥
युक्तेन मनसा वयं देवस्य सवितुः सुवे । सुवर्गेयाय शक्त्यै[3] ॥
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इ-( १ ) -न्मही देवस्य सवितुः परिष्टुतिः[4] ॥
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि श्लोका यन्ति पथ्येव सूराः ।
शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः[5] ॥
यस्य प्रयाणमन्वन्य इद्ययुर्देवा देवस्य महिमानमर्चतः ।
यः पार्थिवानि विममे स एतशो रजाꣳसि देवः सविता महित्वना[6] ॥
देव सवितः प्र सुव यज्ञं प्र सुव ( २ ) यज्ञपतिं भगाय दिव्यो गन्धर्वः ।
केतपूः केतं नः पुनातु वाचस्पतिर्वाचमद्य स्वदाति नः[7] ॥
इमं नो देव सवितर्यज्ञं प्र सुव देवायुवꣳ सखिविदꣳ सत्राजितं धनजितꣳ सुवर्जितम् ॥
ऋचा स्तोमꣳ समर्धय गायत्रेण रथन्तरम् । बृहद्गायत्रवर्तनि[9] ॥

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददेऽङ्गिरस्व—
दभ्रिरसि नारि-( ३ )-रसि पृथिव्याः सधस्थादग्निं पुरीष्यमाङ्गिरस्वदा भर त्रैष्टुभेन त्वा छन्दसा
ऽऽददेऽङ्गिरस्व[11]—द्भ्रिरसि नारिरसि त्वया वयꣳसधस्थ आऽग्निꣳ शकेम खनितुं पुरीष्यं जागतेन
त्वा छन्दसाऽऽददेऽङ्गिरस्व[12]—

—द्धस्त आधाय सविता बिभ्रदभ्रिꣳ हिरण्ययीम् ।
तया ज्योतिरजस्रमिदग्निं खात्वी न आ भराऽऽनुष्टुभेन त्वा छन्दसा ( ४ ) ऽऽददेऽङ्गिरस्वत्[13] ॥
( इत्, सुव, नारि,-श्छन्दसा, त्रीणि च ) ॥ १ ॥

मृदाक्रमणम् ॥ त्रिष्टुप्; ३, ४, १९ गायत्री; ११-१२, २० अनुष्टुप्; २ उपरिष्टाद्बृहती; १३ पुरस्ताद्बृहती; ५ प्रस्तार-पङ्क्तिः; ९, १०, १४-१५, १७-१८, २१ मध्येज्योतिः । अग्निर्ऋषिः ।

इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।
तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती[1] ॥
प्रतूर्तं वाजिन्ना द्रव वरिष्ठामनु संवतम् ।
दिवि ते जन्म परममन्तरिक्षे नाभिः पृथिव्यामधि योनिः[2] ॥
युञ्जाथाꣳ रासभं युवमस्मिन् यामे वृषण्वसू । अग्निं भरन्तमस्मयुम्[3] ॥
योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये[4] ॥
प्रतूर्व-(१)-न्नेह्यवक्रामन्नशस्ती रुद्रस्य गाणपत्यान्मयोभूरेहि ।
उर्वन्तरिक्षमन्विहि स्वस्तिगव्यूतिरभयानि कृण्वन्[5] ॥
पूष्णा सयुजा सह । पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेह्य्[6]—ग्निं पुरीष्यमङ्गिरस्वद-
दच्छेमो[7]—ऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्यामो[8] ऽग्निं पुरीष्यमङ्गिरस्वद्भरामः[9] ॥
अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य (२) पुरुत्रा च रश्मीननु द्यावापृथिवी आ ततान[10] ॥
आगत्य वाज्यध्वनः सर्वा मृधो वि धूनुते । अग्निꣳ सधस्थे महति चक्षुषा नि चिकीषते[11] ॥
आक्रम्य वाजिन् पृथिवीमग्निमिच्छ रुचा त्वम् ।
भूम्या वृत्वाय नो ब्रूहि यतः खनाम तं वयम्[12] ॥
द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रस्ते योनिः ।
विख्याय चक्षुषा त्वमभि तिष्ठ (३) पृतन्यतः[13] ॥
उत्क्राम महते सौभगायास्मादास्थानाद् द्रविणोदा वाजिन् ।
वयꣳ स्याम सुमतौ पृथिव्या अग्निं खनिष्यन्त उपस्थे अस्याः[14] ॥
उदक्रमीद् द्रविणोदा वाज्यर्वाऽकः स लोकꣳ सुकृतं पृथिव्याः ।
ततः खनेम सुप्रतीकमग्निꣳ सुवो रुहाणा अधि नाक उत्तमे[15] ॥
अपो देवीरुप सृज मधुमतीरयक्ष्माय प्रजाभ्यः ।
तासाꣳ स्थानादुज्जिहतामोषधयः सुपिप्पलाः[16] ॥
जिघर्म्य-(४)-ग्निं मनसा घृतेन प्रतिक्ष्यन्तं भुवनानि विश्वा ।
पृथुं तिरश्चा वयसा बृहन्तं व्यचिष्ठमन्नꣳ रभसं विदानम्[17] ॥
आ त्वा जिघर्मि वचसा घृतेनारक्षसा मनसा तज्जुषस्व ।

मर्यश्रीः स्पृहयद्वर्णो अग्निर्नाभिमृशे तनुवा जर्हृषाणः ॥
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे[१९] ॥
परि त्वाऽग्ने पुरं वयं विप्रꣳ सहस्य धीमहि । धृषद्वर्णं दिवेदिवे भेत्तारं (५) भङ्गुरावतः[२०]॥
त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः[२१] ॥ प्रतूर्वं,-न्त्सूर्यस्य, तिष्ठ, जिघर्मि, भेत्तारं, विꣳशतिश्च ) ॥ २ ॥

मृत्खननम् ॥ २ स्वराडभिसारिणी; ३, १०-११, १३ त्रिष्टुप्; ४-५ अनुष्टुप्; ६ प्रतिष्ठा; ७-९ गायत्री; १२ बृहती । अग्निर्ऋषिः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां
पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि[१] ॥
ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमजस्रेण भानुना दीद्यानम् ।
शिवं प्रजाभ्योऽहिꣳसन्तं पृथिव्याः सधस्थेऽग्निं पुरीष्यमङ्गिरस्वत् खनामि[२] ॥
अपां पृष्ठमसि सप्रथा उर्वग्निं भरिष्यदपरावपिष्ठम् ।
वर्धमानं मह आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व[३] ॥
शर्म च स्थो (१) वर्म च स्थो अच्छिद्रे बहुले उभे ।
व्यचस्वती सं वसाथां भर्तमग्निं पुरीष्यम्[४] ॥
सं वसाथाꣳ सुवर्विदा समीची उरसा त्मना । अग्निमन्तर्भरिष्यन्ती ज्योतिष्मन्तमजस्रमित्[५] ॥
पुरीष्योऽसि विश्वभराः । अथर्वा त्वा प्रथमो निरमन्थदग्ने[६] ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः[७] ॥
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे (२) अथर्वणः । वृत्रहणं पुरन्दरम् ।
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम् । धनञ्जयꣳ रणेरणे[९] ॥
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञꣳ सुकृतस्य योनौ ।
देवावीर्देवान् हविषा यजास्यग्ने बृहद्यजमाने वयो धाः[१०] ॥
नि होता होतृषदने विदानस्त्वेषो दीदिवाꣳ असदत् सुदक्षः ।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्निः[११] ॥
सꣳ सीदस्व महाꣳ असि शोचस्व (३) देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतम्[१२] ॥
जनिष्वा हि जेन्यो अग्रे अह्नाꣳ हितो हितेष्वरुषो वनेषु ।

दमेदमे सप्त रत्ना दधानोऽग्निर्होता नि षसादा यजीयान्[१३] ॥ ( स्थ, इंधे, शोचस्व, सप्तविंशतिश्च ) ॥ ३ ॥

सूदाहरणम् ॥ १,५,११ त्रिष्टुप्; २,६,८-९,१२ अनुष्टुप्; ३,७ बृहती; ४ उपरिष्टाद्बृहती; १० उष्णिक् । अग्निर्ऋषिः ।

सं ते वायुर्मातरिश्वा दधातूत्तानायै हृदयं यद्विलिष्टम् ।
देवानां यश्चरति प्राणथेन तस्मै च देवि वषडस्तु तुभ्यम् ॥
सुजातो ज्योतिषा सह शर्म वरूथमाऽसदः सुवः ।
वासो अग्ने विश्वरूपꣳ सं व्ययस्व विभावसो[२] ॥
उदु तिष्ठ स्वध्वरावा नो देव्या कृपा ।
दृशे च भासा बृहता सुशुक्वनिराऽग्ने याहि सुशस्तिभिः[३] ( १ ) ॥
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे[४] ॥
स जातो गर्भो असि रोदस्योरग्ने चारुर्विभृत ओषधीषु ।
चित्रः शिशुः परि तमाꣳस्यक्तः प्र मातृभ्यो अधि कनिक्रदद्गाः ॥
स्थिरो भव वीड्वङ्ग आशुर्भव वाज्यर्वन् । पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहनः[६] ॥
शिवो भव ( २ ) प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः ।
मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीन्[८] ।
प्रैतु वाजी कनिक्रदन्नानदद्रासभः पत्वा । भरन्नग्निं पुरीष्यं मा पाद्यायुषः पुरा ॥
रासभो वां कनिक्रदत् सुयुक्तो वृषणा रथे । स वामग्निं पुरीष्यमाशुर्दूतो वहादितः[१०] ॥
वृषाऽग्निं वृषणं भरन्नपां गर्भꣳ समुद्रियम् । अग्न आ याहि ( ३ ) वीतये ऋतꣳ सत्यम्[११] ॥
ओषधयः प्रति गृह्णीताग्निमेतꣳ शिवमायन्तमभ्यत्र युष्मान् ।
व्यस्यन् विश्वा अमतीररातीर्निषीदन् नो अप दुर्मतिꣳ हनत्[१२] ॥
ओषधयः प्रति मोदध्वमेनं पुष्पावतीः सुपिप्पलाः ।
अयं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमाऽसदत्[१३] ॥ ( सुशस्तिभि,-र्भव, याहि, षट्त्रिꣳशच्च ) ॥ ४ ॥

उखानिर्माणम् ॥ १ त्रिष्टुप्; ५, ७-१०, १९ अनुष्टुप्; २-४ गायत्री; ६ महाबृहती । अग्निर्ऋषिः ।

वि पाजसा पृथुना शोशुचानो बाधस्व द्विषो रक्षसो अमीवाः ।
सुशर्मणो बृहतः शर्मणि स्यामग्नेरहꣳ सुहवस्य प्रणीतौ[१] ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे[२] ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः[३] ॥

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥
मित्रः (१) सःसृज्य पृथिवीं भूमिं च ज्योतिषा सह । सुजातं जातवेदसमग्निं वैश्वानरं विभुम् ॥
अयक्ष्माय त्वा सः सृजामि प्रजाभ्यः ।
विश्वे त्वा देवा वैश्वानराः सः सृजन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वत् ॥
रुद्राः सम्भृत्य पृथिवीं बृहज्ज्योतिः समीधिरे । तेषां भानुरजस्र इच्छुक्रो देवेषु रोचते ॥
सःसृष्टां वसुभी रुद्रैर्धीरैः कर्मण्यां मृदम् । हस्ताभ्यां मृद्वीं कृत्वा सिनीवाली करोतु (२) ताम् ॥
सिनीवाली सुकपर्दा सुकुरीरा स्वौपशा । सा तुभ्यमदिते मह ओखां दधातु हस्तयोः ॥
उखां करोतु शक्त्या बाहुभ्यामदितिर्धिया । माता पुत्रं यथोपस्थे साऽग्निं बिभर्तु गर्भ आ ॥

मखस्य शिरोऽसि[११] यज्ञस्य पदे स्थः[१२] । वसवस्त्वा कृण्वन्तु गायत्रेण छन्दसाऽङ्गिरस्वत् पृथिव्यसि[१३] रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्वदन्तरिक्षमस्या[१४] (३) दित्यास्त्वा कृण्वन्तु जागतेन छन्दसाऽङ्गिरस्वद् द्यौरसि[१५] विश्वे त्वा देवा वैश्वानराः कृण्वन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्वद्दिशोऽसि ध्रुवाऽसि धारया मयि प्रजाः रायस्पोषं गौपत्यः सुवीर्यः सजातान् यजमानाया[१६]—दित्यै रास्नाऽस्य[१७]—दितिस्ते बिलं गृह्णातु पाङ्क्तेन छन्दसाऽङ्गिरस्वत्[१८] ॥

कृत्वाय सा महीमुखां मृन्मयीं योनिमग्नये । तां पुत्रेभ्यः सं प्रा-(४)-यच्छददितिः श्रपयानिति[१९] ॥
( मित्रः, करोत्व,-सि, प्र, चत्वारि च ) ॥ ५ ॥

उखासंस्कारः ॥ १४ शङ्कुमत्युष्णिक्; १८ अनुष्टुप्; १५-१७ गायत्री । अग्निर्ऋषिः ।

वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाऽङ्गिरस्व[१]—द्रुद्रास्त्वा धूपयन्तु त्रैष्टुभेन छन्दसाऽङ्गिरस्व[२]—दादित्यास्त्वा धूपयन्तु जागतेन छन्दसाऽङ्गिरस्व[३]—द्विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाऽङ्गिरस्व[४]—दिन्द्रस्त्वा धूपयत्वङ्गिरस्वद्[५] विष्णुस्त्वा धूपयत्वङ्गिरस्वद्[६] वरुणस्त्वा धूपयत्वङ्गिरस्व[७]—ददितिस्त्वा देवी विश्वदेव्यावती पृथिव्याः सधस्थेऽङ्गिरस्वत् खनत्ववट[८] देवानां त्वा पत्नी-(१)-र्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वद् दधतूखे[९] धिषणास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वदभीन्धतामुखे[१०] ग्नास्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वच्छ्रपयन्तूखे[११] वरूत्रयो[१२]*-जनयस्त्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थेऽङ्गिरस्वत् पचन्तूखे[१३] ।

मित्रैतामुखां पचैषा मा भेदि । एतां ते परि ददाम्यभित्यै[१४] ॥
अभीमां (२) महिना दिवं मित्रो बभूव सप्रथाः । उत श्रवसा पृथिवीम्[१५] ॥
मित्रस्य चर्षणीधृतः श्रवो देवस्य सानसिम् । द्युम्नं चित्रश्रवस्तमम्[१६] ॥
देवस्त्वा सवितोद्वपतु सुपाणिः स्वङ्गुरिः । सुबाहुरुत शक्त्या[१७] ॥

( ६-१२ ) त्वा देवी... यन्तूखे ।

*

अपंद्यमाना पृथिव्याशा दिश आ पृंण । उत्तिष्ठ बृहती भंवोर्ध्वा तिष्ठ ध्रुवा त्वम्[१८] ॥

वसंवस्त्वा ऽऽच्छृंन्दन्तु गायत्रेण छन्दंसाऽङ्गिरस्वद्रुद्रास्त्वाऽऽच्छृंन्दन्तु ( ३ ) त्रैष्टुंभेन छन्दंसा-ऽङ्गिरस्वदा॑दित्यास्त्वा ऽऽ च्छृंन्दन्तु जागंतेन छन्दंसाऽङ्गिरस्वद्विश्वे त्वा देवा वैश्वानरा आ च्छृंन्दन्त्वानुंष्टुभेन छन्दंसाऽङ्गिरस्वत् ॥ ( पत्नी,-रिमाः रुद्रास्त्वाऽऽच्छृंन्दन्त्वे काञ्चविंशतिश्च ) ॥ ६ ॥

अग्निचयनाङ्गपशुसामिधेन्यः ॥ १-५, १-९ त्रिष्टुप्; ६ विराड्रूपा; १० अनुष्टुप् । आग्निर्ऋषिः ।

समास्त्वाऽग्न ऋतवो वर्धयन्तु संवत्सरा ऋषयो यानि सत्या ।
सं दिव्येन दीदिहि रोचनेन विश्वा आ भाहि प्रदिशः पृथिव्याः ॥
सं चेध्यस्वाग्ने प्र च बोधयैनमुच्च तिष्ठ महते सौभगाय ।
मा च रिषदुपसत्ता ते अग्ने ब्रह्माणस्ते यशसः सन्तु माऽन्ये[२] ॥
त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने ( १ ) सं वरणे भवा नः ।
सपत्नहा नो अभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन्[३] ॥
इहैवाग्ने अधि धारया रयिं मा त्वा नि क्रन् पूर्वचितो निकारिणः ।
क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्धतां ते अनिष्टृतः ॥
क्षत्रेणाग्ने स्वायुः सं रभस्व मित्रेणाग्ने मित्रधेये यतस्व ।
सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह ॥
अति ( २ ) निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने ।
विश्वा ह्यग्ने दुरिता सहस्वाथास्मभ्यं सहवीरां रयिं दाः[६] ॥
अनाधृष्यो जातवेदा अनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ।
विश्वा आशाः प्रमुञ्चन् मानुषीर्भियः शिवाभिरद्य परि पाहि नो वृधे[७] ॥
बृहस्पते सवितर्बोधयैनं संशितं चित्सन्तरां सं शिशाधि ।
वर्धयैनं महते सौभगाय ( ३ ) विश्व एनमनु मदन्तु देवाः ॥
अमुत्रभूयादध यद्यमस्य बृहस्पते अभिशस्तेरमुञ्चः ।
प्रत्यौहतामश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः[९] ॥
उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ ( अग्ने,ऽति, सौभगाय, चतुस्त्रिंशच्च ) ॥ ७ ॥

आप्रियो याज्यापुरोऽनुवाक्याः ॥ १-६ पिपीलिकमध्यानुष्टुप्; ७,१०-१२ पिपीलिकमध्योष्णिक्; ८ पुरउष्णिक्; ९ शङ्कुमती गायत्री; १३-२० त्रिष्टुप् । अग्निर्ऋषिः ।

ऊर्ध्वा अस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचींष्यग्नेः ।
द्युमत्तमा सुप्रतीकस्य सूनोः[१] ॥

तनूनपादसुरो विश्ववेदा देवो देवेषु देवः । पथ आऽनक्ति मध्वा घृतेन[२] ॥
मध्वा यज्ञं नक्षसे प्रीणानो नराशꣳसो अग्ने । सुकृद्देवः सविता विश्ववारः[३] ॥
अच्छायमेति शवसा घृतेनेडानो वह्निर्नमसा । अग्निꣳ स्रुचो अध्वरेषु प्रयत्सु[४] ॥
स यक्षदस्य महिमानमग्नेः स (१) ई मन्द्रासु प्रयसः । वसुश्चेतिष्ठो वसुधातमश्च ॥
द्वारो देवीरन्वस्य विश्वे व्रता ददन्ते अग्नेः । उरुव्यचसो धाम्ना पत्यमानाः ॥
ते अस्य योषणे दिव्ये न योनावुषासानक्ता । इमं यज्ञमवतामध्वरं नः[७] ॥
दैव्या होताराबूर्ध्वमध्वरं नोऽग्नेर्जिह्वामभि गृणीतम् । कृणुतं नः स्विष्टिम् ॥
तिस्रो देवीर्बर्हिरेदꣳ सदन्त्विडा सरस्वती (२) भारती । मही गृणाना ॥
तन्नस्तुरीपमद्भुतं पुरुक्षु त्वष्टा सुवीरम् । रायस्पोषं वि ष्यतु नाभिमस्मे[१०] ॥
वनस्पतेऽव सृजा रराणस्त्मना देवेषु । अग्निर्हव्यꣳ शमिता सूदयाति[११] ॥
अग्ने स्वाहा कृणुहि जातवेद इन्द्राय हव्यम् । विश्वे देवा हविरिदं जुषन्ताम्[१२] ॥
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्या-(३)-मुतेमां कस्मै देवाय हविषा विधेम[१३] ॥
यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम[१४] ॥
य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम[१५] ॥
यस्येमे हिमवन्तो महित्वा यस्य समुद्रꣳ रसया सहा-(४)-ऽऽहुः ।
यस्येमाः प्रदिशो यस्य बाहू कस्मै देवाय हविषा विधेम[१६] ॥
यं क्रन्दसी अवसा तस्तभाने अभ्यैक्षेतां मनसा रेजमाने ।
यत्राधि सूर उदितौ व्येति कस्मै देवाय हविषा विधेम[१७] ॥
येन द्यौरुग्रा पृथिवी च दृढे येन सुवः स्तभितं येन नाकः ।
यो अन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम[१८] ॥
आपो ह यन्महतीर्विश्व-(५)-मायन् दक्षं दधाना जनयन्तीरग्निम् ।
ततो देवानां निरवर्ततासुरेकः कस्मै देवाय हविषा विधेम[१९] ॥
यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीरग्निम् ।
यो देवेष्वधि देव एक आसीत् कस्मै देवाय हविषा विधेम ॥ ( स, सरस्वती, द्याꣳ, सह, विश्वं, चतुस्त्रिꣳशच्च ) ॥८॥

अग्न्युत्पादनम् ॥ ७-८, १५-१६ अनुष्टुप्; ११-१३ गायत्री; ९, १४ त्रिष्टुप्; १० पिपीलिकमध्योष्णिक् । अग्निर्ऋषिः ।

आकूतिमग्निं प्रयुजꣳ स्वाहा[1] मनो मेधामग्निं प्रयुजꣳ स्वाहा[2] चित्तं विज्ञातमग्निं प्रयुजꣳ स्वाहा[3] वाचो विधृतिमग्निं प्रयुजꣳ स्वाहा[4] प्रजापतये मनवे स्वाहा[5] ऽग्नये वैश्वानराय स्वाहा[6]

विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा[7] ॥

मा सु भित्था मा सु रिषो दृꣳहस्व वीडयस्व सु । अम्ब धृष्णु वीरयस्वा (१) ग्निश्चेदं करिष्यथः ॥

दृꣳहस्व देवि पृथिवि स्वस्तय आसुरी माया स्वधया कृताऽसि ।

जुष्टं देवानामिदमस्तु हव्यमरिष्टा त्वमुदिहि यज्ञे अस्मिन् ॥

मित्रैतामुखां तपैषा मा भेदि । एतां ते परि ददाम्यभित्यै[10] ॥

द्रुन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः[11] ॥

परस्या अधि संवतोऽवराꣳ अभ्या (२) तर । यत्राहमस्मि ताꣳ अव[12] ॥

परमस्याः परावतो रोहिदश्व इहाऽऽगहि । पुरीष्यः पुरुप्रियोऽग्ने त्वं तरा मृधः[13] ॥

सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।

मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्वि भाहि[14] ॥

अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपन् (३) जातवेदः शिवो भव[15] ॥

शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः[16] ॥

( वीरयस्वा,-ऽऽ, तपन्, विꣳशतिश्च ) ॥९॥

अग्निधारणम् ॥ १-३, ५-१० अनुष्टुप्; ३-४, ११, १३ त्रिष्टुप्; १२ जगती । अग्निर्ऋषिः ।

यदग्ने यानि कानि चाऽऽ ते दारूणि दध्मसि । तदस्तु तुभ्यमिद्घृतं तज्जुषस्व यविष्ठ्य[1] ॥

यदत्त्युपजिह्विका यद्वम्रो अतिसर्पति । सर्वं तदस्तु ते घृतं तज्जुषस्व यविष्ठ्य[2] ॥

रात्रिꣳरात्रिमप्रयावं भरन्तोऽश्वायेव तिष्ठते घासमस्मै ।

रायस्पोषेण समिषा मदन्तोऽग्ने मा ते प्रतिवेशा रिषाम[3] ॥

नाभा (१) पृथिव्याः समिधानमग्निꣳरायस्पोषाय बृहते हवामहे ।

इरंमदं बृहदुक्थं यजत्रं जेतारमग्निं पृतनासु सासहिम्[4] ॥

याः सेना अभीत्वरीराव्याधिनीरुगणा उत ।

ये स्तेना ये च तस्करास्ताꣳस्ते अग्नेऽपि दधाम्यास्ये[5] ॥

दꣳष्ट्राभ्यां मलिम्लूञ्जम्भ्यैस्तस्कराꣳ उत ।

हनूभ्याꣳ स्तेनान् भगवस्ताꣳस्त्वं खाद सुखादितान्[6] ॥

ये जनेषु मलिम्लवः स्तेनासस्तस्करा वने । ये (२) कक्षेष्वघायवस्ताꣳस्ते दधामि जम्भयोः[7] ॥

यो अस्मभ्यमरातीयाद्यश्च नो द्वेषते जनः । निन्दाद्यो अस्मान् दिप्साच्च सर्वं तं मस्मसा कुरु ॥
सꣳशितं मे ब्रह्म सꣳशितं वीर्यं बलम् । सꣳशितं क्षत्रं जिष्णु यस्याहमस्मि पुरोहितः ॥
उदेषां बाहू अतिरमुद्वर्च उदू बलम् । क्षिणोमि ब्रह्मणाऽमित्रानुन्नयामि ( ३ ) स्वाꣳ अहम् ॥
दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत् सुरेताः[11] ॥
विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत् सविता वरेण्योऽनु प्रयाणमुषसो वि राजति[12] ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावा क्षामा रुक्मो ( ४ ) अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाः[13] ॥
सुपर्णोऽसि गरुत्मान् त्रिवृत् ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दाꣳस्यङ्गानि धिष्णियाः शफा यजूꣳषि नाम[14] ॥
सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत[15] ॥ ( नाभा, ये, नयामि, रुक्मो, ऽष्टात्रिꣳशच्च ) ॥१०॥

चातुर्मास्यगतवैश्वदेवपर्वणि विहित याज्यापुरोऽनुवाक्याः ॥ १-७, ९, ११, १७, १९-२० गायत्री; १०, १२, १४, १८ त्रिष्टुप्; ८, १३ जगती । विश्वेदेवा ऋषयः ।

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इद्देवेषु गच्छति[1] ॥
सोम यास्ते मयोभुव ऊतयः सन्ति दाशुषे । ताभिर्नोऽविता भव[2] ॥
अग्निर्मूर्धा[3] *- भुवः[4] *- ॥
त्वं नः सोम[5] *- या ते धामानि[6] *- ॥
तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्[7] ॥
अचित्ती यच्चकृमा दैव्ये जने दीनैर्दक्षैः प्रभूती पूरुषत्वता ( १ ) ।
देवेषु च सवितर्मानुषेषु च त्वं नो अत्र सुवतादनागसः ॥
चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती[9] ॥
पावीरवी कन्या चित्रायुः सरस्वती वीरपत्नी धियं धात् ।
ग्नाभिरच्छिद्रꣳ शरणꣳ सजोषा दुराधर्षं गृणते शर्म यꣳसत्[10] ॥
पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः । पूषा वाजꣳ सनोतु नः[11] ॥
शुक्रं ते अन्यद्यजतं ते अन्य-( २ )-द्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु[12] ॥

( ११।३-४ ) तै. सं. ४,४,४,१,४ । ( ११।५-६ ) तै. सं. २,३,१४,५-६ ।

तेऽवर्धन्त स्वतवसो महित्वनाऽऽ नाकं तस्थुरुरु चक्रिरे सदः ।
विष्णुर्यद्धाऽऽवद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये[13] ॥
प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।
ये सहांऽसि सहसा सहन्ते ( ३ ) रेजते अग्ने पृथिवी मखेभ्यः[14] ॥
विश्वे देवाः[15]*– विश्वे देवाः[16]*– ॥
द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम्[17] ॥
प्र पूर्वजे पितरा नव्यसीभिर्गीर्भिः कृणुध्वं सदने ऋतस्य ।
आ नो द्यावापृथिवी दैव्येन जनेन यातं महि वां वरूथम्[18] ॥
अग्निं स्तोमेन बोधय समिधानो अमर्त्यम् । हव्या देवेषु नो दधत्[19] ॥
स हव्यवाडमर्त्य उशिग्दूतश्चनोहितः ( ४ ) । अग्निर्धिया समृण्वति[20] ॥
शं नो भवन्तु[21]*– वाजेवाजे[22] *– ॥ ( पूरुवत्वता; ऽन्युत, सहन्ते, चनोहितो, ऽष्टौ च ) ॥ ११ ॥

[ युञ्जान २०३। इमां २७०। देवस्य १७७। सं १८६। वि २०४। वसवः १६९। समा १८४। ऊर्ध्वा २८४। आकूतिं १७०। य-२३८।–दग्न २०८। एकादश ॥ २२९३ ॥ ]

[ ॥ इति चतुर्थकाण्डे प्रथमः प्रपाठकः ॥ १ ॥ ]

## देवयजनग्रहाभिधानम् ।

[ अथ द्वितीयः प्रपाठकः ॥ २ ॥ ] अग्निर्ऋषिः ।

आसन्द्यामुखाग्निस्थापनम् ॥ ८-९ गायत्री; ११, १४-१५ अनुष्टुप्; ५, १०, १२-१३ त्रिष्टुप्; ६ तनुशिरा; ७ महाबृहती; १६ जगती ।

विष्णोः क्रमोऽस्यभिमातिहा गायत्रं छन्द आ रोह पृथिवीमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो[1] विष्णोः क्रमोऽस्यभिशस्तिहा त्रैष्टुभं छन्द आ रोहान्तरिक्षमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो[2] विष्णोः क्रमोऽस्यरातीयतो हन्ता जागतं छन्द आ रोह दिवमनु वि क्रमस्व निर्भक्तः स यं द्विष्मो[3] विष्णोः ( १ ) क्रमोऽसि शत्रूयतो हन्ताऽऽनुष्टुभं छन्द आ रोह दिशोऽनु वि क्रमस्व निर्भक्तः स यं द्विष्मः ॥

अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः[5] ॥
अग्नेऽभ्यावर्तिन्नभि न आ वर्तस्वाऽऽयुषा वर्चसा सन्या मेधया प्रजया धनेन[6] ॥
अग्ने ( २ ) अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
तासां पोषस्य पोषेण पुनर्नो नष्टमा कृधि पुनर्नो रयिमा कृधि[7] ॥

( ११।१५-१६ ) तै. सं. २,४,१४,१६-१७ । ( ११।२१-२२ ) तै. सं. १,७,८,१२,९ ।

पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः[८] ॥
सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि[९] ॥
उदुत्तमं वरुण पाशमस्मदवाधमं ( ३ ) वि मध्यमꣳ श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम[१०] ॥
आ त्वाऽहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्त्वस्मिन् राष्ट्रमधि श्रय[११] ॥
अग्रे बृहन्नुषसामूर्ध्वो अस्थान्निर्जगन्वान् तमसो ज्योतिषाऽऽगात् ।
अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः[१२] ॥
सीद त्वं मातुरस्या ( ४ ) उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ।
मैनामर्चिषा मा तपसाऽभि शूशुचोऽन्तरस्याꣳ शुक्रज्योतिर्वि भाहि[१३] ॥
अन्तरग्ने रुचा त्वमुखायै सदने स्वे । तस्यास्त्वꣳ हरसा तपञ्जातवेदः शिवो भव[१४] ॥
शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् ।
शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽऽसदः[१५] ॥
हꣳसः शुचिष-( ५ )-द्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्[१६] ॥
( विष्णो,-रग्ने,ऽधम,-मस्याः, शुचिषत्, षोडश च ) ॥ १ ॥

आसन्द्यां स्थापितस्याग्नेरुपस्थानम् ॥ त्रिष्टुप् । अग्निर्ऋषिः ।

दिवस्परि प्रथमं जज्ञे अग्निरस्मद् द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[१] ॥
विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते सद्म विभृतं पुरुत्रा ।
विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ[२] ॥
समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन् ।
तृतीये त्वा ( १ ) रजसि तस्थिवाꣳसमृतस्य योनौ महिषा अहिन्वन्[३] ॥
अक्रन्ददग्निः स्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।
सद्यो जज्ञानो वि हीमिद्धो अख्यदा रोदसी भानुना भात्यन्तः ॥
उशिक् पावको अरतिः सुमेधा मर्तेष्वग्निरमृतो नि धायि ॥
इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षत् ॥
विश्वस्य केतुर्भुवनस्य गर्भ आ ( २ ) रोदसी अपृणाज्जायमानः ।
वीडुं चिदद्रिमभिनत् परायन् जना यदग्निमयजन्त पञ्च[४] ॥

श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।
वसोः सूनुः सहसो अप्सु राजा वि भात्यग्र उषसामिधानः ॥
यस्ते अद्य कृणवद्भद्रशोचेऽपूपं देव घृतवन्तमग्ने ।
प्र तं नय प्रतरं वस्यो अच्छाभि द्युम्नं देवभक्तं यविष्ठ ॥
आ ( ३ ) तं भज सौश्रवसेष्वग्न उक्थउक्थ आ भज शस्यमाने ।
प्रियः सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः [9] ॥
त्वामग्ने यजमाना अनु द्यून् विश्वा वसूनि दधिरे वार्याणि ।
त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो वि वव्रुः [10] ॥
दृशानो रुक्म उर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः ।
अग्निरमृतो अभवद्वयोभिर्यदे-( ४ )-नं द्यौरजनयत् सुरेताः [11] ॥
( त्वा, गर्भ आ, यविष्ठ आ, यत्, चत्वारि च ) ॥ २ ॥

चयनार्थस्य देवयजनस्य परिग्रहः ॥ त्रिष्टुप्; १ उपरिष्टाद्बृहती; २-३,८-१० अनुष्टुप्; ४,७,११-१२,१५ गायत्री । अग्निर्ऋषिः ।

अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः ।
प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे [1] ॥
उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवतमः सुप्रतीको विभावसुः [2] ॥
प्रेदग्ने ज्योतिष्मान् याहि शिवेभिरर्चिभिस्त्वम् ।
बृहद्भिर्भानुभिर्भासन् मा हिंसीस्तनुवा प्रजाः [3] ॥
समिधाऽग्निं दुवस्यत घृतैर्बोधयतातिथिम् । आ ( १ ) ऽस्मिन् हव्या जुहोतन [4] ॥
प्रप्रायमग्निर्भरतस्य शृण्वे वि यत् सूर्यो न रोचते बृहद्भाः ।
अभि यः पूरुं पृतनासु तस्थौ दीदाय दैव्यो अतिथिः शिवो नः [5] ॥
आपो देवीः प्रति गृह्णीत भस्मैतत् स्योने कृणुध्वं सुरभावु लोके ।
तस्मै नमन्तां जनयः सुपत्नीर्मातेव पुत्रं बिभृता स्वेनम् [6] ॥
अप्स्वग्ने सधिष्टव ( २ ) सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः [7] ॥
गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् । गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि [8] ॥
प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने । संसृज्य मातृभिस्त्वं ज्योतिष्मान् पुनराऽसदः [9] ॥
पुनरासद्य सदनमपश्च पृथिवीमग्ने । शेषे मातुर्यथोपस्थेऽन्तरस्यां शिवतमः [10] ॥
पुनरूर्जा ( ३ ) नि वर्तस्व पुनरग्न इषा ऽऽयुषा । पुनर्नः पाहि विश्वतः [11] ॥

सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि[12] ॥
पुनस्त्वा ऽऽदित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ।
घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः[13] ॥
बोधा नो अस्य वचसो यविष्ठ मꣳहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयति त्वो अनु ( ४ ) त्वो गृणाति वन्दारुस्ते तनुवं वन्दे अग्ने[14] ॥
स बोधि सूरिर्मघवा वसुदावा वसुपतिः । युयोध्यस्मद् द्वेषाꣳसि[15] ॥
( आ, त्वो,-र्जा,ऽनु, षोडश च ) ॥ ३ ॥

गार्हपत्यचयनम् ॥ १, ५-७,९ त्रिष्टुप्; ४,८,१०,१३--१४ अनुष्टुप् । अग्निर्ऋषिः ।

अपेत वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः ।
अदादिदं यमोऽवसानं पृथिव्या अक्रन्निमं पितरो लोकमस्मै[1] ॥
अग्नेर्भस्मास्यग्नेः पुरीषमसि[2] संज्ञानमसि कामधरणं मयि ते कामधरणं भूयात्[3] ॥
सं या वः प्रियास्तनुवः सं प्रिया हृदयानि वः ।
आत्मा वो अस्तु ( १ ) संप्रियः संप्रियास्तनुवो मम[4] ॥
अयꣳ सो अग्निर्यस्मिन्त्सोममिन्द्रः सुतं दधे जठरे वावशानः ।
सहस्रियं वाजमत्यं न सप्तिꣳससवान्त्सन्त्स्तूयसे जातवेदः ॥
अग्ने दिवो अर्णमच्छा जिगास्यच्छा देवाꣳ ऊचिषे धिष्णिया ये ।
याः परस्ताद्रोचने सूर्यस्य याश्चावस्तादुपतिष्ठन्त आपः[6] ॥
अग्ने यत् ते दिवि वर्चः पृथिव्यां यदोषधीष्व-( २ )-प्सु वा यजत्र ।
येनान्तरिक्षमुर्वाततन्थ त्वेषः स भानुरर्णवो नृचक्षाः[7] ॥
पुरीष्यासो अग्नयः प्रावणेभिः सजोषसः । जुषन्ताꣳ हव्यमाहुतमनमीवा इषो महीः[8] ॥
इडामग्ने पुरुदꣳसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाऽग्ने सा ते सुमतिर्भूत्वस्मे[9] ॥
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जान-( ३ )-न्नग्न आ रोहाथा नो वर्धया रयिम्[11] ॥
चिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[11] परिचिदसि तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[12] ॥
लोकं पृण छिद्रं पृणाथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन्[13] ॥
ता अस्य सूददोहसः सोमꣳ श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः[14] ॥
( अस्त्वो,-षधीषु, जान,-न्नष्टाचत्वारिꣳशच्च ) ॥ ४ ॥

❀

आहवनीयचयनार्थं सुवःकर्षणम् ॥ त्रिष्टुप्; १ महाबृहती; २ द्विपदा त्रिष्टुप्; ३,६,१९ अनुष्टुप्; ४, १७ पंक्तिः; ९ महासतोबृहती; १३ बृहती; १४-१५ गायत्री । अग्निर्ऋषिः ।

समितꣳ सं कल्पेथाꣳ संप्रियौ रोचिष्णू सुमनस्यमानौ ।
इषमूर्जमभि संवसानौ सं वां मनाꣳसि सं व्रता समु चित्तान्याऽकरम् ॥
अग्ने पुरीष्याधिपा भवा त्वं नः । इषमूर्जं यजमानाय धेहि ॥
पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमाꣳ असि । शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहाऽसदः ॥
भवतं नः समनसौ समोकसा-( १ )-वरेपसौ ।
मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः ॥
मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ।
तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा वि मुञ्चतु ॥
यदस्य पारे रजसः शुक्रं ज्योतिरजायत । तं नः पर्षदति द्विषोऽग्ने वैश्वानर स्वाहा ॥
नमः सु ते निर्ऋते विश्वरूपे ( २ ) ऽयस्मयं वि चृता बन्धमेतम् ।
यमेन त्वं यम्या संविदानोत्तमं नाकमधि रोहयेमम् ॥
यत् ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् ।
इदं ते तद्वि ष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः ॥
यस्यास्ते अस्याः क्रूर आसञ्जुहोम्येषां बन्धानामवसर्जनाय ।
भूमिरिति त्वा जना विदुर्निर्ऋति-( ३ )-रिति त्वाऽहं परि वेद विश्वतः ॥
असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यां तस्करस्यान्वेषि ।
अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥
देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः ।
विश्वस्य या जायमानस्य वेद शिरःशिरः प्रति सूरी वि चष्टे ॥
निवेशनः सङ्गमनो वसूनां विश्वा रूपाऽभि चष्टे ( ४ ) शचीभिः ।
देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाम् ॥
सं वरत्रा दधातन निराहावान् कृणोतन ।
सिञ्चामहा अवटमुद्रिणं वयं विश्वाऽहाऽदस्तमक्षितम् ॥
निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनम् । उद्रिणꣳ सिञ्चे अक्षितम् ॥
सीरा युञ्जन्ति कवयो युगा वि तन्वते पृथक् । धीरा देवेषु सुम्नया ॥
युनक्त सीरा वि युगा तनोत कृते योनौ वपतेह ( ५ ) बीजम् ।

गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्याः पक्वमा ऽयत्[१८] ॥
लाङ्गलं पवीरवꣳ सुशेवꣳ सुमतित्सरु ।
उदित् कृषति गामविं प्रफर्व्यं च पीवरीम् । प्रस्थावद्रथवाहनम्[१९] ॥
शुनं नः फाला वि तुदन्तु भूमिꣳ शुनं कीनाशा अभि यन्तु वाहान् ।
शुनं पर्जन्यो मधुना पयोभिः शुनासीरा शुनमस्मासु धत्तम्[२०] ॥
कामं कामदुघे धुक्ष्व मित्राय ( ६ ) वरुणाय च ।
इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः[२१] ॥
घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः ।
ऊर्जस्वती पयसा पिन्वमानाऽस्मान्त्सीते पयसाऽभ्यावृत्स्व[२२] ॥
( समोकसौ, विश्वरूपे,-विदुर्निर्ऋति,-राभि चत्व, इह, मित्राय, द्वाविꣳशतिश्च ) ॥ ५ ॥

कृष्टायां भुवि ओषधिवापः ॥ अनुष्टुप्; ९ बृहती । अग्निर्ऋषिः ।

या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा । मन्दामि बभ्रूणामहꣳ शतं धामानि सप्त च[१] ॥
शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथा शतक्रत्वो यूयमिमं मे अगदं कृत[२] ॥
पुष्पावतीः प्रसूवतीः फलिनीरफला उत । अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः[३] ॥
ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे । रपाꣳसि विघ्नतीरित रप-( १ )-श्चातयमानाः ॥
अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता । गोभाज इत् किलासथ यत् सनवथ पूरुषम्[५] ॥
यदहं वाजयन्निमा ओषधीर्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा[६] ॥
यदोषधयः सङ्गच्छन्ते राजानः समिताविव । विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥
निष्कृतिर्नाम वो माताऽथा यूयꣳस्थ संकृतीः ।
सराः पतत्रिणीः ( २ ) स्थन यदामयति निष्कृत ॥
अन्या वो अन्यामवत्वन्याऽन्यस्या उपावत ।
ताः सर्वा ओषधयः संविदाना इदं मे प्रावता वचः[९] ॥
उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनꣳ सनिष्यन्तीनामात्मानं तव पूरुष ॥
अति विश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः ।
ओषधयः प्राचुच्यवुर्यत् किं च तनुवाꣳ रपः[११] ॥
या-( ३ )-स्त आतस्थुरात्मानं या आविविशुः परुःपरुः ।
तास्ते यक्ष्मं वि बाधन्तामुग्रो मध्यमशीरिव[१२] ॥
साकं यक्ष्म प्र पत श्येनेन किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया[१३] ॥

अश्वावतीꣳ सोमवतीमूर्जयन्तीमुदोजसम् । आ वित्सि सर्वा ओषधीरस्मा अरिष्टतातये[१४] ॥
याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः[१५] ॥
या (४) ओषधयः सोमराज्ञीः प्रविष्टाः पृथिवीमनु ।
तासां त्वमस्युत्तमा प्र णो जीवातवे सुव[१६] ॥
अवपतन्तीरवदन् दिव ओषधयः परि । यं जीवमश्नवामहै न स रिष्याति पूरुषः[१७] ।
याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । इह सङ्गत्य ताः सर्वा अस्मै सं दत्त भेषजम्[१८] ॥
मा वो रिषत् खनिता यस्मै चाहं खनामि वः (५) ।
द्विपच्चतुष्पदस्माकꣳ सर्वमस्त्वनातुरम्[१९] ॥
ओषधयः सं वदन्ते सोमेन सह राज्ञा । यस्मै करोति ब्राह्मणस्तꣳ राजन् पारयामसि[२०] ॥
( रपः, पतत्रिणी,-र्या, या, वो, ऽष्टादश च ) ॥ ६ ॥

लोष्टक्षेपादिकम् ॥ १,४,१३ त्रिष्टुप्; २ उष्णिक्; ३,१२ गायत्री; ५,८विष्टारपङ्क्तिः; ६–७,१० सतोबृहती; ९ उपरिष्टाज्ज्योतिः । अग्निर्ऋषिः ।

मा नो हिꣳसीज्जनिता यः पृथिव्या यो वा दिवꣳ सत्यधर्मा जजान ।
यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम[१] ॥
अभ्यावर्तस्व पृथिवि यज्ञेन पयसा सह । वपां ते अग्निरिषितोऽव सर्पतु[२] ॥
अग्ने यत् ते शुक्रं यच्चन्द्रं यत् पूतं यद्यज्ञियम् । तद्देवेभ्यो भरामसि[३] ॥
इषमूर्जमहमित आ (१) दद ऋतस्य धाम्नो अमृतस्य योनेः ।
आ नो गोषु विशत्वौषधीषु जहामि सेदिमनिराममीवाम्[४] ॥
अग्ने तव श्रवो वयो महि भ्राजन्त्यर्चयो विभावसो ।
बृहद्भानो शवसा वाजमुक्थ्यं दधासि दाशुषे कवे[५] ॥
इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
स दर्शतस्य वपुषो वि राजसि पृणक्षि सानसिꣳ रयिम्
ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व (२) धीतिभिर्हितः ।
त्वे इषः सं दधुर्भूरिरेतसश्चित्रोतयो वामजाताः ॥
पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।
पुत्रः पितरा विचरन्नुपावस्युभे पृणक्षि रोदसी[८] ॥
ऋतावानं महिषं विश्वचर्षणिमग्निꣳ सुम्नाय दधिरे पुरो जनाः ।

श्रुत्कर्णꣳ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥
निष्कर्तारमध्वरस्य प्रचेतसं क्षयन्तꣳ राधसे महे ।
रातिं भृगूणामुशिजं कविक्रतुं पृणक्षि सानसिꣳ ( ३ ) रयिम् ॥
चितः स्थ परिचित ऊर्ध्वचितः श्रयध्वं तया देवतयाऽङ्गिरस्वद् ध्रुवाः सीदत ॥
आ प्यायस्व समेतु ते विश्वतः सोम वृष्णियम् । भवा वाजस्य सङ्गथे[१२] ॥
सं ते पयाꣳसि समु यन्तु वाजाः सं वृष्णियान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व[१३] ॥
( आ, मन्दस्व, सानसि,-मेकान्नचत्वारिꣳशच्च ) ॥ ७ ॥

अश्वाक्रमणपुष्करपर्णोपधानरुक्मोपधानादि ॥ १-६ त्रिष्टुप्; ७-९ अनुष्टुप् । अग्निर्ऋषिः ।

अभ्यस्थाद्विश्वाः पृतना अरातीस्तदग्निराह तदु सोम आह ।
बृहस्पतिः सविता तन्म आह पूषा माऽधात् सुकृतस्य लोके[१] ॥
यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुतं जनिम तत् ते अर्वन्[२] ॥
अपां पृष्ठमसि योनिरग्नेः समुद्रमभितः पिन्वमानम् ।
वर्धमानं मह ( १ ) आ च पुष्करं दिवो मात्रया वरिणा प्रथस्व[३] ॥
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः[४] ॥
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
द्रप्सश्चस्कन्द पृथिवीमनु ( २ ) द्यामिमं च योनिमनु यश्च पूर्वः ।
तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः[६] ॥
नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः[७] ॥
येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदः कृतं तेभ्यः सर्पेभ्यो नमः[८] ॥
या इषवो यातुधानानां ( ३ ) ये वा वनस्पतीꣳरनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः[९] ॥
( महो,ऽनु, यातुधानाना,- मेकादश च ) ॥ ८ ॥

स्वयमातृण्णाद्युपधानम् ॥ १ बृहती; ३-४,१४ अनुष्टुप्; ७-११,१६-१७ गायत्री; १३ नष्टरूपी; १८,२१-२२ त्रिष्टुप् । अग्निर्ऋषिः ।

ध्रुवाऽसि धरुणाऽस्तृता विश्वकर्मणा सुकृता ।
मा त्वा समुद्र उद्वधीन्मा सुपर्णो व्यथमाना पृथिवीं दृꣳह ॥

प्रजापतिस्त्वा सादयतु पृथिव्याः पृष्ठे व्यचस्वतीं प्रथस्वतीं प्रथोऽसि पृथिव्यसि भूरसि भूमिर-
स्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीं मा हिꣳसी-
र्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै (१) चरित्रायाग्निस्त्वाऽभि पातु मह्या स्वस्त्या
छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[२] ॥

काण्डात्काण्डात् प्ररोहन्ती परुषः परुषः परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च[३] ॥
या शतेन प्रतनोषि सहस्रेण विरोहसि । तस्यास्ते देवीष्टके विधेम हविषा वयम्[४] ॥
अषाढाऽसि सहमाना सहस्वारातीः सहस्वारातीयतः[५] सहस्व पृतनाः सहस्व पृतन्यतः ।
सहस्रवीर्या (२) सि सा मा जिन्व[६] ॥
मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः[७] ॥
मधु नक्तमुतोषसि मधुमत् पार्थिवꣳ रजः । मधु द्यौरस्तु नः पिता[८] ॥
मधुमान् नो वनस्पतिर्मधुमाꣳ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः[९] ॥
मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः[१०] ॥
तद्विष्णोः परमं (३) पदꣳ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्[११] ॥
ध्रुवाऽसि पृथिवि सहस्व पृतन्यतः । स्यूता देवेभिरमृतेनाऽऽगाः[१२] ॥
यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः ।
ताभिः सर्वाभी रुचे जनाय नस्कृधि[१३] ॥
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते[१४] ॥
विराड् (४) ज्योतिरधारयत् सम्राड् ज्योतिरधारयत् स्वराड् ज्योतिरधारयत्[१५] ॥
अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः[१६] ॥
युक्ष्वा हि देवहूतमाꣳ अश्वाꣳ अग्ने रथीरिव । नि होता पूर्व्यः सदः[१७] ॥
द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः ।
तृतीयं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त (५) होत्राः[१८] ॥
अभूदिदं विश्वस्य भुवनस्य वाजिनमग्नेर्वैश्वानरस्य च ।
अग्निर्ज्योतिषा ज्योतिष्मान् रुक्मो वर्चसा वर्चस्वान्[१९] ॥
ऋचे त्वा रुचे त्वा समित् स्रवन्ति सरितो न धेनाः ।
अन्तर्हृदा मनसा पूयमानाः ॥
घृतस्य धारा अभि चाकशीमि । हिरण्ययो वेतसो मध्य आसाम्[२१] ॥

तस्मिन्त्सुपर्णो मधुकृत् कुलायी भजन्नास्ते मधु देवताभ्यः ।
तस्याऽऽसते हरयः सप्त तीरे (६) स्वधां दुहाना अमृतस्य धाराम् ॥
(प्रतिष्ठायै, सहस्रवीर्या परमं, विराट्, सप्त, तीरे, चत्वारि च) ॥ ९ ॥

पशुशीर्षोपधानम् ॥ त्रिष्टुप्, ६,८,१० अष्टिः ॥ अग्निरृषिः ।

आदित्यं गर्भं पयसा समञ्जन्त्सहस्रस्य प्रतिमां विश्वरूपम् ।
परि वृङ्गिध हरसा माऽभि मृक्षः शतायुषं कृणुहि चीयमानः ॥
इमं मा हिंसीर्द्विपादं पशूनाः सहस्राक्ष मेध आ चीयमानः ।
मयुमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
वातस्य ध्राजिं वरुणस्य नाभिमश्वं जज्ञानः सरिरस्य मध्ये ।
शिशुं नदीनाः हरिमद्रिबुद्धमग्ने मा हिंसीः (१) परमे व्योमन् ॥
इमं मा हिंसीरेकशफं पशूनां कनिक्रदं वाजिनं वाजिनेषु ।
गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
अजस्रमिन्दुमरुषं भुरण्युमग्निमीडे पूर्वचित्तौ नमोभिः ।
स पर्वभिर्ऋतुशः कल्पमानो गां मा हिंसीरदितिं विराजम् ॥
इमः समुद्रः शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये ।
घृतं दुहानामदितिं जनायाग्ने मा (२) हिंसीः परमे व्योमन् ।
गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
वरूत्रिं त्वष्टुर्वरुणस्य नाभिमविं जज्ञानाः रजसः परस्मात् ।
महीः साहस्रीमसुरस्य मायामग्ने मा हिंसीः परमे व्योमन् ॥
इमामूर्णायुं वरुणस्य मायां त्वचं पशूनां द्विपदां चतुष्पदाम् ।
त्वष्टुः प्रजानां प्रथमं जनित्रमग्ने मा हिंसीः परमे व्योमन् ।
उष्ट्रमारण्यमनु (३) ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
यो अग्निरग्नेस्तपसोऽधि जातः शोचात् पृथिव्या उत वा दिवस्परि ।
येन प्रजा विश्वकर्मा व्यानट् तमग्ने हेडः परि ते वृणक्तु ॥
अजा ह्यग्नेरजनिष्ट गर्भात् सा वा अपश्यज्जनितारमग्रे ।
तया रोहमायन्नुप मेध्यासस्तया देवा देवतामग्र आयन् ।
शरभ-(४)- मारण्यमनु ते दिशामि तेन चिन्वानस्तनुवो नि षीद ॥
(हिंसी,-र्मा, ऽनु, शरभं, नव च) ॥ १० ॥

याज्यानुवाक्याः ॥ गायत्री; २,६,१० त्रिष्टुप् ॥ विश्वेदेवा ऋषयः ।

इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः । तद्वां चेति प्र वीर्यम् ॥
श्नथद्वृत्रमुत संनोति वाजमिन्द्रा यो अग्नी सहुरी सपर्यात् ।
इरज्यन्ता वसव्यस्य भूरेः सहस्तमा सहसा वाजयन्ता[२] ॥
प्र चर्षणिभ्यः पृतना हवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिन्धुभ्यः प्र गिरिभ्यो महित्वा प्रेन्द्राग्नी विश्वा भुवनाऽत्यन्या[३] ॥
मरुतो यस्य हि ( १ ) क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः[४] ।
यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनाम् । मरुतः शृणुता हवम्[५] ॥
श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः[६] ॥
अव ते हेडः*- उदुत्तमम्[८]*- ।
कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ( २ ) ॥
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून् हृत्स्वसो मयोभून् य एषां भृत्यामृणधत् स जीवात् ॥
अग्ने नय[११]*-ऽऽदेवानाम्[१२]*- शं नो भवन्तु[१३]*-वाजेवाजे[१४]*- ।
अप्स्वग्ने सधिष्टव सौषधीरनु रुध्यसे । गर्भे सञ्जायसे पुनः[१५] ॥
वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे[१६] ।
इमं मे ( ३ ) वरुण*-तत्त्वा यामि[१८]*-त्वं नो अग्ने[१९]*- स त्वं नो अग्ने[२०] ॥
( हि, वृता, म, एकादश च ) ॥ ११ ॥

[ विष्णो- २६६।- दिवो २०४। ऽग्नपते २१६। ऽप १९८। सं ३२२। या २६८। मा १८९। ऽभि १६१। ध्रुवा ३०४। ऽऽदित्य-२०९।- मिन्द्राग्नी १६१। एकादश ॥ २४९८ ॥ ]

[ ॥ इति चतुर्थकाण्डे द्वितीयः प्रपाठकः ॥२॥ ]

## चितिवर्णनम् ।

[ अथ तृतीयः प्रपाठकः ॥३॥ ]

प्रथमचितौ अपस्याभिधानेष्टकोपधानम् ॥ अग्निर्ऋषिः ।

अपां त्वेमन्त्सादयाम्य्[१]पां त्वोद्मन्त्सादयाम्य्[२]पां त्वा भस्मन्त्सादयाम्य्[३]पां त्वा ज्योतिषि सादयाम्य्[४]पां त्वाऽयने सादयाम्य्[५]र्णवे सदने सीद समुद्रे सदने सीद सलिले सदने

---

( ११।७-८ ) तै. सं. १।५।११।९-१०, ( ११।११-१२ ) तै. सं. १।१।१४।९-१०, ( ११।१३-१४ ) तै. सं. १।७।८।१२,९
( ११।१७-१८ ) तै. सं. २।१।११।२१-२२, ( ११।१९-२० ) तै. सं. २।५।१२।२२-२३ ।

सीद—पां क्षये सीद—पाꣳ सधिषि सीद[१०]—पां त्वा सदने सादयाम्य[११]—पां त्वा सधस्थे सादयाम्य[१२]—पां त्वा पुरीषे सादयाम्य[१३]—पां त्वा योनौ ( १ ) सादयाम्य[१४]—पां त्वा पाथसि सादयामि[१५] गायत्री छन्द[१६]स्त्रिष्टुप् छन्दो[१७] जगती छन्दो[१८]ऽनुष्टुप् छन्दः[१९] पङ्क्तिश्छन्दः[२०] ॥ ( योनौ, पंचदश च ) ॥१॥

प्रथमचितौ प्राणभृदिष्टकोपधानम् ॥ अग्निर्ऋषिः ।

अयं पुरो भुवस्तस्य प्राणो भौवायनो वसन्तः प्राणायनो गायत्री वासन्ती गायत्रियै गायत्रं गायत्रादुपाꣳशुरुपाꣳशोस्त्रिवृत् त्रिवृतो रथन्तरꣳ रथन्तराद्वसिष्ठ ऋषिः प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यो[१]ऽयं दक्षिणा विश्वकर्मा तस्य मनो वैश्वकर्मणं ग्रीष्मो मानसस्त्रिष्टुग्ग्रैष्मी त्रिष्टुभ ऐडमैडादन्तर्यामोऽन्तर्यामात् पञ्चदशः पञ्चदशाद्बृहद् बृहतो भरद्वाज ऋषिः प्रजापतिगृहीतया त्वया मनो( १ )गृह्णामि प्रजाभ्यो[२]ऽयं पश्चाद्विश्वव्यचास्तस्य चक्षुर्वैश्वव्यचसं वर्षाणि चाक्षुषाणि जगती वार्षी जगत्या ऋक्षममृक्षमाच्छुक्रः शुक्रात् सप्तदशः सप्तदशाद्वैरूपं वैरूपाद्विश्वामित्र ऋषिः प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्य[३] इदमुत्तरात् सुवस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप्छारद्यनुष्टुभः स्वारꣳ स्वारान्मन्थी मन्थिन एकविꣳश एकविꣳशाद् वैराजं वैराजाज्जमदग्निर्ऋषिः प्रजापतिगृहीतया( २ )त्वया श्रोत्रं गृह्णामि प्रजाभ्य[४] इयमुपरि मतिस्तस्यै वाङ्माती हेमन्तो वाच्यायनः पङ्क्तिर्हैमन्ती पङ्क्त्यै निधनवन्निधनवत आग्रयण आग्रयणात् त्रिणवत्रयस्त्रिꣳशौ त्रिणवत्रयस्त्रिꣳशाभ्याꣳ शाक्वररैवते शाक्वररैवताभ्यां विश्वकर्मर्षिः प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः[५] ॥

( मनः, प्रजापतिगृहीतया, त्रिꣳशच्च ) ॥ २ ॥

प्रथमचितौ अपानभृदिष्टकोपधानम् ॥ अग्निर्ऋषिः ।

प्राची दिशां वसन्त ऋतूनामग्निर्देवता ब्रह्म द्रविणं त्रिवृत् स्तोमः स उ पञ्चदशवर्तनिस्त्र्यविर्वयः कृतमयानां पुरोवातो वातः सानग ऋषि[१]—*-र्दक्षिणा दिशां ग्रीष्म ऋतूनामिन्द्रो देवता क्षत्रं द्रविणं पञ्चदशः स्तोमः स उ सप्तदशवर्तनिर्दित्यवाड्वयस्त्रेताऽयानां दक्षिणाद्वातो वातः सनातन ऋषिः[२]*-प्रतीची दिशां वर्षा ऋतूनां विश्वे देवा देवता विट्( १ )द्रविणꣳ सप्तदशः स्तोमः स उ वे कविꣳशवर्तनिस्त्रिवत्सो वयो द्वापरोऽयानां पश्चाद्वातो वातोऽहभून ऋषि[३]—*-रुदीची दिशाꣳ शरदृतूनां मित्रावरुणौ देवता पुष्टं द्रविणमेकविꣳशः स्तोमः स उ त्रिणववर्तनिस्तुर्यवाड् वय आस्कन्दोऽयानामुत्तराद्वातो वातः प्रत्न ऋषि[४]—*-रूर्ध्वा दिशाꣳ हेमन्तशिशिरावृतूनां बृहस्पतिर्देवता वर्चो द्रविणं त्रिणवः स्तोमः स उ त्रयस्त्रिꣳशवर्तनिः पष्ठवाद्वयो ( २ ) ऽभिभूरयानां विष्वग्वातो वातः सुपर्ण ऋषिः पितरः पितामहाः परेऽवरे ते नः पान्तु ते नोऽवन्त्वस्मिन् ब्रह्मन्नस्मिन् क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन् कर्मन्नस्यां देवहूत्याम्[५] ॥ ( विड्, वयो, ऽष्टाविꣳशतिश्च ) ॥ ३ ॥

---

( ३।१-४ ) पितरः... देवहूत्याम् ।

*

द्वितीयचितावाश्विन्यादीष्टकोपधानम् ॥ अग्निर्ऋषिः ।

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवाऽसि ध्रुवां योनिमा सीद साध्या ।
उख्यस्य केतुं प्रथमं पुरस्तादश्विनाऽध्वर्यू सादयतामिह त्वा[1] ॥
स्वे दक्षे दक्षपितेह सीद देवत्रा पृथिवी बृहती रराणा ।
स्वासस्था तनुवा सं विशस्व पितेवैधि सूनव आ सुशेवाऽश्विनाऽध्वर्यू सादयतामिह त्वा[2] ॥
कुलायिनी वसुमती वयोधा रयिं नो वर्ध बहुलꣳ सुवीरम् ( १ ) ।
अपामतिं दुर्मतिं बाधमाना रायस्पोषे यज्ञपतिमाभजन्ती सुवर्धेहि यजमानाय पोषमश्विनाऽध्वर्यू सादयतामिह त्वा[3] ॥
अग्नेः पुरीषमसि देवयानी तां त्वा विश्वे अभि गृणन्तु देवाः ।
स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणाऽऽयजस्वाश्विनाऽध्वर्यू सादयतामिह त्वा[4] ॥
दिवो मूर्धाऽसि पृथिव्या नाभिर्विष्टम्भनी दिशामधिपत्नी भुवनानाम् ( २ ) ॥
ऊर्मिर्द्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाऽध्वर्यू सादयतामिह त्वा[5] ॥
सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः[6] *- सजू रुद्रैः[7] *- सजूरादित्यैः[8] *- सजूर्विश्वैर्देवैः[9] *-सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाऽध्वर्यू सादयतामिह त्वा[10] ॥
प्राणं मे पाह्यपानं मे पाहि व्यानं मे पाहि चक्षुर्म उर्व्या ( ३ ) वि भाहि श्रोत्रं मे श्लोकयापस्पिन्वौषधीर्जिन्व द्विपात् पाहि चतुष्पादव दिवो वृष्टिमेरय[13] ॥ ( सुवीरं, भुवनानाम्,-उर्व्या सप्तदश च ) ॥४॥

द्वितीयचितौ वयस्याख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

त्र्यविर्वयस्त्रिष्टुप् छन्दो[1] दित्यवाड् वयो विराट् छन्दः[2] पञ्चाविर्वयो गायत्री छन्द[3] स्त्रिवत्सो वय उष्णिहा छन्द[4] स्तुर्यवाड् वयोऽनुष्टुप् छन्दः[5] पष्ठवाड्वयो बृहती छन्द[6] उक्षा वयः सतोबृहती छन्द[7] ऋषभो वयः ककुच्छन्दो[8] धेनुर्वयो जगती छन्दो[9] ऽनड्वान् वयः पङ्क्तिश्छन्दो[10] वस्तो वयो विवलं छन्दो[11] वृष्णिर्वयो विशालं छन्दः[12] पुरुषो वय-( १ )-स्तन्द्रं छन्दो[13] व्याघ्रो वयोऽनाधृष्टं छन्दः[14] सिꣳहो वयश्छदिश्छन्दो[15] विष्टम्भो वयोऽधिपतिश्छन्दः[16] क्षत्रं वयो मयन्दं छन्दो[17] विश्वकर्मा वयः परमेष्ठी छन्दो[18] मूर्धा वयः प्रजापतिश्छन्दः[19] ॥
( वयः, षड्विꣳशतिश्च ) ॥ ५ ॥

तृतीयचितौ स्वयमातृण्णाद्युपधानम् ॥ अग्निर्ऋषिः ।

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् । पृष्ठेन द्यावापृथिवी अन्तरिक्षं च वि बाधताम्[1] ॥
विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीं भास्वतीꣳ सूरिमतीमा या द्यां भास्या पृथिवीमोर्वन्तरिक्षमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायो-

( ४।६-९ ) *–सजूर्देवैर्वयो...त्वा । ( ४।७-१० ) –*सजूर्ऋतु...धाभिः ।

दानाय प्रतिष्ठायै चरित्राय वायुस्त्वाऽभि पातु मह्या स्वस्त्या छर्दिषा (१) शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[2] ॥

राज्ञ्यसि प्राची दिग्[3] विराडसि दक्षिणा दिक्[4] सम्राडसि प्रतीची दिक्[5] स्वराडस्युदीची दिगधिपत्न्य[6]सि बृहती दि[7]गायुर्मे पाहि[8] प्राणं मे पाह्य[9]पानं मे पाहि[10] व्यानं मे पाहि[11] चक्षुर्मे पाहि[12] श्रोत्रं मे पाहि[13] मनो मे जिन्व[14] वाचं मे पिन्वा[15]-(२)-ऽऽत्मानं मे पाहि[16] ज्योतिर्मे यच्छ[17] ॥ ( छर्दिषा, पिन्व, षट् च ) ॥ ६ ॥

तृतीयचितौ बृहत्बाद्युपधानम् ॥ अग्निर्ऋषिः ।

मा छन्दः[1] प्रमा छन्दः[2] प्रतिमा छन्दो[3] ऽस्रीविश्छन्दः[4] पंक्तिश्छन्द[5] उष्णिहा छन्दो[6] बृहती छन्दो[7] ऽनुष्टुप् छन्दो[8] विराट् छन्दो[9] गायत्री छन्द[10]स्त्रिष्टुप् छन्दो[11] जगती छन्दः[12] पृथिवी छन्दो[13] ऽन्तरिक्षं छन्दो[14] द्यौश्छन्दः[15] समाश्छन्दो[16] नक्षत्राणि छन्दो[17] मनश्छन्दो[18] वाक् छन्दः[19] कृषिश्छन्दो[20] हिरण्यं छन्दो[21] गौश्छन्दो[22] ऽजा छन्दो[23] ऽश्वश्छन्दः[24] ॥

अग्निर्देवता[25] (१) वातो देवता[26] सूर्यो देवता[27] चन्द्रमा देवता[28] वसवो देवता[29] रुद्रा देवता[30] ऽऽदित्या देवता[31] विश्वे देवा देवता[32] मरुतो देवता[33] बृहस्पतिर्देवते[34]न्द्रो देवता[35] वरुणो देवता[36] मूर्धाऽसि राड्[37] ध्रुवाऽसि धरुणा[38] यन्त्र्यसि यमित्री[39]षे त्वो[40]र्जे त्वा[41] कृष्यै त्वा[42] क्षेमाय त्वा[43] यन्त्री राड्[44] ध्रुवाऽसि धरणी[45] धर्त्र्यसि धरित्र्या[46]युषे त्वा[47] (२) वर्चसे त्वौ[48]जसे त्वा[49] बलाय त्वा ॥ ( देवता, त्वा, षट् च ) ॥ ७ ॥

चतुर्थचितौ स्तोमीयाख्येष्टकासु कासाञ्चिदुपधानम् ॥ अग्निर्ऋषिः ।

आशुस्त्रिवृ[1]द्भान्तः पञ्चदशो[2] व्योम सप्तदशः[3] प्रतूर्तिरष्टादश[4]स्तपो नवदशो[5] ऽभिवर्तः सत्रिंशो[6] धरुणं एकविंशो[7] वर्चो द्वाविंशः[8] सम्भरणस्त्रयोविंशो[9] योनिश्चतुर्विंशो[10] गर्भाः पञ्चविंश[11] ओजस्त्रिणवः[12] क्रतुरेकत्रिंशः[13] प्रतिष्ठा त्रयस्त्रिंशो[14] ब्रध्नस्य विष्टपं चतुस्त्रिंशो[15] नाकः षट्त्रिंशो[16] विवर्तोऽष्टाचत्वारिंशो[17] धर्त्रश्चतुष्टोमः[18] ॥ ( आशुः सप्तत्रिंशत् ) ॥ ८ ॥

अवशिष्टस्तोमीयोपधानम् ॥ अग्निर्ऋषिः ।

अग्नेर्भागोऽसि दीक्षाया आधिपत्यं ब्रह्म स्पृतं त्रिवृत् स्तोम[1] इन्द्रस्य भागोऽसि विष्णोराधिपत्यं क्षत्रं स्पृतं पञ्चदशः स्तोमो[2] नृचक्षसां भागोऽसि धातुराधिपत्यं जनित्रं स्पृतं सप्तदशः स्तोमो[3] मित्रस्य भागोऽसि वरुणस्याऽऽधिपत्यं दिवो वृष्टिर्वाताः स्पृता एकविंशः स्तोमो[4] ऽदित्यै भागोऽसि पूष्ण आधिपत्यमोजः स्पृतं त्रिणवः स्तोमो[5] वसूनां भागोऽसि (१) रुद्राणामाधिपत्यं चतुष्पात् स्पृतं चतुर्विंशः स्तोम[6] आदित्यानां भागोऽसि मरुतामाधिपत्यं गर्भाः स्पृताः पञ्च-

विꣳशः स्तोमो[७] देवस्य सवितुर्भागोऽसि बृहस्पतेराधिपत्यꣳ समीचीर्दिशः स्पृताश्चतुष्टोमः स्तोमो[८] यावानां भागोऽस्ययावानामाधिपत्यं प्रजाः स्पृताश्चतुश्चत्वारिꣳशः स्तोम[९] ऋभूणां भागोऽसि विश्वेषां देवानामाधिपत्यं भूतं निशान्तꣳ स्पृतं त्रयस्त्रिꣳशः स्तोमः[१०] ॥

( वसूनां भागोऽसि, षट्चत्वारिꣳशच्च ) ॥ ९ ॥

सृष्ट्यभिधेयेष्टकोपधानम् ॥ अग्निर्ऋषिः ।

एकयाऽस्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत्[१] तिसृभिरस्तुवत ब्रह्माऽसृज्यत ब्रह्मणस्पतिरधिपतिरासीत्[२] पञ्चभिरस्तुवत भूतान्यसृज्यन्त भूतानां पतिरधिपतिरासीत्[३] सप्तभिरस्तुवत सप्तर्षयोऽसृज्यन्त धाताऽधिपतिरासी[४]न्नवभिरस्तुवत पितरोऽसृज्यन्तादितिरधिपत्न्यासी[५]देकादशभिरस्तुवतर्तवोऽसृज्यन्ताऽऽर्तवोऽधिपतिरासीत्[६] त्रयोदशभिरस्तुवत मासा असृज्यन्त संवत्सरोऽधिपति- ( १ )-रासीत्[७] पञ्चदशभिरस्तुवत क्षत्रमसृज्यतेन्द्रोऽधिपतिरासीत्[८] सप्तदशभिरस्तुवत पशवोऽसृज्यन्त बृहस्पतिरधिपतिरासी[९]न्नवदशभिरस्तुवत शूद्रार्यावसृज्येतामहोरात्रे अधिपत्नी आस्ता[१०]मेकविꣳशत्यास्तुवतैकशफाः पशवोऽसृज्यन्त वरुणोऽधिपतिरासीत्[११] त्रयोविꣳशत्याऽस्तुवत क्षुद्राः पशवोऽसृज्यन्त पूषाऽधिपतिरासीत्[१२] पञ्चविꣳशत्याऽस्तुवताऽऽरण्याः पशवोऽसृज्यन्त वायुरधिपतिरासीत्[१३] सप्तविꣳशत्याऽस्तुवत द्यावापृथिवी व्यै-( २ )-तां वसवो रुद्रा आदित्या अनु व्यायन् तेषामाधिपत्यमासी[१४]न्नवविꣳशत्याऽस्तुवत वनस्पतयोऽसृज्यन्त सोमोऽधिपतिरासी[१५]देकत्रिꣳशताऽस्तुवत प्रजा असृज्यन्त यावानां चायावानां चाऽऽधिपत्यमासीत्[१६] त्रयस्त्रिꣳशताऽस्तुवत भूतान्यशाम्यन् प्रजापतिः परमेष्ठ्यधिपतिरासीत्[१७] ॥ ( अधिपति-र्वि, पञ्चत्रिꣳशच्च ) ॥ १० ॥

चतुर्थचितौ व्युष्टिसंज्ञकेष्टकोपधानम् ॥ त्रिष्टुप् ; २, ४ जगती; १३ अनुष्टुप् ॥ अग्निर्ऋषिः ।

इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा ।
वधूर्जजान नवगज्जनित्री त्रय एनां महिमानः सचन्ते ॥
छन्दस्वती उषसा पेपिशाने समानं योनिमनु सञ्चरन्ती ।
सूर्यपत्नी वि चरतः प्रजानती केतुं कृण्वाने अजरे भूरिरेतसा[२] ॥
ऋतस्य पन्थामनु तिस्र आऽगुस्त्रयो घर्मासो अनु ज्योतिषाऽऽगुः ।
प्रजामेका रक्षत्यूर्जमेका ( १ ) व्रतमेका रक्षति देवयूनाम्[३] ॥
चतुष्टोमो अभवद्या तुरीया यज्ञस्य पक्षावृषयो भवन्ती ।
गायत्रीं त्रिष्टुभं जगतीमनुष्टुभं बृहदर्कं युञ्जानाः सुवराऽभरन्निदम्[४] ॥
पञ्चभिर्धाता वि दधाविदं यत् तासाꣳस्वसॄरजनयत् पञ्चपञ्च ।
तासामु यन्ति प्रयवेण पञ्च नाना रूपाणि क्रतवो वसानाः[५] ॥

त्रिꣳशत् स्वसार उप यन्ति निष्कृतꣳसमानं केतुं प्रतिमुञ्चमानाः ( २ ) ।
ऋतूꣳस्तन्वते कवयः प्रजानतीर्मध्येछन्दसः परि यन्ति भास्वतीः[६] ॥
ज्योतिष्मती प्रति मुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि ।
वि पश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे[७] ॥
एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् ।
तेन दस्यून् व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः[८] ॥
अनानुजामनुजां मामकर्त सत्यं वदन्त्यन्विच्छ एतत् ।
भूयास-( ३ )मस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त ॥
अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम् ।
भूयासमस्य सुमतौ यथा यूयमन्या वो अन्यामति मा प्र युक्त ॥
पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्चनाम्नीमृतवोऽनु पञ्च ।
पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरभि लोकमेकम्[११] ( ४ ) ॥
ऋतस्य गर्भः प्रथमा व्यूषुष्यपामेका महिमानं बिभर्ति ।
सूर्यस्यैका चरति निष्कृतेषु घर्मस्यैका सवितैकां नि यच्छति[१२] ॥
या प्रथमा व्यौच्छत् सा धेनुरभवद्यमे ।
सा नः पयस्वती धुक्ष्वोत्तरामुत्तराꣳ समाम्[१३] ॥
शुक्रर्षभा नभसा ज्योतिषा ऽऽ ऽगाद्विश्वरूपा शबलीरग्निकेतुः ।
समानमर्थꣳ स्वपस्यमाना बिभ्रती जरामजर उष आ ऽगाः[१४] ॥
ऋतूनां पत्नी ( ५ ) प्रथमेयमा ऽगादह्नां नेत्री जनित्री प्रजानाम् ।
एका सती बहुधोषो व्युच्छस्यजीर्णा त्वं जरयसि सर्वमन्यत्[१५] ॥
( एका, प्रतिमुञ्चमाना, भूयास,- मेकं, पत्न्ये,- काद्विꣳशतिश्च ) ॥ ११ ॥

पञ्चमाचितावसपत्नाख्येष्टकोपधानम् ॥ १-२ त्रिष्टुप् ॥ अग्निर्ऋषिः ।

अग्ने जातान् प्र णुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अस्मे दीदिहि सुमना अहेडन् तव स्याꣳ शर्मन् त्रिवरूथ उद्भित्[१] ॥
सहसा जातान् प्र णुदा नः सपत्नान् प्रत्यजाताञ्जातवेदो नुदस्व ।
अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्र णुदा नः सपत्नान्[२] ॥
चतुश्चत्वारिꣳशः स्तोमो वर्चो द्रविणꣳ षोडशः स्तोम ओजो द्रविणं[४] पृथिव्याः पुरीषमस्य-(१)-प्सो नाम[५] । एवश्छन्दो[६] वरिवश्छन्दः[७] शम्भूश्छन्दः[८] परिभूश्छन्दः[९] आच्छच्छन्दो[१०] मन-

श्छन्दो[११] व्यचश्छन्दः[१२] सिन्धुश्छन्दः[१३] समुद्रं छन्दः[१४] सलिलं छन्दः[१५] संयच्छन्दो[१६] वियच्छन्दो[१७] बृहच्छन्दो[१८] रथन्तरं छन्दो[१९] निकायश्छन्दो[२०] विवधश्छन्दो[२१] गिरश्छन्दो[२२] भ्रजश्छन्दः[२३] सष्टुप् छन्दो[२४] ऽनुष्टुप् छन्दः[२५] ककुच्छन्द[२६]स्त्रिककुच्छन्दः[२७] काव्यं छन्दो[२८] ऽङ्कुपं छन्दः[२९] (२) पदपंक्तिश्छन्दो[३०] ऽक्षरपंक्तिश्छन्दो[३१] विष्टारपंक्तिश्छन्दः[३२] क्षुरो भृज्वान् छन्दः[३३] प्रच्छच्छन्दः[३४] पक्षश्छन्द[३५] एवश्छन्दो[३६] वरिवश्छन्दो[३७] वयश्छन्दो[३८] वयस्कृच्छन्दो[३९] विशालं छन्दो[४०] विष्पर्धाश्छन्द[४१]श्छदिश्छन्दो[४२] दूरोहणं छन्द[४३]स्तन्द्रं छन्दो[४४] ऽङ्काङ्कं छन्दः[४५] ॥ ( असि, छन्द,-स्त्रयस्त्रिंशच्च ) ॥ १२ ॥

साकमेधादियाज्यानुवाक्याः ॥ गायत्री; ३-७, ११-१४, १९, २३-२५ त्रिष्टुप्; २०-२१ विराट् ॥ विश्वेदेवा ऋषयः ।

अग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतः ॥
त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतुः[२] ॥
भद्रा ते अग्ने स्वनीक संदृग्घोरस्य सतो विषुणस्य चारुः ।
न यत् ते शोचिस्तमसा वरन्त न ध्वस्मानस्तनुवि रेप आ धुः[३] ॥
भद्रं ते अग्ने सहसिन्ननीकमुपाक आ रोचते सूर्यस्य (१) ।
रुशद् दृशे ददृशे नक्तया चिदरूक्षितं दृश आ रूपे अन्नम्[४] ॥
सेनाऽनीकेन सुविदत्रो अस्मे यष्टा देवाꣳ आयजिष्ठः स्वस्ति ।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद् दिदीहि[५] ॥
स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
यत् सीमहि दिविजात प्रशस्तं तदस्मासु द्रविणं धेहि चित्रम्[६] ॥
यथा होतर्मनुषो (२) देवताता यज्ञेभिः सूनो सहसो यजासि ।
एवा नो अद्य समना समानानुशन्नग्न उशतो यक्षि देवान्[७] ॥
अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारꣳ रत्नधातमम्[८] ॥
वृषा सोम द्युमाꣳ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे[९] ॥
सान्तपना इदꣳ हविर्मरुतस्तज्जुजुष्टन । युष्माकोती रिशादसः[१०] ॥
यो नो मर्तो वसवो दुर्हृणायुस्तिरः सत्यानि मरुतो (३) जिघाꣳसात् ।
द्रुहः पाशं प्रति स मुचीष्ट तपिष्ठेन तपसा हन्तना तम्[११] ॥
संवत्सरीणा मरुतः स्वर्का उरुक्षयाः सगणा मानुषेषु ।
तेऽस्मत् पाशान् प्र मुञ्चन्त्वꣳहसः सान्तपना मदिरा मादयिष्णवः[१२] ॥

पिप्रीहि देवा२ँ उशतो यविष्ठ विद्वा२ँ ऋतू२ँऋतुपते यजेह ।
ये दैव्या ऋत्विजस्तेभिरग्ने त्व२ँ होतॄणामस्यायजिष्ठः[13] ॥
अग्ने यदद्य विशो अध्वरस्य होतः पावक ( ४ ) शोचे वेष्ट्व२ँ हि यज्वा ।
ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य[14] ॥
अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमम्[15] ॥
गयस्फानो अमीवहा वसुवित् पुष्टिवर्धनः । सुमित्रः सोम नो भव[16] ॥
गृहमेधास आ गत मरुतो मा ऽप भूतन । प्रमुञ्चन्तो नो अ२ँहसः[17] ॥
पूर्वीभिर्हि ददाशिम शरद्भिर्मरुतो वयम् । महोभि-( ५ )-श्चर्षणीनाम्[18] ॥
प्र बुध्निया ईरते वो महा२ँसि प्र णामानि प्रयज्यवस्तिरध्वम् ।
सहस्रियं दम्यं भागमेतं गृहमेधीयं मरुतो जुषध्वम्[19] ॥
उप यमेति युवतिः सुदक्षं दोषा वस्तोर्हविष्मती घृताची । उप स्वैनमरमतिर्वसूयुः[20] ॥
इमो अग्ने वीततमानि हव्या ऽजस्रो वक्षि देवतातिमच्छ ।
प्रति न ई२ँ सुरभीणि वियन्तु[21] ॥
क्रीडं वः शर्धो मारुतमनर्वाण२ँ रथेशुभम् ( ६ ) । कण्वा अभि प्र गायत[22] ॥
अत्यासो न ये मरुतः स्वञ्चो यक्षदृशो न शुभयन्त मर्याः ।
ते हर्म्येष्ठाः शिशवो न शुभ्रा वत्सासो न प्रक्रीडिनः पयोधाः[23] ॥
प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युञ्जते शुभे ।
ते क्रीडयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयन्त धूतयः[24] ॥
उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन ( ७ ) चित् पथा ।
श्चोतन्ति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते[25] ॥
अग्निमग्नि२ँ हवीमभिः सदा हवन्त विश्पतिम् । हव्यवाहं पुरुप्रियम्[26] ॥
त२ँ हि शश्वन्त ईडते स्रुचा देवं घृतश्चुता । अग्नि२ँ हव्याय वोढवे[27] ॥
इन्द्राग्नी रोचना दिवः[28]*-श्नथद्वृत्रं[29]*-मिन्द्रं वो विश्वतस्परि[30]*-न्द्रं नरो[31]*- विश्वकर्मन् हविषा वावृधानो[32]*-विश्वकर्मन् हविषा वर्धनेन[33]*- ॥

( सूर्यस्य, मनुषो, मरुतः, पावक, महोभी, रथेशुभं, केन, षट्चत्वारि२ँशच्च ) ॥ १३ ॥

[ अपा-६५।-मयं १३० । प्राची १२८। ध्रुवाक्षिति-१६७।-स्त्यवि-७६।-रिन्द्राग्नी १०६। मा १०६। ऽऽशु३७। रुग्ने-९१।-रेकयै १३५ ।-य-२६९।मग्ने १३३। ऽग्नि-३९६ । त्रयोदश ॥ १८४४ ॥ ]

[ ॥ इति चतुर्थकाण्डे तृतीयः प्रपाठकः ॥३॥ ]

---

( १३।२८-२९ ) तै. सं. ४।२।११।१-२, ( १३।३०-३१ ) तै. सं. १।६।१२।१-२, ( १३।३२-३३ ) तै. सं. ४।६।२।१५-१६ ।

पञ्चमचितिशेषनिरूपणम् ।

[ अथ चतुर्थः प्रपाठकः ॥४॥ ]

पञ्चमचितिशेषस्तोमभागाख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

रश्मिर॑सि क्षया॑य त्वा क्षयं॑ जिन्व॒ प्रेति॑रसि धर्मा॑य त्वा धर्मं॑ जिन्वा॒न्विति॑रसि दि॒वे त्वा॒ दिवं॑ जिन्व॒ स॒न्धिर॑स्य॒न्तरि॑क्षाय त्वा॒ऽन्तरि॑क्षं जिन्व प्रति॒धिर॑सि पृथि॒व्यै त्वा॑ पृथि॒वीं जिन्व विष्ट॒म्भो॑ऽसि वृष्ट्यै॑ त्वा॒ वृष्टिं॑ जिन्व प्र॒वाऽस्यह्ने॒ त्वाऽह॑र्जिन्वा॒नु॒वाऽसि॒ रात्रि॑यै त्वा॒ रात्रिं॑ जिन्वो॒शिगा॑सि॒ ( १ ) वसु॑भ्यस्त्वा॒ वसू॑ञ्जिन्व प्र॒के॒तो॑ऽसि रु॒द्रेभ्य॑स्त्वा रु॒द्राञ्जि॑न्व सु॒दी॒तिर॑स्यादि॒त्येभ्य॑स्त्वाऽऽदि॒त्याञ्जि॑न्वौ॒जो॑ऽसि पि॒तृभ्य॑स्त्वा पि॒तॄञ्जि॑न्व तन्तु॑रसि प्र॒जाभ्य॑स्त्वा प्र॒जा जि॑न्व पृतना॒षाड॑सि प॒शुभ्य॑स्त्वा प॒शूञ्जि॑न्व रे॒वद॒स्योष॑धीभ्य॒स्त्वौष॑धीर्जिन्वा॒भि॒जिद॑सि यु॒क्तग्रा॒वेन्द्रा॑य॒ त्वेन्द्रं॑ जिन्वा॒धिप॑तिरसि प्रा॒णाय॑ ( २ ) त्वा प्रा॒णं जि॑न्व य॒न्ताऽस्य॑पा॒नाय॑ त्वाऽपा॒नं जि॑न्व सꣳ॒सर्पो॑ऽसि॒ चक्षु॑षे त्वा॒ चक्षु॑र्जिन्व वयो॒धा अ॑सि॒ श्रोत्रा॑य त्वा॒ श्रोत्रं॑ जिन्व त्रि॒वृद॑सि प्र॒वृद॑सि सं॒वृद॑सि वि॒वृद॑सि सꣳ॒रो॒हो॑ऽसि नी॒रो॒हो॑ऽसि प्र॒रो॒हो॑ऽस्यनु॒रो॒हो॑ऽसि वसु॒को॑ऽसि॒ वेष॑श्रिरसि॒ वस्य॑ष्टिरसि ॥

( असि, प्राणाय, त्रिचत्वारिꣳशच्च ) ॥ १ ॥

नाकसदाख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ॥

रा॒ज्ञ्य॑सि॒ प्राची॒ दिग्वस॑वस्ते दे॒वा अधि॑पतयो॒ऽग्निर्हे॑ती॒नां प्र॑तिध॒र्ता त्रि॒वृत् त्वा॒ स्तोमः॑ पृथि॒व्याꣳ श्र॑यत्वाज्य॑मु॒क्थम॒व्य॑थयत् स्तभ्ना॒तु र॑थन्त॒रꣳ साम॒ प्रति॑ष्ठित्यै॒ वि॒राड॑सि॒ द॒क्षि॒णा दिग्रु॒द्रास्ते॑ दे॒वा अधि॑पतय॒ इन्द्रो॑ हेती॒नां प्र॑तिध॒र्ता प॑ञ्चद॒शस्त्वा॒ स्तोमः॑ पृथि॒व्याꣳ श्र॑यतु॒ प्रउ॑गमु॒क्थम॒व्य॑थयत् स्तभ्ना॒तु बृ॒हत् साम॒ प्रति॑ष्ठित्यै स॒म्राड॑सि प्र॒तीची॒ दि-(१)-गा॑दि॒त्यास्ते॑ दे॒वा अधि॑पतयः॒ सोमो॑ हेती॒नां प्र॑तिध॒र्ता स॑प्तद॒शस्त्वा॒ स्तोमः॑ पृथि॒व्याꣳ श्र॑यतु मरु॒त्वती॑यमु॒क्थम॒व्य॑थयत् स्तभ्ना॒तु वै॑रू॒पꣳ साम॒ प्रति॑ष्ठित्यै स्व॒राड॑स्यु॒दीची॒ दिग्विश्वे॑ ते दे॒वा अधि॑पतयो॒ वरु॑णो हेती॒नां प्र॑तिध॒र्तैक॑वि॒ꣳशस्त्वा॒ स्तोमः॑ पृथि॒व्याꣳ श्र॑यतु॒ निष्के॑वल्यमु॒क्थम॒व्य॑थयत् स्तभ्ना॒तु वै॑रा॒जꣳ साम॒ प्रति॑ष्ठित्या॒ अधि॑पत्न्यसि बृह॒ती दिङ्म॒रुत॑स्ते दे॒वा अधि॑पतयो॒ (२) बृह॒स्पति॑र्हेती॒नां प्र॑तिध॒र्ता त्रि॑णवत्रयस्त्रि॒ꣳशौ त्वा॒ स्तोमौ॑ पृथि॒व्याꣳ श्र॑यतां वैश्वदेवाग्निमारु॒ते उ॒क्थे अ॒व्य॑थयन्ती स्तभ्नी॑ताꣳ शाक्वररैव॒ते साम॑नी॒ प्रति॑ष्ठित्या अ॒न्तरि॑क्षा॒यर्ष॑यस्त्वा प्रथम॒जा दे॒वेषु॒ दि॒वो मात्र॑या वरि॒णा प्र॑थन्तु विध॒र्ता चा॒यमधि॑पतिश्च ते त्वा॒ सर्वे॑ संविदा॒ना नाक॑स्य पृ॒ष्ठे सु॑व॒र्गे लो॒के यज॑मानं च सादयन्तु ॥

( दि,-गधिपतय,- श्चत्वारि॒ꣳशच्च ) ॥ २ ॥

चोडाख्येष्टकोपधानम् ॥ ८ त्रिष्टुप् । अग्निर्ऋषिः ।

अ॒यं पु॒रो हरि॑केशः॒ सूर्य॑रश्मि॒स्तस्य॑ रथगृ॒त्सश्च॒ रथौ॑जाश्च सेनानिग्राम॒ण्यौ॑ पुञ्जिकस्थ॒ला च॑ कृतस्थ॒-

( २।१-४ ) अन्तरिक्षाय...सादयन्तु ।

ला चाप्सरसौ यातुधाना हेती रक्षाꣳसि प्रहेति[1] — *-रयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दङ्क्ष्णवः पशवो हेतिः पौरुषेयो वधः प्रहेति[2] — *-रयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चा-(१)-नुम्लोचन्ती चाप्सरसौ सर्पा हेतिर्व्याघ्राः प्रहेति[3] — *-रयमुत्तरात् संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेति[4] — *-रयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन् प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं (२) द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधाम्या[5] — योस्त्वा सदने सादयाम्यवतश्छायायां नमः समुद्राय नमः समुद्रस्य चक्षसे[6] परमेष्ठी त्वा सादयतु दिवः पृष्ठे व्यचस्वतीं प्रथस्वतीं विभूमतीं प्रभूमतीं परिभूमतीं दिवं यच्छ दिवं दृꣳह दिवं मा हिꣳसीर्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय सूर्यस्त्वाऽभि पातु मह्या स्वस्त्या (३) छर्दिषा शन्तमेन तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद ॥

प्रोथदश्वो न यवसे अविष्यन् यदा महः संवरणाद् व्यस्थात् ।
आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥

( च, य९, स्वस्त्या, ऽष्टाविꣳशतिश्च ) ॥ ३ ॥

छन्दोभिधेष्टकोपधानम् ॥ १-३ गायत्री; ४-६ त्रिष्टुप्, ७-९ जगती; १०-१२ अनुष्टुप्; १३-१५ बृहती; १४ सतोबृहती; १६-१८ उष्णिक्; १९-२१ पङ्क्तिः; २२-२५ अक्षरपङ्क्तिः; २६ अत्यष्टिः; २७-२९ द्विपदा ॥ अग्निर्ऋषिः ॥

अग्निर्मूर्धा दिवः ककुत् पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति[1] ॥
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतः[2] ॥
अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः । मूर्धा कवी रयीणाम्[3] ॥
भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहम्[4] ॥
अबोध्यग्निः समिधा जनानां (१) प्रति धेनुमिवाऽऽयतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ[5] ॥
अवोचाम कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ।
गविष्ठिरो नमसा स्तोममग्नौ दिवीव रुक्ममुर्व्यञ्चमश्रेत्[6] ॥
जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
घृतप्रतीको बृहता दिविस्पृशा द्युमद्वि भाति भरतेभ्यः शुचिः[7] ॥
त्वामग्ने अङ्गिरसो (२) गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
स जायसे मथ्यमानः सहो महत् त्वामाहुः सहसस्पुत्रमङ्गिरः ॥

---

( ३।१-५ ) तेभ्यो... दधामि ।

*

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते ।
इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः[९] ॥
त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः । शोचिष्केशं पुरुप्रियाग्ने हव्याय वोढवे[१०] ॥
सखायः सं वः सम्यञ्चमिषꣳ (३) स्तोमं चाग्नये । वर्षिष्ठाय क्षितीनामूर्जो नप्त्रे सहस्वते[११] ॥
सꣳसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इडस्पदे समिध्यसे स नो वसून्या भर[१२] ॥
एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिꣳ स्वध्वरं विश्वस्य दूतममृतम्[१३] ॥
स योजते अरुषो विश्वभोजसा स दुद्रवत् स्वाहुतः ।
सुब्रह्मा यज्ञः सुशमी (४) वसूनां देवꣳ राधो जनानाम्[१४] ॥
उदस्य शोचिरस्थादाजुह्वानस्य मीढुषः ।
उद्धूमासो अरुषासो दिविस्पृशः समग्निमिन्धते नरः[१५] ॥
अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः[१६] ॥
स इधानो वसुष्कविरग्निरीडेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि[१७] ॥
क्षपो राजन्नुत त्मनाऽग्ने वस्तोरुतोषसः । स तिग्मजम्भ (५) रक्षसो दह प्रति[१८] ॥
आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आ भर[१९] ॥
आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते ।
सुश्चन्द्र दस्म विश्पते हव्यवाट् तुभ्यꣳ हूयत इषꣳ स्तोतृभ्य आ भर[२०] ॥
उभे सुश्चन्द्र सर्पिषो दर्वी श्रीणीष आसनि ।
उतो न उत् पुपूर्या (६) उक्थेषु शवसस्पत इषꣳ स्तोतृभ्य आ भर[२१] ॥
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः[२२] ॥
अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः । रथीर्ऋतस्य बृहतो बभूथ[२३] ॥
आभिष्टे अद्य गीर्भिर्गृणन्तोऽग्ने दाशेम । प्र ते दिवो न स्तनयन्ति शुष्माः[२४] ॥
एभिर्नो अर्कैर्भवा नो अर्वाङ् (७) सुवर्न ज्योतिः । अग्ने विश्वेभिः सुमना अनीकैः[२५] ॥
अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसम् । विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः[२६] ॥
अग्ने त्वं नो अन्तमः । उत त्राता शिवो भव वरूथ्यः[२७] ॥

तं त्वा शोचिष्ठ दीदिवः । सुम्नाय नूनमीमहे सखिभ्यः[२८] ॥
वसुरग्निर्वसुश्रवाः (८) । अच्छा नक्षि द्युमत्तमो रयिं दाः[२९] ॥
( जनाना,-मङ्गिरस, इषं२,सुशर्मा, तिग्मजम्भ, पुपूर्या, अर्वाङ्, वसुश्रवाः, पञ्च च ) ॥ ४ ॥

सयुजादीष्टकोपधानम् ॥ अग्निर्ऋषिः ।

इन्द्राग्निभ्यां त्वा सयुजा युजा युनज्म्या[१]—घाराभ्यां[२] *- तेजसा[३] *- वर्चसो[४]— *-क्थेभिः[५] *-स्तोमेभि[६]— *- श्छन्दोभी[७] *- रय्यै पोषाय सजातानां मध्यमस्थेयाय मया त्वा सयुजा युजा युनज्म्य[८]—म्बा[९]*- दुला[१०]— *-नितत्नि[११]— *-रभ्रयन्ती[१२] *- मेघयन्ती[१३]*- वर्षयन्ती[१४] *- चुपुणीका नामासि प्रजापतिना त्वा विश्वाभिर्धीभिरुप दधामि[१५] पृथिव्युदपुरमन्नेन विष्टा मनुष्यास्ते गोप्तारोऽग्निर्वियत्तोऽस्यां तामहं प्र पद्ये सा (१) मे शर्म च वर्म चा[१६]—स्त्वधिद्यौरन्तरिक्षं ब्रह्मणा विष्टा मरुतस्ते गोप्तारो वायुर्वियत्तोऽस्यां तामहं प्र पद्ये सा मे शर्म च वर्म चास्तु[१७] द्यौरपराजिताऽमृतेन विष्टाऽऽदित्यास्ते गोप्तारः सूर्यो वियत्तोऽस्यां तामहं प्र पद्ये सा मे शर्म च वर्म चास्तु[१८] ॥ ( सा, ऽष्टाचत्वारिंशच्च ) ॥५॥

विश्वज्योतिरादीष्टकोपधानम् ॥ अग्निर्ऋषिः ।

बृहस्पतिस्त्वा सादयतु पृथिव्याः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छाग्निस्तेऽधिपति[१]—र्विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ वायुस्तेऽधिपतिः[२] प्रजापतिस्त्वा सादयतु दिवः पृष्ठे ज्योतिष्मतीं विश्वस्मै प्राणायापानाय विश्वं ज्योतिर्यच्छ परमेष्ठी तेऽधिपतिः[३] पुरोवातसनिरस्य[४]—भ्रसनिरसि[५] विद्युत्सनि-(१)-रसि[६] स्तनयित्नुसनिरसि[७] वृष्टिसनिरस्य[८]—ग्नेर्यान्यसि[९] देवानामग्नेयान्यसि[१०] वायोर्यान्यसि[११] देवानां वायोयान्यस्य[१२]—न्तरिक्षस्य यान्यसि[१३] देवानामन्तरिक्षयान्यस्य[१४]—न्तरिक्षमस्य[१५]—न्तरिक्षाय त्वा[१६] सलिलाय त्वा[१७] सर्णीकाय त्वा[१८] सतीकाय त्वा[१९] केताय त्वा[२०] प्रचेतसे त्वा[२१] विवस्वते त्वा[२२] दिवस्त्वा[२३] ज्योतिष आदित्येभ्यस्त्व[२४]—र्चे त्वा[२५] रुचे त्वा[२६] द्युते त्वा[२७] (२) भासे त्वा[२८] ज्योतिषे त्वा[२९] यशोदां त्वा यशसि[३०] *- तेजोदां त्वा तेजसि[३१] *- पयोदां त्वा पयसि[३२] *- वर्चोदां त्वा वर्चसि[३३] *- द्रविणोदां त्वा द्रविणे सादयामि तेनर्षिणा तेन ब्रह्मणा तया देवतयाऽङ्गिरस्वद् ध्रुवा सीद[३४] ॥ ( विद्युत्सनि,- स्त्वै,-कान्नत्रिंशच्च ) ॥ ६ ॥

भूयस्कृदादीष्टकोपधानम् ॥ अग्निर्ऋषिः ।

भूयस्कृदसि[१] वरिवस्कृदसि[२] प्राच्यस्यू[३]—र्ध्वाऽस्य[४]—न्तरिक्षसदस्यन्तरिक्षे सीदा[५]—प्सुषदसि[६] श्येनसदसि[७] गृध्रसदसि[८] सुपर्णसदसि[९] नाकसदसि[१०] पृथिव्यास्त्वा द्रविणे सादयाम्य[११]—न्तरिक्षस्य त्वा द्रविणे सादयामि[१२] दिवस्त्वा द्रविणे सादयामि[१३] दिशां त्वा द्रविणे सादयामि[१४] द्रविणोदां त्वा द्रविणे सादयामि[१५] प्राणं मे पाह्य[१६]—पानं मे पाहि[१७] व्यानं मे (१) पाह्या[१८]—युर्मे पाहि[१९] विश्वायुर्मे पाहि[२०] सर्वायुर्मे पाह्य[२१]—ग्ने यत् ते परं हृन्नाम तावेहि सं रभावहै पाञ्च-

( ५।२-७ ) त्वा सयुजा...युनज्मि । ( ५।९-१४ ) नामासि...दधामि । ( ६।३०-३३ ) सादयामि ...सीद ।

जन्येष्वग्येध्यग्ने[22] यावा[23] अयावा[24] एवा[25] ऊमाः[26] सब्दुः[27] सगरः[28] सुमेकः[29] ॥
( मे, द्वात्रिंशच्च ) ॥ ७ ॥

इन्द्रतन्वाख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

अग्निना विश्वाषाट्[1] सूर्येण स्वराट्[2] क्रत्वा शचीपतिः[3]—ऋषभेण त्वष्टा[4] यज्ञेन मघवान्[5] दक्षिणया सुवर्गो[6] मन्युना वृत्रहा[7] सौहार्द्येन तनूधा[8] अन्नेन गयः[9] पृथिव्याऽसनो[10]—ऋग्भिरन्नादो[11] वषट्कारेणर्धः[12] साम्ना तनूपा[13] विराजा ज्योतिष्मान्[14] ब्रह्मणा सोमपा[15] गोभिर्यज्ञं दाधार[16] क्षत्रेण मनुष्या[17]—नश्वेन च रथेन च वज्र्य[18]—तुभिः प्रभुः[19] संवत्सरेण परिभू[20]—स्तपसाऽनाधृष्टः[21] सूर्यः सन् तनूभिः[22] ॥ ( अग्निनैकान्नपञ्चाशत् ) ॥ ८ ॥

यज्ञतन्वाख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

प्रजापतिर्मनसाऽन्धोऽच्छेतो[1] धाता दीक्षायां[2] सविता भृत्यां[3] पूषा सोमक्रयण्यां[4] वरुण उपनद्धो[5]ऽसुरः क्रीयमाणो[6] मित्रः क्रीतः[7] शिपिविष्ट आसादितो[8] नरंधिषः प्रोह्यमाणो[9]ऽधिपतिरागतः[10] प्रजापतिः प्रणीयमानो[11]ऽग्निराग्नीध्रे[12] बृहस्पतिराग्नीध्रात् प्रणीयमान[13] इन्द्रो हविर्धाने[14]ऽदितिरासादितो[15] विष्णुरुपावह्रियमाणो[16]ऽथर्वोपोत्तो[17] यमोऽभिषुतो[18]ऽपूतपा आधूयमानो[19] वायुः पूयमानो[20] मित्रः क्षीरश्री[21]—र्मन्थी सक्तुश्री[22]—र्वैश्वदेव उन्नीतो[23] रुद्र (१) आहुतो[24] वायुरावृत्तो[25] नृचक्षाः प्रतिख्यातो[26] भक्ष आगतः[27] पितॄणां नाराशंसो[28]ऽसुरात्तः सिन्धुरवभृथमवप्रय[29]—न्त्समुद्रोऽवगतः[30] सलिलः प्रप्लुतः[31] सुवरुदृचं गतः[33] ॥
( रुद्र, एकविंशतिश्च ) ॥ ९ ॥

नक्षत्रेष्टकोपधानम् ॥ अग्निर्ऋषिः ।

कृत्तिका नक्षत्रमग्निर्देवताऽग्ने रुचः स्थ प्रजापतेर्धातुः सोमस्यर्चे त्वा रुचे त्वा द्युते त्वा भासे त्वा ज्योतिषे त्वा रोहिणी नक्षत्रं प्रजापतिर्देवता[2]*- मृगशीर्षं नक्षत्रं सोमो देवता*-ऽऽर्द्रा नक्षत्रं रुद्रो देवता*-पुनर्वसू नक्षत्रमदितिर्देवता[5]*-तिष्यो नक्षत्रं बृहस्पतिर्देवता[6]*-ऽऽश्रेषा नक्षत्रं सर्पा देवता[7]*- मघा नक्षत्रं पितरो देवता*- फल्गुनी नक्षत्र-(१)-मर्यमा देवता*- फल्गुनी नक्षत्रं भगो देवता*-हस्तो नक्षत्रं सविता देवता[11]*-चित्रा नक्षत्रमिन्द्रो देवता[12]*-स्वाती नक्षत्रं वायुर्देवता[13]*-विशाखे नक्षत्रमिन्द्राग्नी देवता[14]*-ऽनूराधा नक्षत्रं मित्रो देवता[15]*-रोहिणी नक्षत्रमिन्द्रो देवता[16]*-विचृतौ नक्षत्रं पितरो देवता[17]*-ऽषाढा नक्षत्रमापो देवता[18]*-ऽषाढा नक्षत्रं विश्वे देवा देवता[19]*-श्रोणा नक्षत्रं विष्णुर्देवता*-श्रविष्ठा नक्षत्रं वसवो (२) देवता[21]*-शतभिषङ्नक्षत्रमिन्द्रो देवता[22]*-प्रोष्ठपदा नक्षत्रमज एकपाद्देवता[23]*-प्रोष्ठपदा नक्षत्रमहिर्बुध्नियो देवता[24]*-रेवती नक्षत्रं पूषा देवता[25]*-ऽश्वयुजौ नक्षत्रमश्विनौ देवता[26]*-ऽपभरणीर्नक्षत्रं यमो देवता[27]*- पूर्णा पश्चा[28]*-द्यत्ते देवा अदधुः[29]*- ॥ ( नक्षत्रं, वसवः- त्रयस्त्रिंशच्च ) ॥ १० ॥

( १०।२-२७ ) रुचे त्वा... ज्योतिषे त्वा ( १०।२८-२९ ) तै. सं. ३।५।१।१-२ ।

ऋतव्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

मधुश्च माधवश्च वासन्तिकावृतू[१-२]*-शुक्रश्च शुचिश्च ग्रैष्मावृतू[३-४]*-नभश्च नभस्यश्च वार्षिकावृतू[५-६]*-इषश्चोर्जश्च शारदावृतू*-सहश्च सहस्यश्च हैमन्तिकावृतू[९-१०]*-तपश्च तपस्यश्च शैशिरावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधीः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः (१) येऽग्नयः समनसोऽन्तरा द्यावापृथिवी शैशिरावृतू अभि कल्पमाना इन्द्रमिव देवा अभि सं विशन्तु[११-१२] संयच्च प्रचेताश्चाग्नेः सोमस्य सूर्यस्यो[१३]*-ग्रा च भीमा च पितॄणां यमस्येन्द्रस्य[१४]*-ध्रुवा च पृथिवी च देवस्य सवितुर्मरुतां वरुणस्य[१५]*-धर्त्री च धरित्री च मित्रावरुणयोर्मित्रस्य धातुः[१६]*-प्राची च प्रतीची च वसूनाꣳ रुद्राणा--(२)--मादित्यानां ते तेऽधिपतयस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि[१७] सहस्रस्य प्रमा असि[१८] सहस्रस्य प्रतिमा असि[१९] सहस्रस्य विमा असि[२०] सहस्रस्योन्मा असि[२१] साहस्रोऽसि सहस्राय त्वा[२२]-मा मे अग्न इष्टका धेनवः सन्त्वेका च शतं च सहस्रं चायुतं च (३) नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च मध्यं चान्तश्च परार्धश्चेमा मे अग्न इष्टका धेनवः सन्तु षष्टिः सहस्रमयुतमक्षीयमाणा ऋतस्थाः स्थर्तावृधो घृतश्चुतो मधुश्चुत ऊर्जस्वतीः स्वधाविनीस्ता मे अग्न इष्टका धेनवः सन्तु विराजो नाम कामदुघा अमुत्रामुष्मिꣳल्लोके[२३] ॥ ( सव्रता, रुद्राणां, च, पञ्चचत्वारिꣳशच्च ) ॥ ११ ॥

अश्वमेधगतदशहविष्केष्टियाज्यानुवाक्याः ॥ विश्वेदेवा ऋषयः ।

समिद्दिशामाशया नः सुवर्विन्मधोरतो माधवः पात्वस्मान् ।
अग्निर्देवो दुष्टरीतुरदाभ्य इदं क्षत्रꣳ रक्षतु पात्वस्मान्[१] ॥
रथन्तरꣳ सामभिः पात्वस्मान् गायत्री छन्दसां विश्वरूपा ।
त्रिवृन्नो विष्ठया स्तोमो अह्नाꣳ समुद्रो वात इदमोजः पिपर्तु[२] ॥
उग्रा दिशामभिभूतिर्वयोधाः शुचिः शुक्रे अहन्योजसीना ।
इन्द्राधिपतिः पिपृतादतो नो महि (१) क्षत्रं विश्वतो धारयेदम्[३] ॥
बृहत् साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् ।
इन्द्र स्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष[४] ॥
प्राची दिशाꣳ सहयशा यशस्वती विश्वे देवाः प्रावृषा ऽह्नाꣳ सुवर्वती ।
इदं क्षत्रं दुष्टरमस्त्वोजोऽनाधृष्टꣳ सहस्रियꣳ सहस्वत्[५] ॥
वैरूपे सामन्निह तच्छकेम जगत्यैनं विक्ष्वा वेशयामः ।
विश्वे देवाः सप्तदशेन (२) वर्च इदं क्षत्रꣳ सलिलवातमुग्रम्[६] ॥
धर्त्री दिशां क्षत्रमिदं दाधारोपस्थाऽऽशानां मित्रवदस्त्वोजः ।
मित्रावरुणा शरदाऽह्नां चिकित्नू अस्मै राष्ट्राय महि शर्म यच्छतम्[७] ॥

---

( ११।१-१० ) अग्नेरन्तः... विशन्तु । ( ११।१३-१६ ) ते तेऽधिपतयो... दधामि ।

वैराजे सामन्नधि मे मनीषाऽनुष्टुभा सम्भृतं वीर्यं सहः ।
इदं क्षत्रं मित्रवदार्द्रदानु मित्रावरुणा रक्षतमाधिपत्यैः[८] ॥
सम्राड् दिशा सहसाम्नी सहस्वत्यृतुर्हेमन्तो विष्ठया नः पिपर्तु ।
अवस्युवाता ( ३ ) बृहतीरनु शक्वरीरिमं यज्ञमवन्तु नो घृताचीः[९] ॥
सुवर्वती सुदुघा नः पयस्वती दिशां देव्यवतु नो घृताची ।
त्वं गोपाः पुरएतोत पश्चाद् बृहस्पते याम्यां युङ्ग्धि वाचम्[१०] ॥ ॥
ऊर्ध्वा दिशा रन्तिराशौषधीनां संवत्सरेण सविता नो अह्नाम् ।
रेवत् सामातिच्छन्दा उ छन्दोऽजातशत्रुः स्योना नो अस्तु[११] ॥
स्तोमत्रयस्त्रिंशे भुवनस्य पत्नि विवस्वद्वाते अभि नो ( ४ ) गृणाहि ।
घृतवती सवितराधिपत्यैः पयस्वती रन्तिराशा नो अस्तु[१२] ॥
ध्रुवा दिशां विष्णुपत्न्यघोराऽस्येशाना सहसो या मनोता ।
बृहस्पतिर्मातरिश्वोत वायुः संधुवाना वाता अभि नो गृणन्तु[१३] ॥
विष्टम्भो दिवो धरुणः पृथिव्या अस्येशाना जगतो विष्णुपत्नी ।
विश्वव्यचा इषयन्ती सुभूतिः शिवा नो अस्त्वदितिरुपस्थे[१४] ॥
वैश्वानरो न ऊत्या[१५]*- पृष्टो दिवि[१६]*-सु नो ( ५ ) ऽद्यानुमति[१७]*-रन्विदनुमते त्वं[१८]*-
कया नश्चित्र आ भुवत्[१९]*-को अद्य युङ्क्ते[२०]*- ॥
( मह्रिं, सप्तदशेना,-ऽवस्युवाता, नो, न,-श्चतुर्दश च ) ॥ १२ ॥

[ रश्मी १४३ । राज्य-१४०।-य-१७८।-मग्नि-४०५।- रिन्द्राग्निभ्यां ९८। बृहस्पतिं-१२९।-भूयस्क-८२।- दग्निना ४९। प्रजापतिः ७१। कृत्तिका १३३। मधुः १९५। समिद् २६४ । द्वादश ॥ १८८७ ॥ ]

[ इति चतुर्थकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

## होमविधिनिरूपणम् ।

[ अथ पञ्चमः प्रपाठकः ॥ ५ ॥ ]

चित्यग्नौरुद्रहोममन्त्राः ( रुद्राध्यायः ) ॥ १-१५ अनुष्टुप्; ३ विषमपदा बृहती, ७ आस्तारपंक्तिः; ८ षट्पदाजगती । अग्निर्ऋषिः।

नमस्ते रुद्र मन्यव उतो त इषवे नमः । नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः[१] ॥
या त इषुः शिवतमा शिवं बभूव ते धनुः ।
शिवा शरव्या या तव तया नो रुद्र मृडय[२] ॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।
तया नस्तनुवा शंतमया गिरिशन्ताभि चाकशीहि[३] ॥

---

( १२।१५-१६ ) तै. सं. १।५।११।१,४, (१२।१७-१८) तै. सं. ३।३।११।११-१२, (१२।१९-२०) तै. सं. ४।२।११।९-१० ।

यामिषुं गिरिशन्त हस्ते (१) बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥
शिवेन वचसा त्वा गिरिशाच्छा वदामसि । यथा नः सर्वमिज्जगदयक्ष्मं सुमना असत् ॥
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वान् जम्भयन्त्सर्वाश्च यातुधान्यः[6] ॥
असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः ।
ये चेमां रुद्रा अभितो दिक्षु (२) श्रिताः सहस्रशोऽवैषां हेड ईमहे[7] ॥
असौ योऽवसर्पति नीलग्रीवो विलोहितः । उतैनं गोपा अदृशन्नदृशन्नुदहार्यः ।
उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः ॥
नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरं नमः[9] ॥
प्र मुञ्च धन्वनस्त्वमुभयोरार्त्नियोर्ज्याम् । याश्च ते हस्त इषवः (३) परा ता भगवो वप ॥
अवतत्य धनुस्त्वं सहस्राक्ष शतेषुधे । निशीर्य शल्यानां मुखा शिवो नः सुमना भव[11] ॥
विज्यं धनुः कपर्दिनो विशल्यो बाणवां उत ।
अनेशन्नस्येषव आभुरस्य निषङ्गथिः[12] ॥
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः । तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज[13] ॥
नमस्ते अस्त्वायुधायानातताय धृष्णवे ।
उभाभ्यां-(४)-मुत ते नमो बाहुभ्यां तव धन्वने[14] ॥
परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः । अथो य इषुधिस्तवारे अस्मन्नि धेहि तम्[15] ॥
(हस्ते, दिक्षिव,-षव, उभाभ्यां, द्वाविंशतिश्च ॥ १ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ॥

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमो[1] नमो वृक्षेभ्यो हरिकेशेभ्यः पशूनां पतये नमो[2] नमः सस्पिञ्जराय त्विषीमते पथीनां पतये नमो[3] नमो बभ्लुशाय विव्याधिनेऽन्नानां पतये नमो[4] नमो हरिकेशायोपवीतिने पुष्टानां पतये नमो[5] नमो भवस्य हेत्यै जगतां पतये नमो[6] नमो रुद्रायाऽऽततायिने क्षेत्राणां पतये नमो[7] नमः सूतायाहन्त्याय वनानां पतये नमो[8] नमो (१) रोहिताय स्थपतये वृक्षाणां पतये नमो[9] नमो मन्त्रिणे वाणिजाय कक्षाणां पतये नमो[10] नमो भुवन्तये वारिवस्कृतायौषधीनां पतये नमो[11] नम उच्चैर्घोषायाऽऽक्रन्दयते पत्तीनां पतये नमो नमः[12] कृत्स्नवीताय धावते सत्वनां पतये नमः[13] ॥ (नम, एकान्नत्रिंशच्च ) ॥ २ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ॥

नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो[1] नमः ककुभाय निषङ्गिणे स्तेनानां पतये नमो[2] नमो निषङ्गिण इषुधिमते तस्कराणां पतये नमो[3] नमो वञ्चते परिवञ्चते स्तायूनां पतये नमो[4] नमो निचेरवे परिचरायारण्यानां पतये नमो[5] नमः सृकाविभ्यो जिघांसद्भ्यो मुष्णतां पतये नमो[6] नमोऽसिमद्भ्यो नक्तं चरद्भ्यः प्रकृन्तानां पतये नमो[7] नम उष्णीषिणे गिरिचराय कुलुञ्चानां पतये नमो[8] नम (१) इषुमद्भ्यो धन्वाविभ्यश्च वो नमो[9] नम आतन्वानेभ्यः प्रतिदधानेभ्यश्च वो नमो[10] नम आयच्छद्भ्यो विसृजद्भ्यश्च वो नमो[11] नमोऽस्यद्भ्यो विध्यद्भ्यश्च वो नमो[12] नम आसीनेभ्यः शयानेभ्यश्च वो नमो[13] नमः स्वपद्भ्यो जाग्रद्भ्यश्च वो नमो[14] नमस्तिष्ठद्भ्यो धावद्भ्यश्च वो नमो[15] नमः सभाभ्यः सभापतिभ्यश्च वो नमो[16] नमो अश्वेभ्योऽश्वपतिभ्य-(२)-श्च वो नमः[17] ॥ ( नमो,ऽश्वपतिभ्य,- स्त्रीणि च ) ॥ ३ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ॥

नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमो[1] नम उगणाभ्यस्तृंहतीभ्यश्च वो नमो[2] नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो[3] नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो[4] नमो गणेभ्यो गणपतिभ्यश्च वो नमो[5] नमो विरूपेभ्यो विश्वरूपेभ्यश्च वो नमो[6] नमो महद्भ्यः क्षुल्लकेभ्यश्च वो नमो[7] नमो रथिभ्योऽरथेभ्यश्च वो नमो[8] नमो रथेभ्यो (१) रथपतिभ्यश्च वो नमो[9] नमः सेनाभ्यः सेनानिभ्यश्च वो नमो[10] नमः क्षत्तृभ्यः संग्रहीतृभ्यश्च वो नमो[11] नमस्तक्षभ्यो रथकारेभ्यश्च वो नमो[12] नमः कुलालेभ्यः कर्मारेभ्यश्च वो नमो[13] नमः पुञ्जिष्टेभ्यो निषादेभ्यश्च वो नमो[14] नम इषुकृद्भ्यो धन्वकृद्भ्यश्च वो नमो[15] नमो मृगयुभ्यः श्वनिभ्यश्च वो नमो[16] नमः श्वभ्यः श्वपतिभ्यश्च ( २ ) वो नमः[17] ॥ ( रथेभ्यः, श्वपतिभ्यश्च, द्वे च ) ॥ ४ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ।

नमो भवाय च रुद्राय च[1] नमः शर्वाय च पशुपतये च[2] नमो नीलग्रीवाय च शितिकण्ठाय च[3] नमः कपर्दिने च व्युप्तकेशाय च[4] नमः सहस्राक्षाय च शतधन्वने च[5] नमो गिरिशाय च शिपिविष्टाय च[6] नमो मीढुष्टमाय चेषुमते च[7] नमो ह्रस्वाय च वामनाय च[8] नमो बृहते च वर्षीयसे च[9] नमो वृद्धाय च संवृध्वने च[10] (१) नमो अग्रियाय च प्रथमाय च[11] नम आशवे चाजिराय च[12] नमः शीघ्रियाय च शीभ्याय च[13] नम ऊर्म्याय चावस्वन्याय च[14] नमः स्रोतस्याय च द्वीप्याय च[15] ॥ ( संवृध्वने च, पञ्चविंशतिश्च ) ॥ ५ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ॥

नमो ज्येष्ठाय च कनिष्ठाय च[1] नमः पूर्वजाय चापरजाय च[2] नमो मध्यमाय चापगल्भाय च[3] नमो जघन्याय च बुध्नियाय च[4] नमः सोभ्याय च प्रतिसर्याय च[5] नमो याम्याय च क्षेम्याय

चँ नम उर्व्र्याय च खल्याय चँ नमः श्लोक्याय चावसान्याय चँ नमो वन्याय च कक्ष्याय चँ नमः श्रवाय च प्रतिश्रवाय चँ (१) नम आशुषेणाय चाऽऽशुरथाय चँ नमः शूराय चावभिन्दते चँ नमो वर्मिणे च वरूथिने चँ नमो बिल्मिने च कवचिने चँ नमः श्रुताय च श्रुतसेनाय चँ ॥ ( प्रतिश्रवाय च, पञ्चविंशतिश्च ) ॥ ६ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ॥

नमो दुन्दुभ्याय चाऽऽहनन्याय चँ नमो धृष्णवे च प्रमृशाय चँ नमो दूताय च प्रहिताय चँ नमो निषङ्गिणे चेषुधिमते चँ नमस्तीक्ष्णेषवे चाऽऽयुधिने चँ नमः स्वायुधाय च सुधन्वने चँ नमः स्रुत्याय च पथ्याय चँ नमः काट्याय च नीप्याय चँ नमः सूद्याय च सरस्याय चँ नमो नाद्याय च वैशन्ताय चँ (१) नमः कूप्याय चावट्याय चँ नमो वर्ष्याय चावर्ष्याय चँ नमो मेघ्याय च विद्युत्याय चँ नम ईध्रियाय चाऽऽतप्याय चँ नमो वात्याय च रेष्मियाय चँ नमो वास्तव्याय च वास्तुपाय चँ ॥ ( वैशन्ताय च त्रिंशच्च ) ॥ ७ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ॥

नमः सोमाय च रुद्राय चँ नमस्ताम्राय चारुणाय चँ नमः शङ्गाय च पशुपतये चँ नम उग्राय च भीमाय चँ नमो अग्रेवधाय च दूरेवधाय चँ नमो हन्त्रे च हनीयसे चँ नमो वृक्षेभ्यो हरिकेशेभ्यो नमस्ताराय नमः शम्भवे च मयोभवे चँ नमः शङ्कराय च मयस्कराय चँ नमः शिवाय च शिवतराय चँ (१) नमस्तीर्थ्याय च कूल्याय चँ नमः पार्याय चावार्याय चँ नमः प्रतरणाय चोत्तरणाय चँ नम आतार्याय चाऽऽलाद्याय चँ नमः शष्प्याय च फेन्याय चँ नमः सिकत्याय च प्रवाह्याय चँ ॥ ( शिवतराय च, त्रिंशच्च ) ॥ ८ ॥

चित्यग्नौ होममन्त्राः ॥ अग्निर्ऋषिः ।

नम इरिण्याय च प्रपथ्याय चँ नमः किꣳशिलाय च क्षयणाय चँ नमः कपर्दिने च पुलस्तये चँ नमो गोष्ठ्याय च गृह्याय चँ नमस्तल्प्याय च गेह्याय चँ नमः काट्याय च गह्वरेष्ठाय चँ नमो ह्रदय्याय च निवेष्प्याय चँ नमः पाꣳसव्याय च रजस्याय चँ नमः शुष्क्याय च हरित्याय चँ नमो लोप्याय चोलप्याय चँ (१) नम ऊर्व्याय च सूर्म्याय च चँ नमः पर्ण्याय च पर्णशद्याय चँ नमोऽपगुरमाणाय चाभिघ्नते चँ नम आक्खिदते च प्रक्खिदते चँ नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यो नमो विक्षीणकेभ्यो *- नमो विचिन्वत्केभ्यो *- नम आनिर्हतेभ्यो *- नम आमीवत्केभ्यः *- ॥ ( उलप्याय च त्रयस्त्रिꣳशच्च ) ॥ ९ ॥

---

( ९।१६ ) देवा... येभ्यः । १६-१९

❀

चित्यग्नौ होममन्त्राः ॥ १ आस्तारपंक्ति; २,११-१२ अनुष्टुप्; ३-६ जगती; ७-९ त्रिष्टुप्; १० यवमध्या महाबृहती । अग्निर्ऋषिः ।

द्रापे अन्धसस्पते दरिद्रन्नीललोहित ।
एषां पुरुषाणामेषां पशूनां मा भेर्माऽरो मो एषां किं चनाऽऽममत् ॥
या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी ।
शिवा रुद्रस्य भेषजी तया नो मृड जीवसे[२] ॥
इमाꣳ रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतिम् ।
यथा नः शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मि-( १ )-न्ननातुरम्[३] ॥
मृडा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायजे पिता तदश्याम तव रुद्र प्रणीतौ[४] ॥
मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत मातरं प्रिया मा नस्तनुवो ( २ ) रुद्र रीरिषः ॥
मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेम ते[६] ॥
आरात् ते गोघ्न उत पूरुषघ्ने क्षयद्वीराय सुम्नमस्मे ते अस्तु ।
रक्षा च नो अधि च देव ब्रूह्यधा च नः शर्म यच्छ द्विबर्हाः[७] ॥
स्तुहि ( ३ ) श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे रुद्र स्तवानो अन्यं ते अस्मन्नि वपन्तु सेनाः[८] ॥
परि णो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥
मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधं निधाय कृत्तिं वसान आ चर पिनाकं ( ४ ) बिभ्रदा गहि[१०] ॥
विकिरिद विलोहित नमस्ते अस्तु भगवः । यास्ते सहस्रꣳ हेतयोऽन्यमस्मन्नि वपन्तु ताः[११] ॥
सहस्राणि सहस्रधा बाहुवोस्तव हेतयः । तासामीशानो भगवः पराचीना मुखा कृधि[१२] ॥
( अस्मिꣳ,-स्तनुवः, स्तुहि, पिनाकं,-मेकान्नत्रिꣳशच्च ) ॥ १० ॥

चित्यग्नौ होममन्त्राः ॥ १-१० अनुष्टुप् । अग्निर्ऋषिः ।

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि[१] ॥
अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि[२] *- ॥

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः[३]*— ॥
नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः*— ॥
ये वृक्षेषु सस्पिञ्जरा नीलग्रीवा विलोहिताः*— ॥
ये भूतानामधिपतयो विशिखासः कपर्दिनः[६] *— ॥
ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान्*— ॥
ये पथां पथिरक्षय ऐलबृदा यव्युधः[८] *-- ॥
ये तीर्थानि ( १ ) प्रचरन्ति सृकावन्तो निषङ्गिणः[९] *-- ॥
य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे[१०] ॥
तेषाꣳ सहस्रयोजनेऽव धन्वानि तन्मसि[११] ॥

नमो रुद्रेभ्यो ये पृथिव्यां[१२] *--*येऽन्तरिक्षे[१३] *--*ये दिवि येषामन्नं*--*वातो*--*वर्षमिषवस्तेभ्यो दश प्राचीर्दश दक्षिणा दश प्रतीचीर्दशोदीचीर्दशोर्ध्वास्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च ( २ ) नो द्वेष्टि तं वो जम्भे दधामि[१४] ॥ ( तीर्थानि, यश्च, षट् च ) ॥ ११ ॥

[ नमस्ते २२२। नमो हिरण्यबाहवे ७९। नमः सहमानाय १०३। नम आव्याधिनीभ्यो १०२। नमो भवाय ७५। नमो ज्येष्ठाय ७५। नमो दुन्दुभ्याय ८०। नमः सोमाय ८०। नम इरिण्याय ८३। द्रापे २२९।सहस्राण्ये-१०६। -कादश॥१२३४॥]

[ इति चतुर्थकाण्डे पञ्चमः प्रपाठकः ॥ ५ ॥ ]

## परिषेचनसंस्काराभिधानम् ।

[ अथ षष्ठः प्रपाठकः ॥ ६ ॥ ]

अग्निसंस्कारेषु परिषेचनादि ॥ १ अतिजगती; ३-४ उष्णिक्; ५,८-१०,२१ गायत्री; ६ वर्धमाना, शङ्कुमती वा गायत्री; ७ द्विपदा त्रिष्टुप्; ११-१२ आस्तारपंक्तिः; १८, २०, २२ त्रिष्टुप्; १९ जगती । अग्निर्ऋषिः ।

अश्मन्नूर्जं पर्वते शिश्रियाणां वाते पर्जन्ये वरुणस्य शुष्मे ।
अद्भ्य ओषधीभ्यो वनस्पतिभ्योऽधि सम्भृतां तां न इषमूर्जं धत्त मरुतः सꣳरराणाः
अश्मꣳस्ते क्षुदमुं ते शुगृच्छतु यं द्विष्मः[२] ॥
समुद्रस्य त्वाऽवाकयाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव[३] ॥
हिमस्य त्वा जरायुणाऽग्ने परि व्ययामसि । पावको अस्मभ्यꣳ शिवो भव[४] ॥
उप ( १ ) ज्मन्नुप वेतसेऽवत्तरं नदीष्वा । अग्ने पित्तमपामसि[५] ॥
मण्डूकि ताभिरा गहि सेमं नो यज्ञम् । पावकवर्णꣳ शिवं कृधि[६] ॥
पावक आ चितयन्त्या कृपा । क्षामन् रुरुच उषसो न भानुना[७] ॥
तूर्वन् न यामन्नेतशस्य नू रण आ यो घृणे । न ततृषाणो अजरः[८] ॥

---

( ११।२-१० ) तेषाꣳ सहस्र० ( ११।१२ ) येषामन्नमिषवः... दधामि । ( ११।१३ ) नमो रुद्रेभ्यो०...येषां... इषवस्तेभ्यो...दधामि । ( ११।१४ ) येषां वर्षमिषवस्ते... दधामि ।

अग्ने पावक रोचिषा मन्द्रया देव जिह्वया । आ देवान् ( २ ) वक्षि यक्षि च ॥
स नः पावक दीदिवोऽग्ने देवा२ं इहाऽऽवह । उप यज्ञ२ं हविश्च नः ॥
अपामिदं न्ययन२ं समुद्रस्य निवेशनम् ।
अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्य२ं शिवो भव ॥
नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ।
अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्य२ं शिवो भव ॥
नृषदे वट्--( ३ )--डप्सुषदे वट् वनसदे वट् बर्हिषदे वट् सुवर्विदे वट् ॥
ये देवा देवानां यज्ञिया यज्ञियाना२ं संवत्सरीणमुप भागमासते ।
अहुतादो हविषो यज्ञे अस्मिन्त्स्वयं जुहुध्वं मधुनो घृतस्य ॥
ये देवा देवेष्वधि देवत्वमायन् ये ब्रह्मणः पुरएतारो अस्य ।
येभ्यो नर्ते पवते धाम किं चन न ते दिवो न पृथिव्या अधि स्नुषु ॥
प्राणदा ( ४ ) अपानदा व्यानदाश्चक्षुर्दा वर्चोदा वरिवोदाः ।
अन्यं ते अस्मत् तपन्तु हेतयः पावको अस्मभ्य२ं शिवो भव ॥
अग्निस्तिग्मेन शोचिषा य२ंसद्विश्वं न्यत्रिणम् । अग्निर्नो व२ंसते रयिम् ॥
सैनाऽनीकेन सुविदत्रो अस्मे यष्टा देवा२ं आयजिष्ठः स्वस्ति ।
अदब्धो गोपा उत नः परस्पा अग्ने द्युमदुत रेवद्दिदीहि ॥
( उप, देवान्, वट्, प्राणदा,--श्चतुश्चत्वारि२ंशच्च ) ॥ १ ॥

वैश्वकर्मणहोमः ॥ त्रिष्टुप्; १७ पंक्तिः । अग्निर्ऋषिः ।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता निषसादा पिता नः ।
स आशिषा द्रविणमिच्छमानः परमच्छदो वर आ विवेश ॥
विश्वकर्मा मनसा यद्विहाया धाता विधाता परमोत सन्दृक् ।
तेषामिष्टानि समिषा मदन्ति यत्र सप्तर्षीन् पर एकमाहुः ॥
यो नः पिता जनिता यो विधाता यो नः सतो अभ्या सज्जजान ( १ ) ।
यो देवानां नामधा एक एव त२ं संप्रश्नं भुवना यन्त्यन्या ॥
त आऽयजन्त द्रविण२ं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ता सूर्ता रजसो विमाने ये भूतानि समकृण्वन्निमानि ॥
न तं विदाथ य इदं जजानान्यद् युष्माकमन्तरं भवाति ।
नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥

परो दिवा पर एना (२) पृथिव्या परो देवेभिरसुरैर्गुहा यत् ।
कꣳ स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे[६] ॥
तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छन्त विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधि श्रितम्[७] ॥
विश्वकर्मा ह्यजनिष्ट देव आदिद्गन्धर्वो अभवद् द्वितीयः ।
तृतीयः पिता जनितौषधीना (३)-मपां गर्भं व्यदधात् पुरुत्रा ॥
चक्षुषः पिता मनसा हि धीरो घृतमेने अजनन्नम्नमाने ।
यदेदन्ता अददृꣳहन्त पूर्व आदिद् द्यावापृथिवी अप्रथेताम्[९] ॥
विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः[१०] ॥
किꣳ स्विदासीदधिष्ठानमारम्भणं कतमत् स्वित् किमासीत् ।
यदी भूमिं जनयन् (४) विश्वकर्मा वि द्यामौर्णोन्महिना विश्वचक्षाः[११] ॥
किꣳ स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः ।
मनीषिणो मनसः पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन्[१२] ॥
या ते धामानि परमाणि याऽवमा या मध्यमा विश्वकर्मन्नुतेमा ।
शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तनुवं जुषाणः[१३] ॥
वाचस्पतिं विश्वकर्माणमूतये (५) मनोयुजं वाजे अद्या हुवेम ।
स नो नेदिष्ठा हवनानि जोषते विश्वशम्भूरवसे साधुकर्मा[१४] ॥
विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व तनुवं जुषाणः ।
मुह्यन्त्वन्ये अभितः सपत्ना इहास्माकं मघवा सूरिरस्तु[१५] ॥
विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम् ।
तस्मै विशः समनमन्त पूर्वीरयमुग्रो विहव्यो यथाऽसत्[१६] ॥
समुद्राय वयुनाय सिन्धूनां पतये नमः (६) ।
नदीनाꣳ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳ हविः[१७] ॥
( जज्ञानै,-नौ,-षधीनां, जनयं,-न्नूतयें, नमो, नव च ) ॥ २ ॥

अग्निप्रणयनम् ॥ १-४,१२, १४-१५ अनुष्टुप्; ६,९-११ त्रिष्टुप्, ५ विराट्; ७ विराड्रूपा; १३ द्विपदा त्रिष्टुप् । अग्निर्ऋषिः।
उदेनमुत्तरां नयाग्ने घृतेनाऽऽहुत । रायस्पोषेण सꣳ सृज प्रजया च धनेन च ॥
इन्द्रेमं प्रतरां कृधि सजातानामसद्वशी । समेनं वर्चसा सृज देवेभ्यो भागधा असत् ॥

यस्य कुर्मो हविर्गृहे तमग्ने वर्धया त्वम् । तस्मै देवा अधि ब्रवन्नयं च ब्रह्मणस्पतिः[३] ॥
उदु त्वा विश्वे देवा (१) अग्ने भरन्तु चित्तिभिः ।
स नो भव शिवतमः सुप्रतीको विभावसुः ॥
पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरपामतिं दुर्मतिं बाधमानाः ।
रायस्पोषे यज्ञपतिमाभजन्तीः[५] ॥
रायस्पोषे अधि यज्ञो अस्थात् समिद्धे अग्नावधि मामहानः ।
उक्थपत्र ईड्यो गृभीतस्तप्तं घर्मं परिगृह्यायजन्त[६] ॥
ऊर्जा यद्यज्ञमशमन्त देवा दैव्याय धर्त्रे जोष्ट्रे ।
देवश्रीः श्रीमणाः शतपयाः (२) परिगृह्य देवा यज्ञमायन्[७] ॥
सूर्यरश्मिर्हरिकेशः पुरस्तात् सविता ज्योतिरुदयाँ अजस्रम् ।
तस्य पूषा प्रसवे याति देवः सम्पश्यन् विश्वा भुवनानि गोपाः ॥
देवा देवेभ्यो अध्वर्यन्तो अस्थुर्वीतँ शमित्रे शमिता यजध्यै ।
तुरीयो यज्ञो यत्र हव्यमेति ततः पावका आशिषो नो जुषन्ताम्[९] ॥
विमान एष दिवो मध्य आस्त आपप्रिवान् रोदसी अन्तरिक्षम् ।
स विश्वाचीरभि (३) चष्टे घृताचीरन्तरा पूर्वमपरं च केतुम्[१०] ॥
उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुरा विवेश ।
मध्ये दिवो निहितः पृश्निरश्मा वि चक्रमे रजसः पात्यन्तौ[११] ॥
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमँ रथीनां वाजानाँ सत्पतिं पतिम्[१२] ॥
सुम्नहूर्यज्ञो देवाँ आ च वक्षद्यक्षदग्निर्देवो देवाँ आ च वक्षत्[१३] ॥
वाजस्य (४) मा प्रसवेनोद्ग्राभेणोदग्रभीत् । अथा सपत्नाँ इन्द्रो मे निग्राभेणाधराँ अकः[१४] ॥
उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् । अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम्[१५] ॥
( विश्वे देवाः; शतपया, अभि , वाजस्य, षड्विँशतिश्च ) ॥ ३ ॥

अग्निप्रणयनाङ्गमप्रतिरथसूक्तम् ॥ त्रिष्टुप्; १३, १५ अनुष्टुप् । अग्निर्ऋषिः ।

आशुः शिशानो वृषभो न युध्मो घनाघनः क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत् साकमिन्द्रः[१] ॥
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा[२] ॥

स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन ।
सꣳसृष्टजित् सोमपा बाहुशर्ध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता[३] ॥
बृहस्पते परि दीया ( १ ) रथेन रक्षोहाऽमित्राꣳ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्[४] ॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायोऽनु सꣳ रभध्वम्[५] ॥
बलविज्ञायः स्थविरः प्रवीरः सहस्वान् वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित्[६] ॥
अभि गोत्राणि सहसा गाहमानोऽदायो ( २ ) वीरः शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्र युत्सु[७] ॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे[८] ॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्[९] ॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ( ३ ) ।
अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु[१०] ॥
उद्धर्षय मघवन्नायुधान्युत् सत्वनां मामकानां महाꣳसि ।
उद् वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः[११] ॥
उप प्रेत जयता नरः स्थिरा वः सन्तु बाहवः ।
इन्द्रो वः शर्म यच्छत्वनाधृष्या यथाऽसथ[१२] ॥
अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिता ।
गच्छामित्रान् प्र ( ४ ) विश मैषां कं चनोच्छिषः[१३] ॥
मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिऽवस्ताम् ।
उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः[१४] ॥
यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ।
इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु[१५] ॥

( दीया,-दायो, जयन्तु, प्र, चत्वारिꣳशच्च ) ॥ ४ ॥

चित्यामग्निस्थापनादिमारुतहोमान्तम् ॥ १,५-७,१०,१२ त्रिष्टुप्; २, ४ अनुष्टुप्; ३ पुरस्ताद्बृहती; ११ विराट्; १५-१९ आभिकृतिः । अग्निर्ऋषिः ।

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरोअग्निर्भवेह ।
विश्वा आशा दीद्यानो वि भाह्यूर्जं नो धेहि द्विपदे चतुष्पदे[१] ॥
क्रमध्वमग्निना नाकमुख्यꣳ हस्तेषु बिभ्रतः ।
दिवः पृष्ठꣳ सुवर्गत्वा मिश्रा देवेभिराध्वम्[२] ॥
पृथिव्या अहमुदन्तरिक्षमाऽरुहमन्तरिक्षाद् दिवमाऽरुहम् ।
दिवो नाकस्य पृष्ठात् सुवर्ज्योतिरगा-( १ )--महम्[३] ॥
सुवर्यन्तो नापेक्षन्त आ द्याꣳ रोहन्ति रोदसी ।
यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिरे[४] ॥
अग्ने प्रेहि प्रथमो देवयतां चक्षुर्देवानामुत मर्त्यानाम् ।
इयक्षमाणा भृगुभिः सजोषाः सुवर्यन्तु यजमानाः स्वस्ति ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेकꣳ समीची ।
द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाः ॥
अग्ने सहस्राक्ष ( २ ) शतमूर्धञ्छतं ते प्राणाः सहस्रमपानाः ।
त्वꣳ साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय स्वाहा[७] ॥
सुपर्णोऽसि गरुत्मान् पृथिव्याꣳ सीद पृष्ठे पृथिव्याः सीद भासाऽन्तरिक्षमा पृण ज्योतिषा दिवमुत्तभान तेजसा दिश उद् दृꣳह ॥
आजुह्वानः सुप्रतीकः पुरस्तादग्ने स्वां योनिमा सीद साध्या ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा ( ३ ) यजमानश्च सीदत ॥
प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
त्वाꣳ शश्वन्त उप यन्ति वाजाः[११] ॥
विधेम ते परमे जन्मन्नग्ने विधेम स्तोमैरवरे सधस्थे ।
यस्माद्योनेरुदारिथा यजे तं प्र त्वे हवीꣳषि जुहुरे समिद्धे[१२] ॥
ताꣳ सवितुर्वरेण्यस्य चित्रामाऽहं वृणे सुमतिं विश्वजन्याम् ।
यामस्य कण्वो अदुहत् प्रपीनाꣳ सहस्रधारां (४) पयसा महीं गाम्[१३] ॥
सप्त ते अग्ने समिधः सप्त जिह्वाः सप्तर्षयः सप्त धाम प्रियाणि ।
सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरा पृणस्वा घृतेन[१४] ॥

ईदृङ् चान्यादृङ् चैतादृङ् च प्रतिदृङ् च मितश्च सम्मितश्च सभराः ॥
शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माꣳश्च सत्यश्चर्तपाश्चात्यꣳहाः (५) ॥
ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्चान्त्यमित्रश्च दूरेअमित्रश्च गणः ॥
ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च धर्ता च विधर्ता च विधारयः ॥
ईदृक्षास एतादृक्षास ऊ षु णः सदृक्षासः प्रतिसदृक्षास एतन ।
मितासश्च सम्मितासश्च न ऊतये सभरसो मरुतो यज्ञे अस्मि—
—न्निन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानो (६) यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मान एवमिमं यजमानं दैवीश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु ॥
( अगाः, सहस्राक्ष, देवाः, सहस्रधारा,-मत्यꣳहा, अनुवर्त्मानः, षोडश च ) ॥ ५ ॥

अश्वमेधकर्तुः कवचादिसन्नाहः ॥ त्रिष्टुप्; ६ जगती; १२-१३ अनुष्टुप् । विश्वेदेवा ऋषयः ।

जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे ।
अनाविद्धया तनुवा जय त्वꣳ स त्वा वर्मणो महिमा पिपर्तु ॥
धन्वना गा धन्वनाऽऽजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥
वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताऽधि धन्वन् (१) ज्या इयꣳ समने पारयन्ती ॥
ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून् विध्यताꣳ संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥
बह्वीनां पिता बहुरस्य पुत्रश्चिश्चा कृणोति समनाऽवगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥
रथे तिष्ठन् नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः ।
अभीशूनां महिमानं (२) पनायत मनः पश्चादनु यच्छन्ति रश्मयः ॥
तीव्रान् घोषान् कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्तः ।
अवक्रामन्तः प्रपदैरमित्रान् क्षिणन्ति शत्रूꣳरनपव्ययन्तः ॥
रथवाहनꣳ हविरस्य नाम यत्राऽऽयुधं निहितमस्य वर्म ॥
तत्रा रथमुप शग्मꣳ सदेम विश्वाहा वयꣳ सुमनस्यमानाः ॥
स्वादुषꣳसदः पितरो वयोधाः कृच्छ्रेश्रितः शक्तीवन्तो गभीराः ।
चित्रसेना इषुबला अमृध्राः सतोवीरा उरवो व्रातसाहाः ॥

*

ब्राह्मणासः ( ३ ) पितरः सोम्यासः शिवे नो द्यावापृथिवी अनेहसा ।
पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नो अघशंसस ईशत ॥
सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता ।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन् ॥
ऋजीते परि वृङ्ग्धि नोऽश्मा भवतु नस्तनूः ।
सोमो अधि ब्रवीतु नोऽदितिः ( ४ ) शर्म यच्छतु ॥
आ जङ्घन्ति सान्वेषां जघनां उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥
अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः ।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमांसं परि पातु विश्वतः ॥
वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः सन्नद्धो असि वीडयस्वाऽऽस्थाता ते जयतु जेत्वानि ॥
दिवः पृथिव्याः पर्यो-( ५ )-ज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥
इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
सेमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥
उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूरा--( ६ )--द्दवीयो अप सेध शत्रून् ॥
आ क्रन्दय बलमोजो न आ धा निष्टनिहि दुरिता बाधमानः ।
अप प्रोथ दुन्दुभे दुच्छुनां इत इन्द्रस्य मुष्टिरसि वीडयस्व ॥
आऽमूरज प्रत्यावर्तयेमाः केतुमद् दुन्दुभिर्वावदीति ।
समश्वपर्णाश्चरन्ति नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥
( धन्वन्, महिमानं, ब्राह्मणासोऽदितिः, परि, दूरा,- देकचत्वारिंशच्च ) ॥ ६ ॥

अश्वस्तोमीया होममन्त्राः ॥ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

यदक्रन्दः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥
यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट ॥

असि यमो अस्यादित्यो अर्वन्नसि त्रितो गुह्येन व्रतेन ।
असि सोमेन समया विपृक्त (१) आहुस्ते त्रीणि दिवि बन्धनानि[३] ॥
त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तः समुद्रे ।
उतेव मे वरुणश्छन्त्स्यर्वन् यत्रा त आहुः परमं जनित्रम्[४] ॥
इमा ते वाजिन्नवमार्जनानीमा शफानाꣳ सनितुर्निधाना ।
अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षन्ति गोपाः ॥
आत्मानं ते मनसाऽऽरादजानामवो दिवा (२) पतयन्तं पतङ्गम् ।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि[६] ॥
अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानडादिद् ग्रसिष्ठ ओषधीरजीगः ॥
अनु त्वा रथो अनु मर्यो अर्वन्ननु गावो ऽनु भगः कनीनाम् ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं (३) ते[८] ॥
हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत् ।
देवा इदस्य हविरद्यमायन् यो अर्वन्तं प्रथमो अध्यतिष्ठत् ॥
ईर्मान्तासः सिलिकमध्यमासः सꣳ शूरणासो दिव्यासो अत्याः ।
हꣳसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः[१०] ॥
तव शरीरं पतयिष्ण्वर्वन् तव चित्तं वात इव ध्रजीमान् ।
तव शृङ्गाणि विष्ठिता पुरुत्राऽरण्येषु जर्भुराणा चरन्ति[११] ॥
उप (४) प्रागाच्छसनं वाज्यर्वा देवद्रीचा मनसा दीध्यानः ।
अजः पुरो नीयते नाभिरस्यानु पश्चात् कवयो यन्ति रेभाः[१२] ॥
उप प्रागात् परमं यत् सधस्थमर्वाꣳ अच्छा पितरं मातरं च ।
अद्या देवान् जुष्टतमो हि गम्या अथाऽऽशास्ते दाशुषे वार्याणि[१३] ॥
( विपृक्तो, दिवा, वीर्यं,-मुपै,-कान्नचत्वारिꣳशच्च ) ॥ ७ ॥

अश्वस्तोमीया होममन्त्राः ॥ त्रिष्टुप्; ३,६ जगती । विश्वेदेवा ऋषयः ॥

मा नो मित्रो वरुणो अर्यमाऽऽयुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि[१] ॥
यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयन्ति ।
सुप्राङजो मेम्यद् विश्वरूप इन्द्रापूष्णोः प्रियमप्येति पाथः[२] ॥

एष च्छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियं यत् पुरोडाशमर्वता त्वष्टे-( १ )-देनꣳसौश्रवसाय जिन्वति ॥
यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयन्ति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥
होताऽध्वर्युरावया अग्निमिन्धो ग्रावग्राभ उत शꣳस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वम् ॥
यूपव्रस्का उत ये यूपवाहाश्चषालं ये अश्वयूपाय तक्षति ।
ये चार्वते पचनꣳ सम्भरन्त्युतो ( २ ) तेषामभिगूर्तिर्न इन्वतु ॥
उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम् ॥
यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमास्ये तृणꣳ सर्वा ता ते अपि देवेष्वस्तु ॥
यदश्वस्य क्रविषो ( ३ ) मक्षिकाऽऽश यद्वा स्वरौ स्वधितौ रिप्तमस्ति ।
यद्धस्तयोः शमितुर्यन्नखेषु सर्वा ता ते अपि देवेष्वस्तु ॥
यदूवध्यमुदरस्यापवाति य आमस्य क्रविषो गन्धो अस्ति ।
सुकृता तच्छमितारः कृण्वन्तूत मेधꣳ शृतपाकं पचन्तु ॥
यत् ते गात्रादग्निना पच्यमानादभि शूलं निहतस्यावधावति ।
मा तद्भूम्यामा श्रिष-( ४ )-न्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥
( इ-दुतो, क्रविषः, श्रिषत्, सप्त च ) ॥ ८ ॥

अश्वस्तोत्रमन्त्राः ॥ त्रिष्टुप्; ३ मध्येज्योतिः । विश्वेदेवा ऋषयः ।

ये वाजिनं परिपश्यन्ति पक्वं य ईमाहुः सुरभिर्निर्हरेति ।
ये चार्वतो माꣳसभिक्षामुपासत उतो तेषामभिगूर्तिर्न इन्वतु ॥
यन्नीक्षणं माꣳस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि ।
ऊष्मण्याऽपिधाना चरूणामङ्काः सूनाः परि भूषन्त्यश्वम् ॥
निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः ।
यच्च पपौ यच्च घासिं ( १ ) जघास सर्वा ता ते अपि देवेष्वस्तु ॥
मा त्वाऽग्निर्ध्वनयिद्धूमगन्धिर्मोखा भ्राजन्त्यभि विक्त जघ्रिः ।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्यश्वम् ॥

यदश्वाय वासं उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।
सन्दानमर्वन्तं पड्वीशं प्रिया देवेष्वा यामयन्ति ॥
यत् ते सादे महसा शूकृतस्य पार्ष्णिया वा कशया (२) वा तुतोद ।
स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥
चतुस्त्रिꣳशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति ।
अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त ॥
एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथर्तुः ।
या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ ॥
मा त्वा तपत् (३) प्रिय आत्माऽपियन्तं मा स्वधितिस्तनुव आ तिष्ठिपत् ते ।
मा ते गृध्नुरविशस्ताऽतिहाय छिद्रा गात्राण्यसिना मिथू कः ॥
न वा उवेतान्म्रियसे न रिष्यासि देवाꣳ इदेषि पथिभिः सुगेभिः ।
हरी ते युञ्जा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य ॥
सुगव्यं नो वाजी स्वश्वियं पुꣳसः पुत्राꣳ उत विश्वापुषꣳ रयिम् (४) ।
अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनताꣳ हविष्मान् ॥

(घासिं, कशया, तप,-द्रयिं, नव च) ॥ ९ ॥

[अश्मन् २४४। य ३०९। उ- २२६।-द्राप्सुः २४०। प्राचीं ३१६। जीमूतस्य ३४१। य-२३९।-न्मा २०७। ये २०९। नव च ॥ २३३१ ॥]

[॥ इति चतुर्थकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥

वसोर्धारादिशिष्टसंस्काराभिधानम् ।

[अथ सप्तमः प्रपाठकः ॥ ७ ॥]

(१-११) वसोर्धारा होममन्त्राः ॥ १ गायत्री । अग्निर्ऋषिः ।

अग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् ॥

वाजश्च मे प्रसवश्च मे प्रयतिश्च मे प्रसितिश्च मे धीतिश्च मे क्रतुश्च मे स्वरश्च मे श्लोकश्च मे श्रावश्च मे श्रुतिश्च मे ज्योतिश्च मे सुवश्च मे प्राणश्च मेऽपान-(१)-श्च मे व्यानश्च मेऽसुश्च मे चित्तं च म आधीतं च मे वाक् च मे मनश्च मे चक्षुश्च मे श्रोत्रं च मे दक्षश्च मे बलं च म ओजश्च मे सहश्च म आयुश्च मे जरा च म आत्मा च मे तनूश्च मे (२) शर्म च मे वर्म च मेऽङ्गानि च मेऽस्थानि च मे परूꣳषि च मे शरीराणि च मे ॥ (अपान,-स्तनूश्च मे, ऽष्टादश च) ॥ १ ॥

ज्यैष्ठ्यं च म आधिपत्यं च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे वरिमा च मे प्रथिमा च मे वर्ष्मा च मे द्राघुया च मे वृद्धं च मे वृद्धिश्च मे सत्यं च मे श्रद्धा च

मे जग॑च्च (१) मे धनं॑ च मे वश॑श्च मे त्विषि॑श्च मे क्रीडा च॑ मे मोद॑श्च मे जा॒तं च॑ मे जनि॒ष्यमा॑णं च मे सू॒क्तं च॑ मे सुकृ॒तं च॑ मे वि॒त्तं च॑ मे वेद्यं॑ च मे भू॒तं च॑ मे भवि॒ष्यच्च॑ मे सु॒गं च॑ मे सु॒पथं॑ च म ऋ॒द्धं च॑ म ऋद्धि॑-(२)-श्च मे क्लृ॒प्तं च॑ मे॒ क्लृप्ति॑श्च मे म॒तिश्च॑ मे सुम॒तिश्च॑ मे ॥
(जग॑च्च,-र्द्धि,-श्चतु॑र्दश) ॥२॥

शं च॑ मे॒ मय॑श्च मे प्रि॒यं च॑ मेऽनुका॒मश्च॑ मे॒ काम॑श्च मे सौमन॒सश्च॑ मे भ॒द्रं च॑ मे॒ श्रेय॑श्च मे॒ वस्य॑श्च मे॒ यश॑श्च मे॒ भग॑श्च मे॒ द्रवि॑णं च मे य॒न्ता च॑ मे ध॒र्ता च॑ मे क्षेम॑श्च मे॒ धृति॑श्च मे॒ विश्वं॑ च (१) मे॒ मह॑श्च मे सं॒विच्च॑ मे॒ ज्ञात्रं॑ च मे॒ सूश्च॑ मे प्र॒सूश्च॑ मे॒ सीरं॑ च मे ल॒यश्च॑ म ऋ॒तं च॑ मेऽमृ॒तं च मेऽय॒क्ष्मं च॒ मेऽना॑मयच्च मे जी॒वातु॑श्च मे दीर्घायु॒त्वं च॑ मेऽनमि॒त्रं च॒ मेऽभ॑यं च मे सु॒गं च॑ मे॒ शय॑नं (२) च मे सू॒षा च॑ मे सु॒दिनं॑ च मे ॥ (विश्वं॑ च, शय॑न,-म॒ष्टौ च॑) ॥ ३ ॥

ऊर्क् च॑ मे सू॒नृता॑ च मे॒ पय॑श्च मे॒ रस॑श्च मे घृ॒तं च॑ मे॒ मधु॑ च मे॒ सग्धि॑श्च मे॒ सपी॑तिश्च मे कृ॒षिश्च॑ मे॒ वृष्टि॑श्च मे॒ जैत्रं॑ च म॒ औद्भि॑द्यं च मे र॒यिश्च॑ मे॒ राय॑श्च मे पु॒ष्टं च॑ मे॒ पुष्टि॑श्च मे वि॒भु च॑ (१) मे प्र॒भु च॑ मे ब॒हु च॑ मे॒ भूय॑श्च मे पू॒र्णं च॑ मे पू॒र्णत॑रं च॒ मेऽक्षि॑तिश्च मे॒ कूय॑वाश्च॒ मेऽन्नं॒ च॒ मेऽक्षु॑च्च मे व्री॒हय॑श्च मे॒ यवा॑श्च मे॒ माषा॑श्च मे॒ तिला॑श्च मे मु॒द्गाश्च॑ मे ख॒ल्वा॑श्च मे गो॒धूमा॑श्च मे म॒सुरा॑ (२) श्च मे प्रि॒यङ्ग॑वश्च॒ मेऽण॑वश्च मे श्या॒माका॑श्च मे नी॒वारा॑श्च मे ॥ (वि॒भु च॑ म॒सुरा,- श्चतु॑र्दश च) ॥ ४ ॥

अश्मा॑ च मे॒ मृत्ति॑का च मे गि॒रय॑श्च मे॒ पर्व॑ताश्च मे॒ सिक॑ताश्च मे॒ वन॒स्पत॑यश्च मे॒ हिर॑ण्यं च॒ मेऽय॑श्च मे॒ सीसं॑ च मे॒ त्रपु॑श्च मे श्या॒मं च॑ मे लो॒हं च॑ मेऽग्निश्च॑ म॒ आप॑श्च मे वी॒रुध॑श्च म॒ ओष॑धयश्च मे कृष्टप॒च्यं च॑ (१) मेऽकृष्टप॒च्यं च॑ मे ग्रा॒म्याश्च॑ मे प॒शव॑ आर॒ण्याश्च॑ य॒ज्ञेन॑ कल्पन्तां वि॒त्तं च॑ मे वित्ति॑श्च मे भू॒तं च॑ मे॒ भूति॑श्च मे॒ वसु॑ च मे वस॒तिश्च॑ मे॒ कर्म॑ च मे॒ शक्ति॑श्च॒ मेऽर्थ॑श्च म॒ एम॑श्च म॒ इति॑श्च मे॒ गति॑श्च मे ॥ (कृ॒ष्टप॒च्यं चा,- ष्टाच॑त्वारिꣳशच्च) ॥५॥

अ॒ग्निश्च॑ म॒ इन्द्र॑श्च मे॒ सोम॑श्च म॒ इन्द्र॑श्च मे सवि॒ता च॑ म॒ इन्द्र॑श्च मे॒ सर॑स्वती च म॒ इन्द्र॑श्च मे पू॒षा च॑ म॒ इन्द्र॑श्च मे॒ बृह॒स्पति॑श्च म॒ इन्द्र॑श्च मे मि॒त्रश्च॑ म॒ इन्द्र॑श्च मे॒ वरु॑णश्च म॒ इन्द्र॑श्च मे॒ त्वष्टा॑ च (१) म॒ इन्द्र॑श्च मे धा॒ता च॑ म॒ इन्द्र॑श्च मे॒ विष्णु॑श्च म॒ इन्द्र॑श्च मे॒ऽश्विनौ॑ च म॒ इन्द्र॑श्च मे म॒रुत॑श्च म॒ इन्द्र॑श्च मे॒ विश्वे॑ च मे दे॒वा इन्द्र॑श्च मे पृथि॒वी च॑ म॒ इन्द्र॑श्च मे॒ऽन्तरि॑क्षं च म॒ इन्द्र॑श्च मे॒ द्यौश्च॑ म॒ (२) इन्द्र॑श्च मे॒ दिश॑श्च म॒ इन्द्र॑श्च मे मू॒र्धा च॑ म॒ इन्द्र॑श्च मे प्र॒जाप॑तिश्च म॒ इन्द्र॑श्च मे । (त्वष्टा॑ च, द्यौश्च॑ म॒, एक॑विꣳशतिश्च) ॥६॥

अ॒ꣳशुश्च॑ मे र॒श्मिश्च॒ मेऽदा॑भ्यश्च॒ मेऽधि॑पतिश्च म उपा॒ꣳशुश्च॑ मेऽन्तर्या॒मश्च॑ म ऐन्द्रवाय॒वश्च॑ मे मैत्रावरु॒णश्च॑ म आश्वि॒नश्च॑ मे प्रतिप्र॒स्थान॑श्च मे शु॒क्रश्च॑ मे म॒न्थी च॑ म आग्रय॒णश्च॑ मे वैश्वदे॒वश्च॑ मे ध्रु॒वश्च॑ मे वैश्वान॒रश्च॑ म ऋतुग्र॒हाश्च॑ (१) मेऽतिग्रा॒ह्या॑श्च म ऐन्द्रा॒ग्नश्च॑ मे वैश्वदे॒वश्च॑ मे मरुत्व॒तीया॑श्च मे

माहेन्द्रश्च म आदित्यश्च मे सावित्रश्च मे सारस्वतश्च मे पौष्णश्च मे पात्नीवतश्च मे हारियोजनश्च मे ॥
( ऋतुग्रहाश्च, चतुस्त्रिंशच्च ) ॥ ७ ॥

इध्मश्च मे बर्हिश्च मे वेदिश्च मे धिष्णियाश्च मे स्रुचश्च मे चमसाश्च मे ग्रावाणश्च मे स्वरवश्च म उपरवाश्च मेऽधिषवणे च मे द्रोणकलशश्च मे वायव्यानि च मे पूतभृच्च म आधवनीयश्च म आग्नीध्रं च मे हविर्धानं च मे गृहाश्च ( १ ) मे सदश्च मे पुरोडाशाश्च मे पचताश्च मेऽवभृथश्च मे स्वगाकारश्च मे ॥
( गृहाश्च, षोडश च ) ॥ ८ ॥

अग्निश्च मे घर्मश्च मेऽर्कश्च मे सूर्यश्च मे प्राणश्च मेऽश्वमेधश्च मे पृथिवी च मेऽदितिश्च मे दितिश्च मे द्यौश्च मे शक्वरीरङ्गुलयो दिशश्च मे यज्ञेन कल्पन्तामृक् च मे साम च मे स्तोमश्च मे यजुश्च मे दीक्षा ( १ ) च मे तपश्च म ऋतुश्च मे व्रतं च मेऽहोरात्रयोर्वृष्ट्या बृहद्रथन्तरे च मे यज्ञेन कल्पेताम् ॥ ( दीक्षा, ऽष्टादश च ) ॥ ९ ॥

गर्भाश्च मे वत्साश्च मे त्र्यविश्च मे त्र्यवी च मे दित्यवाट् च मे दित्यौही च मे पञ्चाविश्च मे पञ्चावी च मे त्रिवत्सश्च मे त्रिवत्सा च मे तुर्यवाट् च मे तुर्यौही च मे पष्ठवाच्च मे पष्ठौही च म उक्षा च मे वशा च म ऋषभश्च ( १ ) मे वेहच्च मेऽनड्वांश्च मे धेनुश्च म आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतामपानो यज्ञेन कल्पतां व्यानो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पताꣳ श्रोत्रं यज्ञेन कल्पतां मनो यज्ञेन कल्पतां वाग्यज्ञेन कल्पतामात्मा यज्ञेन कल्पतां यज्ञो यज्ञेन कल्पताम् ॥
( ऋषभश्च, चत्वारिꣳशच्च ) ॥ १० ॥

एका च मे तिस्रश्च मे पञ्च च मे सप्त च मे नव च म एकादश च मे त्रयोदश च मे पञ्चदश च मे सप्तदश च मे नवदश च म एकविꣳशतिश्च मे त्रयोविꣳशतिश्च मे पञ्चविꣳशतिश्च मे सप्तविꣳशतिश्च मे नवविꣳशतिश्च म एकत्रिꣳशच्च मे त्रयस्त्रिꣳशच्च ( १ ) मे चतस्रश्च मेऽष्टौ च मे द्वादश च मे षोडश च मे विꣳशतिश्च मे चतुर्विꣳशतिश्च मेऽष्टाविꣳशतिश्च मे द्वात्रिꣳशच्च मे षट्त्रिꣳशच्च मे चत्वारिꣳशच्च मे चतुश्चत्वारिꣳशच्च मेऽष्टाचत्वारिꣳशच्च मे वाजश्च प्रसवश्चापिजश्च क्रतुश्च सुवश्च मूर्धा च व्यश्नियश्चा-( २ )-ऽऽन्त्यायनश्चान्त्यश्च भौवनश्च भुवनश्चाधिपतिश्च ॥
( त्रयस्त्रिꣳशच्च, व्यश्नियश्चै,-कादश च ) ॥ ११ ॥

वाजप्रसवीयहोमः ॥ १, ३ अनुष्टुप्; २, ४-५, ८ त्रिष्टुप्; ६-७ विराट् । अग्निर्ऋषिः ।

वाजो नः सप्त प्रदिशश्चतस्रो वा परावतः । वाजो नो विश्वैर्देवैर्धनसाताविहावतु ॥
विश्वे अद्य मरुतो विश्व ऊती विश्वे भवन्त्वग्नयः समिद्धाः ।
विश्वे नो देवा अवसा ऽऽ गमन्तु विश्वमस्तु द्रविणं वाजो अस्मे ॥

वाजस्य प्रसवं देवा रथैर्याता हिरण्ययैः । अग्निरिन्द्रो बृहस्पतिर्मरुतः सोमपीतये[३] ॥
वाजेवाजे ऽवत वाजिनो नो धनेषु ( १ ) विप्रा अमृता ऋतज्ञाः
अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैः[४] ॥
वाजः पुरस्तादुत मध्यतो नो वाजो देवा२ ऋतुभिः कल्पयाति ।
वाजस्य हि प्रसवो नन्नमीति विश्वा आशा वाजपतिर्भवेयम्[५] ॥
पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाम् ।
पयस्वतीः प्रदिशः सन्तु मह्यम्[६] ॥
सं मा सृजामि पयसा घृतेन सं मा सृजाम्यप ( २ ) ओषधीभिः । सोऽहं वाज२ सनेयमग्ने[७] ॥
नक्तोषासा समनसा विरूपे धापयेते शिशुमेक२ समीची ।
द्यावा क्षामा रुक्मो अन्तर्वि भाति देवा अग्निं धारयन् द्रविणोदाः ॥
समुद्रोऽसि नभस्वानार्द्रदानुः शम्भूर्मयोभूरभि मा वाहि स्वाहा[९] मारुतोऽसि मरुतां गणः शम्भूर्मयोभूरभि मा वाहि स्वाहा[१०] ऽवस्युरसि दुवस्वाञ्छम्भूर्मयोभूरभि मा ( ३ ) वाहि स्वाहा[११] ॥
( धनेष्व,-पो, मा, द्वे च ) ॥ १२ ॥

अग्नियोगः, पुनश्चितिश्च ॥ त्रिष्टुप्; ३ विराट्स्थाना; ५ शक्करी; ६ जगती; ११, १३ अनुष्टुप् । अग्निर्ऋषिः ।

अग्निं युनज्मि शवसा घृतेन दिव्य२ सुपर्णं वयसा बृहन्तम् ।
तेन वयं पतेम ब्रध्नस्य विष्टप२ सुवो रुहाणा अधि नाक उत्तमे[१] ॥
इमौ ते पक्षावजरौ पतत्रिणो याभ्या२ रक्षा२स्यपह२स्यग्ने ।
ताभ्यां पतेम सुकृतामु लोकं यत्रर्षयः प्रथमजा ये पुराणाः[२] ॥
चिदसि समुद्रयोनिरिन्दुर्दक्षः श्येन ऋतावा ।
हिरण्यपक्षः शकुनो भुरण्युर्महान्त्सधस्थे ध्रुव ( १ ) आ निषत्तः[३] ॥
नमस्ते अस्तु मा मा हि२सीर्विश्वस्य मूर्द्धन्नधि तिष्ठसि श्रितः ।
समुद्रे ते हृदयमन्तरायुर्द्यावापृथिवी भुवनेष्वर्पिते[४] ॥
उद्नो दत्तोदधिं भिन्त दिवः पर्जन्यादन्तरिक्षात् पृथिव्यास्ततो नो वृष्ट्याऽवत ।
दिवो मूर्धाऽसि पृथिव्या नाभिरूर्गपामोषधीनाम् । विश्वायुः शर्म सप्रथा नमस्पथे[५] ॥
येनर्षयस्तपसा सत्र-( २ )-मासतेन्धाना अग्नि२ सुवराभरन्तः ।
तस्मिन्नहं नि दधे नाके अग्निमेतं यमाहुर्मनवः स्तीर्णबर्हिषम्[६] ॥
तं पत्नीभिरनु गच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः ।
नाकं गृह्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः ॥

आ वाचो मध्यमरुहद्भुरण्युरयमग्निः सत्पतिश्चेकितानः ।
पृष्ठे पृथिव्या निहितो दविद्युतदधस्पदं कृणुते (३) ये पृतन्यवः[८] ॥
अयमग्निर्वीरतमो वयोधाः सहस्रियो दीप्यतामप्रयुच्छन् ।
विभ्राजमानः सरिरस्य मध्य उप प्र याहि दिव्यानि धाम[९] ॥
सं प्र च्यवध्वमनु सं प्र याताग्ने पथो देवयानान् कृणुध्वम् ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत[१०] ॥
येना सहस्रं वहसि येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो वह देवयानो य (४) उत्तमः[११] ॥
उद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते स ँ सृजेथामयं च ।
पुनः कृण्व ँस्त्वा पितरं युवानमन्वाता ँसीत् त्वयि तन्तुमेतम्[१२]
अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः । तं जानन्नग्न आ रोहाथा नो वर्धया रयिम्[१३] ॥
( ध्रुवः, सत्रे, कृणुते, यः, सप्तत्रि ँशच्च ) ॥ १३ ॥

विहव्याख्येष्टकोपधानम् ॥ त्रिष्टुप् । अग्निर्ऋषिः ।

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तनुवं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम[१] ॥
मम देवा विहवे सन्तु सर्व इन्द्रावन्तो मरुतो विष्णुरग्निः ।
ममान्तरिक्षमुरु गोपमस्तु मह्यं वातः पवतां कामे अस्मिन्[२] ॥
मयि देवा द्रविणमा यजन्तां मय्याशीरस्तु मयि देवहूतिः ।
दैव्या होतारा वनिषन्त (१) पूर्वेऽरिष्टाः स्याम तनुवा सुवीराः[३] ॥
मह्यं यजन्तु मम यानि हव्याऽऽकूतिः सत्या मनसो मे अस्तु ।
एनो मा नि गां कतमच्चनाहं विश्वे देवासो अधि वोचता मे[४] ॥
देवीः षडुर्वीरुरु णः कृणोत विश्वे देवास इह वीरयध्वम् ।
मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्[५] ॥
अग्निर्मन्युं प्रतिनुदन् पुरस्ता-( २ )-ददब्धो गोपाः परि पाहि नस्त्वम् ।
प्रत्यञ्चो यन्तु निगुतः पुनस्तेऽमैषां चित्तं प्रबुधा वि नेशत्[६] ॥
धाता धातॄणां भुवनस्य यस्पतिर्देव ँ सवितारमभिमातिषाहम् ।
इमं यज्ञमश्विनोभा बृहस्पतिर्देवाः पान्तु यजमानं न्यर्थात्[७] ॥
उरुव्यचा नो महिषः शर्म य ँसदस्मिन् हवे पुरुहूतः पुरुक्षु ।
स नः प्रजायै हर्यश्व मृडयेन्द्र मा ( ३ ) नो रीरिषो मा परा दाः ॥

*

ये नः सपत्ना अप ते भवन्त्विन्द्राग्निभ्यामव बाधामहे तान् ।
वसवो रुद्रा आदित्या उपरिस्पृशं मोग्रं चेत्तारमधिराजमक्रन् ॥
अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः ।
इमं नो यज्ञं विहवे जुषस्वास्य कुर्मो हरिवो मेदिनं त्वा ॥
( वनिषन्त, पुरस्ता, न्मा, त्रिचत्वारिंशच्च ) ॥ १४ ॥

अश्वमेधसम्बन्धियाज्यानुवाक्याः ॥ उपरिष्टाज्ज्योतिर्जगती; ८ पङ्क्तिः; १४ बृहती; २१--२२ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

अग्नेर्मन्वे प्रथमस्य प्रचेतसो यं पाञ्चजन्यं बहवः समिन्धते ।
विश्वस्यां विशि प्रविविशिवांसमीमहे स नो मुञ्चत्वंहसः ॥
यस्येदं प्राणन्निमिषद्यदेजति यस्य जातं जनमानं च केवलम् ।
स्तौम्यग्निं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ॥
इन्द्रस्य मन्ये प्रथमस्य प्रचेतसो वृत्रघ्नः स्तोमा उप मामुपागुः ।
यो दाशुषः सुकृतो हवमुप गन्ता (१) स नो मुञ्चत्वंहसः ॥
यः संग्रामं नयति सं वशी युधे यः पुष्टानि संसृजति त्रयाणि ।
स्तौमीन्द्रं नाथितो जोहवीमि स नो मुञ्चत्वंहसः ॥
मन्वे वां मित्रावरुणा तस्य वित्तं सत्यौजसा दृंहणा यं नुदेथे ।
या राजानं सरथं याथ उग्रा ता नो मुञ्चतमागसः ॥
यो वां रथ ऋजुरश्मिः सत्यधर्मा मिथु श्चरन्तमुपयाति दूषयन् ।
स्तौमि (२) मित्रावरुणा नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥
वायोः सवितुर्विदथानि मन्महे यावात्मन्वद्बिभृतो यौ च रक्षतः ।
यौ विश्वस्य परिभू बभूवतुस्तौ नो मुञ्चतमागसः ॥
उप श्रेष्ठा न आशिषो देवयोर्धर्मे अस्थिरन् ।
स्तौमि वायुं सवितारं नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥
रथीतमौ रथीनामह्व ऊतये शुभं गमिष्ठौ सुयमेभिरश्वैः ।
ययो-(३)-र्वां देवौ देवेष्वनिशितमोजस्तौ नो मुञ्चतमागसः ॥
यदयातं वहतुं सूर्यायास्त्रिचक्रेण संसदमिच्छमानौ ।
स्तौमि देवावश्विनौ नाथितो जोहवीमि तौ नो मुञ्चतमागसः ॥
मरुतां मन्वे अधि नो ब्रुवन्तु प्रेमां वाचं विश्वामवन्तु विश्वे ।
आशून् हुवे सुयमानूतये ते नो मुञ्चन्त्वेनसः ।

ति॒ग्ममा॑यु॒धं वी॑डि॒तꣳ सह॑स्वद्दि॒व्यꣳ शर्धः॑ (४) पृत॑नासु जि॒ष्णु ।
स्तौमि॑ दे॒वान् म॒रुतो॑ नाथि॒तो जो॑हवीमि॒ ते नो॑ मुञ्च॒न्त्वेन॑सः[12] ॥
दे॒वानां॑ मन्वे॒ अधि॑ नो ब्रुवन्तु॒ प्रेमां वाचं॒ विश्वा॑मवन्तु॒ विश्वे॑ ।
आ॒शून् हु॑वे सु॒यमा॑नू॒तये॒ ते नो॑ मुञ्च॒न्त्वेन॑सः[13] ॥
यदि॒दं मा॑ऽभि॒शोच॑ति॒ पौरु॑षेयेण॒ दैव्ये॑न ।
स्तौमि॒ विश्वा॑न् दे॒वान् ना॑थि॒तो जो॑हवीमि॒ ते नो॑ मुञ्च॒न्त्वेन॑सः[14] ॥
अनु॑ नो॒ऽद्यानु॑मति॒[15] *-रन्वि-(५)-द॑नुमते॒ त्वं॑[16] *-वै॑श्वान॒रो न॑ ऊ॒त्या[17] *-पृ॒ष्टो दि॒वि[18] *- ॥
ये अप्र॑थेता॒ममि॑तेभि॒रोजो॑भि॒र्ये प्र॑ति॒ष्ठे अभ॑वतां॒ वसू॑नाम् ।
स्तौमि॒ द्यावा॑पृथि॒वी ना॑थि॒तो जो॑हवीमि॒ ते नो॑ मुञ्चत॒मꣳह॑सः[19] ॥
उर्वी॑ रोद॒सी वरि॑वः कृणो॒तं क्षेत्र॑स्य॒ पत्नी॒ अधि॑ नो ब्रूयातम् ।
स्तौमि॒ द्यावा॑पृथि॒वी ना॑थि॒तो जो॑हवीमि॒ ते नो॑ मुञ्चत॒मꣳह॑सः[20] ॥
यत् ते॑ व॒यं पु॑रुष॒त्रा य॑वि॒ष्ठावि॑द्वाꣳसश्चकृ॒मा क॒च्चना-(६)-ऽऽगः॑ ।
कृ॒धी स्वस्माꣳ अदि॑ते॒रना॑गा॒ व्येनाꣳ॑सि शिश्रथो॒ विष्व॑गग्ने[21] ॥
यथा॑ ह॒ तद्व॑सवो गौ॒र्यं॑ चि॒त् प॒दि षि॒ताममु॑ञ्चता यजत्राः ।
ए॒वा त्वम॒स्मत् प्र मु॑ञ्चा॒व्यꣳह॒ः प्राता॑र्यग्ने प्रत॒रां न॒ आयुः॑[22] ॥
( गन्ता, स्तौमि॒, यथो॒ः, शर्धो॑, ऽनु॑, चन, चतु॑स्त्रिꣳशच्च ) ॥ १५ ॥

[ अग्नाविष्णू ११८ । ज्यैष्ठ्यꣳ ११४ । श-११८ ।-मू-११४।-गेऽस्मा ९८ । ऽग्नि-१२१ ।-रꣳशु-८४ ।-रिधमो ६६।ऽग्नि -६८-गर्भा ९० । एका १११ । वाजो १५२ । ऽग्निं २३७ । ममा-१९३ ।-ऽग्नेः ३३४ ।- पञ्चदश ॥ २०१८ ॥ ]

[ ॥ इति चतुर्थकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥ ]

[ युञ्जानो २२९३ । विष्णो-२४९८ ।-रपाꣳ १८४४ । रश्मि-१८८७ :-र्नमो १२३४ । ऽश्म-२३३१ । अग्नाविष्णू २०१८ । ( सप्त ॥ ७ ॥ १४१०५ ) ]

॥ इति चतुर्थं काण्डं सम्पूर्णम् ॥ ४ ॥

---

( ४।७।१५-१६ ) तै. सं. ३।३।११।११-१२ ( ४।७।१७-१८ ) तै. सं. ११५।११।१,४

# अथ पञ्चमं काण्डम् ।

## उख्याग्निकथनम् ।

[ अथ प्रथमः प्रपाठकः ॥ १ ॥ ]

अभ्र्यादानविधिः ॥ अग्निर्ऋषिः ।

सावित्राणि जुहोति प्रसूत्यै[1] चतुर्गृहीतेन जुहोति चतुष्पादः पशवः पशूनेवाव रुन्धे[2] चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति[3] छन्दाꣳसि देवेभ्योऽपाक्रामन् न वोऽभागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन् पुरोऽनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति छन्दाꣳस्येव तत् प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति[4] यं कामयेत ( १ ) पापीयान्त्स्यादित्येकैकं तस्य जुहुयादाहुतीभिरेवैनमप गृह्णाति पापीयान् भवति यं कामयेत वसीयान्त्स्यादिति सर्वाणि तस्यानुद्रुत्य जुहुयादाहुत्यैवैनमभि क्रमयति वसीयान् भवत्यथो यज्ञस्यैवैषाऽभिक्रान्ति[5]—रेति वा एष यज्ञमुखादृद्ध्या योऽग्नेर्देवताया एत्यष्टावेतानि सावित्राणि भवन्त्यष्टाक्षरा गायत्री गायत्रो ( २ ) ऽग्निस्तेनैव यज्ञमुखादृद्ध्या अग्नेर्देवतायै नैत्य[6]—ष्टौ सावित्राणि भवन्त्याहुतिर्नवमी त्रिवृतमेव यज्ञमुखे वि यातयति[7] यदि कामयेत छन्दाꣳसि यज्ञयशसेनार्पयेयमित्यृचमन्तमां कुर्याच्छन्दाꣳस्येव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमिति यजुरन्तमं कुर्याद्यजमानमेव यज्ञयशसेनार्पयत्यृ[8]—चा स्तोमꣳ समर्द्धयेत्या--( ३ )--हु समृद्ध्यै[9] चतुर्भिरभ्रिमा दत्ते चत्वारि छन्दाꣳसि छन्दोभिरेव देवस्य त्वा सवितुः प्रसव इत्याह प्रसूत्या[11] अग्निर्देवेभ्यो निलायत स वेणुं प्राविशत् स एतामूतिमनु समचरद्वेणोः सुषिरꣳ सुषिराऽभ्रिर्भवति सयोनित्वाय[12] स यत्रयत्रावसत् तत् कृष्णमभवत् कल्माषी भवति रूपसमृद्ध्या[13] उभयतः क्ष्णूर्भवतीतश्चा--( ४ )--मुतश्चार्कस्यावरुद्ध्यै[14] व्याममात्री भवत्येतावद्वै पुरुषे वीर्यं वीर्यसम्मिताऽपरिमिता भवत्यपरिमितस्यावरुद्ध्यै[16] यो वनस्पतीनां फलग्रहिः स एषां वीर्यावान् फलग्रहिर्वेणुर्वैणवी भवति वीर्यस्यावरुद्ध्यै[17] ॥ ( कामयेत, गायत्रो, ऽर्धयेति, च, सप्तविꣳशतिश्च ) ॥ १ ॥

मृदाक्रान्तिविधिः ॥ अग्निर्ऋषिः ।

व्यृद्धं वा एतद्यज्ञस्य यदयजुष्केण क्रियत इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमा दत्ते यजुष्कृत्यै यज्ञस्य समृद्ध्यै[1] प्रतूर्तं वाजिन्ना द्रवेत्यश्वमभि दधाति रूपमेवास्यैतन्महिमानं व्याचष्टे[2] युञ्जाथाꣳ रासभं युवमिति गर्दभमसत्येव गर्दभं प्रति ष्ठापयति तस्मादश्वाद्गर्दभोऽसत्तरो[3] योगेयोगे तवस्तरमित्याह ( १ ) योगेयोग एवैनं युङ्क्ते[4] वाजेवाजे हवामह इत्याहान्नं वै वाजोऽन्नमेवाव रुन्धे[5] सखाय इन्द्रमूतय इत्याहेन्द्रियमेवाव रुन्धे[6] ऽग्निर्देवेभ्यो निलायत तं प्रजापतिरन्वविन्दत् प्राजापत्योऽश्वोऽश्वेन सं भरत्यनुवित्त्यै[7] पापवस्यसं वा एतत् क्रियते यच्छ्रेयसा च पापीयसा च समानं कर्म कुर्वन्ति पापीयान् ( २ ) ह्यश्वाद्गर्दभोऽश्वं पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्माच्छ्रेयाꣳसं पापीयान् पश्चादन्वेति[8]

बहुर्वै भवतो भ्रातृव्यो भवतीव खलु वा एष योऽग्निं चिनुते वज्र्यश्वः प्रतूर्वन्नेह्यवक्रामन्नशस्तीरित्याह वज्रेणैव पाप्मानं भ्रातृव्यमव क्रामति[९] रुद्रस्य गाणपत्यादित्याह रौद्रा वै पशवो रुद्रादेव ( ३ ) पशून्निर्याच्याऽऽत्मने कर्म कुरुते[१०] पूष्णा सयुजा सहेत्याह पूषा वा अध्वनाꣳ सन्नेता समष्ट्यै[११] पुरीषायतनो वा एष यदग्निरङ्गिरसो वा एतमग्रे देवतानाꣳ समभरन् पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदच्छेहीत्याह सायतनमेवैनं देवताभिः सं भरत्य[१२]ग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह येन ( ४ ) सङ्गच्छते वाजमेवास्य वृङ्क्ते[१३] प्रजापतये प्रतिप्रोच्याग्निः सम्भृत्य इत्याहुरियं वै प्रजापतिस्तस्या एतच्छ्रोत्रं यद्वल्मीकोऽग्निं पुरीष्यमङ्गिरस्वद्भरिष्याम इति वल्मीकवपामुप तिष्ठते साक्षादेव प्रजापतये प्रतिप्रोच्याग्निꣳ सं भरत्य[१४]ग्निं पुरीष्यमङ्गिरस्वद्भराम इत्याह येन सङ्गच्छते वाजमेवास्य वृङ्क्ते[१५] ऽन्वग्निरुषसामग्रं ( ५ ) मख्यदित्याहानुख्यात्या[१६] आगत्य वाज्यध्वन आक्रम्य वाजिन् पृथिवीमित्याहेच्छत्येवैनं पूर्वया विन्दत्युत्तरया[१७] द्वाभ्यामा क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्र जायन्ते[१८] द्यौस्ते पृष्ठं पृथिवी सधस्थमित्याहैभ्यो वा एतं लोकेभ्यः प्रजापतिः समैरयद् रूपमेवास्यैतन्महिमानं व्याचष्टे[१९] वज्री वा ( ६ ) एष यदश्वो दद्भिरन्यतोदद्भ्यो भूयाँल्लोमभिरुभयादद्भ्यो यं द्विष्यात् तमधस्पदं ध्यायेद्वज्रेणैवैनꣳ स्तृणुते[२०] ॥

( आह, पापीयान्, रुद्रादेव, येना,-ग्रं, वज्री वै, सप्तदश च ) ॥२॥

अश्वाक्रमणादि भूसंस्कारः ॥ अग्निर्ऋषिः ।

उत्क्रामोदक्रमीदिति द्वाभ्यामुत्क्रमयति प्रतिष्ठित्या अनुरूपाभ्यां तस्मादनुरूपाः पशवः प्र जायन्ते[१] ऽप उप सृजति यत्र वा आप उपगच्छन्ति तदोषधयः प्रति तिष्ठन्त्योषधीः प्रतितिष्ठन्तीः पशवोऽनु प्रति तिष्ठन्ति पशून् यज्ञो यज्ञं यजमानो यजमानं प्रजास्तस्मादप उप सृजति प्रतिष्ठित्यै[२] यदध्वर्युरनग्नावाहुतिं जुहुयादन्धो ऽध्वर्युः ( १ ) स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति[३] जिघर्म्यग्निं मनसा घृतेनेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति[४] प्रतिक्ष्यन्तं भुवनानि विश्वेत्याह सर्वꣳ ह्येष प्रत्यङ् क्षेति[५] पृथुं तिरश्चा वयसा बृहन्तमित्याहाल्पो ह्येष जातो महान् ( २ ) भवति[६] व्यचिष्ठमन्नꣳ रभसं विदानमित्याहान्नमेवास्मै स्वदयति[७] सर्वमस्मै स्वदते य एवं वेदा ऽऽ त्वा जिघर्मि वचसा घृतेनेत्याह तस्माद्यत् पुरुषो मनसाऽभिगच्छति तद्वाचा वदत्य[१०]रक्षसेत्याह रक्षसामपहत्यै[११] मर्यश्रीः स्पृहयद्वर्णो अग्निरित्याहापचितिमेवास्मिन् दधात्य[१२]पचितिमान् भवति य एवं ( ३ ) वेद[१२] मनसा त्वै तामाप्तुमर्हति यामध्वर्युरनग्नावाहुतिं जुहोति मनस्वतीभ्यां जुहोत्याहुत्योराप्त्यै[१३] द्वाभ्यां प्रतिष्ठित्यै[१४] यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्त्येतर्हि खलु वा एतद्यज्ञमुखं यर्ह्येनदाहुतिरश्नुते परि लिखति रक्षसामपहत्यै[१५] तिसृभिः परि लिखति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्माद्रक्षाꣳस्यप हन्ति[१६] ( ४ ) गायत्रिया परि लिखति तेजो वै गायत्री तेजसैवैनं परि गृह्णाति[१७] त्रिष्टुभा परि लिखतीन्द्रियं वै त्रिष्टुगिन्द्रियेणैवैनं परि गृह्णात्य[१८]नुष्टुभा परि लिखत्यनुष्टुप् सर्वाणि छन्दाꣳसि परिभूः पर्याप्त्यै[१९] मध्यतोऽनुष्टुभा वाग्वा अनुष्टुप् तस्मान्मध्यतो वाचा

वदामो[१०] गायत्रिया प्रथमया परि लिखत्यथानुष्टुभाऽथ त्रिष्टुभा तेजो वै गायत्री (५) यज्ञोऽनुष्टुगिन्द्रियं त्रिष्टुप् तेजसा चैवेन्द्रियेण चोभयतो यज्ञं परि गृह्णाति[११] ॥ (अन्धोऽध्वर्युं,-महान्, भरति य एवं, हन्ति, त्रिष्टुभा तेजो वै गायत्री, त्रयोदश च ) ॥ ३ ॥

मृत्खननं, चर्मपत्रयोः सम्भरणं च ॥ अग्निर्ऋषिः ।

देवस्य त्वा सवितुः प्रसव इति खनति प्रसूत्या अथो धूममेवैतेन जनयति ज्योतिष्मन्तं त्वाऽग्ने सुप्रतीकमित्याह ज्योतिरेवैतेन जनयति[१] सोऽग्निर्जातः प्रजाः शुचाऽऽर्पयत् तं देवा अर्धर्चेनाशमयञ्छिवं प्रजाभ्योऽहिंसन्तमित्याह प्रजाभ्य एवैनं शमयति[२] द्वाभ्यां खनति प्रतिष्ठित्या[३] अपां पृष्ठमसीति पुष्करपर्णमा (१) हरत्यपां वा एतत् पृष्ठं यत् पुष्करपर्णं रूपेणैवैनदा हरति[४] पुष्करपर्णेन सं भरति योनिर्वा अग्नेः पुष्करपर्णं सयोनिमेवाग्निं सं भरति[५] कृष्णाजिनेन सं भरति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञं सं भरति[६] यद् ग्राम्याणां पशूनां चर्मणा सम्भरेद् ग्राम्यान् पशूञ्छुचाऽर्पयेत् कृष्णाजिनेन सं भरत्यारण्यानेव पशून् (२) शुचाऽर्पयति तस्मात् समावत् पशूनां प्रजायमानानामारण्याः पशवः कनीयांसः शुचा हृता लोमतः सं भरत्यतो ह्यस्य मेध्यं[८] कृष्णाजिनं च पुष्करपर्णं च सं स्तृणातीयं वै कृष्णाजिनमसौ पुष्करपर्णमाभ्यामेवैनमुभयतः परि गृह्णात्यग्निर्देवेभ्यो निलायत तमथर्वाऽन्वपश्यदथर्वा त्वा प्रथमो निरमन्थदग्न इत्या-(३)-ह य एवैनमन्वपश्यत् तेनैवैनं सं भरति[१०] त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रितमविन्दत्[११] तमु त्वा दध्यङ्ङृषिरित्याह दध्यङ् वा आथर्वणस्तेजस्व्यासीत् तेज एवास्मिन् दधाति[१२] तमु त्वा पाथ्यो वृषेत्याह पूर्वमेवोदितमुत्तरेणाभि गृणाति[१३] (४) चतसृभिः सं भरति चत्वारि छन्दांसि छन्दोभिरेव[१४] गायत्रीभिर्ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुग्भी राजन्यस्य त्रैष्टुभो हि राजन्यो[१५] यं कामयेत वसीयान्त्स्यादित्युभयीभिस्तस्य सं भरेत् तेजश्चैवास्मा इन्द्रियं च समीची दधात्यष्टाभिः सं भरत्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं सं भरति[१७] सीद होतरित्या-(५)-ह देवता एवास्मै सं सादयति नि होतेति मनुष्यान्त्सं सीदस्वेति वयांसि जनिष्वा हि जेन्यो अग्रे अह्नामित्याह देवमनुष्यानेवास्मै सन्नान् प्र जनयति[१८] ॥ (ऐ,-व पशू,-नित्ति, गृणाति, होतरिति, सप्तविंशतिश्च ) ॥ ४ ॥

सम्भृतमृदो यज्ञभूमौ समाहरणम् ॥ अग्निर्ऋषिः ।

क्रूरमिव वा अस्या एतत् करोति यत् खनत्यप उप सृजत्यापो वै शान्ताः शान्ताभिरेवास्यै शुचं शमयति[१] सं ते वायुर्मातरिश्वा दधात्वित्याह प्राणो वै वायुः प्राणेनैवास्यै प्राणं सं दधाति[२] सं ते वायुरित्याह तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते[३] तस्मै च देवि वषडस्तु (१) तुभ्यमित्याह षड्वा ऋतव ऋतुष्वेव वृष्टिं दधाति तस्मात् सर्वानृतून् वर्षति[४] यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद् रक्षांसि यज्ञं हन्युर्वडित्याह परोक्षमेव वषट् करोति नास्य यातयामा वषट्कारो भवति न यज्ञं रक्षांसि घ्नन्ति[५] सुजातो ज्योतिषा सहेत्यनुष्टुभोप नह्यत्यनुष्टुप् (२) सर्वाणि छन्दांसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनं तनुवा परि दधाति[६] वेदुको वासो भवति य एवं वेद[७] वारुणो वा अग्निरुपनद्ध उदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण ऊतय इति सावित्रीभ्यामुत् तिष्ठति सवितृप्रसूत एवास्योर्ध्वा

वरुणमेनिमुत् सृजति द्वाभ्यां प्रतिष्ठित्यै स जातो गर्भो असि (३) रोदस्योरित्याहेमे वै रोदसी तयोरेष गर्भो यदग्निस्तस्मादेवमाहाग्ने चारुर्विभृत ओषधीष्वित्याह यदा ह्येतं विभरन्त्यथ चारुतरो भवति प्र मातृभ्यो अधि कनिक्रदद्गा इत्याहौषधयो वा अस्य मातरस्ताभ्य एवैनं प्र च्यावयति स्थिरो भव वीड्वङ्ग इति गर्दभ आ सादयति (४) सं नह्यत्येवैनमेतया स्थेम्ने गर्दभेन सं भरति तस्मात् गर्दभः पशूनां भारभारितमो गर्दभेन सं भरति तस्माद्गर्दभोऽप्यनालेशेऽत्यन्यान् पशून् मेद्यत्यन्नꣳ ह्येनेनार्कꣳ संभरन्ति गर्दभेन सं भरति तस्माद् गर्दभो द्विरेताः सन् कनिष्ठं पशूनां प्र जायतेऽग्निर्ह्यस्य योनिं निर्दहति प्रजासु वा एष एतर्ह्यारूढः (५) स ईश्वरः प्रजाः शुचा प्रदहः शिवो भव प्रजाभ्य इत्याह प्रजाभ्य एवैनꣳ शमयति मानुषीभ्यस्त्वमङ्गिर इत्याह मानव्यो हि प्रजा मा द्यावापृथिवी अभि शूशुचो माऽन्तरिक्षं मा वनस्पतीनित्याहैभ्य एवैनं लोकेभ्यः शमयति प्रैतु वाजी कनिक्रददित्याह वाजी ह्येष नानदद्रासभः पत्वेत्या- (६) -ह रासभ इति ह्येतमृषयोऽवदन् भरन्नग्निं पुरीष्यमित्याहाग्निꣳ ह्येष भरति मा पाद्यायुषः पुरेत्याहाऽऽयुरेवास्मिन् दधाति तस्माद्गर्दभः सर्वमायुरेति तस्माद्गर्दभे पुराऽऽयुषः प्रमीते बिभ्यति वृषाऽग्निं वृषणं भरन्नित्याह वृषा ह्येष वृषाऽग्निरपां गर्भꣳ (७) समुद्रियमित्याहापाꣳ ह्येष गर्भो यदग्निरग्न आ याहि वीतय इति वा इमौ लोकौ व्यैतामग्न आ याहि वीतय इति यदाहानयोर्लोकयोर्वीत्यै प्रच्युतो वा एष आयतनादगतः प्रतिष्ठाꣳ स एतर्ह्यध्वर्युं च यजमानं च ध्यायत्यृतꣳ सत्यमित्याहेयं वा ऋतमसौ (८) सत्यमनयोरेवैनं प्रति ष्ठापयति नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानो वरुणो वा एष यजमानमभ्यैति यदग्निरुपनद्ध ओषधयः प्रति गृह्णीताग्निमेतमित्याह शान्त्यै व्यस्यन् विश्वा अमतीररातीरित्याह रक्षसामपहत्यै निषीदन् नो अप दुर्मतिꣳ हनदित्याह प्रतिष्ठित्यै ओषधयः प्रति मोदध्व- (९) -मेनमित्याहौषधयो वा अग्नेर्भागधेयं ताभिरेवैनꣳ समर्धयति पुष्पावतीः सुपिप्पला इत्याह तस्मादोषधयः फलं गृह्णन्त्ययं वो गर्भ ऋत्वियः प्रत्नꣳ सधस्थमाऽसददित्याह याभ्य एवैनं प्रच्यावयति तास्वेवैनं प्रति ष्ठापयति द्वाभ्यामुपावहरति प्रतिष्ठित्यै ॥ (अस्त्व,-नुष्टु,-बसि, सादयत्या,-रूढः, पत्वेति गर्भ,-मसौ, मोदध्वं, द्विचत्वारिꣳशच्च) ॥ ५ ॥

उखानिर्माणम् ॥ अग्निर्ऋषिः ।

वारुणो वा अग्निरुपनद्धो वि पाजसेति वि स्रꣳसयति सवितृप्रसूत एवास्य विषूचीं वरुणमेनिं वि सृजत्यप उप सृजत्यापो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति तिसृभिरुप सृजति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति मित्रः सꣳसृज्य पृथिवीमित्याह मित्रो वै शिवो देवानां तेनैवै- (१) -नꣳ सꣳ सृजति शान्त्यै यद्ग्राम्याणां पात्राणां कपालैः सꣳसृजेद्ग्राम्याणि पात्राणि शुचाऽर्पयेदर्मकपालैः सꣳ सृजत्येतानि वा अनुपजीवनीयानि तान्येव शुचाऽर्पयति शर्कराभिः सꣳ सृजति धृत्या अथो शन्त्वायाजलोमैः सꣳ सृजत्येषा वा अग्नेः प्रिया तनूर्यदजा प्रिययैवैनं तनुवा सꣳ सृजत्यथो तेजसा कृष्णाजिनस्य लोमभिः सꣳ (२) सृजति यज्ञो वै कृष्णाजिनं यज्ञेनैव यज्ञꣳ सꣳ सृजति रुद्राः सम्भृत्य पृथिवीमित्याहैता वा एतं देवता अग्रे समभरन् ताभिरेवैनꣳ सम्भरति मखस्य शिरोऽसी-

त्याह यज्ञो वै मखस्तस्यैतच्छिरो यदुखा तस्मादेवमाह[१२] यज्ञस्य पदे स्थ इत्याह यज्ञस्य ह्येते (३) पदे अथो प्रतिष्ठित्यै[१३] प्रान्याभिर्यच्छत्यन्वन्यैर्मन्त्रयते मिथुनत्वाय त्र्युद्धिं करोति त्रय इमे लोका एषां लोकानामाप्त्यै[१३] छन्दोभिः करोति वीर्यं वै छन्दाꣳसि वीर्येणैवैनां करोति[१४] यजुषा बिलं करोति व्यावृत्त्यै इयतीं करोति प्रजापतिना यज्ञमुखेन सम्मिताम्[१६] द्विस्तनां करोति द्यावापृथिव्योर्दोहाय[१७] चतुःस्तनां करोति पशूनां दोहाया[१८]ष्टास्तनां करोति छन्दसां दोहाय नवाश्रिमभिचरतः (४) कुर्यात् त्रिवृतमेव वज्रꣳ सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्यै[२०] कृत्वाय सा महीमुखामिति नि दधाति देवतास्वेवैनां प्रति ष्ठापयति[२१] ॥ ( तेनैव, लोमभिः स,–मेत, अभिचरत, एकविꣳशतिश्च ) ॥ ६ ॥

धूपनादिरुखासंस्कारः ॥ अग्निर्ऋषिः ।

सप्तभिर्धूपयति सप्त वै शीर्षण्याः प्राणाः शिर एतद्यज्ञस्य यदुखा शीर्षन्नेव यज्ञस्य प्राणान् दधाति तस्मात् सप्त शीर्षन् प्राणा अश्वशकेन धूपयति प्राजापत्यो वा अश्वः सयोनित्वाया[२]दितिस्त्वेत्याहेयं वा अदितिरदित्यैवादित्यां खनत्यस्या अक्रूरङ्काराय न हि स्वः स्वꣳ हिनास्ति[३] देवानां त्वा पत्नीरित्याह देवानां (१) वा एतां पत्नयोऽग्रेऽकुर्वन् ताभिरेवैनां दधाति[४] धिषणास्त्वेत्याह विद्या वै धिषणा विद्याभिरेवैनामभीन्धे ग्नास्त्वेत्याह छन्दाꣳसि वै ग्नाश्छन्दोभिरेवैनाꣳ श्रपयति वरूत्रयस्त्वेत्याह होत्रा वै वरूत्रयो होत्राभिरेवैनां पचति जनयस्त्वेत्याह देवानां वै पत्नी-(२)-र्जनयस्ताभिरेवैनां पचति[५] षड्भिः पचति षड्वा ऋतव ऋतुभिरेवैनां पचति[६] द्विः पचन्त्वित्याह तस्माद् द्विः संवत्सरस्य सस्यं पच्यते[७] वारुण्युखाऽभीद्धा मैत्रियोपैति शान्त्यै[८] देवस्त्वा सवितोद्वपत्वित्याह सवितृप्रसूत एवैनां ब्रह्मणा देवताभिरुद्वपत्य[९]पद्यमाना पृथिव्याशा दिश आ पृण-( ३ )-त्याह तस्मादग्निः सर्वा दिशोऽनु वि भात्यु[१०]त्तिष्ठ बृहती भवो[११]र्ध्वा तिष्ठ ध्रुवा त्वमित्याह प्रतिष्ठित्या असुर्यं पात्रमनाच्छृण्णमा च्छृणत्ति देवत्राऽक[१२]र्रजक्षीरेणाऽऽच्छृणत्ति परमं वा एतत् पयो यदजक्षीरं परमेणैवैनां पयसाऽऽच्छृणत्ति[१३] यजुषा व्यावृत्त्यै[१४] छन्दोभिरा च्छृणत्ति छन्दोभिर्वा एषा-( ४ )-क्रियते छन्दोभिरेव छन्दाꣳस्या च्छृणत्ति[१५] ॥ ( आह देवानां, वै पत्नीः, पृणे,··वा, षट् च ) ॥ ७ ॥

वह्निपशवः ॥ अग्निर्ऋषिः ।

एकविꣳशत्या माषैः पुरुषशीर्षमच्छैत्यमेध्या वै माषा अमेध्यं पुरुषशीर्षममेध्यैरेवास्यामेध्यं निरवदाय मेध्यं कृत्वा ऽऽ हरत्ये[१]कविꣳशतिर्भवन्त्येकविꣳशो वै पुरुषः पुरुषस्याऽऽप्त्यै[२] व्यृद्धं वा एतत् प्राणैरमेध्यं यत् पुरुषशीर्षꣳ सप्तधा वितृण्णां वल्मीकवपां प्रति नि दधाति सप्त वै शीर्षण्याः प्राणाः प्राणैरेवैनत् समर्धयति मेध्यत्वाय[३] यावन्तो ( १ ) वै मृत्युबन्धवस्तेषां यम आधिपत्यं परीयाय यमगाथाभिः परि गायति यमादेवैनद्वृङ्क्ते[४] तिसृभिः परि गायति त्रय इमे लोका एभ्य एवैनल्लोकेभ्यो वृङ्क्ते[५] तस्माद्गायते न देयं गाथा हि तद्वृङ्क्ते[६]ऽग्निभ्यः पशूना लभते कामा वा अग्नयः कामानेवाव रुन्धे[७] यत् पशून् नाऽऽलभेतानवरुद्धा अस्य (२) पशवः स्युर्यत् पर्यग्निकृतानुत्सृजेद्यज्ञवेशसं कुर्याद्यत् सꣳस्थापयेद्यातयामानि शीर्षाणि स्युर्यत् पशूनालभते तेनैव पशूनव रुन्धे यत् पर्यग्निकृतानुत्सृजति शीर्ष्णामयातयामत्वाय

प्राजापत्येन सꣳ स्थापयति यज्ञो वै प्रजापतिर्यज्ञ एव यज्ञं प्रति ष्ठापयति[८] प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एता आप्रीरपश्यत् ताभिर्वै स मुखत (३) आत्मानमा ऽप्रीणीत यदेता आप्रियो भवन्ति यज्ञो वै प्रजापतिर्यज्ञमेवैताभिर्मुखत आ प्रीणात्य–परिमितछन्दसो भवन्त्यपरिमितः प्रजापतिः प्रजापतेराप्त्या[१०] ऊनातिरिक्ता मिथुनाः प्रजात्यै[११] लोमशं वै नामैतच्छन्दः प्रजापतेः पशवो लोमशाः पशूनेवाव रुन्धे[१२] सर्वाणि वा एता रूपाणि सर्वाणि रूपाण्यग्नौ चित्यै क्रियन्ते तस्मादेता अग्नेश्चित्यस्य (४) भवन्त्य[१३]–कविꣳशतिꣳ सामिधेनीरन्वाह रुग्वा एकविꣳशो रुचमेव गच्छत्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳश[१४]– श्चतुर्विꣳशतिमन्वाह चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे[१५] पराचीरन्वाह पराङिव हि सुवर्गो लोकः[१६] समास्त्वाऽग्न ऋतवो वर्धयन्त्वित्याह समाभिरेवाग्निं वर्धयत्यृ--(५)--तुभिः संवत्सरं[१७] विश्वा आ भाहि प्रदिशः पृथिव्या इत्याह तस्मादग्निः सर्वा दिशोऽनु वि भाति[१८] प्रत्यौहतामश्विना मृत्युमस्मादित्याह मृत्युमेवास्मादप नुदत्यु[१९]–द्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हन्त्यु[२०]–गन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो (६) ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छति[२१] न संवत्सरस्तिष्ठति नास्य श्रीस्तिष्ठति यस्यैताः क्रियन्ते ज्योतिष्मतीमुत्तमामन्वाह ज्योतिरेवास्मा उपरिष्टाद् दधाति सुवर्गस्य लोकस्यानुख्यात्यै[२२] ॥

( यावन्तो, ऽस्य, मुखत, श्चित्यस्य, वर्धयत्या,–दित्यो,ऽष्टाविꣳशतिश्च ) ॥ ८ ॥

उख्यजननम् ॥ अग्निर्ऋषिः ।

षड्भिर्दीक्षयति षड्वा ऋतव ऋतुभिरेवैनं दीक्षयति[१] सप्तभिर्दीक्षयति सप्त छन्दाꣳसि छन्दोभिरेवैनं दीक्षयति[२] विश्वे देवस्य नेतुरित्यनुष्टुभोत्तमया जुहोति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमै[३]–कस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति पूर्ण इव हि प्रजापतिः (१) प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै[४] यदर्चिषि प्रवृञ्ज्याद्भूतमव रुन्धीत यदङ्गारेषु भविष्यदङ्गारेषु प्र वृणक्ति भविष्यदेवाव रुन्धे भविष्यद्धि भूयो भूताद् द्वाभ्यां प्र वृणक्ति द्विपाद्यजमानः प्रतिष्ठित्यै[५] ब्रह्मणा वा एषा यजुषा सम्भृता यदुखा सा यद्भिद्येताऽऽर्तिमार्च्छे-(२)-द्यजमानो हन्येतास्य यज्ञो मित्रैतामुखां तपेत्याह ब्रह्म वै मित्रो ब्रह्मन्नेवैनां प्रति ष्ठापयति नाऽऽर्तिमार्च्छति यजमानो नास्य यज्ञो हन्यते[७] यदि भिद्येत तैरेव कपालैः सꣳसृजेत् सैव ततः प्रायश्चित्ति[८]–र्यो गतश्रीः स्यान्मथित्वा तस्याव दध्याद्भूतो वा एष स स्वां (३) देवतामुपैति[९] यो भूतिकामः स्याद्य उखायै सम्भवेत् स एव तस्य स्यादतो ह्येष सम्भवत्येष वै स्वयम्भूर्नाम भवत्येवं[१०] यं कामयेत भ्रातृव्यमस्मै जनयेयमित्यन्यतस्तस्याऽऽहृत्याव दध्यात् साक्षादेवास्मै भ्रातृव्यं जनयत्य[११]–म्बरीषादन्नकामस्याव दध्यादम्बरीषे वा अन्नं भ्रियते सयोन्येवान्न--(४)--मव रुन्धे[१२] मुञ्जानव दधात्यूर्ग्वै मुञ्जा ऊर्जमेवास्मा अपि दधात्य[१३]–ग्निर्देवेभ्यो निलायत स क्रुमुकं प्राविशत् क्रुमुकमव दधाति यदेवास्य तत्र न्यक्तं तदेवाव रुन्धे[१४] आज्येन सं यौत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना सम-

*

र्धयत्यथो तेजसा (५) वैकङ्कतीमा दधाति भा एवाव रुन्धे[१६] शमीमयीमा दधाति शान्त्यै[१७] सीद त्वं मातुरस्या उपस्थ इति तिसृभिर्जातमुप तिष्ठते त्रय इमे लोका एष्वेव लोकेष्वाविदं गच्छत्यथो प्राणानेवाऽऽत्मन् धत्ते[१८] ॥ ( प्रजापति,-र्ऋच्छेत्, स्वा,-मेवान्नं, तेजसा, चतुस्त्रिꣳशच्च ) ॥ ९ ॥

उख्यधारणम् ॥ अग्निर्ऋषिः ।

न ह स्म वै पुराऽग्निरपरशुवृक्णं दहति तदस्मै प्रयोग एवर्षिरस्वदयद्यदग्ने यानि कानि चेति समिधमा दधात्यपरशुवृक्णमेवास्मै स्वदयति[१] सर्वमस्मै स्वदते य एवं वेदौ[२]–दुम्बरीमा दधात्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधाति[३] प्रजापतिरग्निमसृजत तꣳ सृष्टꣳ रक्षाꣳस्य-(१)-जिघाꣳसन्त्स एतद्राक्षोघ्नमपश्यत् तेन वै स रक्षाꣳस्यपाहत यद्राक्षोघ्नं भवत्यग्नेरेव तेन जाताद्रक्षाꣳस्यप हन्त्यश्व–श्वत्थीमा दधात्यश्वत्थो वै वनस्पतीनाꣳ सपत्नसाहो विजित्यै[५] वैकङ्कतीमा दधाति भा एवाव रुन्धे[६] शमीमयीमा दधाति शान्त्यै[७] सꣳशितं मे ब्रह्मोदेषां बाहू अतिरामित्युत्तमे औदुम्बरी (२) वाचयति ब्रह्मणैव क्षत्रꣳ सꣳ श्यति क्षत्रेण ब्रह्म तस्माद्ब्राह्मणो राजन्यवानत्यन्यं ब्राह्मणं तस्माद्राजन्यो ब्राह्मणवानत्यन्यꣳ राजन्यं[८] मृत्युर्वा एष यदग्निरमृतꣳ हिरण्यꣳ रुक्ममन्तरं प्रति मुञ्चतेऽमृतमेव मृत्योरन्तर्धत्त[९] एकविꣳशतिनिर्बाधो भवत्येकविꣳशतिर्वै देवलोका द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य (३) एकविꣳश एतावन्तो वै देवलोकास्तेभ्य एव भ्रातृव्यमन्तरेति[१०] निर्बाधैर्वै देवा असुरान् निर्बाधेऽकुर्वत तन्निर्बाधानां निर्बाधत्वं निर्बाधी भवति भ्रातृव्यानेव निर्बाधे कुरुते[११] सावित्रिया प्रति मुञ्चते प्रसूत्यै[१२] नक्तोषासेत्युत्तरया ऽहोरात्राभ्यामेवैनमुद्यच्छते[१३] देवा अग्निं धारयन् द्रविणोदा इत्याह प्राणा वै देवा द्रविणोदा अहोरात्राभ्यामेवैनमुद्यत्य (४) प्राणैर्दाधारा[१४]–ऽऽसीनः प्रति मुञ्चते तस्मादासीनाः प्रजाः प्र जायन्ते[१५] कृष्णाजिनमुत्तरं तेजो वै हिरण्यं ब्रह्म कृष्णाजिनं तेजसा चैवैनं ब्रह्मणा चोभयतः परि गृह्णाति[१६] षडुद्यामꣳ शिक्यं भवति षड्वा ऋतव ऋतुभिरेवैनमुद्यच्छते[१७] यद् द्वादशोद्यामꣳ संवत्सरेणैव[१८] मौञ्जं भवत्यूर्ग्वै मुञ्जा ऊर्जैवैनꣳ स-(५)-मर्धयति[१९] सुपर्णोऽसि गरुत्मानित्यवेक्षते रूपमेवास्यैतन्महिमानं व्याचष्टे[२०] दिवं गच्छ सुवः पतेत्याह सुवर्गमेवैनं लोकं गमयति[२१] ॥ ( रक्षाꣳस्यौ,-दुम्बरी, आदित्य, उद्यत्य, सं, चतुर्विꣳशतिश्च ) ॥ १० ॥

अश्वस्याप्रियः प्रयाजयाज्याः ॥ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

समिद्धो अञ्जन् कृदरं मतीनां घृतमग्ने मधुमत् पिन्वमानः ।
वाजी वहन् वाजिनं जातवेदो देवानां वक्षि प्रियमा सधस्थम् ॥
घृतेनाञ्जन्त्सं पथो देवयानान् प्रजानन् वाज्यप्येतु देवान् ।
अनु त्वा सप्ते प्रदिशः सचन्ताꣳ स्वधामस्मै यजमानाय धेहि[२] ॥
ईड्यश्चासि वन्द्यश्च वाजिन्नाशुश्चासि मेध्यश्च सप्ते ।
अग्निष्ट्वा (१) देवैर्वसुभिः सजोषाः प्रीतं वह्निं वहतु जातवेदाः ॥

स्तीर्णं बर्हिः सुष्टरीमा जुषाणोरु पृथु प्रथमानं पृथिव्याम् ।
देवेभिर्युक्तमदितिः सजोषाः स्योनं कृण्वाना सुविते दधातु ॥
एता उ वः सुभगा विश्वरूपा वि पक्षोभिः श्रयमाणा उदातैः ।
ऋष्वाः सतीः कवषः शुम्भमाना द्वारो देवीः सुप्रायणा भवन्तु ॥
अन्तरा मित्रावरुणा चरन्ती मुखं यज्ञानामभि संविदाने ।
उषासा वाꣳ (२) सुहिरण्ये सुशिल्पे ऋतस्य योनाविह सादयामि ॥
प्रथमा वाꣳ सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा ।
अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता ॥
आदित्यैर्नो भारती वष्टु यज्ञꣳ सरस्वती सह रुद्रैर्न आवीत् ।
इडोपहूता वसुभिः सजोषा यज्ञं नो देवीरमृतेषु धत्त ॥
त्वष्टा वीरं देवकामं जजान त्वष्टुरर्वा जायत आशुरश्वः (३) ।
त्वष्टेदं विश्वं भुवनं जजान बहोः कर्तारमिह यक्षि होतः ॥
अश्वो घृतेन त्मन्या समक्त उप देवाꣳ ऋतुशः पाथ एतु ।
वनस्पतिर्देवलोकं प्रजानन्नग्निना हव्या स्वदितानि वक्षत् ॥
प्रजापतेस्तपसा वावृधानः सद्यो जातो दधिषे यज्ञमग्ने ।
स्वाहाकृतेन हविषा पुरोगा याहि साध्या हविरदन्तु देवाः ॥
( अग्निष्ट्वां, वा,-मश्वो, द्विचत्वारिꣳशच्च ) ॥ ११ ॥

[ सावित्राणि २२७ । व्यृद्ध-३१७ ।-मु-२६३ ।-देवस्य २७७ । क्रूरं ४९२ । वारुणः २२१ । सप्तभि-२०६ । -रेकविꣳशत्या ३२८ । प्राङ्म-२८४ ।-र्न २७४ । समिद्ध १९२ ॥ एकादश ॥ ३०८१ ]

[ ॥ इति पञ्चमकाण्डे प्रथमः प्रपाठकः ॥ १ ॥ ]

## चित्युपक्रमाभिधानम् ।

[ अथ द्वितीयः प्रपाठकः ॥ २ ॥ ]

आसन्द्यां वह्निस्थापनं, वात्सप्रेणोपस्थानं च ॥ अग्निऋषिः ।

विष्णुमुखा वै देवाश्छन्दोभिरिमाँल्लोकाननपजय्यमभ्यजयन् यद्विष्णुक्रमान् क्रमते विष्णुरेव भूत्वा यजमानश्छन्दोभिरिमाँल्लोकाननपजय्यमभि जयति विष्णोः क्रमोऽस्यभिमातिहेत्याह गायत्री वै पृथिवी त्रैष्टुभमन्तरिक्षं जागती द्यौरानुष्टुभीर्दिशश्छन्दोभिरेवेमाँल्लोकान् यथापूर्वमभि जयति प्रजापतिरग्निमसृजत सोऽस्मात् सृष्टः (१) पराङैत् तमेतयाऽन्वैदक्रन्ददिति तया वै सोऽग्नेः प्रियं धामावारुन्ध यदेतामन्वाहाग्नेरेवैतया प्रियं धामाव रुन्ध ईश्वरो वा एष पराङ् प्रदघो यो विष्णुक्रमान् क्रमते चतसृभिरा वर्तते चत्वारि

छन्दा॑सि छन्दा॑ꣳसि खलु वा अ॒ग्नेः प्रि॒या त॒नूः प्रि॒याम॒ेवास्य॑ त॒नुव॑म॒भि (२) प॒र्याव॑र्तते[२] दक्षि॒णा प॒र्याव॑र्तते स्वमे॒व वी॒र्य॑मनु॑ प॒र्याव॑र्तते तस्मा॒द्दक्षि॒णोऽर्ध॑ आ॒त्मनो॑ वी॒र्या॑वत्त॒रोऽथो॑ आदि॒त्यस्यै॒वाऽऽवृत॒मनु॑ प॒र्याव॑र्तते[३] शु॒नःशेप॒माजी॑गर्ति॒ वरु॑णोऽगृह्णात् स ए॒तां वा॑रु॒णीम॑पश्यत् त॒या वै स आ॒त्मानं॑ वरुणपा॒शाद॑मु॒ञ्चद्वरु॑णो वा ए॒तं गृ॑ह्णाति॒ य उ॒खां प्र॑तिमु॒ञ्चत॒ उदु॑त्त॒मं व॑रुणपा॒शम॒स्मदित्या॑हा॒ऽऽत्मान॑मे॒वैतया॑ (३) वरुणपा॒शान्मु॑ञ्च॒त्यो॑ त्वा॑ऽहार्ष॒मित्या॑हा॒ऽऽहैन॑ꣳ हरति[४] ध्रु॒वस्ति॑ष्ठा॒विचा॑चलि॒रित्या॑ह॒ प्रति॑ष्ठित्यै[५] विश॑स्त्वा॒ सर्वा॑ वाञ्छ-न्त्वित्या॑ह वि॒शैवैन॑ꣳ सम॑र्धयत्य॒स्मिन् रा॒ष्ट्रमधि॑ श्रयेत्या॑ह रा॒ष्ट्रमे॒वास्मि॑न् ध्रु॒वम॑क॒र्—यं का॒मये॑त रा॒ष्ट्रꣳ स्या-दिति॒ तं मन॑सा ध्यायेद्रा॒ष्ट्रमे॒व भ॑वत्य॒ (४) ग्रे बृ॒हन्नु॒षसा॑मू॒र्ध्वो अ॑स्था॒दित्या॑हा॒ग्रमे॒वैन॑ꣳ समा॒नाना॑ करोति निर्जग्मि॒वान् तम॑स॒ इत्या॑ह॒ तम॑ ए॒वास्मा॒दप॑ हन्ति॒ ज्योति॒षा ऽऽ ऽगा॒दित्या॑ह॒ ज्योति॑रे॒वास्मि॑न् दधाति[६] चत॒सृभिः॑ सादयति च॒त्वारि॒ छन्दा॑ꣳसि॒ छन्दो॑भिरे॒वा॑—ति॑च्छन्दसोत्त॒मया॒ वर्ष्म॒ वा ए॒षा छन्द॑सां यद॑ति॑च्छन्दा॒ वर्ष्मै॒वैन॑ꣳ समा॒नाना॑ करोति[११] सद्व॑ती (५) भवति स॒त्त्वमे॒वैनं॑ गमयति[१२] वात्स॒प्रेणोप॑ तिष्ठत ए॒तेन॒ वै व॑त्स॒प्रीर्भा॑लन्द॒नोऽग्नेः प्रि॒यं धामा॒वा॑रुन्धा॒ग्नेरे॒वैतेन॑ प्रि॒यं धामाव॑ रुन्धे[१३] एकाद॒शं भ॑वत्येक-धैव यज॑माने वी॒र्यं॑ दधाति[१४] स्तोमे॑न॒ वै दे॒वा अ॒स्मिँल्लो॒क आ॑र्ध्नुव॒न् छन्दो॑भिर॒मुष्मि॑न्त्स्तोम॑स्येव॒ खलु॒ वा ए॒तद्रू॒पं यद्वा॑त्स॒प्रं यद्वा॑त्स॒प्रेणो॑प॒तिष्ठ॑त ( ६ ) इ॒मम॒ेव तेन॑ लो॒कम॒भि ज॑यति॒ यद्वि॑ष्णुक्र॒मान् क्रम॑ते॒ऽमुमे॒व तैर्लो॒कम॒भि ज॑यति[१५] पूर्वे॒द्युः प्र क्रा॑मत्यु॒त्तरे॒द्युरु॒प ति॑ष्ठते॒ तस्मा॒द्योगे॒ऽन्यासा॑ प्र॒जानां॒ मनः॒ क्षेमे॒ऽन्यासां॒ तस्मा॑द्यायाव॒रः क्षेम्य॒स्येशे॑ तस्मा॑द्यायाव॒रः क्षेम्य॒मध्य॑वस्यति[१६] मु॒ष्टी क॑रोति॒ वाचं॑ यच्छति य॒ज्ञस्य॒ धृत्यै॑[१७] ॥
( सृष्टो,ꣳऽस्ये,-तया॑, भवति, सद्व॑त्यु,-प॒तिष्ठ॑ते, द्विच॑त्वारिꣳशच्च ) ॥ १ ॥

उख्याग्निनयनम् ॥ अग्निर्ऋषिः ।

अन्न॑पतेऽन्न॑स्य नो दे॒हीत्या॑हा॒ग्निर्वा अन्न॑पतिः॒ स ए॒वास्मा॒ अन्नं॒ प्रय॑च्छत्य॒—नमी॒वस्य॑ शु॒ष्मिण॒ इत्या-हायक्ष्मस्येति॒ वावैतदा॑ह[२] प्र प्र॑दा॒तारं॑ तारिष॒ ऊर्जं॑ नो धेहि द्वि॒पदे॒ चतु॑ष्पद॒ इत्या॑हा॒ऽऽशिष॑मे॒वैतामा शा॑स्ते[३] उदु॑ त्वा॒ विश्वे॑ दे॒वा इत्या॑ह प्रा॒णा वै विश्वे॑ दे॒वाः ( १ ) प्रा॒णैरे॒वैन॒मुद्य॑च्छते[४] ऽग्ने भर॑न्तु॒ चित्ति॑-भि॒रित्या॑ह॒ यस्मा॑ ए॒वैनं॑ चि॒त्तायो॒द्यच्छ॑ते॒ तेनै॒वैन॑ꣳ सम॑र्धयति[५] चत॒सृभि॒रा सा॑दयति च॒त्वारि॒ छन्दा॑ꣳसि॒ छन्दो॑भिरे॒वाति॑च्छन्दसोत्त॒मया॒ वर्ष्म॒ वा ए॒षा छन्द॑सां यद॑ति॑च्छन्दा॒ वर्ष्मै॒वैन॑ꣳ समा॒नाना॑ करोति॒ सद्व॑ती भवति स॒त्त्वमे॒वैनं॑ गमयति[६] प्रेद॑ग्ने॒ ज्योति॑ष्मान् ( २ ) या॒हीत्या॑ह॒ ज्योति॑रे॒वास्मि॑न् दधाति[७] त॒नुवा॒ वा ए॒ष हि॑नस्ति॒ यꣳ हि॒नस्ति॒ मा हिꣳसी॑स्त॒नुवा॑ प्र॒जा इत्या॑ह प्र॒जाभ्य॑ ए॒वैन॑ꣳ शमयति[८] रक्षा॑ꣳसि॒ वा ए॒तद्य॒ज्ञꣳ स॑चन्ते॒ यद॑न॒ उत्स॒र्जत्यक्र॑न्ददि॒त्यन्वा॑ह॒ रक्ष॑सा॒मप॑हत्यै॒ अन॑सा वह॒न्त्यप॑चितिमे॒वास्मि॑न् दधाति॒ तस्मा॑दन॒स्वी च॑ र॒थी चाति॑थीना॒मप॑चितत॒मौ[१०] ( ३ ) अप॑चितिमान् भवति॒ य ए॒वं वेद॑[११] स॒मिधा॒-ऽग्निं दु॑वस्य॒तेति॑ घृतानुषि॒क्तामव॑सिते स॒मिध॒मा द॑धाति॒ यथाऽति॑थय॒ आग॑ताय स॒र्पिष्व॑दाति॒थ्यं क्रि॒यते॑ ता॒दृगे॒व त॑[१२]—द्गाय॑त्रि॒या ब्रा॑ह्म॒णस्य॑ गाय॒त्रो हि ब्रा॑ह्म॒णस्त्रि॒ष्टुभा॑ राज॒न्य॑स्य॒ त्रैष्टु॑भो॒ हि रा॑ज॒न्यो॑[१३] ऽप्सु भस्म॒ प्र वे॑शयत्य॒प्सुयो॑नि॒र्वा अ॒ग्निः स्वामे॒वैनं॒ योनिं॑ गमयति[१४] ति॒सृभिः॒ प्र वे॑शयति त्रि॒वृद्वा ( ४ ) अ॒ग्निर्याव॑ने॒वाग्निस्तं प्र॑ति॒ष्ठां ग॑मयति[१५] परा॒ वा ए॒षो॑ऽग्निं व॑पति॒ यो॑ऽप्सु भस्म॑ प्रवे॒शय॑ति॒ ज्योति॑ष्मती-

श्यामवं दधाति ज्योतिरेवास्मिन् दधाति[16] द्वाभ्यां प्रतिष्ठित्यै[17] परा वा एष प्रजां पशून् वपति योऽप्सु भस्म प्रवेशयति पुनरूर्जा सह रय्येति पुनरुदेति प्रजामेव पशूनात्मन् धत्ते[18] पुनस्त्वाऽऽदित्या (५) रुद्रा वसवः समिन्धतामित्याहैता वा एतं देवता अग्रे समैन्धत ताभिरेवैनꣳ समिन्धे[19] बोधा स बोधीत्युप तिष्ठते बोधयत्येवैनं तस्मात् सुप्त्वा प्रजाः प्र बुध्यन्ते[20] यथास्थानमुप तिष्ठते तस्माद्यथास्थानं पशवः पुनरेत्योप तिष्ठन्ते[21] ॥ (देवा, ज्योतिष्मा,-नपचिततमौ, त्रिवृद्रा, आदित्या, द्विचत्वारिꣳशच्च) ॥ २ ॥

गार्हपत्यचयनम् ॥ अग्निर्ऋषिः ।

यावती वै पृथिवी तस्यै यम आधिपत्यं परीयाय यो वै यमं देवयजनमस्या अनिर्याच्याग्निं चिनुते यमायैनꣳ स चिनुतेऽपेतेत्यध्यवसाययति यममेव देवयजनमस्यै निर्याच्याऽऽत्मनेऽग्निं चिनुत इष्वग्रेण वा अस्या अनामृतमिच्छन्तो नाविन्दन् ते देवा एतद्यजुरपश्यन्नपेतेति यदेतेनाध्यवसाययत्य- (१) -नामृत एवाग्निं चिनुत उद्धन्ति यदेवास्या अमेध्यं तदप हन्त्य-पोऽवोक्षति शान्त्यै सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य रूपꣳरूपेणैव वैश्वानरमव रुन्धे ऊषान् नि वपति पुष्टिर्वा एषा प्रजननं यदूषाः पुष्ट्यामेव प्रजननेऽग्निं चिनुतेऽथो संज्ञान एव संज्ञानꣳ ह्येतत् (२) पशूनां यदूषा द्यावापृथिवी सहाऽऽस्तां ते वियती अब्रूतामस्त्वेव नौ सह यज्ञियमिति यदमुष्या यज्ञियमासीत् तदस्यामदधात् त ऊषा अभवन् यदस्या यज्ञियमासीत् तदमुष्यामदधात् तददश्चन्द्रमसि कृष्णमूषान् निवपन्नदो ध्यायेद् द्यावापृथिव्योरेव यज्ञियेऽग्निं चिनुते[7] ऽयꣳ सो अग्निरिति विश्वामित्रस्य (३) सूक्तं भवत्येतेन वै विश्वामित्रोऽग्नेः प्रियं धामावा-रुन्धाग्नेरेवैतेन प्रियं धामाव रुन्धे छन्दोभिर्वै देवाः सुवर्गं लोकमायन् चतस्रः प्राचीरुप दधाति चत्वारि छन्दाꣳसि छन्दोभिरेव तद्यजमानः सुवर्गं लोकमेति[9] तेषाꣳ सुवर्गं लोकं यतां दिशः समव्लीयन्त ते द्वे पुरस्तात् समीची उपादधत द्वे (४) पश्चात् समीची ताभिर्वै ते दिशोऽदꣳहन् यद् द्वे पुरस्तात् समीची उपदधाति द्वे पश्चात् समीची दिशां विधृत्या अथो पशवो वै छन्दाꣳसि पशूनेवास्मै समीचो दधात्यष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तं चिनुतेऽष्टावुप दधात्यष्टाक्षरा गायत्री गायत्री सुवर्गं लोकमञ्जसा वेद सुवर्गस्य लोकस्य (५) प्रज्ञात्यै[11] त्रयोदश लोकंपृणा उप दधात्येकविꣳशतिः सं पद्यन्ते प्रतिष्ठा वा एकविꣳशः प्रतिष्ठा गार्हपत्य एकविꣳशस्यैव प्रतिष्ठां गार्हपत्यमनु प्रति तिष्ठति[12] प्रत्यग्निं चिक्यानस्तिष्ठति य एवं वेद[13] पञ्चचितीकं चिन्वीत प्रथमं चिन्वानः पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे[14] त्रिचितीकं चिन्वीत द्वितीयं चिन्वानस्त्रय इमे लोका एष्वेव लोकेषु (६) प्रति-तिष्ठत्ये-कचितीकं चिन्वीत तृतीयं चिन्वान एकधा वै सुवर्गो लोक एकवृतैव सुवर्गं लोकमेति[16] पुरी-षेणाभ्यूहति तस्मान्माꣳसेनास्थि छन्नं[17] न दुश्चर्मा भवति य एवं वेद पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठति[19] ॥ (अध्यवसाययति, ह्येत,-द्विश्वामित्रस्य, दधत द्वे, लोकस्य, लोकेषु, सप्तचत्वारिꣳशच्च) ॥ ३ ॥

उख्याग्निसंवपनम् ॥ अग्निर्ऋषिः ।

वि वा एतौ द्विषाते यश्च पुराऽग्निर्यश्चोखायाꣳ समितमिति चतसृभिः सं नि वपति चत्वारि छन्दाꣳसि छन्दाꣳसि खलु वा अग्नेः प्रिया तनूः प्रिययैवैनौ तनुवा सꣳ शास्ति समितमित्याह तस्माद्ब्रह्मणा क्षत्रꣳ

समेति[२] यत् सन्युप्य विहरति तस्माद्ब्रह्मणा क्षत्रं व्येत्यृ[३]—तुभि-(१)-र्वा एतं दीक्षयन्ति स ऋतुभिरेव विमुच्यो मातेव पुत्रं पृथिवी पुरीष्यमित्याहर्तुभिरेवैनं दीक्षयित्वर्तुभिर्वि मुञ्चति[४] वैश्वानर्या शिक्यमा दत्ते स्वदयत्येवैनं[५]—नैर्ऋतीः कृष्णास्तिस्रस्तुषपका भवन्ति निर्ऋत्यै वा एतद्भागधेयं यत् तुषा निर्ऋत्यै रूपं कृष्णꣳ रूपेणैव निर्ऋतिं निरवदयत[६] इमां दिशं यन्त्येषा (२) वै निर्ऋत्यै दिक् स्वायामेव दिशि निर्ऋतिं निरवदयते[७] स्वकृत इरिण उप दधाति प्रदरे वैतद्वै निर्ऋत्या आयतनꣳ स्व एवाऽऽयतने निर्ऋतिं निरवदयते[८] शिक्यमभ्युप दधाति नैर्ऋतो वै पाशः साक्षादेवैनं निर्ऋतिपाशान्मुञ्चति[९] तिस्र उप दधाति त्रेधाविहितो वै पुरुषो यावानेव पुरुषस्तस्मान्निर्ऋतिमव यजते[१०] पराचीरुप (३) दधाति पराचीमेवास्मान्निर्ऋतिं प्र णुदते[११] ऽप्रतीक्षमा यन्ति निर्ऋत्या अन्तर्हित्यै[१२] मार्जयित्वोप तिष्ठन्ते मेध्यत्वाय[१३] गार्हपत्यमुप तिष्ठन्ते निर्ऋतिलोक एव चरित्वा पूता देवलोकमुपावर्तन्ते[१४] एकयोप तिष्ठन्त एकधैव यजमाने वीर्यं दधति[१५] निवेशनः सङ्गमनो वसूनामित्याह प्रजा वै पशवो वसु प्रजयैवैनं पशुभिः समर्धयन्ति[१६]॥

( ऋतुभि,-रेषा, पराचिरुपा,-ष्टाचत्वारिꣳशच्च ) ॥ ४ ॥

क्षेत्रकर्षणम् ॥ अग्निर्ऋषिः ।

पुरुषमात्रेण वि मिमीते यज्ञेन वै पुरुषः संमितो यज्ञपरुषैवैनं वि मिमीते[१] यावान् पुरुष ऊर्ध्वबाहुस्तावान् भवत्येतावद्वै पुरुषे वीर्यं वीर्येणैवैनं वि मिमीते[२] पक्षी भवति न ह्यपक्षः पतितुमर्हत्य[३]—रत्निना पक्षौ द्राघीयाꣳसौ भवतस्तस्मात् पक्षप्रवयाꣳसि वयाꣳसि[४] व्याममात्रौ पक्षौ च पुच्छं च भवत्येतावद्वै पुरुषे वीर्यं (१) वीर्यसम्मितो[५] वेणुना वि मिमीत आग्नेयो वै वेणुः सयोनित्वाय[६] यजुषा युनक्ति यजुषा कृषति व्यावृत्त्यै[७] षड्गवेन कृषति षड् वा ऋतव ऋतुभिरेवैनं कृषति[८] यद् द्वादशगवेन संवत्सरेणैवे[९]—यं वा अग्नेरतिदाहादबिभेत् सैतद् द्विगुणमपश्यत् कृष्टं चाकृष्टं च ततो वा इमां नात्यदहद्यत् कृष्टं चाकृष्टं च (२) भवत्यस्या अनतिदाहाय[१०] द्विगुणं त्वा अग्निमुद्यन्तुमर्हतीत्याहुर्यत् कृष्टं चाकृष्टं च भवत्यग्नेरुद्यत्यै[११] एतावन्तो वै पशवो द्विपादश्च चतुष्पादश्च तान् यत् प्राच उत्सृजेद्रुद्रायापि दध्याद्यद्दक्षिणा पितृभ्यो नि धुवेद्यत् प्रतीचो रक्षाꣳसि हन्युरुदीच उत्सृजत्येषा वै देवमनुष्याणाꣳ शान्ता दिक् (३) तामेवैनाननूत्सृजत्यथो खल्विमां दिशमुत्सृजत्यसौ वा आदित्यः प्राणः प्राणमेवैनाननूत्सृजति[१२] दक्षिणा पर्यावर्तन्ते स्वमेव वीर्यमनु पर्यावर्तन्ते तस्माद्दक्षिणोऽर्ध आत्मनो वीर्यावत्तरोऽथो आदित्यस्यैवाऽऽवृतमनु पर्यावर्तन्ते तस्मात् पराञ्चः पशवो वि तिष्ठन्ते प्रत्यञ्च आ वर्तन्ते[१३] तिस्रस्तिस्रः सीताः (४) कृषति त्रिवृतमेव यज्ञमुखे वि यातयत्यो[१४]—षधीर्वपति ब्रह्मणाऽन्नमव रुन्धेऽर्केऽर्कश्चीयते[१५] चतुर्दशभिर्वपति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्या अन्नस्यान्नस्य वपत्यन्नस्यान्नस्यावरुद्ध्यै[१६] कृष्टे वपति कृष्टे ह्योषधयः प्रतितिष्ठन्त्य[१७]—नुसीतं वपति प्रजात्यै[१८] द्वादशसु सीतासु वपति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा अन्नं पचति[१९] यदग्निचि-(५)-दनवरुद्धस्याश्नीयादवरुद्धेन व्यृध्येत ये वनस्पतीनां फलग्रहयस्तानिध्मेऽपि प्रोक्षेदनवरुद्धस्यावरुद्ध्यै[२०] दिग्भ्यो लोष्टान्त्समस्यति दिशामेव वीर्यमवरुद्ध्य दिशां वीर्येऽग्निं चिनुते[२१] यं द्विष्याद्यत्र स स्यात् तस्यै दिशो लोष्टमा हरेदिषमूर्जमहमित आ ददृ इतीषमे-

वोर्जं तस्यै दिशोऽवं ( ६ ) रुन्धे क्षोधुको भवति यस्तस्यां दिशि भवत्युत्तरवेदिमुप वपत्युत्तरवेद्यां ह्यग्निश्चीयतेऽथो पशवो वा उत्तरवेदिः पशूनेवाव रुन्धेऽथो यज्ञपरुषोऽनन्तरित्यै ॥ ( वीर्यं, च, दिक्, सीतां, अग्निाचि, -दव, पञ्चविंशतिश्च ) ॥ ५ ॥

कृष्टे क्षेत्रे सिकतादिवापः ॥ अग्निर्ऋषिः ।

अग्ने तव श्रवो वय इति सिकता नि वपत्येतद्वा अग्नेर्वैश्वानरस्य सूक्तंसूक्तेनैव वैश्वानरमव रुन्धे षड्भिर्नि वपति षड् वा ऋतवः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षादेव वैश्वानरमव रुन्धे समुद्रं वै नामैतच्छन्दः समुद्रमनु प्रजाः प्र जायन्ते यदेतेन सिकता नि वपति प्रजानां प्रजननायेन्द्रो ( १ ) वृत्राय वज्रं प्राहरत् स त्रेधा व्यभवत् स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयं येऽन्तः शरा अशीर्यन्त ताः शर्करा अभवन् तच्छर्कराणां शर्करत्वं वज्रो वै शर्कराः पशुरग्निर्यच्छर्कराभिरग्निं परिमिनोति वज्रेणैवास्मै पशून् परि गृह्णाति तस्माद्वज्रेण पशवः परिगृहीतास्तस्मात् स्थेयानस्थेयसो नोप हरते त्रिसप्ताभिः पशुकामस्य ( २ ) परि मिनुयात् सप्त वै शीर्षण्याः प्राणाः प्राणाः पशवः प्राणैरेवास्मै पशूनव रुन्धे त्रिणवाभिर्भ्रातृव्यवतस्त्रिवृतमेव वज्रं सम्भृत्य भ्रातृव्याय प्र हरति स्तृत्या अपरिमिताभिः परि मिनुयादपरिमितस्यावरुद्ध्यै यं कामयेतापशुः स्यादित्यपरिमित्य तस्य शर्कराः सिकता व्यूहेदपरिगृहीत एवास्य विषूचीनं रेतः परा सिञ्चत्यपशुरेव भवति ( ३ ) यं कामयेत पशुमान्त्स्यादिति परिमित्य तस्य शर्कराः सिकता व्यूहेत् परिगृहीत एवास्मै समीचीनं रेतः सिञ्चति पशुमानेव भवति सौम्या व्यूहति सोमो वै रेतोधा रेत एव तद्दधाति गायत्रिया ब्राह्मणस्य गायत्रो हि ब्राह्मणस्त्रिष्टुभा राजन्यस्य त्रैष्टुभो हि राजन्यः शंयुं बार्हस्पत्यं मेधो नोपानमत् सोऽग्निं प्राविशत् ( ४ ) सोऽग्नेः कृष्णो रूपं कृत्वोदायत सोऽश्वं प्राविशत् सोऽश्वस्यावान्तरशफोऽभवद्यदश्वमाक्रमयति य एव मेधोऽश्वं प्राविशत् तमेवाव रुन्धे प्रजापतिनाऽग्निश्चेतव्य इत्याहुः प्राजापत्योऽश्वो यदश्वमाक्रमयति प्रजापतिनैवाग्निं चिनुते पुष्करपर्णमुप दधाति योनिर्वा अग्नेः पुष्करपर्णं सयोनि-( ५ )-मेवाग्निं चिनुतेऽपां पृष्ठमसीत्युप दधात्यपां वा एतत् पृष्ठं यत् पुष्करपर्णं रूपेणैवैनदुप दधाति ॥ ( इन्द्रः, पशुकामस्य, भवत्य, -विशत्, सयोनिं, त्रिंशतिश्च ) ॥ ६ ॥

रुक्माद्युपधानम् ॥ अग्निर्ऋषिः ।

ब्रह्म जज्ञानमिति रुक्ममुप दधाति ब्रह्ममुखा वै प्रजापतिः प्रजा असृजत ब्रह्ममुखा एव तत् प्रजा यजमानः सृजते ब्रह्म जज्ञानमित्याह तस्माद्ब्राह्मणो मुख्यो मुख्यो भवति य एवं वेद ब्रह्मवादिनो वदन्ति न पृथिव्यां नान्तरिक्षे न दिव्यग्निश्चेतव्य इति यत् पृथिव्यां चिन्वीत पृथिवीं शुचाऽर्पयेन्नौषधयो न वनस्पतयः ( १ ) प्र जायेरन् यदन्तरिक्षे चिन्वीतान्तरिक्षं शुचाऽर्पयेन्न वयांसि प्र जायेरन् यद्दिवि चिन्वीत दिवं शुचाऽर्पयेन्न पर्जन्यो वर्षेद्रुक्ममुप दधात्यमृतं वै हिरण्यममृत एवाग्निं चिनुते प्रजात्यै हिरण्मयं पुरुषमुप दधाति यजमानलोकस्य विधृत्यै यदिष्टकाया आतृण्णमनूपदध्यात् पशूनां च यज-

मानस्य च प्राणमपि दध्याद् दक्षिणतः ( २ ) प्राञ्चमुप दधाति दाधार यजमानलोकं न पशूनां च यजमानस्य च प्राणमपि दधात्यथो खल्विष्टकाया आतृण्णमनूप दधाति प्राणानामुत्सृष्ट्यै[८] द्रप्सश्चस्कन्देत्यभि मृशति होत्रास्वेवैनं प्रति ष्ठापयति[९] स्रुचावुप दधात्याज्यस्य पूर्णां कार्ष्मर्यमयीं दध्नः पूर्णामौदुम्बरी-मियं वै कार्ष्मर्यमय्यसावौदुम्बरीमे एवोप धत्ते[१०] ( ३ ) तूष्णीमुप दधाति न हीमे यजुषाऽऽप्तुमर्हति[११] दक्षिणां कार्ष्मर्यमयीमुत्तरामौदुम्बरीं तस्मादस्या असावुत्तरा[१२] ऽऽज्यस्य पूर्णां कार्ष्मर्यमयीं वज्रो वा आज्यं वज्रः कार्ष्मर्यो वज्रेणैव यज्ञस्य दक्षिणतो रक्षांस्यप हन्ति दध्नः पूर्णामौदुम्बरीं पशवो वै दध्यूर्गुदुम्बरः पशुष्वेवोर्जं दधाति[१३] पूर्णे उप दधाति पूर्णे एवैन-( ४ )-ममुष्मिँल्लोक उप तिष्ठेते[१४] विराज्यग्निश्चेतव्य इत्याहुः स्रुग्वै विराड्यत् स्रुचावुपदधाति विराज्येवाग्निं चिनुते[१५] यज्ञमुखेयज्ञमुखे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति यज्ञमुखꣳ रुक्मो यद्रुक्मं व्याघारयति यज्ञमुखादेव रक्षाꣳस्यप हन्ति[१६] पञ्चभिर्व्याघारयति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्माद्रक्षाꣳस्यप हन्त्य-क्ष्णया व्याघारयति तस्मादक्ष्णया ( ५ ) पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[१८] ॥ ( वनस्पतयो, दक्षिणतो, धत्त, एनं, तस्मादक्ष्णया, पञ्च च ) ॥ ७ ॥

स्वयमातृण्णाद्युपधानम् ॥ अग्निर्ऋषिः ।

स्वयमातृण्णामुप दधातीयं वै स्वयमातृण्णेमामेवोप धत्ते[१] ऽश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते[२] प्रथमेष्टकोपधीयमाना पशूनां च यजमानस्य च प्राणमपि दधाति स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्या[३] अग्नावग्निश्चेतव्य इत्याहुरेष वा ( १ ) अग्निर्वैश्वानरो यद्ब्राह्मणस्तस्मै प्रथमामिष्टकां यजुष्कृतां प्र यच्छेत् तां ब्राह्मणश्चोपदध्याताम्-ग्नावेव तदग्निं चिनुते[४] ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वानिष्टकामुपदधाति त्रीन् वरान् दद्यात् त्रयो वै प्राणाः प्राणानाꣳ स्तृत्यै द्वावेव देयौ द्वौ हि प्राणावेकं एव देय एको हि प्राणः पशु-( २ )-र्वा एष यदग्निर्न खलु वै पशव आयवसे रमन्ते दूर्वेष्टकामुप दधाति पशूनां धृत्यै[६] द्वाभ्यां प्रतिष्ठित्यै[७] काण्डात्काण्डात् प्ररोहन्तीत्याह काण्डेनकाण्डेन ह्येषा प्रतितिष्ठत्ये-वा नो दूर्वे प्र तनु सहस्रेण शतेन चेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै[८] देवलक्ष्मं वै त्र्यालिखिता तामुत्तरलक्ष्माणं देवा उपादधताधरलक्ष्माणमसुरा यं ( ३ ) कामयेत वसीयान्त्स्यादित्युत्तरलक्ष्माणं तस्योप दध्याद्वसीयानेव भवति यं कामयेत पापीयान्त्स्यादित्यधरलक्ष्माणं तस्योप दध्यादसुरयोनिमेवैनमनु परा भावयति पापीयान् भवति[१०] त्र्यालिखिता भवतीमे वै लोकास्त्र्यालिखितैभ्य एव लोकेभ्यो भ्रातृव्यमन्तरेत्य[११]-ङ्गिरसः सुवर्गं लोकं यतः पुरोडाशः कूर्मो भूत्वाऽनु प्रासर्प ( ४ ) त्यत् कूर्ममुपदधाति यथा क्षेत्रविदञ्जसा नयत्येवमेवैनं कूर्मः सुवर्गं लोकमञ्जसा नयति[१२] मेध्यो वा एष पशूनां यत् कूर्मो यत् कूर्ममुपदधाति स्वमेव मेधं पश्यन्तः पशव उप तिष्ठन्ते[१३] श्मशानं वा एतत् क्रियते यन्मृतानां पशूनाꣳ शीर्षाण्युपधीयन्ते यज्जीवन्तं कूर्ममुपदधाति तेनाश्मशानचिद्वास्तव्यो वा एष यत् ( ५ ) कूर्मो[१४] मधु वाता ऋतायत इति दध्ना मधुमिश्रेणाभ्यनक्ति स्वदयत्येवैनं[१५] ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणाभ्यनक्त्युभयस्यावरुद्ध्यै[१६] मही द्यौः पृथिवी च न इत्याहाऽऽभ्यामेवैनमुभयतः

परि गृह्णाति[१७] प्राञ्चमुप दधाति सुवर्गस्य लोकस्य समष्ट्यै[१८] पुरस्तात् प्रत्यञ्चमुप दधाति तस्मात् (६) पुरस्तात् प्रत्यञ्चः पशवो मेधमुप तिष्ठन्ते[१९] यो वा अपनाभिमग्निं चिनुते यजमानस्य नाभिमनु प्र विशति स एनमीश्वरो हिंसितोरुलूखलमुप दधात्येषा वा अग्नेर्नाभिः सनाभिमेवाग्निं चिनुते हिंसायै[२०] औदुम्बरं भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे[२१] मध्यत उप दधाति मध्यत एवास्मा ऊर्जं दधाति तस्मा-(७)-न्मध्यत ऊर्जा भुञ्जते[२२] इयद्भवति प्रजापतिना यज्ञमुखेन सम्मितम्[२३]—मवं हन्त्यन्नमेवार्के[२४]—वैष्णव्यर्चोप दधाति विष्णुर्वै यज्ञो वैष्णवा वनस्पतयो यज्ञ एव यज्ञं प्रति ष्ठापयति[२५] ॥

( एष वै, पशु,-र्यं,-मसर्प,-द्वेष यत्, तस्मात्, तस्मात्, सप्तविंशतिश्च ) ॥ ८ ॥

उखाद्युपधानम् ॥ अग्निर्ऋषिः ।

एषां वा एतल्लोकानां ज्योतिः सम्भृतं यदुखा यदुखामुपदधात्येभ्य एव लोकेभ्यो ज्योतिरव रुन्धे[१] मध्यत उप दधाति मध्यत एवास्मै ज्योतिर्दधाति तस्मान्मध्यतो ज्योतिरुपाऽऽस्महे[२] सिकताभिः पूरयत्येतद्वा अग्नेर्वैश्वानरस्य रूपं रूपेणैव वैश्वानरमव रुन्धे[३] यं कामयेत क्षोधुकः स्यादित्यूनां तस्योप (१) दध्यात् क्षोधुक एव भवति यं कामयेतानुपदस्यदन्नमद्यादिति पूर्णां तस्योप दध्यादनुपदस्यदेवान्नमत्ति[४] सहस्रं वै प्रति पुरुषः पशूनां यच्छति सहस्रमन्ये पशवो मध्ये पुरुषशीर्षमुप दधाति सवीर्यत्वायो[५]—खायामपि दधाति प्रतिष्ठामेवैनद्गमयति[६] व्यृद्धं वा एतत् प्राणैरमेध्यं यत् पुरुषशीर्षममृतं खलु वै प्राणा (२) अमृतं हिरण्यं प्राणेषु हिरण्यशल्कान् प्रत्यस्यति प्रतिष्ठामेवैनद्गमयित्वा प्राणैः समर्धयति[७] दध्ना मधुमिश्रेण पूरयति मधव्योऽसानीति[८] शृतातङ्क्येन मेध्यत्वाय[९] ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेण पूरयत्युभयस्यावरुद्ध्यै[१०] पशुशीर्षाण्युप दधाति पशवो वै पशुशीर्षाणि पशूनेवाव रुन्धे[११] यं कामयेतापशुः स्यादिति (३) विषूचीनानि तस्योप दध्याद्विषूच एवास्मात् पशून् दधात्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादिति समीचीनानि तस्योप दध्यात् समीच एवास्मै पशून् दधाति पशुमानेव भवति[१२] पुरस्तात् प्रतीचीनमश्वस्योप दधाति पश्चात् प्राचीनमृषभस्यापशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वानेवास्मै समीचो दधात्ये[१३]—तावन्तो वै पशवो (४) द्विपादश्च तान् वा एतदग्नौ प्र दधाति यत् पशुशीर्षाण्युपदधात्यमुमारण्यमनु ते दिशामीत्याह ग्राम्येभ्य एव पशुभ्य आरण्यान् पशूञ्छुचमनूत्सृजति तस्मात् समावत् पशूनां प्रजायमानानामारण्याः पशवः कनीयांसः शुचा ह्यृताः[१४] सर्पशीर्षमुप दधाति यैव सर्पे त्विषिस्तामेवाव रुन्धे[१५] (५) यत् समीचीनं पशुशीर्षैरुप दध्याद् ग्राम्यान् पशून् दंशुकाः स्युर्यद्विषूचीनमारण्यान् यजुरेव वदेदव तां त्विषिं रुन्धे या सर्पे न ग्राम्यान् पशून् हिनस्ति नाऽऽरण्या[१६]—नथो खलूपधेयमेव यदुपदधाति तेन तां त्विषिमव रुन्धे या सर्पे यद्यजुर्वदति[१७] तेन शान्तम् ॥

( उप, प्राणा, इति, पशवो, ऽव रुन्धे, चतुश्चत्वारिंशच्च ) ॥ ९ ॥

अपस्यानां प्राणभृतामपानभृतां च प्रथमचितावुपधानम् ॥ अग्निर्ऋषिः ।

पशुर्वा एष यदग्निर्योनिः खलु वा एषा पशोर्वि क्रियते यत् प्राचीनमैष्टकाद्यजुः क्रियते रेतोऽपस्या अपस्या उप दधाति योनावेव रेतो दधाति[१] पञ्चोप दधाति पाङ्क्ताः पशवः पशूनेवास्मै प्र जनयति[२]

*

पञ्च दक्षिणतो वज्रो वा अपस्या वज्रेणैव यज्ञस्य दक्षिणतो रक्षाꣳस्यप हन्ति[3] पञ्च पश्चात् ( १ )
प्राचीरुप दधाति पश्चाद्वै प्राचीनꣳ रेतो धीयते पश्चादेवास्मै प्राचीनꣳरेतो दधाति[4] पञ्च पुरस्तात् प्रती-
चीरुप दधाति पञ्च पश्चात् प्राचीस्तस्मात् प्राचीनꣳ रेतो धीयते प्रतीचीः प्रजा जायन्ते[5] पञ्चोत्तरतश्छं-
न्दस्याः पशवो वै छन्दस्याः पशूनेव प्रजातान्त्स्वमायतनमभि पर्यूहत[6] इयं वा अग्नेरतिदाहादबिभेत् सैता
( २ ) अपस्या अपश्यत् ता उपाधत्त ततो वा इमां नात्यदहद्यदपस्या उपदधात्यस्या अनतिदाहायो[7]—
वाचं हेयमददित् स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति[8] प्राणभृत उप दधाति
रेतस्येव प्राणान् दधाति तस्माद्वदन् प्राणन् पश्यञ्छृण्वन् पशुर्जायते[9] ऽयं पुरो ( ३ ) भुव इति पुर-
स्तादुप दधाति प्राणमेवैताभिर्दाधारायं दक्षिणा विश्वकर्मेति दक्षिणतो मन एवैताभिर्दाधारायं पश्चाद्वि-
श्वव्यचा इति पश्चाच्चक्षुरेवैताभिर्दाधारेदमुत्तरात् सुवरित्युत्तरतः श्रोत्रमेवैताभिर्दाधारेयमुपरि मतिरित्यु-
परिष्टाद्वाचमेवैताभिर्दाधार[10] दशदशोप दधाति सवीर्यत्वायाक्ष्[11]—क्ष्णयो--( ४ )--प दधाति तस्मादक्ष्णया
पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[12] याः प्राचीस्ताभिर्वसिष्ठ आर्ध्नोद्या दक्षिणा ताभिर्भरद्वाजो याः
प्रतीचीस्ताभिर्विश्वामित्रो या उदीचीस्ताभिर्जमदग्निर्या ऊर्ध्वास्ताभिर्विश्वकर्मा[13] य एवमेतासामृद्धिं वेद-
र्ध्नोत्येव य आसामेवं बन्धुतां वेद बन्धुमान् भवति य आसामेवं क्लृप्तिं वेद कल्पते ( ५ ) ऽस्मै य आसा-
मेवमायतनं वेदाऽऽयतनवान् भवति य आसामेवं प्रतिष्ठां वेद प्रत्येव तिष्ठति[14] प्राणभृत उपधाय संयत
उप दधाति प्राणानेवास्मिन् धित्वा संयद्भिः सं यच्छति तत् संयताꣳ संयत्त्वमथो प्राण एवापानं दधाति
तस्मात् प्राणापानौ सं चरतो[15] विषूचीरुप दधाति तस्माद्विष्वञ्चौ प्राणापानौ[16] यद्वा अग्नेरसंयत-
( ६ )-मसुवर्ग्यमस्य तत् सुवर्ग्योऽग्निर्यत् संयत उप दधाति सममेवैनं यच्छति सुवर्ग्यमेवाक[17]—स्त्र्यविर्वयः
कृतमयानामित्याह वयोभिरेवायानव रुन्धेऽयैर्वयाꣳसि[18] सर्वतो वायुमतीर्भवन्ति तस्मादयꣳ सर्वतः पवते[19] ॥

( पश्चा,-द्वैताः, पुरो, ऽक्ष्णया, कल्पते, ऽसंयतं, पञ्चत्रिꣳशच्च ) ॥ १० ॥

अश्वमेधे अश्वशरीरे सूचीभी रेखाकरणम् ॥ अनुष्टुप्; ६ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । बृहत्युष्णिहा ककुत् सूचीभिः शिम्यन्तु त्वा ॥
द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा ।
सछन्दा या च विच्छन्दाः सूचीभिः शिम्यन्तु त्वा[2] ॥
महानाम्नी रेवतयो विश्वा आशाः प्रसूवरीः । मेघ्या विद्युतो वाचः सूचीभिः शिम्यन्तु त्वा[3] ॥
रजता हरिणीः सीसा युजो युज्यन्ते कर्मभिः । अश्वस्य वाजिनस्त्वचि सूचीभिः शिम्यन्तु त्वा ॥
नारी-( १ )-स्ते पत्नयो लोम वि चिन्वन्तु मनीषया ।
देवानां पत्नीर्दिशः सूचीभिः शिम्यन्तु त्वा[5] ॥
कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय ।
इहेहैषां कृणुत भोजनानि ये बर्हिषो नमोवृक्तिं न जग्मुः ॥ ( नारी,-ख्रिꣳशच्च ) ॥ ११ ॥

अश्वस्य त्वक्छेदनम् ॥ अनुष्टुप् । विश्वेदेवा ऋषयः ।

कस्त्वा छ्यति कस्त्वा वि शास्ति कस्ते गात्राणि शिम्यति । क उं ते शमिता कविः[१] ॥
ऋतवस्त ऋतुधा परुः शमितारो वि शासतु ।
संवत्सरस्य धायसा शिमीभिः शिम्यन्तु त्वा[२] ॥
दैव्या अध्वर्यवस्त्वा छ्यन्तु वि चं शासतु । गात्राणि पर्वशस्ते शिमाः कृण्वन्तु शिम्यन्तः[३] ॥
अर्धमासाः परूꣳषि ते मासाश्छ्यन्तु शिम्यन्तः ।
अहोरात्राणि मरुतो विलिष्टꣳ (१) सूदयन्तु ते[४] ॥
पृथिवी ते ऽन्तरिक्षेण वायुश्छिद्रं भिषज्यतु । द्यौस्ते नक्षत्रैः सह रूपं कृणोतु साधुया[५] ॥
शं ते परेभ्यो गात्रेभ्यः शमस्त्ववरेभ्यः । शमस्थभ्यो मज्जभ्यः शर्मु ते तनुवे भुवत्[६] ॥
( विलिष्टं, त्रिꣳशच्च ) ॥ १२ ॥

[ विष्णुमुखा ३४२। अन्नपते २९२ । यावती ३४७। वि १९८। पुरुषमात्रेणा-३२५। ग्ने २७० । ब्रह्म २५५।स्वय-३७७। -मेधा २९४ । पशु- ३३५ ।-गायत्री ८० । को ८० । द्वादश ॥ ३१९५ ]

[ ॥ इति पञ्चमकाण्डे द्वितीयः प्रपाठकः ॥ २ ॥ ]

## चितीनां निरूपणम् ।

[ अथ तृतीयः प्रपाठकः ॥ ३ ॥ ]

आश्विनी-ऋतव्या-प्राणभृत्-अपस्या-वयस्या-स्वयेष्टकोपधानविधानम् ॥ अग्निर्ऋषिः ।

उत्सन्नयज्ञो वा एष यदग्निः किं वाऽहैतस्य क्रियते किं वा न यद्वै यज्ञस्य क्रियमाणस्यान्तर्यन्ति पूयति वा अस्य तदाश्विनीरुप दधात्यश्विनौ वै देवानां भिषजौ ताभ्यामेवास्मै भेषजं करोति[१] पञ्चोप दधाति पाङ्क्तो यज्ञो यावानेव यज्ञस्तस्मै भेषजं करोत्यृ[२]—तव्या उप दधात्यृतूनां कॢप्त्यै[३] (१) पञ्चोप दधाति पञ्च वा ऋतवो यावन्त एवर्तवस्तान् कल्पयति[४] समानप्रभृतयो भवन्ति समानोदर्कास्तस्मात् समाना ऋतवं एकेन पदेन व्यावर्तन्ते तस्मादृतवो व्यावर्तन्ते[६] प्राणभृत उप दधात्यृतुष्वेव प्राणान् दधाति तस्मात् समानाः सन्त ऋतवो न जीर्यन्त्यथो प्र जनयत्येवैना[७]—नेष वै वायुर्यत् प्राणो यदृतव्या उपधाय प्राणभृत (२) उपदधाति तस्मात् सर्वानृतूननु वायुरा वरीवर्ति[८] वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे[९] यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात् सर्वानृतून् वर्षति[१०] यत् प्राणभृत उपधाय वृष्टिसनीरुपदधाति तस्माद्वायुप्रच्युता दिवो वृष्टिरीर्ते[११] पशवो वै वयस्या नानामनसः खलु वै पशवो नानाव्रतास्तेऽप एवाभि समनसो[१२] (३) यं कामयेतापशुः स्यादिति वयस्यास्तस्योपधायापस्या उप दध्यादसंज्ञानमेवास्मै पशुभिः करोत्यपशुरेव भवति यं कामयेत पशुमान्त्स्यादित्यपस्यास्तस्योपधाय वयस्या उप दध्यात् संज्ञानमेवास्मै पशुभिः करोति पशुमानेव भवति[१३] चतस्रः पुरस्तादुप दधाति तस्माच्चत्वारि चक्षुषो रूपाणि द्वे शुक्ले द्वे कृष्णे[१४] (४) मूर्धन्वतीर्भवन्ति तस्मात् पुरस्तान्मूर्धा[१५] पञ्च दक्षिणायाꣳ

श्रोण्यामुप दधाति पश्चोत्तरस्यां तस्मात् पश्चाद्वर्षीयान् पुरस्तात् प्रवणः पष्ठ्वाद्वयो वस्तो वय इति दक्षिणेऽँस उप दधाति वृष्णिर्वय इत्युत्तरेऽँसावेव प्रति दधाति[17] व्याघ्रो वय इति दक्षिणे पक्ष उप दधाति सिँहो वय इत्युत्तरे पक्षयोरेव वीर्यं दधाति[18] पुरुषो वय इति ( ५ ) मध्ये तस्मात् पुरुषः पशूनामधिपतिः[19] ॥
( क्लृप्त्यै, प्राणभृतः, समनसः, कृष्णे, इति, पञ्च च ) ॥ १ ॥

स्वयमातृण्णा-दिश्या-प्राणभृत्-बृहती-वालखिल्याख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

इन्द्राग्नी अव्यथमानामिति स्वयमातृण्णामुप दधातीन्द्राग्निभ्यां वा इमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्यै[1] अधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषेन्द्राग्नी इत्याहेन्द्राग्नी वै देवानामोजोभृतावोजसैवैनामन्तरिक्षे चिनुते धृत्यै[2] स्वयमातृण्णामुप दधात्यन्तरिक्षं वै स्वयमातृण्णाऽन्तरिक्षमेवोप धत्ते[3] ऽश्वमुप ( १ ) घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते[4] स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै[5] देवानां वै सुवर्गं लोकं यतां दिशः समव्लीयन्त त एता दिश्या अपश्यन् ता उपादधत ताभिर्वै ते दिशोऽदृँहन् यद्दिश्या उपदधाति दिशां विधृत्यै[6] दश प्राणभृतः पुरस्तादुप ( २ ) दधाति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव पुरस्ताद्धत्ते तस्मात् पुरस्तात् प्राणाः[7] ज्योतिष्मतीमुत्तमामुप दधाति तस्मात् प्राणानां वाग्ज्योतिरुत्तमा[8] दशोप दधाति दशाक्षरा विराड् विराट् छन्दसां ज्योतिर्ज्योतिरेव पुरस्ताद्धत्ते तस्मात् पुरस्ताज्ज्योतिरुपाऽऽस्महे[9] छन्दाँसि पशुष्वाजिमयुस्तान् बृहत्युदजयत् तस्माद्बार्हताः ( ३ ) पशव उच्यन्ते[10] मा छन्द इति दक्षिणत उप दधाति तस्माद्दक्षिणावृतो मासाः पृथिवी छन्द इति पश्चात् प्रतिष्ठित्या अग्निर्देवतेत्युत्तरत ओजो वा अग्निरोज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति[11] षट्त्रिँशत् सं पद्यन्ते षट्त्रिँशदक्षरा बृहती बार्हताः पशवो बृहत्यैवास्मै पशूनव रुन्धे बृहती छन्दसाँ स्वाराज्यं परीयाय यस्यैता ( ४ ) उपधीयन्ते गच्छति स्वाराज्यँ[12] सप्त वालखिल्याः पुरस्तादुप दधाति सप्त पश्चात् सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ प्राणानाँ सवीर्यत्वाय[13] मूर्धाऽसि राडिति पुरस्तादुप दधाति यन्त्री राडिति पश्चात् प्राणानेवास्मै समीचो दधाति[14] ॥ ( उपो,- पु, बार्हता, एता,- श्चतुस्त्रिँशच्च ) ॥ २ ॥

अक्ष्णयास्तोमीयोपधानविधिः ॥ अग्निर्ऋषिः ।

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा एता अक्ष्णयास्तोमीया अपश्यन् ता अन्यथाऽनूच्यान्यथोपादधत तदसुरा नान्ववायन् ततो देवा अभवन् पराऽसुरा यदक्ष्णयास्तोमीया अन्यथाऽनूच्यान्यथोपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्याशुस्त्रिवृदिति पुरस्तादुप दधाति यज्ञमुखं वै त्रिवृ-( १ )-द्यज्ञमुखमेव पुरस्ताद्वि यातयति[2] व्योम सप्तदश इति दक्षिणतोऽन्नं वै व्योमान्नँ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते[3] धरुण एकविँश इति पश्चात् प्रतिष्ठा वा एकविँशः प्रतिष्ठित्यै[4] भान्तः पञ्चदश इत्युत्तरत ओजो वै भान्त ओजः पञ्चदश ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति[5] प्रतूर्तिरष्टादश इति पुरस्ता-( २ )-दुप दधाति द्वौ त्रिवृतावभिपूर्वं यज्ञमुखे वि यातयत्यभिवर्तः सविँश इति दक्षिणतोऽन्नं वा अभिवर्तोऽन्नँ सविँशोऽन्नमेव दक्षिणतो

धत्ते तस्माद्दक्षिणेनान्नमद्यते[7] वर्चो द्वाविꣳश इति पश्चाद्यद्विꣳशतिर्द्वे तेन विराजौ यद्द्वे प्रतिष्ठा तेन विराजोरेवाभिपूर्वमन्नाद्ये प्रति तिष्ठति[8] तपो नवदश इत्युत्तरतस्तस्मात् सव्यो (३) हस्तयोस्तपस्वितरो[9] योनिश्चतुर्विꣳश इति पुरस्तादुप दधाति चतुर्विꣳशत्यक्षरा गायत्री गायत्री यज्ञमुखं यज्ञमुखमेव पुरस्ताद्वि यातयति[10] गर्भाः पञ्चविꣳश इति दक्षिणतोऽन्नं वै गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते[11] ओजस्त्रिणव इति पश्चादिमे वै लोकास्त्रिणव एष्वेव लोकेषु प्रति तिष्ठति[12] सम्भरणस्त्रयोविꣳश इत्यु-(४)-त्तरतस्तस्मात् सव्यो हस्तयोः सम्भार्यतरः[13] क्रतुरेकत्रिꣳश इति पुरस्तादुप दधाति वाग्वै क्रतुर्यज्ञमुखं वाग्यज्ञमुखमेव पुरस्ताद्वि यातयति[14] ब्रध्नस्य विष्टपं चतुस्त्रिꣳश इति दक्षिणतोऽसौ वा आदित्यो ब्रध्नस्य विष्टपं ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः[15] प्रतिष्ठा त्रयस्त्रिꣳश इति पश्चात् प्रतिष्ठित्यै[16] नाकः षट्त्रिꣳश इत्युत्तरतः सुवर्गो वै (५) लोको नाकः सुवर्गस्य लोकस्य समष्ट्यै[17] ॥ (त्रिवृत्, पुरस्तात्, सव्य, इति, वै, पञ्च च) ॥ ३ ॥

अक्ष्णयास्तोमीया-सृष्टि-व्युष्ट्याख्योपधानविधिः ॥ अग्निर्ऋषिः ।

अग्नेर्भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वा अग्निर्यज्ञमुखं दीक्षा यज्ञमुखं ब्रह्म यज्ञमुखं त्रिवृद्यज्ञमुखमेव पुरस्ताद्वि यातयति[1] नृचक्षसां भागोऽसीति दक्षिणतः शुश्रुवाꣳसो वै नृचक्षसोऽन्नं धाता जातायैवास्मा अन्नमपि दधाति तस्माज्जातोऽन्नमत्ति जनित्रꣳ स्पृतꣳ सप्तदशः स्तोम इत्याहान्नं वै जनित्र-(१)-मन्नꣳ सप्तदशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते[2] मित्रस्य भागोऽसीति पश्चात् प्राणो वै मित्रोऽपानो वरुणः प्राणापानावेवास्मिन् दधाति दिवो वृष्टिर्वाताः स्पृता एकविꣳशः स्तोम इत्याह प्रतिष्ठा वा एकविꣳशः प्रतिष्ठित्यै[3] इन्द्रस्य भागोऽसीत्युत्तरत ओजो वा इन्द्र ओजो विष्णुरोजः क्षत्रमोजः पञ्चदश (२) ओज एवोत्तरतो धत्ते तस्मादुत्तरतोऽभिप्रयायी जयति[4] वसूनां भागोऽसीति पुरस्तादुप दधाति यज्ञमुखं वै वसवो यज्ञमुखꣳ रुद्रा यज्ञमुखं चतुर्विꣳशो यज्ञमुखमेव पुरस्ताद्वि यातयत्या[5]दित्यानां भागोऽसीति दक्षिणतोऽन्नं वा आदित्या अन्नं मरुतोऽन्नं गर्भा अन्नं पञ्चविꣳशोऽन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनाऽन्नमद्यते[6] ऽदित्यै भागो (३) ऽसीति पश्चात् प्रतिष्ठा वा अदितिः प्रतिष्ठा पूषा प्रतिष्ठा त्रिणवः प्रतिष्ठित्यै[7] देवस्य सवितुर्भागोऽसीत्युत्तरतो ब्रह्म वै देवः सविता ब्रह्म बृहस्पतिर्ब्रह्म चतुष्टोमो ब्रह्मवर्चसमेवोत्तरतो धत्ते तस्मादुत्तरोऽर्धो ब्रह्मवर्चसितरः सावित्रवती भवति प्रसूत्यै तस्माद्ब्राह्मणानामुदीची सनिः प्रसूता धर्त्रश्चतुष्टोम इति पुरस्तादुप दधाति यज्ञमुखं वै धर्त्रो (४) यज्ञमुखं चतुष्टोमो यज्ञमुखमेव पुरस्ताद्वि यातयति[9] यावानां भागोऽसीति दक्षिणतो मासा वै यावा अर्धमासा अयावास्तस्माद्दक्षिणावृतो मासा अन्नं वै यावा अन्नं प्रजा अन्नमेव दक्षिणतो धत्ते तस्माद्दक्षिणेनान्नमद्यते[10] ऋभूणां भागोऽसीति पश्चात् प्रतिष्ठित्यै[11] विवर्तोऽष्टाचत्वारिꣳश इत्युत्तरतोऽनयोर्लोकयोः सवीर्यत्वाय तस्मादिमौ लोकौ समावद्वीर्यौ (५) यस्य मुख्यवतीः पुरस्तादुपधीयन्ते मुख्य एव भवत्याऽस्य मुख्यो जायते यस्यान्नवतीर्दक्षिणतोऽत्त्यन्नमाऽस्यान्नादो जायते यस्य प्रतिष्ठावतीः पश्चात् प्रत्येव तिष्ठति यस्यौजस्वतीरुत्तरत ओजस्व्येव भवत्याऽस्यौजस्वी जायते[12] ऽर्को वा एष यदग्निस्तस्यैतदेव स्तोत्रमेतच्छस्त्रं यदेषा विधा (६)

विधीयतेऽर्क एव तदर्क्यमनु वि धीयते[13] ऽत्यन्नमाऽस्यान्नादो जायते यस्यैषा विधा विधीयते य उं चैनामेवं वेद[14] सृष्टीरुप दधाति यथासृष्टमेवाव रुन्धे[15] न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा एता व्युष्टीरपश्यन् ता उपादधत ततो वा इदं ( ७ ) व्यौच्छद्यस्यैता उपधीयन्ते व्येवास्मा उच्छत्यथो तम एवाप हते[16] ॥ ( वै जनित्रं, पञ्चदशो, ऽदित्यै भागो, वै धर्त्रः, समावद्वीर्यौ, विधा, ततो वा इदं, चतुर्दश च ) ॥ ४ ॥

असपत्ना-विराट्-स्तोमभागाख्योपधानविधिः ॥ अग्निर्ऋषिः ।

अग्ने जातान् प्र णुदा नः सपत्नानिति पुरस्तादुप दधाति जातानेव भ्रातृव्यान् प्र णुदते[1] सहसा जातानिति पश्चाज्जनिष्यमाणानेव प्रति नुदते[2] चतुश्चत्वारिंशः स्तोम इति दक्षिणतो ब्रह्मवर्चसं वै चतुश्चत्वारिंशो ब्रह्मवर्चसमेव दक्षिणतो धत्ते तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः[3] षोडशः स्तोम इत्युत्तरत ओजो वै षोडश ओज एवोत्तरतो धत्ते तस्मा-( १ )-दुत्तरतोऽभिप्रयायी जयति[4] वज्रो वै चतुश्चत्वारिंशो वज्रः षोडशो यदेते इष्टके उपदधाति जातांश्चैव जनिष्यमाणांश्च भ्रातृव्यान् प्रणुद्य वज्रमनु प्र हरति स्तृत्यै[5] पुरीषवतीं मध्य उप दधाति पुरीषं वै मध्यमात्मनः सात्मानमेवाग्निं चिनुते[6] सात्माऽमुष्मिँल्लोके भवति य एवं वेद[7]—ता वा असपत्ना नामेष्टका यस्यैता उपधीयन्ते ( २ ) नास्य सपत्नो भवति[8] पशुर्वा एष यदग्निर्विराज उत्तमायां चित्यामुप दधाति विराजमेवोत्तमां पशुषु दधाति तस्मात् पशुमानुत्तमां वाचं वदति[9] दशदशोप दधाति सवीर्यत्वाया[10]—क्ष्णयोप दधाति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[11] यानि वै छन्दांसि सुवर्ग्याण्यासन् तैर्देवाः सुवर्गं लोकमायन् तेनर्षयो ( ३ ) ऽश्राम्यन् ते तपोऽतप्यन्त तानि तपसाऽपश्यन् तेभ्य एता इष्टका निरमिमतेवश्छन्दो वरिवश्छन्द इति ता उपादधत ताभिर्वै ते सुवर्गं लोकमायन् यदेता इष्टका उपदधाति यान्येव छन्दांसि सुवर्ग्याणि तैरेव यजमानः सुवर्गं लोकमेति[12] यज्ञेन वै प्रजापतिः प्रजा असृजत ताः स्तोमभागैरेवासृजत यत् ( ४ ) स्तोमभागा उपदधाति प्रजा एव तद्यजमानः सृजते[13] बृहस्पतिर्वा एतद्यज्ञस्य तेजः समभरद्यत् स्तोमभागा यत् स्तोमभागा उपदधाति सतेजसमेवाग्निं चिनुते बृहस्पतिर्वा एतां यज्ञस्य प्रतिष्ठामपश्यद्यत् स्तोमभागा यत् स्तोमभागा उपदधाति यज्ञस्य प्रतिष्ठित्यै[14] सप्तसप्तोप दधाति सवीर्यत्वाय तिस्रो मध्ये प्रतिष्ठित्यै[15] ॥ ( उत्तरतो धत्ते तस्मा,-दुपधीयन्त, ऋषयो, ऽसृजत यत्, त्रिचत्वारिंशच्च ) ॥ ५ ॥

स्तोमभागाख्योपधानविधानम् ॥ अग्निर्ऋषिः ।

रश्मिरित्येवाऽऽदित्यमसृजत प्रेतिरिति धर्ममन्वितिरिति दिवंसन्धिरित्यन्तरिक्षं प्रतिधिरिति पृथिवीं विष्टम्भ इति वृष्टिं प्रवेत्यहरनुवेति रात्रिमुशिगिति वसून् प्रकेत इति रुद्रान्त्सुदीतिरित्यादित्यानोज इति पितॄंस्तन्तुरिति प्रजाः पृतनाषाडिति पशून् रेवदित्योषधी[1]—रभिजिदसि युक्तग्रावे-( १ )-न्द्राय त्वेन्द्रं जिन्वेत्येव दक्षिणतो वज्रं पर्यौहदभिजित्यै[2] ताः प्रजा अपप्राणा असृजत तास्वधिपतिरसीत्येव प्राणमदधाद्यन्तेत्यपानंसंसर्प इति चक्षुर्वयोधा इति श्रोत्रं[3] ताः प्रजाः प्राणतीरपानतीः पश्यन्तीः शृण्वतीर्न मिथुनी अभवन् तासु त्रिवृदसीत्येव मिथुनमदधात्[4] ताः प्रजा मिथुनी ( २ ) भवन्तीर्न प्राजायन्त ताः संरोहोऽसि नीरोहोऽसीत्येव प्राजनयत्[5] ताः प्रजाः प्रजाता न प्रत्यतिष्ठन् ता वसुकोऽसि वेषश्रिरसि वस्य-

ष्ठिरसीत्येवैषु लोकेषु प्रत्यस्थापयद्यदाह वसुकोऽसि वेषश्रिरसि वस्यष्ठिरसीति प्रजा एव प्रजाता एषु लोकेषु प्रति ष्ठापयति[६] सात्माऽन्तरिक्षꣳ (३) रोहति सप्राणोऽमुष्मिँल्लोके प्रति तिष्ठत्यव्यर्धुकः प्राणापानाभ्यां भवति य एवं वेद[७] ॥ (युक्तग्रावा, प्रजा मिथुनम्,-न्तरिक्षं, द्वादश च) ॥ ६ ॥

नाकसत्-चोडा-स्वयमातृण्णा-विकर्णीनामुपधानविधिः ॥ अग्निर्ऋषिः ।

नाकसद्भिर्वै देवाः सुवर्गं लोकमायन् तन्नाकसदां नाकसत्त्वं यन्नाकसद उपदधाति नाकसद्भिरेव तद्यजमानः सुवर्गं लोकमेति[१] सुवर्गो वै लोको नाको यस्यैता उपधीयन्ते नास्मा अकं भवति[२] यजमानायतनं वै नाकसदो यन्नाकसद उपदधात्यायतनमेव तद्यजमानः कुरुते[३] पृष्ठानां वा एतत् तेजः संभृतं यन्नाकसदो यन्नाकसद (१) उपदधाति पृष्ठानामेव तेजोऽव रुन्धे[४] पञ्चचोडा उप दधात्यप्सरस एवैनमेता भूता अमुष्मिँल्लोक उप शेरेऽथो तनूपानीरेवैता यजमानस्य[५] यं द्विष्यात् तमुपदधद्ध्यायेदेताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्तिमार्च्छेत्युꣳ—त्तरा नाकसद्भ्य उप दधाति यथा जायामानीय गृहेषु निषादयति तादृगेव तत् (२) पश्चात् प्राचीमुत्तमामुप दधाति तस्मात् पश्चात् प्राची पत्न्यन्वास्ते स्वयमातृण्णां च विकर्णीं चोत्तमे उप दधाति प्राणो वै स्वयमातृण्णाऽऽयुर्विकर्णी प्राणं चैवाऽऽयुश्च प्राणानामुत्तमौ धत्ते तस्मात् प्राणश्चाऽऽयुश्च प्राणानामुत्तमौ[९] नान्यामुत्तरामिष्टकामुप दध्याद्यदन्यामुत्तरामिष्टकामुपदध्यात् पशूनां (३) च यजमानस्य च प्राणं चाऽऽयुश्चापि दध्यात् तस्मान्नान्योत्तरेष्टकोपधेया[१०] स्वयमातृण्णामुप दधात्यसौ वै स्वयमातृण्णाऽमूमेवोप धत्ते[११] ऽश्वमुप घ्रापयति प्राणमेवास्यां दधात्यथो प्राजापत्यो वा अश्वः प्रजापतिनैवाग्निं चिनुते[१२] स्वयमातृण्णा भवति प्राणानामुत्सृष्ट्या अथो सुवर्गस्य लोकस्यानुख्यात्यै[१३] एषा वै (४) देवानां विक्रान्तिर्यद्विकर्णी यद्विकर्णीमुपदधाति देवानामेव विक्रान्तिमनु वि क्रमते[१४] उत्तरत उप दधाति तस्मादुत्तरतउपचारोऽग्नि[१५]र्वायुमती भवति समिद्ध्यै[१६] ॥ ( नाकसद्,-स्तत , पशूना,-मेषा वै, द्वाविꣳशतिश्च ) ॥ ७ ॥

छन्द आख्योपधानविधिः ॥ अग्निर्ऋषिः ।

छन्दाꣳस्युप दधाति पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे छन्दाꣳसि वै देवानां वामं पशवो वाममेव पशूनव रुन्ध एताꣳह वै यज्ञसेनश्चैत्रियायणश्चितिं विदां चकार तया वै स पशूनवारुन्ध यदेतामुपदधाति पशूनेवाव रुन्धे[२] गायत्रीः पुरस्तादुप दधाति तेजो वै गायत्री तेज एव (१) मुखतो धत्ते[२] मूर्धन्वती-र्भवन्ति मूर्धानमेवैनꣳ समानानां करोति[३] त्रिष्टुभ उप दधातीन्द्रियं वै त्रिष्टुगिन्द्रियमेव मध्यतो धत्ते[४] जगतीरुप दधाति जागता वै पशवः पशूनेवाव रुन्धे[५] ऽनुष्टुभ उप दधाति प्राणा वा अनुष्टुप् प्राणानामुत्सृष्ट्यै[६] बृहतीरुष्णिहाः पङ्क्तीरक्षरपङ्क्तीरिति विषुरूपाणि छन्दाꣳस्युप दधाति विषुरूपा वै पशवः पशव-(२)-श्छन्दाꣳसि विषुरूपानेव पशूनव रुन्धे[७] विषुरूपमस्य गृहे दृश्यते यस्यैता उपधीयन्ते य उ चैना एवं वेदा—तिच्छन्दसमुप दधात्यतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छन्दोभिश्चिनुते वर्ष्म वा एषा छन्दसां यदतिच्छन्दा यदतिच्छन्दसमुपदधाति वर्ष्मैवैनꣳ समानानां करोति[९] द्विपदा उप दधाति द्विपाद्यजमानः (३) प्रतिष्ठित्यै[१०] ॥ ( तेज एव, पशवः पशवो, यजमान, एकं च ) ॥ ८ ॥

सयुक्-मण्डल-विश्वज्योतिः संज्ञकेष्टकोपधानम् ॥ अग्निर्ऋषिः ।

सर्वाभ्यो वै देवताभ्योऽग्निश्चीयते यत् सयुजो नोपदध्याद् देवता अस्याग्निं वृञ्जीरन् यत् सयुज उपदधात्यात्मनैवैनꣳ सयुजं चिनुते नाग्निना व्यृध्यतेऽथो यथा पुरुषः स्नावभिः सन्तत एवमेवैताभिरग्निः सन्ततो[1] ऽग्निना वै देवाः सुवर्गं लोकमायन् ता अमूः कृत्तिका अभवन् यस्यैता उपधीयन्ते सुवर्गमेव (१) लोकमेति गच्छति प्रकाशं चित्रमेव भवति[2] मण्डलेष्टका उप दधातीमे वै लोका मण्डलेष्टका इमे खलु वै लोका देवपुरा देवपुरा एव प्र विशति नाऽऽर्तिमार्च्छत्यग्निं चिक्यानो[3] विश्वज्योतिष उप दधातीमानेवैताभिर्लोकान् ज्योतिष्मतः कुरुतेऽथो प्राणानेवैता यजमानस्य दाध्रत्येता वै देवताः सुवर्ग्यास्ता एवा- (२)-न्वारभ्य सुवर्गं लोकमेति[4] ॥ ( सुवर्गमेव, ता एव, चत्वारि च ) ॥ ९ ॥

वृष्टिसनि-संयानी-आदित्या-घृता-यशोदाख्योपधानविधिः ॥ अग्निर्ऋषिः ।

वृष्टिसनीरुप दधाति वृष्टिमेवाव रुन्धे[1] यदेकधोपदध्यादेकमृतुं वर्षेदनुपरिहारꣳ सादयति तस्मात् सर्वानृतून् वर्षति[2] पुरोवातसनिरसीत्याहैतद्वै वृष्ट्यै रूपꣳ रूपेणैव वृष्टिमव रुन्धे[3] संयानीभिर्वै देवा इमाँल्लोकान्त्समयुस्तत् संयानीनाꣳ संयानित्वं यत् संयानीरुपदधाति यथाऽप्सु नावा संयात्येव-(१)-मेवैताभिर्यजमान इमाँल्लोकान्त्सं याति[4] प्लवो वा एषोऽग्नेर्यत् संयानीर्यत् संयानीरुपदधाति प्लवमेवैतमग्नय उप दधात्यु—त यस्यैतासूपहितास्वापोऽग्निꣳ हरन्त्यहृत एवास्याग्नि[6]—रादित्येष्टका उप दधात्यादित्या वा एतं भूत्यै प्रति नुदन्ते योऽलं भूत्यै सन् भूतिं न प्राप्नोत्यादित्या (२) एवैनं भूतिं गमयन्त्यसौ वा एतस्याऽऽदित्यो रुचमादत्ते योऽग्निं चित्वा न रोचते यदादित्येष्टका उपदधात्यसावेवास्मिन्नादित्यो रुचं दधाति यथाऽसौ देवानाꣳ रोचत एवमेवैष मनुष्याणाꣳ रोचते[7] घृतेष्टका उप दधात्येतद्वा अग्नेः प्रियं धाम यद्घृतं प्रियेणैवैनं धाम्ना समर्धयत्य-(३)-थो तेजसा ऽनुपरिहारꣳ सादयत्यपरिवर्गमेवास्मिन् तेजो दधाति[8] प्रजापतिरग्निमचिनुत स यशसा व्यार्ध्यत स एता यशोदा अपश्यत् ता उपाधत्त ताभिर्वै स यश आत्मन्नधत्त यद्यशोदा उपदधाति यश एव ताभिर्यजमान आत्मन् धत्ते[10] पञ्चोप दधाति पाङ्क्तः पुरुषो यावानेव पुरुषस्तस्मिन् यशो दधाति[11] ॥ ( एवं, प्राप्नोत्यादित्या, अर्धयत्ये,–कान्नपञ्चाशच्च ) ॥ १० ॥

भूयस्कृत्-अग्निरूपा-द्रविणोदा-आयुष्या-अग्निहृदया-ऋतव्याख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

देवासुराः संयत्ता आसन् कनीयाꣳसो देवा आसन् भूयाꣳसोऽसुरास्ते देवा एता इष्टका अपश्यन् ता उपादधत भूयस्कृदसीत्येव भूयाꣳसोऽभवन् वनस्पतिभिरोषधीभिर्वरिवस्कृदसीतीमामजयन् प्राच्यसीति प्राचीं दिशमजयन्नूर्ध्वाऽसीत्यमूमजयन्नन्तरिक्षसदस्यन्तरिक्षे सीदेत्यन्तरिक्षमजयन् ततो देवा अभवन् (१) पराऽसुरा यस्यैता उपधीयन्ते भूयानेव भवत्यभीमाँल्लोकान् जयति भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्य—प्सुषदसि श्येनसदसीत्याहैतद्वा अग्ने रूपꣳ रूपेणैवाग्निमव रुन्धे[2] पृथिव्यास्त्वा द्रविणे सादयामीत्याहेमानेवैताभिर्लोकान् द्रविणावतः कुरुते[3] आयुष्या उप दधात्यायुरेवा-(२)-स्मिन् दधात्य—ग्ने यत् ते परꣳ हृन्नामेत्याहैतद्वा अग्नेः प्रियं धाम प्रियमेवास्य धामोपाऽऽप्नोति[5] तावेहि सꣳ रभावहा इत्याह व्येवैनेन परि धत्ते[6] पाञ्चजन्येष्वप्येध्यग्न इत्याहैष वा अग्निः पाञ्चजन्यो यः पञ्चचितीकस्तस्मादेवमाह—र्तव्या

उप (३) दधात्येतद्वा ऋतूनां प्रियं धाम यदेतव्या ऋतूनामेव प्रियं धामाव रुन्धे सुमेक इत्याह संवत्सरो वै सुमेकः संवत्सरस्यैव प्रियं धामोपाऽऽप्नोति ॥ ( अभव,- न्नेवो,- प, षड्विंशतिश्च ) ॥ ११ ॥

अश्वमेधविधिः ॥ विश्वेदेवा ऋषयः ।

प्रजापतेरक्ष्यश्वयत् तत् पराऽपतत् तदश्वोऽभवद्यदश्वयत् तदश्वस्याश्वत्वं तद्देवा अश्वमेधेनैव प्रत्यदधुरेष वै प्रजापतिꣳ सर्वं करोति योऽश्वमेधेन यजते सर्व एव भवति सर्वस्य वा एषा प्रायश्चित्तिः सर्वस्य भेषजꣳ सर्वं वा एतेन पाप्मानं देवा अतरन्नपि वा एतेन ब्रह्महत्यामतरन्त्सर्वं पाप्मानं (१) तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदो त्तरं वै तत् प्रजापतेरक्ष्यश्वयत् तस्मादश्वस्योत्तरतोऽव द्यन्ति दक्षिणतोऽन्येषां पशूनां वैतसः कटो भवत्यप्सुयोनिर्वा अश्वोऽप्सुजो वेतसः स्व एवैनं योनौ प्रति ष्ठापयति चतुष्टोमः स्तोमो भवति सरड्ढ वा अश्वस्य सक्थ्याऽवृहत् ( २ ) तद्देवाश्चतुष्टोमेनैव प्रत्यदधुर्यच्चतुष्टोमः स्तोमो भवत्यश्वस्य सर्वत्वाय ॥ (सर्वं पाप्मानं,-मवृहद्, द्वादश च) ॥ १२ ॥

[ उत्सन्नयज्ञ २५५ । इन्द्राग्नी २३४। देवा २५५। अग्ने-३६४। रग्ने २४३। रश्मि-१६२ ।-नाकसद्भि-२२२।-श्छन्दाꣳसे १५१ । सर्वाभ्यो १०४। वृष्टिसनी-१९९।-देवासुराः १७६ । प्रजापते- ११२। द्वादश ॥ २४७७ ]

[ इति पञ्चमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥ ]

## इष्टकात्रयाभिधानम् ।

[ अथ चतुर्थः प्रपाठकः ॥ ४ ॥ ]

इन्द्रतनु-यज्ञतनु-नक्षत्राख्येष्टकोपधानम् ॥ अग्निर्ऋषिः ।

देवासुराः संयत्ता आसन् ते न व्यजयन्त स एता इन्द्रस्तनूरपश्यत् ता उपाधत्त ताभिर्वै स तनुवमिन्द्रियं वीर्यमात्मन्नधत्त ततो देवा अभवन् पराऽसुरा यदिन्द्रतनूरुपदधाति तनुवमेव ताभिरिन्द्रियं वीर्यं यजमान आत्मन् धत्तेऽथो सेन्द्रमेवाग्निꣳ सतनुं चिनुते भवत्यात्मना पराऽस्य भ्रातृव्यो (१) भवति यज्ञो देवेभ्योऽपाक्रामत् तमवरुधं नाशक्नुवन् त एता यज्ञतनूरपश्यन् ता उपादधत ताभिर्वै ते यज्ञमवारुन्धत यद्यज्ञतनूरुपदधाति यज्ञमेव ताभिर्यजमानोऽव रुन्धे त्रयस्त्रिꣳ शतमुप दधाति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्धे ऽथो सात्मानमेवाग्निꣳ सतनुं चिनुते सात्माऽमुष्मिँल्लोके ( २ ) भवति य एवं वेद ज्योतिष्मतीरुप दधाति ज्योतिरेवास्मिन् दधात्येताभिर्वा अग्निश्चितो ज्वलति ताभिरेवैनꣳ समिन्ध उभयोरस्मै लोकयोर्ज्योतिर्भवति नक्षत्रेष्टका उप दधात्येतानि वै दिवो ज्योतीꣳषि तान्येवाव रुन्धे सुकृतां वा एतानि ज्योतीꣳषि यन्नक्षत्राणि तान्येवाऽऽप्नोत्यथो अनूकाशमेवैतानि ( ३ ) ज्योतीꣳषि कुरुते सुवर्गस्य लोकस्यानुख्यात्यै यत् सꣳस्पृष्टा उपदध्याद्वृष्ट्यै लोकमपि दध्यादवर्षुकः पर्जन्यः स्यादसꣳस्पृष्टा उप दधाति वृष्ट्या एव लोकं करोति वर्षुकः पर्जन्यो भवति पुरस्तादन्याः प्रतीचीरुप दधाति पश्चादन्याः प्राचीस्तस्मात् प्राचीनानि च प्रतीचीनानि च नक्षत्राण्या वर्तन्ते ॥ (भ्रातृव्यो, लोक, एवैतान्ये,--कचत्वारिꣳशच्च ) ॥ १ ॥

*

ऋतव्य- वैश्वदेवाख्येष्टकोपधानं, प्रोक्षणविधिश्च ॥ अग्निर्ऋषिः ।

ऋतव्या उप दधात्यृतूनां क्लृप्त्यै द्वन्द्वमुप दधाति तस्माद् द्वन्द्वमृतवोऽधृतेव वा एषा यन्मध्यमा चितिरन्तरिक्षमिव वा एषा द्वन्द्वमन्यासु चितीषूप दधाति चतस्रो मध्ये धृत्या अन्तःश्लेषणं वा एताश्चितीनां यदृतव्या यदृतव्या उपदधाति चितीनां विधृत्या अवकामनूप दधात्येषा वा अग्नेर्योनिः सयोनि-(१)-मेवाग्निं चिनुत उवाच ह विश्वामित्रोऽददित् स ब्रह्मणाऽन्नं यस्यैता उपधीयान्तै य उ चैना एवं वेददिति संवत्सरो वा एतं प्रतिष्ठायै नुदते योऽग्निं चित्वा न प्रतितिष्ठति पञ्च पूर्वाश्चितयो भवन्त्यथ-षष्ठीं चितिं चिनुते षड् वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठत्ये-ता वा (२) अधिपत्नीनामेष्टका यस्यैता उपधीयन्तेऽधिपतिरेव समानानां भवति यं द्विष्यात् तमुपदधद् ध्यायेद्देताभ्य एवैनं देवताभ्य आ वृश्चति ताजगार्तिमाच्छर्त्य-ङ्गिरसः सुवर्गं लोकं यन्तो या यज्ञस्य निष्कृतिरासीत् तामृषिभ्यः प्रत्यौहन् तद्धिरण्यमभवद्यद्धिरण्यशल्कैः प्रोक्षति यज्ञस्य निष्कृत्या अथो भेषजमेवास्मै करोत्य-(३)-थो रूपेणैवैनꣳ समर्धयत्यथो हिरण्यज्योतिषैव सुवर्गं लोकमेति साहस्रवता प्रोक्षति साहस्रः प्रजापतिः प्रजापतेराप्त्या इमा मे अग्न इष्टका धेनवः सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्रामुष्मिँल्लोक उप तिष्ठन्ते ॥ ( सयोनि,-मेता वै, करोत्ये-कान्नचत्वारिꣳशच्च ) ॥ २ ॥

शतरुद्रीयहोमविधिः ॥ अग्निर्ऋषिः ।

रुद्रो वा एष यदग्निः स एतर्हि जातो यर्हि सर्वश्चितः स यथा वत्सो जातः स्तनं प्रेप्सत्येवं वा एष एतर्हि भागधेयं प्रेप्सति तस्मै यदाहुतिं न जुहुयादध्वर्युं च यजमानं च ध्यायेच्छतरुद्रीयं जुहोति भागधेयेनैवैनꣳ शमयति नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानो यद् ग्राम्याणां पशूनां (१) पयसा जुहुयाद् ग्राम्यान् पशूञ्छुचाऽर्पयेद्यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नाऽऽरण्या-नथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोत्याग्नेयी वा एषा यदजाऽऽहुत्यैव जुहोति न ग्राम्यान् पशून् हिनस्ति नाऽऽरण्या-नङ्गिरसः सुवर्गं लोकं यन्तो (२) ऽजायां घर्मं प्रासिञ्चन्त्सा शोचन्ती पर्णं पराऽजिहीत सोऽर्कोऽभवत् तदर्कस्यार्कत्वमर्कपर्णेन जुहोति सयोनित्वायो-दङ् तिष्ठन् जुहोत्येषा वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवदयते चरमायामिष्टकायां जुहोत्यन्तत एव रुद्रं निरवदयते त्रेधाविभक्तं जुहोति त्रय इमे लोका इमानेव लोकान्त्समावद्वीर्यान् करोती-यत्यग्रे जुहोत्य-(३)-थेयत्यथेयति त्रय इमे लोका एभ्य एवैनं लोकेभ्यः शमयति तिस्र उत्तरा आहुतीर्जुहोति षट् सं पद्यन्ते षड् वा ऋतव ऋतुभिरेवैनꣳ शमयति यदनुपरिक्रामं जुहुयादन्तरवचारिणꣳ रुद्रं कुर्यादथो खल्वाहुः कस्यां वाऽह दिशि रुद्रः कस्यां वेत्यनुपरिक्राममेव होतव्यमपरिवर्गमेवैनꣳ शमयत्येता (४) वै देवताः सुवर्ग्या या उत्तमास्ता यजमानं वाचयति ताभिरेवैनꣳ सुवर्गं लोकं गमयति यं द्विष्यात् तस्य सञ्चरे पशूनां न्यस्येद्यः प्रथमः पशुरभितिष्ठति स आर्तिमार्च्छति ॥ ( पशूनां, यन्तो, जुहोति, शमयति, त्रिꣳशच्च ) ॥ ३ ॥

परिषेचन-विकर्षणविधानम् ॥ अग्निर्ऋषिः ।

अश्मन्नूर्जमिति परि षिञ्चति मार्जयत्येवैनमथो तर्पयत्येव स एनं तृप्तोऽक्षुध्यन्नशोचन्नमुष्मिंल्लोक उप तिष्ठते[1] तृप्यति प्रजया पशुभिर्य एवं वेद[2] तां न इषमूर्जं धत्त मरुतः सꣳरराणा इत्याहान्नं वा ऊर्गन्नं मरुतोऽन्नमेवाव रुन्धे[3] ऽश्मꣳस्ते क्षुदमुं ते शु-(१)-गृच्छतु यं द्विष्म इत्याह यमेव द्वेष्टि तमस्य क्षुधा च शुचा चार्पयति[4] त्रिः परिषिञ्चन् पर्येति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति[5] त्रिः पुनः पर्येति षट् सं पद्यन्ते षड् वा ऋतव ऋतुभिरेवास्य शुचꣳ शमयत्य[6]—पां वा एतत् पुष्पं यद्वेतसोऽपाꣳ (२) शरोऽवका वेतसशाखया चावकाभिश्च वि कर्षत्यापो वै शान्ताः शान्ताभिरेवास्य शुचꣳ शमयति[7] यो वा अग्निं चितं प्रथमः पशुरधिक्रामतीश्वरो वै तꣳ शुचा प्रदहो मण्डूकेन वि कर्षत्येष वै पशूनामनुपजीवनीयो न वा एष ग्राम्येषु पशुषु हितो नाऽऽरण्येषु तमेव शुचाऽर्पयत्य[8]—ष्टाभिर्वि कर्षत्य-(३)-ष्टाक्षरा गायत्री गायत्रोऽग्निर्यावानेवाग्निस्तस्य शुचꣳ शमयति[9] पावकवतीभिरन्नं वै पावकोऽन्नेनैवास्य शुचꣳ शमयति[10] मृत्युर्वा एष यदग्निर्ब्रह्मण एतद्रूपं यत् कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते ब्रह्मणैव मृत्योरन्तर्धत्ते[11] ऽन्तर्मृत्योर्धत्तेऽन्तरन्नाद्यादित्याहुरन्यामुपमुञ्चतेऽन्यां नान्त-(४)-रेव मृत्योर्धत्तेऽवान्नाद्यꣳ रुन्धे[12] नमस्ते हरसे शोचिष इत्याह नमस्कृत्य हि वसीयाꣳसमुपचरन्त्य[13]—न्यं ते अस्मत् तपन्तु हेतय इत्याह यमेव द्वेष्टि तमस्य शुचाऽर्पयति[14] पावको अस्मभ्यꣳ शिवो भवेत्याहान्नं वै पावकोऽन्नमेवाव रुन्धे[15] द्वाभ्यामधि क्रामति प्रतिष्ठित्या[16] अपस्यवतीभ्याꣳ शान्त्यै[17] ॥ (शु,-ग्वेतसोऽपा-मष्टाभिर्वि कर्षति, नान्त,-रेकान्नपञ्चाशच्च ) ॥ ४ ॥

व्याघारण-वैश्वकर्मणाहुतिविधानम् ॥ अग्निर्ऋषिः ।

नृषदे वडिति व्याघारयति पङ्क्त्याऽऽहुत्या यज्ञमुखमारभते[1] ऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[2] यद्वषट्कुर्याद्यातयामाऽस्य वषट्कारः स्याद्यन्न वषट्कुर्याद्रक्षाꣳसि यज्ञꣳ हन्युर्वडित्याह परोक्षमेव वषट् करोति नास्य यातयामा वषट्कारो भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति[3] हुतादो वा अन्ये देवा (१) अहुतादोऽन्ये तानग्निचिदेवोभयान् प्रीणाति ये देवा देवानामिति दध्ना मधुमिश्रेणावोक्षति हुतादश्चैव देवानहुतादश्च यजमानः प्रीणाति ते यजमानं प्रीणन्ति दध्नैव हुतादः प्रीणाति मधुषाऽहुतादो ग्राम्यं वा एतदन्नं यद्दध्यारण्यं मधु यद्दध्ना मधुमिश्रेणावोक्षत्युभयस्यावरुद्ध्यै[4] ग्रुमुष्टिनाऽवोक्षति प्राजापत्यो (२) वै ग्रुमुष्टिः सयोनित्वाय[5] द्वाभ्यां प्रतिष्ठित्यै[6] अनुपरिचारमवोक्षत्यपरिवर्गमेवैनान् प्रीणाति[7] वि वा एष प्राणैः प्रजया पशुभिरृध्यते योऽग्निं चिन्वन्नधिक्रामति प्राणदा अपानदा इत्याह प्राणानेवाऽऽत्मन् धत्ते वर्चोदा वरिवोदा इत्याह प्रजा वै वर्चः पशवो वरिवः प्रजामेव पशूनात्मन् धत्ते इन्द्रो वृत्रमहन् तं वृत्रो (३) हतः षोडशभिर्भोगैरसिनात् स एतामग्नयेऽनीकवत आहुतिमपश्यत् तामजुहोत् तस्याग्निरनीकवान्त्स्तेन भागधेयेन प्रीतः षोडशधा वृत्रस्य भोगानप्यदहद्वैश्वकर्मणेन पाप्मनो निरमुच्यत[9] यदग्नयेऽनीकवत आहुतिं जुहोत्यग्निरेवास्यानीकवान्त्स्वेन भागधेयेन प्रीतः पाप्मानमपि दहति वैश्वकर्मणेन पाप्मनो निर्मुच्यते[10] यं कामयेत चिरं पाप्मनो (४) निर्मुच्येतेत्येकैकं तस्य जुहुयाच्चिरमेव पाप्मनो निर्मुच्यते यं काम-

यैत ताजक् पाप्मनो निर्मुच्येतेति सर्वाणि तस्यानुद्रुत्य जुहुयात् ताजगेव पाप्मनो निर्मुच्यतेऽथो खलु नानैव सूक्ताभ्यां जुहोति नानैव सूक्तयोर्वीर्यं दधात्यथो प्रतिष्ठित्यै[११] ॥
( देवाः, प्राजापत्यो, वृत्र,-श्चिरं पाप्मनं,-श्चत्वारिꣳशच्च ) ॥ ५ ॥

समिदाधान-अग्निप्रणयन-होतुरप्रतिरथजपविधानम् ॥ अग्निरृषिः ।

उदेनमुत्तरां नयेति समिध आ दधाति यथा जनं यतेऽवसं करोति तादृगेव[१] तत् तिस्र आ दधाति त्रिवृद्वा अग्निर्यावानेवाग्निस्तस्मै भागधेयं करोत्यौ[२]—दुम्बरीर्भवन्त्यूर्ग्वा उदुम्बर ऊर्जमेवास्मा अपि दधात्यु[३]—दु त्वा विश्वे देवा इत्याह प्राणा वै विश्वे देवाः प्राणै-( १ )-रेवैनमुद्यच्छते[४] ऽग्ने भरन्तु चित्तिभिरित्याह यस्मा एवैनं चित्तायोद्यच्छते तेनैवैनꣳ समर्धयति[५] पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्याह दिशो ह्येषोऽनु प्रच्यवते[६] ऽपामतिं दुर्मतिं बाधमाना इत्याह रक्षसामपहत्यै[७] रायस्पोषे यज्ञपतिमाभजन्तीरित्याह पशवो वै रायस्पोषः ( २ ) पशूनेवाव रुन्धे[८] षड्भिर्हरति षड् वा ऋतव ऋतुभिरेवैनꣳ हरति[९] द्वे परिगृह्यवती भवतो रक्षसामपहत्यै[१०] सूर्यरश्मिर्हरिकेशः पुरस्तादित्याह प्रसूत्यै[११] ततः पावका आशिषो नो जुषन्तामित्याहान्नं वै पावकोऽन्नमेवाव रुन्धे[१२] देवासुराः संयत्ता आसन् ते देवा एतदप्रतिरथमपश्यन् तेन वै ते प्रत्य-( ३ )-सुरानजयन् तदप्रतिरथस्याप्रतिरथत्वं यदप्रतिरथं द्वितीयो होताऽन्वाहाप्रत्येव तेन यजमानो भ्रातृव्यान् जयत्यथो अनभिजितमेवाभि जयति[१३] दशर्चं भवति दशाक्षरा विराड् विराजेमौ लोकौ विधृतावनयोर्लोकयोर्विधृत्या अथो दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठत्य[१४]—सदिव वा अन्तरिक्षमन्तरिक्षमिवा ऽऽग्नीध्रमाग्नीध्रे ( ४ ) ऽश्मानं नि दधाति सत्वाय[१५] द्वाभ्यां प्रतिष्ठित्यै[१६] विमान एष दिवो मध्य आस्त इत्याह व्येवैतया मिमीते[१७] मध्ये दिवो निहितः पृश्निरश्मेत्याहान्नं वै पृश्न्यन्नमेवाव रुन्धे[१८] चतसृभिरा पुच्छादेति चत्वारि छन्दाꣳसि छन्दोभिरेवे[१९]—न्द्रं विश्वा अवीवृधन्नित्याह वृद्धिमेवोपावर्तते[२०] वाजानाꣳ सत्पतिं पति-( ५ )-मित्याहान्नं वै वाजोऽन्नमेवाव रुन्धे[२१] सुम्नहूर्यज्ञो देवाꣳ आ च वक्षदित्याह प्रजा वै पशवः सुम्नं प्रजामेव पशूनात्मन् धत्ते[२२] यक्षदग्निर्देवो देवाꣳ आ च वक्षदित्याह स्वगाकृत्यै[२३] वाजस्य मा प्रसवेनोद्ग्राभेणोदग्रभीदित्याहासौ वा आदित्य उद्यन्नुद्ग्राभ एष ( ६ ) निम्रोचन् निग्राभो ब्रह्मणैवाऽऽत्मानमुद्गृह्णाति ब्रह्मणा भ्रातृव्यं नि गृह्णाति[२४] ॥ ( प्राणैः, पोषो, प्रत्या,- ग्नीध्रे, पतिं,- मेष, दश च ) ॥ ६ ॥

चित्यारोहणं तत्राग्निनिक्षेपादि च ॥ अग्निरृषिः ।

प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह देवलोकमेवैतयोपावर्तते[१] क्रमध्वमग्निना नाकमित्याहेमानेवैतया लोकान् क्रमते[२] पृथिव्या अहमुदन्तरिक्षमाऽरुहमित्याहेमानेवैतया लोकान्त्समारोहति[३] सुवर्यन्तो नापेक्षन्त इत्याह सुवर्गमेवैतया लोकमेत्य[४]—ग्ने प्रेहि ( १ ) प्रथमो देवयतामित्याहोभयेष्वेवैतया देवमनुष्येषु चक्षुर्दधाति[५] पञ्चभिरधि क्रामति पाङ्क्तो यज्ञो यावानेव यज्ञस्तेन सह सुवर्गं लोकमेति[६] नक्तोषासेति पुरोऽनुवाक्यामन्वाह प्रत्यै[७] अग्ने सहस्राक्षेत्याह साहस्रः प्रजापतिः प्रजापतेराप्त्यै[८] तस्मै ते विधेम वाजाय स्वाहेत्याहान्नं वै वाजोऽन्नमेवाव ( २ ) रुन्धे[९] दध्नः पूर्णामौदुम्बरीꣳ स्वयमातृण्णायां

जुहोत्यूर्ग्वै दध्यूर्गुदुम्बरोऽसौ स्वयमातृण्णाऽमुष्यामेवोर्जं दधाति तस्मादमुतोऽर्वाचीमूर्जमुप जीवामे- स्तिसृभिः सादयति त्रिवृद्धा अग्निर्यावानेवाग्निस्तं प्रतिष्ठां गमयति[११] प्रेद्धो अग्ने दीदिहि पुरो न इत्यौ- दुम्बरीमा दधात्येषा वै सूर्मी कर्णकावत्येतया ह स्म (३) वै देवा असुराणाꣳ शततर्हाꣳ स्तृꣳहन्ति यदे- तया समिधमादधाति वज्रमेवैतच्छतघ्नीं यजमानो भ्रातृव्याय प्र हरति स्तृत्या अछम्बट्कारं[१२] विधेम ते परमे जन्मन्नग्न इति वैकङ्कतीमा दधाति भा एवाव रुन्धे[१३] ताꣳ सवितुर्वरेण्यस्य चित्रामिति शमी- मयीꣳ शान्त्या[१४] अग्निर्वै ह वा अग्निचितं दुहेऽग्निचिद्वाऽग्निं दुहे ताꣳ (४) सवितुर्वरेण्यस्य चित्रा- मित्याहैष वा अग्नेर्दोह[१५]—स्तमस्य कण्व एव श्रायसोऽवेत् तेन ह स्मैनꣳ स दुहे[१६] यदेतया समिधमा- दधात्यग्निचिदेव तदग्निं दुहे[१७] सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह सप्तैवास्य साप्तानि प्रीणाति[१८] पूर्णया जुहोति पूर्ण इव हि प्रजापतिः प्रजापते-(५)-राप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै[१९] अग्निर्देवेभ्यो निलायत स दिशोऽनु प्राविशज्जुह्वन्मनसा दिशो ध्यायेद् दिग्भ्य एवैनमव रुन्धे[२०] दध्ना पुरस्ताज्जुहोत्याज्येनोपरिष्टात् तेजश्चैवास्मा इन्द्रियं च समीची दधाति[२१] द्वादशकपालो वैश्वानरो भवति द्वादश मासाः संवत्सरः संवत्सरोऽग्निर्वैश्वानरः साक्षा-(६)-देव वैश्वा- नरमव रुन्धे[२२] यत् प्रयाजानूयाजान् कुर्याद्विकस्तिः सा यज्ञस्य दर्विहोमं करोति यज्ञस्य प्रतिष्ठित्यै[२३] राष्ट्रं वै वैश्वानरो विण्मरुतो वैश्वानरꣳ हुत्वा मारुतान् जुहोति राष्ट्र एव विशमनु बध्नात्यु[२४]—च्चैर्वैश्वानर- स्याऽऽश्रावयत्युपाꣳशु मारुतान् जुहोति तस्माद्राष्ट्रं विशमति वदति[२५] मारुता भवन्ति मरुतो वै देवानां विशो देवविशेनैवास्मै मनुष्यविश-(७)-मव रुन्धे[२६] सप्त भवन्ति सप्तगणा वै मरुतो गणश एव विश- मव रुन्धे[२७] गणेन गणमनुद्रुत्य जुहोति विशमेवास्मा अनुवर्त्मानं करोति[२८] ॥ ( ह्व,- वं, स्म, तां, प्रजा- पतेः, साक्षा,- न्मनुष्यविश, -मेकविꣳशतिश्च ) ॥ ७ ॥

वसोर्धाराविधानम् ॥ अग्निर्ऋषिः ।

वसोर्धारां जुहोति वसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिँल्लोके पिन्व- मानोप तिष्ठत[१] आज्येन जुहोति तेजो वा आज्यं तेजो वसोर्धारा तेजसैवास्मै तेजोऽव रुन्धे[२] ऽथो कामा वै वसोर्धारा कामानेवाव रुन्धे[३] यं कामयेत प्राणानस्यान्नाद्यं वि (१) छिन्द्यामिति विग्राहं तस्य जुहुयात् प्राणानेवास्यान्नाद्यं वि च्छिनत्ति[४] यं कामयेत प्राणानस्यान्नाद्यꣳ सं तनुयामिति संततां तस्य जुहुयात् प्राणानेवास्यान्नाद्यꣳ सं तनोति[५] द्वादश द्वादशानि जुहोति द्वादश मासाः संवत्सरः संवत्स- रेणैवास्मा अन्नमव रुन्धे[६] ऽन्नं च मेऽक्षुच्च म इत्याहैतद्वा (२) अन्नस्य रूपꣳ रूपेणैवान्नमव रुन्धे[७] ऽग्निश्च म आपश्च म इत्याहैषा वा अन्नस्य योनिः सयोन्येवान्नमव रुन्धे[८] ऽर्धेन्द्राणि जुहोति देवता एवाव रुन्धे यत् सर्वेषामर्धमिन्द्रः प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तम इन्द्रमुत्तरमाहेन्द्रियमेवास्मिन्नु- परिष्टाद् दधाति[९] यज्ञायुधानि जुहोति यज्ञो (३) वै यज्ञायुधानि यज्ञमेवाव रुन्धेऽथो एतद्वै यज्ञस्य रूपꣳ रूपेणैव यज्ञमव रुन्धे[१०] ऽवभृथश्च मे स्वगाकारश्च म इत्याह स्वगाकृत्यै[११] अग्निश्च मे घर्मश्च म इत्याहैतद्वै ब्रह्मवर्चसस्य रूपꣳ रूपेणैव ब्रह्मवर्चसमव रुन्धे[१२] ऋक् च मे साम च म इत्याहै-(४)-

तद्वै छन्दसाꣳ रूपꣳ रूपेणैव छन्दाꣳस्यव रुन्धे[13] गर्भाश्च मे वत्साश्च म इत्याहैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनव रुन्धे[14] कल्पान् जुहोत्यक्लृप्तस्य क्लृप्त्यै[15] युग्मदयुजे जुहोति मिथुनत्वायो[16]त्तरावती भवतोऽभिक्रान्त्यै एका च मे तिस्रश्च म इत्याह देवछन्दसं वा एका च तिस्रश्च (५) मनुष्यछन्दसं चतस्रश्चाष्टौ च देवछन्दसं चैव मनुष्यछन्दसं चाव रुन्धे[17] आ त्रयस्त्रिꣳशतो जुहोति त्रयस्त्रिꣳशद्वै देवता देवता एवाव रुन्ध आऽष्टाचत्वारिꣳशतो जुहोत्यष्टाचत्वारिꣳशदक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे[19] वाजश्च प्रसवश्चेति द्वादशं जुहोति द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति[20] ॥ ( वि, वै, यज्ञ, आह, चै,-कान्नपञ्चाशच्च ) ॥ ८ ॥

वाजप्रसवीयहोमविधानम् ॥ अग्निर्ऋषिः ।

अग्निर्देवेभ्योऽपाक्रामद्भागधेयमिच्छमानस्तं देवा अब्रुवन्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै मह्यमेव वाजप्रसवीयं जुहवन्निति तस्मादग्नये वाजप्रसवीयं जुह्वति यद्वाजप्रसवीयं जुहोत्यग्निमेव तद्भागधेयेन समर्धयत्यथो अभिषेक एवास्य स[1] चतुर्दशभिर्जुहोति सप्त ग्राम्या ओषधयः सप्ता-( १ )--ऽऽरण्या उभयीषामवरुद्ध्यै[2] अन्नस्यान्नस्य जुहोत्यन्नस्यान्नस्यावरुद्ध्यै[3] औदुम्बरेण स्रुवेण जुहोत्यूर्ग्वा उदुम्बर ऊर्गन्नमूर्जैवास्मा ऊर्जमन्नमव रुन्धे[4] ऽग्निर्वै देवानामभिषिक्तोऽग्निचिन्मनुष्याणां तस्मादग्निचिद्वर्षति न धावे[5]दवरुद्धꣳ ह्यस्यान्नमन्नमिव खलु वै वर्षं यद्धावेदन्नाद्याद्धावेदुपावर्ततान्नाद्यमेवाभ्यु--( २ )--पावर्तते नक्तोषासेति कृष्णायै श्वेतवत्सायै पयसा जुहोत्यह्नैवास्मै रात्रिं प्र दापयति रात्रियाऽहरहोरात्रे एवास्मै प्रत्ते काममन्नाद्यं दुहाते[6] राष्ट्रभृतो जुहोति राष्ट्रमेवाव रुन्धे[7] षड्भिर्जुहोति षड् वा ऋतव ऋतुष्वेव प्रति तिष्ठति[8] भुवनस्य पत इति रथमुखे पञ्चाऽऽहुतीर्जुहोति वज्रो वै रथो वज्रेणैव दिशो ( ३ ) ऽभि जयत्य[9]ग्निचितꣳ ह वा अमुष्मिँल्लोके वातोऽभि पवते वातनामानि जुहोत्यभ्येवैनममुष्मिँल्लोके वातः पवते[10] त्रीणि जुहोति त्रय इमे लोका एभ्य एव लोकेभ्यो वातमव रुन्धे[11] समुद्रोऽसि नभस्वानित्याहैतद्वै वातस्य रूपꣳ रूपेणैव वातमव रुन्धे[12] ऽञ्जलिना जुहोति न ह्येतेषामन्यथा (४) ऽऽहुतिरवकल्पते[13] ॥ ( सप्त,- भि, दिशो, ऽन्यथा, द्वे च ) ॥ ९ ॥

अग्नियोगपुनश्चितिविधानम् ॥ अग्निर्ऋषिः ।

सुवर्गाय वै लोकाय देवरथो युज्यते यत्राकूताय मनुष्यरथ एष खलु वै देवरथो यदग्नि[1]रग्निं युनज्मि शवसा घृतेनेत्याह युनक्त्येवैनꣳ स एनं युक्तः सुवर्गं लोकमभि वहति[2] यत् सर्वाभिः पञ्चभिर्युञ्ज्याद्युक्तोऽस्याग्निः प्रच्युतः स्यादप्रतिष्ठिता आहुतयः स्युरप्रतिष्ठिताः स्तोमा अप्रतिष्ठितान्युक्थानि तिसृभिः प्रातःसवनेऽभि मृशति त्रिवृ-(१)-द्वा अग्निर्यावानेवाग्निस्तं युनक्ति यथाऽनसि युक्त आधीयत एवमेव तत् प्रत्याहुतयस्तिष्ठन्ति प्रति स्तोमाः प्रत्युक्थानि[3] यज्ञायज्ञियस्य स्तोत्रे द्वाभ्यामभि मृशत्येतावान् वै यज्ञो यावानग्निष्टोमो भूमा त्वा अस्यात ऊर्ध्वः क्रियते यावानेव यज्ञस्तमन्ततो ऽन्वारोहति[4] द्वाभ्यां प्रतिष्ठित्यै एकयाऽप्रस्तुतं भवत्यथा-(२)-भि मृशत्युपैनमुत्तरो यज्ञो नमत्यथो संतत्यै[5] प्र वा एषोऽस्माँल्लोकाच्च्यवते योऽग्निं चिनुते न वा एतस्यानिष्टक आहुतिरव कल्पते यां वा एषोऽनिष्टक आहुतिं

जुहोति स्रवति वै सा ताꣳ स्रवन्तीं यज्ञोऽनु परा भवति यज्ञं यजमानो यत् पुनश्चितिं चिनुत आहुतीनां प्रतिष्ठित्यै प्रत्याहुतयस्तिष्ठन्ति ( ३ ) न यज्ञः पराभवति न यजमानो[9] ऽष्टावुप दधात्यष्टाक्षरा गायत्री गायत्रेणैवैनं छन्दसा चिनुते यदेकादश त्रैष्टुभेन यद् द्वादश जागतेन छन्दोभिरेवैनं चिनुते[9] नपात्को वैनामैषोऽग्निर्यत् पुनश्चितिर्य एवं विद्वान् पुनश्चितिं चिनुत आ तृतीयात् पुरुषादन्नमत्ति[10] यथा वै पुनराधेय एवं पुनश्चितिर्योऽग्न्याधेयेन न-( ४ )-र्ध्नोति स पुनराधेयमा धत्ते योऽग्निं चित्वा नर्ध्नोति स पुनश्चितिं चिनुते यत् पुनश्चितिं चिनुत ऋद्ध्यै अथो खल्वाहुर्न चेतव्येति रुद्रो वा एष यदग्निर्यथा व्याघ्रꣳ सुप्तं बोधयति तादृगेव त[12]—दथो खल्वाहुश्चेतव्येति यथा वसीयाꣳसं भागधेयेन बोधयति तादृगेव त[13]—न्मनुरग्निमचिनुत ( ५ ) तेन नाऽऽर्ध्नोत् स एतां पुनश्चितिमपश्यत् तामचिनुत तया वै स आर्ध्नोत् पुनश्चितिं चिनुत ऋद्ध्यै[14] ॥ ( त्रिवृ, दथ, तिष्ठन्ति, ना,-चिनुत, सप्तदश च ) ॥ १० ॥

काम्यचितिविधानम् ॥ अग्निर्ऋषिः ।

छन्दश्चितं चिन्वीत पशुकामः पशवो वै छन्दाꣳसि पशुमानेव भवति[1] श्येनचितं चिन्वीत सुवर्गकामः श्येनो वै वयसां पतिष्ठः श्येन एव भूत्वा सुवर्गं लोकं पतति[2] कङ्कचितं चिन्वीत यः कामयेत शीर्षण्वानमुष्मिँल्लोके स्यामिति शीर्षण्वानेवामुष्मिँल्लोके भवत्यलजचितं चिन्वीत चतुःसीतं प्रतिष्ठाकामश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठति[3] प्रउगचितं चिन्वीत भ्रातृव्यवान् प्रै-( १ )-व भ्रातृव्यान् नुदत उभयतः प्रउगं चिन्वीत यः कामयेत प्रजातान् भ्रातृव्यान् नुदेय प्रति जनिष्यमाणानिति प्रैव जातान् भ्रातृव्यान् नुदते प्रति जनिष्यमाणान्[5] रथचक्रचितं चिन्वीत भ्रातृव्यवान् वज्रो वै रथो वज्रमेव भ्रातृव्येभ्यः प्र हरति द्रोणचितं चिन्वीतान्नकामो द्रोणे वा अन्नं भ्रियते सयोन्येवान्नमव रुन्धे[6] समूह्यं चिन्वीत पशुकामः पशुमानेव भवति[7] ( २ ) परिचाय्यं चिन्वीत ग्रामकामो ग्राम्येव भवति[8] श्मशानचितं चिन्वीत यः कामयेत पितृलोक ऋध्नुयामिति पितृलोक एवर्ध्नोति[9] विश्वामित्रजमदग्नी वसिष्ठेनास्पर्धेताꣳ स एता जमदग्निर्विहव्या अपश्यत् ता उपाधत्त ताभिर्वै स वसिष्ठस्येन्द्रियं वीर्यमवृङ्क्त यद्विहव्या उपदधातीन्द्रियमेव ताभिर्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्ते[10] होतुर्धिष्णिय उप दधाति यजमानायतनं वै ( ३ ) होता स्व एवास्मा आयतन इन्द्रियं वीर्यमव रुन्धे[11] द्वादशोप दधाति द्वादशाक्षरा जगती जागताः पशवो जगत्यैवास्मै पशूनव रुन्धे[12] ऽष्टावष्टावन्येषु धिष्णियेषूप दधात्यष्टाशफाः पशवः पशूनेवाव रुन्धे[13] षण्मार्जालीये षड् वा ऋतव ऋतवः खलु वै देवाः पितर ऋतूनेव देवान् पितॄन् प्रीणाति[14] ॥ ( प्र, भवति, वा, अष्टाचत्वारिंशच्च ) ॥ ११ ॥

अश्वमेधीयस्तोत्रगतऋक्स्तोमसामविधानम् ॥ विश्वेदेवा ऋषयः ।

पवस्व वाजसातय इत्यनुष्टुक् प्रतिपद्भवति तिस्रोऽनुष्टुभश्चतस्रो गायत्रियो यत् तिस्रोऽनुष्टुभस्तस्मादश्वस्त्रिभिस्तिष्ठꣳस्तिष्ठति यच्चतस्रो गायत्रियस्तस्मात् सर्वाꣳश्चतुरः पदः प्रतिदधत् पलायते[1] परमा वा एषा छन्दसां यदनुष्टुक् परमश्चतुष्टोमः स्तोमानां परमस्त्रिरात्रो यज्ञानां परमोऽश्वः पशूनां परमेणैवैनं परमतां गमयत्ये[2]—कविꣳशमहर्भवति ( १ ) यस्मिन्नश्व आलभ्यते द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति[3] शक्वर्यः पृष्ठं भवन्त्यन्यद-

न्यच्छन्दोऽन्यैन्ये वा एते पशव आ लभ्यन्त उतेवं ग्राम्या उतेवाऽऽरण्या यच्छक्वरयः पृष्ठं भवन्त्यश्वस्य सर्वत्वाय[४] पार्थुरश्मं ब्रह्मसामं भवति रश्मिना वा अश्वो (५) यत ईश्वरो वा अश्वोऽयतोऽप्रतिष्ठितः परां परावतं गन्तोर्यत् पार्थुरश्मं ब्रह्मसामं भवत्यश्वस्य यत्यै धृत्यै[५] संकृत्यच्छावाकसामं भवत्युत्सन्नयज्ञो वा एष यदश्वमेधः कस्तद्वेदेत्याहुर्यदि सर्वो वा क्रियते न वा सर्व इति संकृत्यच्छावाकसामं भवत्यश्वस्य सर्वत्वाय पर्याप्त्या अनन्तरायाय[६] सर्वस्तोमोऽतिरात्र उत्तममहर्भवति (३) सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेव तेनाऽऽप्नोति सर्वं जयति[७] ॥ ( भवत्य,-श्वो, भवति, दश च ) ॥ १२ ॥

[ देवासुरा १९१। कर्तव्या १८९। रुद्रो २३०। ऽश्म-२४९।-न्नूपद २४०। उत् ३१०। प्राचीं ३७१। वसो-२९९। रश्मिः २०२। सुवर्गाय २६७। छन्दश्चितं १९८। पर्वस्व १६०। द्वादश ॥ २९०६ ॥ ]

॥ इति पञ्चमकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥

## वायव्यपश्वाद्यानां निरूपणम् ।

[ अथ पञ्चमः प्रपाठकः ॥५॥ ]

दीक्षणीयेष्टिस्त्रिहविष्का ॥ अग्निर्ऋषिः ।

यदेकेन सꣳस्थापयति यज्ञस्य संतत्या अविच्छेदायै[१] न्द्राः पशवो ये मुष्करा यदैन्द्राः सन्तोऽग्निभ्य आ लभ्यन्ते देवताभ्यः समदं दधात्याग्नेयीस्त्रिष्टुभो याज्यानुवाक्याः कुर्याद्यदाग्नेयीस्तेनाऽऽग्नेया यत् त्रिष्टुभस्तेनैन्द्राः समृद्ध्यै न देवताभ्यः समदं दधाति[२] वायवे नियुत्वते तूपरमा लभते तेजोऽग्नेर्वायुस्तेजस एष आ लभ्यते तस्माद्यद्रियङ् वायु-(१)-र्वाति तद्रियङ्ङग्निर्दहति स्वमेव तत् तेजोऽन्वेति[३] यन्न नियुत्वते स्यादुन्माद्येद्यजमानो नियुत्वते भवति यजमानस्यानुन्मादाय[४] वायुमती श्वेतवती याज्यानुवाक्ये भवतः सतेजस्त्वाय[५] हिरण्यगर्भः समवर्तताग्र इत्याघारमा घारयति प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाय[६] सर्वाणि वा एष रूपाणि पशूनां प्रत्या लभ्यते यच्छ्मश्रुणस्तत् (२) पुरुषाणाꣳ रूपं यत् तूपरस्तदश्वानां यदन्यतोदन् तद्गवां यदव्या इव शफास्तदवीनां यदजस्तदजानां[७] वायुर्वै पशूनां प्रियं धाम यद्वायव्यो भवत्येतमेवैनमभि संजानानाः पशव उप तिष्ठन्ते[८] वायव्यः कार्या३ः प्राजापत्या३ इत्याहुर्यद्वायव्यं कुर्यात् प्रजापतेरियाद्यत् प्राजापत्यं कुर्याद्वायो-(३)-रियाद्यद्वायव्यः पशुर्भवति तेन वायोर्नैति यत् प्राजापत्यः पुरोडाशो भवति तेन प्रजापतेर्नैति यद् द्वादशकपालस्तेन वैश्वानरान्नैत्या[९] ग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चाऽऽरभते[१०] ऽग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता (४) एवोभयतः परिगृह्य यजमानोऽव रुन्धे[११] पुरोडाशेन वै देवा अमुष्मिँल्लोक आर्ध्नुवन् चरुणाऽस्मिन् यः कामयेतामुष्मिँल्लोक ऋध्नुयामिति स पुरोडाशं कुर्वीतामुष्मिन्नेव लोक ऋध्नोति[१२] यदष्टाकपालस्तेनाऽऽग्नेयो यत् त्रिकपालस्तेन वैष्णवः समृद्ध्यै[१३] यः कामयेतास्मिँल्लोक ऋध्नुयामिति स चरुं कुर्वीताग्नेर्घृतं विष्णोस्तण्डुलास्तस्मा-(५)-च्चरुः कार्योऽस्मिन्नेव लोक ऋध्नोत्या[१४] दित्यो भवती यं वा अदितिरस्यामेव प्रति तिष्ठत्यथो अस्यामेवाधि यज्ञं तनुते[१५] यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामि गर्भोऽवपद्यते तादृगेव

तदार्तिमाच्छैद्वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत् संवत्सरो वा अग्निर्वैश्वानरो यथा संवत्सरमाप्त्वा (६) काल आगते विजायत एवमेव संवत्सरमाप्त्वा काल आगतेऽग्निं चिनुते नाऽऽर्तिमाच्छैत्ये[६] षा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियामेवास्य तनुवमव रुन्धे[७] त्रीण्येतानि हवीꣳषि भवन्ति त्रय इमे लोका एषां लोकानाꣳ रोहाय[८] ॥ ( वायु,- तं,- द्वायो,-दैवता,- स्तस्मा,- दाप्त्वा, ऽष्टाविꣳशच्च ) ॥ १ ॥

चयनविधिः, तत्फलं च ॥ अग्निर्ऋषिः ।

प्रजापतिः प्रजाः सृष्ट्वा प्रेणाऽनु प्राविशत् ताभ्यः पुनः संभवितुं नाशक्नोत् सोऽब्रवीदृध्नवदित् स यो मेतः पुनः संचिनवदिति तं देवाः समचिन्वन् ततो वै त आर्ध्नुवन् यत् समचिन्वन् तच्चित्यस्य चित्यत्वं[१] य एवं विद्वानग्निं चिनुत ऋध्नोत्येव[२] कस्मै कमग्निश्चीयत इत्याहुरग्निवा-(१)-नसानीति वा अग्निश्चीयतेऽग्निवानेव भवति[३] कस्मै कमग्निश्चीयत इत्याहुर्देवा मा वेदन्निति वा अग्निश्चीयते विदुरेनं देवाः[४] कस्मै कमग्निश्चीयत इत्याहुर्गृह्यसानीति वा अग्निश्चीयते गृह्येव भवति[५] कस्मै कमग्निश्चीयत इत्याहुः पशुमानसानीति वा अग्नि-(२)-श्चीयते पशुमानेव भवति[६] कस्मै कमग्निश्चीयत इत्याहुः सप्त मा पुरुषा उप जीवानिति वा अग्निश्चीयते त्रयः प्राञ्चस्त्रयः प्रत्यञ्च आत्मा सप्तम एतावन्त एवैनममुष्मिँल्लोक उप जीवन्ति[७] प्रजापतिरग्निमचिकीषत तं पृथिव्यब्रवीन्न मय्यग्निं चेष्यसेऽति मा धक्ष्यति सा त्वाऽतिदह्यमाना वि धविष्ये (३) स पापीयान् भविष्यसीति सोऽब्रवीत् तथा वा अहं करिष्यामि यथा त्वा नातिधक्ष्यतीति स इमामभ्यमृशत् प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदेतीमामेवेष्टकां कृत्वोपाधत्तानतिदाहाय[८] यत् प्रत्यग्निं चिन्वीत तदभि मृशेत् प्रजापतिस्त्वा सादयतु तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदे-(४)-तीमामेवेष्टकां कृत्वोप धत्तेऽनतिदाहाय[९] प्रजापतिरकामयत प्र जायेयेति स एतमुख्यमपश्यत् तꣳ संवत्सरमबिभस्ततो वै स प्राजायत तस्मात् संवत्सरं भार्यः प्रैव जायते[१०] तं वसवोऽब्रुवन् प्र त्वमजनिष्ठा वयं प्र जायामहा इति तं वसुभ्यः प्रायच्छत् तं त्रीण्यहान्यबिभरुस्तेन (५) त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्मात् त्र्यहं भार्यः प्रैव जायते तान् रुद्रा अब्रुवन् प्र यूयमजनिढ्वं वयं प्र जायामहा इति तꣳ रुद्रेभ्यः प्रायच्छन् तꣳ षडहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्मात् षडहं भार्यः प्रैव जायते तानादित्या अब्रुवन् प्र यूयमजनिढ्वं वयं (६) प्र जायामहा इति तमादित्येभ्यः प्रायच्छन् तं द्वादशाहान्यबिभरुस्तेन त्रीणि च शतान्यसृजन्त त्रयस्त्रिꣳशतं च तस्माद् द्वादशाहं भार्यः प्रैव जायते[११] तेन वै ते सहस्रमसृजन्तोखाꣳ सहस्रतमां[१२] य एवमुख्यꣳ साहस्रं वेद प्र सहस्रं पशूनाप्नोति[१३] ॥ ( अग्निवा,-नग्नि,-धविष्ये,-सीद, तेन,-वयं, चत्वारिꣳशच्च ) ॥ २ ॥

उखाहोमः, पुरुषशीर्षोपधानं, वामभृदुपधानं च ॥ अग्निर्ऋषिः ।

यजुषा वा एषा क्रियते यजुषा पच्यते यजुषा वि मुच्यते यदुखा सा वा एषैतर्हि यातयाम्नी सा न पुनः प्रयुज्येत्याहुरग्ने युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमाꣳ इत्युखायां जुहोति तेनैवैनां पुनः प्र युङ्क्ते तेनायातयाम्नी[१] यो वा अग्नेर्योग आगते युनक्ति युङ्क्ते युञ्जानेष्वग्ने (१) युक्ष्वा हि ये तव युक्ष्वा हि देवहूतमाꣳ इत्याहैष वा अग्नेर्योगस्तेनैवैनं युनक्ति युङ्क्ते युञ्जानेषु[२] ब्रह्मवादिनो वदन्ति त्यङ्ङग्नि-

श्वेतव्या३ उत्तानाः३ इति वयसां वा एष प्रतिमया चीयते यदग्निर्यन्न्यञ्चं चिनुयात् पृष्ठित एनमाहुतय ऋच्छेयुर्यदुत्तानं न पतितुꣳ शक्नुयादसुवर्ग्योऽस्य स्यात् प्राचीनमुत्तानं ( २ ) पुरुषशीर्षमुप दधाति मुखत एवैनमाहुत य ऋच्छन्ति नोत्तानं चिनुते सुवर्ग्योऽस्य भवति[३] सौर्या जुहोति चक्षुरेवास्मिन् प्रति दधाति[४] द्विर्जुहोति द्वे हि चक्षुषी[५] समान्या जुहोति समानꣳ हि चक्षुः समृद्ध्यै[६] देवासुराः संयत्ता आसन् ते वामं वसु सं न्यदधत तद्देवा वामभृताऽवृञ्जत तद्वामभृतो वामभृत्त्वं यद्वामभृत-( ३ )-मुपदधाति वाममेव तया वसु यजमानो भ्रातृव्यस्य वृङ्क्ते[७] हिरण्यमूर्ध्नी भवति ज्योतिर्वै हिरण्यं ज्योतिर्वामं ज्योति-षैवास्य ज्योतिर्वामं वृङ्क्ते द्वियजुर्भवति प्रतिष्ठित्यै[९] ॥ ( अग्नं, उत्तानं, वामभृतं चतुर्विꣳशतिश्च ) ॥ ३ ॥

रेतःसिग्व्योमः, चित्यभिमर्शश्च ॥ ७ अतिजगती शक्वरी वा; १२ त्रिष्टुप् । अग्निर्ऋषिः ।

आपो वरुणस्य पत्नय आसन् ता अग्निरभ्यध्यायत् ताः समभवत् तस्य रेतः पराऽपतत् तदियम-भवद्यद् द्वितीयं पराऽपतत् तदसावभवदियं वै विराडसौ स्वराड् यद्विराजावुपदधातीमे एवोप धत्ते[१] यद्वा असौ रेतः सिञ्चति तदस्यां प्रति तिष्ठति तत् प्र जायते ता ओषधयो ( १ ) वीरुधो भवन्ति ता अग्निरत्ति[२] य एवं वेद प्रैव जायतेऽन्नादो भवति[३] यो रेतस्वी स्यात् प्रथमायां तस्य चित्यामुभे उप दध्यादिमे एवास्मै समीची रेतः सिञ्चतो यः सिक्तरेताः स्यात् प्रथमायां तस्य चित्यामन्यामुप दध्यादुत्तमायामन्याꣳ रेत एवास्य सिक्तमाभ्यामुभयतः परि गृह्णाति[४] संवत्सरं न क-( २ )-ञ्चन प्रत्य-वरोहेन्न हीमे कं चन प्रत्यवरोहतस्तदेनयोर्व्रतं[५] यो वा अपशीर्षाणमग्निं चिनुतेऽपशीर्षाऽमुष्मिंल्लोके भवति यः सशीर्षाणं चिनुते सशीर्षाऽमुष्मिंल्लोके भवति[६]

चित्तिं जुहोमि मनसा घृतेन यथा देवा इहाऽऽगमन् वीतिहोत्रा ऋतावृधः ।
समुद्रस्य वयुनस्य पत्मन् जुहोमि विश्वकर्मणे विश्वाऽहाऽमर्त्यꣳ हवि—॥

—रिति स्वयमातृण्णामुपधाय जुहोत्य ( ३ ) तद्वा अग्नेः शिरः सशीर्षाणमेवाग्निं चिनुते[८] सशी-र्षाऽमुष्मिंल्लोके भवति य एवं वेद[९] सुवर्गाय वा एष लोकाय चीयते यदग्निस्तस्य यदयथापूर्वं क्रियतेऽसुवर्ग्यमस्य तत् सुवर्ग्योऽग्नि[१०]—श्चितिमुपधायाभि मृशे[११]—

—श्चित्तिमचित्तिं चिनवद्वि विद्वान् पृष्ठेव वीता वृजिना च मर्तान् ।
राये च नः स्वपत्याय ( ४ ) देव दितिं च रास्वादितिमुरुष्येति[१२] ॥

यथापूर्वमेवैनामुप धत्ते प्राञ्चमेनं चिनुते सुवर्ग्योऽस्य भवति[१३] ॥

( ओषधयः, कं, जुहोति, स्वपत्याया,–ष्टादश च ) ॥ ४ ॥

हिरण्येष्टका-स्वयमातृण्णोपधानम् ॥ अग्निर्ऋषिः ।

विश्वकर्मा दिशां पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः[१] प्रजापती[२] रुद्रो[३] वरु-णो[४] ऽग्निर्दिशां पतिः स नः पशून् पातु सोऽस्मान् पातु तस्मै नमः[५] एता वै देवता एतेषां पशूना-मधिपतयꣳस्ताभ्यो वा एष आ वृश्च्यते यः पशुशीर्षाण्युपदधाति हिरण्येष्टका उप दधात्येताभ्य एव

देवताभ्यो नमस्करोति ब्रह्मवादिनो (१) वदन्त्यग्नौ ग्राम्यान् पशून् प्र दधाति शुचाऽऽरण्यान् अर्पयति किं तत उच्छिꣳषतीति यद्धिरण्येष्टका उपदधात्यमृतं वै हिरण्यममृतेनैव ग्राम्येभ्यः पशुभ्यो भेषजं करोति नैनान् हिनस्ति प्राणो वै प्रथमा स्वयमातृण्णा व्यानो द्वितीयाऽपानस्तृतीयाऽनु प्राण्यात् प्रथमाꣳ स्वयमातृण्णामुपधाय प्राणेनैव प्राणꣳ समर्धयति व्यन्याद् (२) द्वितीयामुपधाय व्यानेनैव व्यानꣳ समर्धयत्यपान्यात् तृतीयामुपधायापानेनैवापानꣳ समर्धयत्यथो प्राणैरेवैनꣳ समिन्धे भूर्भुवः सुवरिति स्वयमातृण्णा उप दधातीमे वै लोकाः स्वयमातृण्णा एताभिः खलु वै व्याहृतीभिः प्रजापतिः प्राजायत यदेताभिर्व्याहृतीभिः स्वयमातृण्णा उपदधातीमानेव लोकानुपधायैषु (३) लोकेष्वधि प्र जायते प्राणाय व्यानायापानाय वाचे त्वा चक्षुषे त्वा तया देवतयाऽङ्गिरस्वद् ध्रुवा सीदाग्निना वै देवाः सुवर्गं लोकमजिगाꣳसन् तेन पतितुं नाशक्नुवन् त एताश्चतस्रः स्वयमातृण्णा अपश्यन् ता दिक्षूपादधत तेन सर्वतश्चक्षुषा सुवर्गं लोकमायन् यच्चतस्रः स्वयमातृण्णा दिक्षूपदधाति सर्वतश्चक्षुषैव तदग्निना यजमानः (४) सुवर्गं लोकमेति ॥

( ब्रह्मवादिनो, व्यन्या,- देषु, यजमान,- स्त्रीणि च ) ॥५॥

अह्नां रूपा-लोकंपृणोपधानम् ॥ अग्निर्ऋषिः ।

अग्न आ याहि वीतय इत्याहाह्वतैवैनमग्निं दूतं वृणीमह इत्याह हुत्वैवैनं वृणीतेऽग्निनाऽग्निः समिध्यत इत्याह समिन्ध एवैनमग्निर्वृत्राणि जङ्घनदित्याह समिद्ध एवास्मिन्निन्द्रियं दधात्यग्नेः स्तोमं मनामह इत्याह मनुत एवैनमेतानि वा अह्नाꣳ रूपाण्य-(१)-न्वहमेवैनं चिनुतेऽवाह्नाꣳ रूपाणि रुन्धे ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्यातयाम्नीरन्या इष्टका अयातयाम्नी लोकंपृणेत्यैन्द्राग्नी हि बार्हस्पत्येति ब्रूयादिन्द्राग्नी च हि देवानां बृहस्पतिश्चायातयामानो ऽनुचरवती भवत्यजामित्वायानुष्टुभाऽनु चरत्यात्मा वै लोकंपृणा प्राणोऽनुष्टुप् तस्मात् प्राणः सर्वाण्यङ्गान्यनु चरति ता अस्य सूददोहस (२) इत्याह तस्मात् परुषिपरुषि रसः सोमꣳ श्रीणन्ति पृश्नय इत्याहान्नं वै पृश्न्यन्नमेवाव रुन्धेऽर्को वा अग्निरर्कोऽन्नमन्नमेवाव रुन्धे जन्मन् देवानां विशस्त्रिष्वा रोचने दिव इत्याहेमानेवास्मै लोकान् ज्योतिष्मतः करोति यो वा इष्टकानां प्रतिष्ठां वेद प्रत्येव तिष्ठति तया (३) देवतयाऽङ्गिरस्वद् ध्रुवा सीदेत्याहैषा वा इष्टकानां प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति ॥ ( रूपाणि, सूददोहस,-स्तया, षोडश च ) ॥ ६ ॥

एकयूपादिविधिः ॥ १० अनुष्टुप् । अग्निर्ऋषिः ।

सुवर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी यदग्नावेकादशिनीं मिनुयाद्वज्रेणैनꣳ सुवर्गाल्लोकादन्तर्दध्याद्यन्न मिनुयात् स्वरुभिः पशून् व्यर्धयेदेकयूपं मिनोति नैनं वज्रेण सुवर्गाल्लोकादन्तर्दधाति न स्वरुभिः पशून् व्यर्धयति वि वा एष इन्द्रियेण वीर्येणर्ध्यते योऽग्निं चिन्वन्नधि-

क्रामत्यैन्द्रिय-(१,-र्चा ऽऽक्रमणं प्रतीष्टकामुप दध्यान्नेन्द्रियेण वीर्येण व्यृध्यते[2] रुद्रो वा एष यद-ग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आ वृश्च्यते योऽग्निं चिनुतेऽग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात् ताभ्य एव नमस्करोत्यथो ताभ्य एवाऽऽत्मानं निष्क्रीणीते[3] यत् ते रुद्र पुरो (२) धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र संवत्सरेण नमस्करोमि[4] यत् ते रुद्र दक्षिणा धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र परिवत्सरेण नमस्करोमि[5] यत् ते रुद्र पश्चाद्धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्रेदावत्सरेण नमस्करोमि[6] यत् ते रुद्रोत्तराद्धनुस्त-(३)-द्वातो अनु वातु ते तस्मै ते रुद्रेदुवत्सरेण नमस्करोमि[7] यत् ते रुद्रोपरि धनुस्तद्वातो अनु वातु ते तस्मै ते रुद्र वत्सरेण नमस्करोमि[8] रुद्रो वा एष यदग्निः स यथा व्याघ्रः क्रुद्धस्तिष्ठत्येवं वा एष एतर्हि संचितमेतैरुप तिष्ठते नमस्कारैरेवैनꣳ शमयति[9] ॥

येऽग्नयः (४) पुरीष्याः प्रविष्टाः पृथिवीमनु । तेषां त्वमस्युत्तमः प्र णो जीवातवे सुव ॥

आपं त्वाऽग्ने मनसा[11] ऽऽपं त्वाऽग्ने तपसा[12] ऽऽपं त्वाऽग्ने दीक्षया[13] ऽऽपं त्वाऽग्न उपसद्भि[14]—रापं त्वाऽग्ने सुत्यया[15] ऽऽपं त्वाऽग्ने दक्षिणाभि[16]—रापं त्वाऽग्नेऽवभृथेन[17]—पं त्वाऽग्ने वशया[18] ऽऽपं त्वाऽग्ने स्वगाकारेणे[19]—त्याहै-(५)-षा वा अग्नेराप्तिस्तयैवैनमाप्नोति[20] ॥ ( ऐन्द्रिया, पुर, उत्तराद्धनुस्त,-दग्नय, आहा,-ष्टौ च ) ॥ ७ ॥

उपस्थानम्, आत्मेष्टकोपधानं च ॥ अग्निर्ऋषिः ।

गायत्रेण पुरस्तादुप तिष्ठते प्राणमेवास्मिन् दधाति बृहद्रथन्तराभ्यां पक्षावोज एवास्मिन् दधात्यृतुस्थायज्ञायज्ञियेन पुच्छमृतुष्वेव प्रति तिष्ठति पृष्ठैरुप तिष्ठते तेजो वै पृष्ठानि तेज एवास्मिन् दधाति[1] प्रजापतिरग्निमसृजत सोऽस्मात् सृष्टः पराङैत् तं वारवन्तीयेनावारयत तद्वारवन्तीयस्य वारवन्तीयत्वꣳ श्यैतेन श्येती अकुरुत तच्छ्यैतस्य श्यैतत्वं (१) यद्वारवन्तीयेनोपतिष्ठते वारयत एवैनꣳ श्यैतेन श्येती कुरुते[2] प्रजापतेर्हृदयेनापिपक्षं प्रत्युप तिष्ठते प्रेमाणमेवास्य गच्छति[3] प्राच्या त्वा दिशा सादयामि गायत्रेण छन्दसाऽग्निना देवतयाऽग्नेः शीर्ष्णाऽग्नेः शिर उप दधामि[4] दक्षिणया त्वा दिशा सादयामि त्रैष्टुभेन छन्दसेन्द्रेण देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुप दधामि[5] प्रतीच्या त्वा दिशा सादयामि (२) जागतेन छन्दसा सवित्रा देवतयाऽग्नेः पुच्छेनाग्नेः पुच्छमुप दधाम्यु[6]—दीच्या त्वा दिशा सादयाम्यानुष्टुभेन छन्दसा मित्रावरुणाभ्यां देवतयाऽग्नेः पक्षेणाग्नेः पक्षमुप दधाम्यू[7]—र्ध्वया त्वा दिशा सादयामि पाङ्क्तेन छन्दसा बृहस्पतिना देवतयाऽग्नेः पृष्ठेनाग्नेः पृष्ठमुप दधामि[8] यो वा अपात्मानमग्निं चिनुतेऽपात्माऽमुष्मिंल्लोके भवति यः सात्मानं चिनुते (३) सात्माऽमुष्मिंल्लोके भवत्यात्मेष्टका उप दधात्येष वा अग्नेरात्मा सात्मानमेवाग्निं चिनुते[9] सात्माऽमुष्मिंल्लोके भवति य एवं वेद[10] ॥

( श्यैतत्वꣳ, प्रतीच्या त्वा दिशा सादयामि, यः सात्मानं चिनुते, द्वाविꣳशतिश्च ) ॥ ८ ॥

आज्याहुतिविधानं प्रोक्षणं च ॥ अग्निर्ऋषिः ।

अग्ने उदधे या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्माग्ने दुध्र[2]*– गह्य[3]*– किꣳशिल[4]*– वन्य या त इषुर्युवा नाम तया नो मृड तस्यास्ते नमस्तस्यास्त उप जीवन्तो भूयास्म[5] पञ्च वा एतेऽग्नयो यच्चितय उदधिरेव नाम प्रथमो दुध्रो (१) द्वितीयो गह्यस्तृतीयः किꣳशिलश्चतुर्थो वन्यः पञ्चमस्तेभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च प्र दहेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानो[6] वाङ्म आसन् नसोः प्राणोऽक्ष्योश्चक्षुः कर्णयोः श्रोत्रं बाहुवोर्बलमूरुवोरोजोऽरिष्टा विश्वान्यङ्गानि तनू-(२)-स्तनुवा मे सह नमस्ते अस्तु मा मा हिꣳसी[7]रप वा एतस्मात् प्राणाः क्रामन्ति योऽग्निं चिन्वन्नधिक्रामति वाङ्म आसन् नसोः प्राण इत्याह प्राणानेवाऽऽत्मन् धत्ते[8] यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्त्वा[9]हुतिभागा वा अन्ये रुद्रा हविर्भागा (३) अन्ये शतरुद्रीयꣳ हुत्वा गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां नि दध्याद्भागधेयेनैवैनꣳ शमयति तस्य त्वै शतरुद्रीयꣳ हुतमित्याहुर्यस्यैतदग्नौ क्रियत इति[10] वसवस्त्वा रुद्रैः पुरस्तात् पान्तु[11] पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्वा[12]दित्यास्त्वा विश्वैर्देवैः पश्चात् पान्तु[13] द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतः पातु[14] (४) देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्तु[15] न वा एतेन न पूतो न मेध्यो न प्रोक्षितो यदेनमतः प्राचीनं प्रोक्षति यत् संचितमाज्येन प्रोक्षति तेन पूतस्तेन मेध्यस्तेन प्रोक्षितः[16] ॥

( दुध्र-स्तनू,-हविर्भागाः, पातु, द्वात्रिꣳशच्च ) ॥ ९ ॥

सर्पाहुतिः महाहोमः; अग्नेर्विमोकहोमश्च ॥ १५ त्रिष्टुप् । अग्निर्ऋषिः ।

समीची नामासि प्राची दिक् तस्यास्तेऽग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधाम्यो[1]जस्विनी नामासि दक्षिणा दिक् तस्यास्त इन्द्रोऽधिपतिः पृदाकु[2]ः प्राची नामासि प्रतीची दिक् तस्यास्ते (१) सोमोऽधिपतिः स्वजो[3] ऽवस्थावा नामास्युदीची दिक् तस्यास्ते वरुणोऽधिपतिस्तिरश्चराजि[4]रधिपत्नी नामासि बृहती दिक् तस्यास्ते बृहस्पतिरधिपतिः श्वित्रो[5] वशिनी नामासीयं दिक् तस्यास्ते यमोऽधिपतिः कल्माषग्रीवो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च (२) नो द्वेष्टि तं वां जम्भे दधाम्ये[6]ता वै देवता अग्निं चितꣳ रक्षन्ति ताभ्यो यदाहुतीर्न जुहुयादध्वर्युं च यजमानं च ध्यायेयुर्यदेता आहुतीर्जुहोति भागधेयेनैवैनाञ्छमयति नाऽऽर्तिमार्च्छत्यध्वर्युर्न यजमानो[7] हेतयो नाम स्थ तेषां वः पुरो गृहा अग्निर्व इषवः सलिलो[8] *- निलिम्पा नाम (३) स्थ तेषां वो दक्षिणा गृहाः पितरो व इषवः सगरो[9] *- वज्रिणो नाम स्थ तेषां वः पश्चाद् गृहाः स्वप्नो व इषवो गह्वरो[10] *- ऽवस्थावानो नाम स्थ तेषां व उत्तराद् गृहा आपो व इषवः

---

( ९।१-४ ) या त...भूयास्म । ( १०।८-९,१० ) स्थ तेषां...इषवः ।

समुद्रो[११] *- ऽधिपतयो नाम स्थ तेषां व उपरि गृहा वर्षं व इषवोऽवस्वान्[१२] *- क्रव्या नाम स्थ पार्थिवास्तेषां व इह गृहा (४) अन्नं व इषवोऽनिमिषो वातनामं तेभ्यो वो नमस्ते नो मृडयत ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि[१३] हुतादो वा अन्ये देवा अहुतादोऽन्ये तानग्निचिदेवोभयान् प्रीणाति दध्ना मधुमिश्रेणैता आहुतीर्जुहोति भागधेयेनैवैनान् प्रीणात्यथो खल्वाहुरिष्टका वै देवा अहुताद इत्य- (५) -नुपरिक्रामं जुहोत्यपरिवर्गमेवैनान् प्रीणाति[१४]—

—म९ स्तनमूर्जस्वन्तं धयापां प्रप्यातमग्ने सरिरस्य मध्ये ।

उत्सं जुषस्व मधुमन्तमूर्व समुद्रिय९ सदनमा विशस्व[१५] ॥

यो वा अग्निं प्रयुज्य न विमुञ्चति यथाऽश्वो युक्तोऽविमुच्यमानः क्षुध्यन् पराभवत्येवमस्याग्निः परा भवति तं पराभवन्तं यजमानोऽनु परा भवति सोऽग्निं चित्वा लूक्षो (६) भवतीम९ स्तनमूर्जस्वन्तं धयापामित्याज्यस्य पूर्णा९ स्रुचं जुहोत्येष वा अग्नेर्विमोको विमुच्यैवास्मा अन्नमपि दधाति[१६] तस्मादाहुर्यश्चैवं वेद यश्च न सुधाय९ ह वै वाजी सुहितो दधातीत्यग्निर्वाव वाजी तमेव तत् प्रीणाति स एनं प्रीतः प्रीणाति वसीयान् भवति[१७] (७) (ते, च, नाम, गृहा, इति, लूक्षो, भवति) ॥ १० ॥

अश्वमेधशेषभूतपशूनां प्रथमः सङ्घः ॥ विश्वेदेवा ऋषयः ।

इन्द्राय राज्ञे सूकरो[१] वरुणाय राज्ञे कृष्णो[२] यमाय राज्ञ ऋश्य[३] ऋषभाय राज्ञे गवयः शार्दूलाय राज्ञे गौरः पुरुषराजाय मर्कटः[६] क्षिप्रश्येनस्य वर्तिका नीलङ्गोः क्रिमिः[८] सोमस्य राज्ञः कुलुङ्गः सिन्धोः शि९शुमारो[१०] हिमवतो हस्ती[११] ॥ (इन्द्रायाष्टावि९शतिः) ॥ ११ ॥

द्वितीयः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

मयुः प्राजापत्य ऊलो हलीक्ष्णो वृषद९शस्ते धातुः[२] सरस्वत्यै शारिः श्येता पुरुषवाक्[३] सरस्वते शुकः श्येतः पुरुषवा[४]—गारण्योऽजो नकुलः शका ते पौष्णा वाचे क्रौञ्चः ॥ (मयुस्त्रयोवि९शतिः) ॥ १२ ॥

तृतीयः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

अपां नप्त्रे जषो[१] नाक्रो मकरः कुलीकयस्तेऽकूपारस्य[२] वाचे पैङ्गराजो[३] भगाय कुषीतक आती वाहसो दर्विदा ते वायव्या[४] दिग्भ्यश्चक्रवाकः ॥ (अपामेकान्नत्रि९शतिः) ॥ १३ ॥

चतुर्थः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

बलायाजगर आखुः सृजया शयण्डकस्ते मैत्रा मृत्यवेऽसितो[३] मन्यवे स्वजः कुम्भीनसः पुष्करसादो लोहिताहिस्ते त्वाष्ट्राः प्रतिश्रुत्कायै वाहसः[६] ॥ (बलायाष्टादश) ॥ १४ ॥

पञ्चमः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

पुरुषमृगश्चन्द्रमसे[१] गोधा कालका दार्वाघाटस्ते वनस्पतीना[२]—मेण्यह्ने[३] कृष्णो रात्रियै[४] पिकः क्ष्विङ्का नीलशीर्ष्णी तेऽर्यम्णे[५] धातुः कत्कटः ॥ (पुरुषमृगोऽष्टादश) ॥ १५ ॥

षष्ठः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

सौरी बलाका—र्श्यो मयूरः श्येनस्ते गन्धर्वाणां[२] वसूनां कपिञ्जलो[३] रुद्राणां तित्तिरी[४] रोहित्

---

(१०।११-१२) स्थ तेषां...इषवः ।

कुण्डृणाची गोलत्तिका ता अप्सरसा—मरण्याय सृमरः ( सौयष्टादश ) ॥ १६ ॥

सप्तमः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

पृषतो वैश्वदेवः पित्वो न्यङ्कुः कशस्तेऽनुमत्यै[1] अन्यवापोऽर्धमासानां[2] मासां कश्यपः[3] क्वयिः कुटरुर्दात्यौहस्ते सिनीवाल्यै[5] बृहस्पतये शित्पुटः[6] ॥ ( पृषतोऽष्टादश ) ॥ १७ ॥

अष्टमः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

शका भौमी[1] पान्त्रः कशो मान्थीलवस्ते पितृणा[2]—मृतूनां जहका[3] संवत्सराय लोपा[4] कपोत उलूकः शशस्ते नैर्ऋता[5] कृकवाकुः सावित्रः[6] ॥ ( शकाऽष्टादश ) ॥ १८ ॥

नवमः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

रुरू रौद्रः[1] कृकलासः शकुनिः पिप्पका ते शरव्यायै[2] हरिणो मारुतो[3] ब्रह्मणे शार्ग[4]—स्तरक्षुः कृष्णः श्वा चतुरक्षो गर्दभस्त इतरजनाना[5]—मग्नये धूङ्क्ष्णा[6] ॥ ( रुरुर्विंशतिः ) ॥ १९ ॥

दशमः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

अलज आन्तरिक्ष[1] उद्रो मद्गुः प्लवस्तेऽपा[2]—मदित्यै हंससाचि[3]—रिन्द्राण्यै कीर्शा[4] गृध्रः शितिकक्षी वार्ध्राणसस्ते दिव्यो[5] द्यावापृथिव्या श्वावित्[6] ॥ ( अलजोऽष्टादश ) ॥ २० ॥

एकादशः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

सुपर्णः पार्जन्यो[1] हंसो वृको वृषदंशस्त ऐन्द्रा[2] अपामुद्रो[3] ऽर्यम्णे लोपाशः[4] सिंहो नकुलो व्याघ्रस्ते महेन्द्राय[5] कामाय परस्वान्[6] ॥ ( सुपर्णोऽष्टादश ) ॥ २१ ॥

अश्वमेधशेषः प्रथमो ग्राम्यपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

आग्नेयः कृष्णग्रीवः[1] सारस्वती मेषी[2] बभ्रुः सौम्यः[3] पौष्णः श्यामः[4] शितिपृष्ठो बार्हस्पत्यः[5] शिल्पो वैश्वदेव[6] ऐन्द्रोऽरुणो[7] मारुतः कल्माष[8] ऐन्द्राग्नः संहितो[9] ऽधोरामः सावित्रो[10] वारुणः पेत्वः[11] ॥ ( आग्नेयो द्वाविंशतिः ) ॥ २२ ॥

द्वितीयो ग्राम्यपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

अश्वस्तूपरो गोमृगस्ते प्राजापत्या[1] आग्नेयौ कृष्णग्रीवौ[2] त्वाष्ट्रौ लोमशसक्थौ[3] शितिपृष्ठौ बार्हस्पत्यौ[4] धात्रे पृषोदरः[5] सौर्यो बलक्षः पेत्वः[6] ॥ ( अश्वः षोडश ) ॥ २३ ॥

तृतीयो ग्राम्यपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

अग्नयेऽनीकवते रोहिताञ्जिरनड्वा[1]—नधोरामौ सावित्रौ[2] पौष्णौ रजतनाभी[3] वैश्वदेवौ पिशङ्गौ तूपरौ[4] मारुतः कल्माष[5] आग्नेयः कृष्णोऽजः[6] सारस्वती मेषी[7] वारुणः कृष्ण एकशितिपात् पेत्वः[8] ॥ ( अग्नये द्वाविंशतिः ) ॥ २४ ॥

[ यत् ३३८। प्रजापति- ३४०।- यजुषा १७४ ।ऽऽपो २१८। विश्वकर्मा २०३ ।ऽग्ने १६६। सुवर्गाय २५८। गायत्रेणा- १७२।-ग्ने २३२। समीची-३५०।-न्द्राय २८। मयु-२३।-रूपां १९। बलाय १८। पुरुषमृगः १८। सौरी १८। पृषतः १८। शका १८। रुरु-२०।-रलजः १८। सुपर्ण १८। आग्नेयो २२।ऽश्वो १६।ऽग्नये २२। चतुर्विंशतिः ॥ २७२७ ॥ ]

[ ॥ इति पञ्चमकाण्डे पञ्चमः प्रपाठकः ॥५॥ ]

उपानुवाक्याभिधानम् ।

[ अथ षष्ठः प्रपाठकः ॥६॥ ]

कुम्भेष्टकामन्त्रणम् ॥ १-३, ९-१० त्रिष्टुप्; ४ जगती; ५-८ अनुष्टुप्; ११-१३ गायत्री ।

हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः ।
अग्निं या गर्भं दधिरे विरूपास्ता न आपः शꣳ स्योना भवन्तु[१] ॥
यासाꣳ राजा वरुणो याति मध्ये सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावकास्ता न आपः शꣳ स्योना भवन्तु[२] ॥
यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति ।
याः पृथिवीं पयसोन्दन्ति (१) शुक्रास्ता न आपः शꣳ स्योना भवन्तु[३] ॥
शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तनुवोप स्पृशत त्वचं मे ।
सर्वाꣳ अग्नीꣳरप्सुषदो हुवे वो मयि वर्चो बलमोजो नि धत्त[४] ॥
यददः संप्रयतीरहावनदता हते । तस्मादा नद्यो नाम स्थ ता वो नामानि सिन्धवः[५] ॥
यत् प्रेषिता वरुणेन ताः शीभꣳ समवल्गत (२) ।
तदाप्नोदिन्द्रो वो यतीस्तस्मादापो अनु स्थन[६] ॥
अपकामꣳ स्यन्दमाना अवीवरत वो हिकम् ।
इन्द्रो वः शक्तिभिर्देवीस्तस्माद्वार्णाम वो हितम्[७] ॥
एको देवो अप्यतिष्ठत् स्यन्दमाना यथावशम् । उदानिषुर्महीरिति तस्मादुदकमुच्यते[८] ॥
आपो भद्रा घृतमिदाप आसुरग्नीषोमौ बिभ्रत्याप इत् ताः ।
तीव्रो रसो मधुपृचां-( ३ )- मरंगम आ मा प्राणेन सह वर्चसा गन्[९] ॥
आदित् पश्याम्युत वा शृणोम्या मा घोषो गच्छति वाङ्न आसाम् ।
मन्ये भेजानो अमृतस्य तर्हि हिरण्यवर्णा अतृपं यदा वः[१०] ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे[११] ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः[१२] ( ४ ) ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः[१३] ॥
दिवि श्रयस्वान्तरिक्षे यतस्व पृथिव्या सं भव ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वा[१४] ॥

( उन्दन्ति, समवल्गत, मधुपृचां, मातरो, द्वाविꣳशतिश्च ) ॥ १ ॥

कुम्भेष्टका-वरूपधानम् ॥ अग्निर्ऋषिः ।

अपां ग्रहान् गृह्णात्येतद्वाव राजसूयं यदेते ग्रहाः सवो ऽग्निर्वरुणसवो राजसूयमग्निसवश्चित्यस्ताभ्यां-

मेव सूयतेऽथो उभावेव लोकावभि जयति यश्च राजसूयेनेजानस्य यश्चाग्निचित्[१] आपो भवन्त्यापो वा अग्नेर्भ्रातृव्या यदपोऽग्नेरधस्तादुपदधाति भ्रातृव्याभिभूत्यै भवत्यात्मना परा ऽस्य भ्रातृव्यो भवत्यमृतं ( १ ) वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चन्ति नाऽऽर्तिमाच्छति सर्वमायुरेति यस्यैता उपधीयन्ते य उ चैना एवं वेद[३]—न्नं वा आपः पशव आपोऽन्नं पशवोऽन्नादः पशुमान् भवति यस्यैता उपधीयन्ते य उ चैना एवं वेद[४] द्वादश भवन्ति द्वादश मासाः संवत्सरः संवत्सरेणैवास्मा ( २ ) अन्नमव रुन्धे[५] पात्राणि भवन्ति पात्रे वा अन्नमद्यते सयोन्येवान्नमव रुन्ध आ द्वादशात् पुरुषादन्नमत्त्यथो पात्रान्न छिद्यते यस्यैता उपधीयन्ते य उ चैना एवं वेद[६] कुम्भाश्च कुम्भीश्च मिथुनानि भवन्ति मिथुनस्य प्रजात्यै प्र प्रजया पशुभिर्मिथुनैर्जायते यस्यैता उपधीयन्ते य उ ( ३ ) चैना एवं वेद[७] शुग्वा अग्निः सोऽध्वर्युं यजमानं प्रजाः शुचाऽर्पयति यदप उपदधाति शुचमेवास्य शमयति नाऽऽर्तिमाच्छत्यध्वर्युर्न यजमानः शाम्यन्ति प्रजा यत्रैता उपधीयन्ते[८] ऽपां वा एतानि हृदयानि यदेता आपो यदेता अप उपदधाति दिव्याभिरेवैनाः सꣳ सृजति वर्षुकः पर्जन्यो ( ४ ) भवति[९] यो वा एतासामायतनं कॢप्तिं वेदाऽऽयतनवान् भवति कल्पतेऽस्मा अनुसीतमुप दधात्येतद्वा आसामायतनमेषा कॢप्तिः[१०]—र्य एवं वेदाऽऽयतनवान् भवति कल्पतेऽस्मै[११] द्वन्द्वमन्या उप दधाति चतस्रो मध्ये धृत्यै[१२] अन्नं वा इष्टका एतत् खलु वै साक्षादन्नं यदेष चरुर्यदेतं चरुमुपदधाति साक्षा-( ५ )- देवास्मा अन्नमव रुन्धे[१३] मध्यत उप दधाति मध्यत एवास्मा अन्नं दधाति तस्मान्मध्यतोऽन्नमद्यते[१४] बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मा अन्नमव रुन्धे[१५] ब्रह्मवर्चसमसि ब्रह्मवर्चसाय त्वेत्याह तेजस्वी ब्रह्मवर्चसी भवति यस्यैष उपधीयते य उ चैनमेवं वेद[१६] ॥

( अमृतं,-मस्मा, उ, पर्जन्यः, साक्षात्, सप्तचत्वारिꣳशच्च ) ॥ २ ॥

भूतेष्टकोपधानाभिषेकादि ॥ अग्निर्ऋषिः ।

भूतेष्टका उप दधात्यत्रात्र वै मृत्युर्जायते यत्रयत्रैव मृत्युर्जायते तत एवैनमव यजते तस्मादग्निचित् सर्वमायुरेति सर्वे ह्यस्य मृत्यवोऽवेष्टास्तस्मादग्निचिन्नाभिचरितवै प्रत्यगेनमभिचारः स्तृणुते[१] सूयते वा एष योऽग्निं चिनुते देवसुवामेतानि हवीꣳषि भवन्त्येतावन्तो वै देवानाꣳ सवास्त एवा-( १ )-स्मै सवान् प्र यच्छन्ति त एनꣳ सुवन्ते[२] सवोऽग्निर्वरुणसवो राजसूयं ब्रह्मसवश्चित्यो[३] देवस्य त्वा सवितुः प्रसव इत्याह सवितृप्रसूत एवैनं ब्रह्मणा देवताभिरभि षिञ्चत्य[४]—न्नस्यान्नस्याभि षिञ्चत्यन्नस्यान्नस्यावरुद्ध्यै[५] पुरस्तात् प्रत्यञ्चमभि षिञ्चति पुरस्ताद्धि प्रतीचीनमन्नमद्यते शीर्षतोऽभि षिञ्चति शीर्षतो ह्यन्नमद्यत[६] आ मुखादन्ववस्रावयति ( २ ) मुखत एवास्मा अन्नाद्यं दधात्य[७]—ग्नेस्त्वा साम्राज्येनाभि षिञ्चामीत्याहैष वा अग्नेः सवस्तेनैवैनमभि षिञ्चति बृहस्पतेस्त्वा साम्राज्येनाभि षिञ्चामीत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवैनमभि षिञ्चतीन्द्रस्य त्वा साम्राज्येनाभि षिञ्चामीत्याहेन्द्रियमेवास्मिन्नुपरिष्टाद्दधात्ये[८] त-( ३ )-द्वै राजसूयस्य रूपं य एवं विद्वानग्निं चिनुत उभावेव लोकावभि जयति यश्च राजसूयेनेजानस्य यश्चाग्निचित्[९] इन्द्रस्य सुषुवाणस्य दशधेन्द्रियं वीर्यं पराऽपतत् तद्देवाः सौत्रामण्या समभरन्त्सूयते वा

*

एष योऽग्निं चिनुतेऽग्निं चित्वा सौत्रामण्या यजेतेन्द्रियमेव वीर्यꣳ संभृत्याऽऽत्मन् धत्ते[१०] ॥
( एवा,-न्ववंस्तावयत्ये,-त, दृष्टाचत्वारिꣳशच्च ) ॥ ३ ॥

क्षेत्रमापनपूर्वाङ्गहोमः ॥ अग्निर्ऋषिः ।

सजूरब्दोऽयावभिः[१] सजूरुषा अरुणीभिः[२] सजूः सूर्य एतशेन[३] सजोषावश्विना दꣳसोभिः[४] सजूरग्निर्वैश्वानर इडाभिर्घृतेन स्वाहा[५] संवत्सरो वा अब्दो मासा अयावा उषा अरुणीः सूर्य एतश इमे अश्विना संवत्सरोऽग्निर्वैश्वानरः पशव इडा पशवो घृतꣳ संवत्सरं पशवोऽनु प्र जायन्ते संवत्सरेणैवास्मै पशून् प्र जनयति[६] दर्भस्तम्बे जुहोति य-( १ )-द्वा अस्या अमृतं यद्वीर्यं तद्दर्भास्तस्मिन् जुहोति प्रैव जायते ऽन्नादो भवति यस्यैवं जुह्वत्येता वै देवता अग्नेः पुरस्ताद्भागास्ता एव प्रीणात्यथो चक्षुरेवाग्नेः पुरस्तात् प्रति दधात्यँ—नन्धो भवति य एवं वेदा—ऽऽपो वा इदमग्रे सलिलमासीत् स प्रजापतिः पुष्करपर्णे वातो भूतोऽलेलायत् सः ( २ ) प्रतिष्ठां नाविन्दत स एतदपां कुलायमपश्यत् तस्मिन्नग्निमचिनुत तदीयमभवत् ततो वै स प्रत्यतिष्ठ—द्यां पुरस्तादुपादधात् तच्छिरोऽभवत् सा प्राची दिग्यां दक्षिणत उपादधात् स दक्षिणः पक्षोऽभवत् सा दक्षिणा दिग्यां पश्चादुपादधात् तत् पुच्छमभवत् सा प्रतीची दिग्यामुत्तरत उपादधात् ( ३ ) स उत्तरः पक्षोऽभवत् सोदीची दिग्यामुपरिष्टादुपादधात् तत् पृष्ठमभवत् सोर्ध्वा दि[१०]—गियं वा अग्निः पञ्चेष्टकस्तस्माद्यदस्यां खनन्त्यभीष्टकां तृन्दन्त्यभि शर्कराꣳ सर्वा वा इयं वयोभ्यो नक्तं दृशे दीप्यते तस्मादिमां वयाꣳसि नक्तं नाध्यासते[११] य एवं विद्वानग्निं चिनुते प्रत्येव ( ४ ) तिष्ठत्यभि दिशो जयत्या[१२]—ग्नेयो वै ब्राह्मणस्तस्माद्ब्राह्मणाय सर्वासु दिक्ष्वर्धुकꣳ स्वामेव तद्दिशमन्वेत्यँ[१३]—पां वा अग्निः कुलायं तस्मादापोऽग्निꣳ हारुकाः स्वामेव तद्योनिं प्र विशन्ति[१४] ॥
( यत, स, उपादधा,-देव, द्वात्रिꣳशच्च ) ॥ ४ ॥

अभिजिद्यागाङ्गचयनम् ॥ अग्निर्ऋषिः ।

संवत्सरमुख्यं भृत्वा द्वितीये संवत्सर आग्नेयमष्टाकपालं निर्वपेदैन्द्रमेकादशकपालं वैश्वदेवं द्वादशकपालं बार्हस्पत्यं चरुं वैष्णवं त्रिकपालं[१] तृतीये संवत्सरेऽभिजिता यजेत[२] यदष्टाकपालो भवत्यष्टाक्षरा गायत्र्याग्नेयं गायत्रं प्रातःसवनं प्रातःसवनमेव तेन दाधार गायत्रीं छन्दो[३] यदेकादशकपालो भवत्येकादशाक्षरा त्रिष्टुगैन्द्रं त्रैष्टुभं माध्यंदिनꣳ सवनं माध्यंदिनमेव सवनं तेन दाधार त्रिष्टुभं ( १ ) छन्दो यद् द्वादशकपालो भवति द्वादशाक्षरा जगती वैश्वदेवं जागतं तृतीयसवनं तृतीयसवनमेव तेन दाधार जगतीं छन्दो यद्बार्हस्पत्यश्चरुर्भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मैव तेन दाधार यद्वैष्णवस्त्रिकपालो भवति यज्ञो वै विष्णुर्यज्ञमेव तेन दाधार यत् तृतीये संवत्सरेऽभिजिता यजतेऽभिजित्यै यत् संवत्सरमुख्यं बिभर्तीममेव ( २ ) तेन लोकꣳ स्पृणोति यद् द्वितीये संवत्सरेऽग्निं चिनुतेऽन्तरिक्षमेव तेन स्पृणोति यत् तृतीये संवत्सरे यजतेऽमुमेव तेन लोकꣳ स्पृणोत्ये—तं वै परं आट्णारः कक्षीवाꣳ औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत ततो वै ते सहस्रꣳ सहस्रं पुत्रानविन्दन्त प्रथते प्रजया पशुभिस्तां मात्रामाप्नोति यां तेऽगच्छन् य एवं ( ३ ) विद्वानेतमग्निं चिनुते[७] ॥ ( त्रिष्टुभं,- मेवै,- वं, चत्वारि च ) ॥५॥

पूर्वोक्तविधिप्रशंसा ॥ अग्निर्ऋषिः ।

प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वाऽतिष्ठत् तं देवा बिभ्यतो नोपाऽऽयन् ते छन्दोभिरात्मानं छादयित्वोपाऽऽयन् तच्छन्दसां छन्दस्त्वं ब्रह्म वै छन्दाꣳसि ब्रह्मण एतद्रूपं यत् कृष्णाजिनं कार्ष्णी उपानहावुप मुञ्चते छन्दोभिरेवाऽऽत्मानं छादयित्वाऽग्निमुप चरत्यात्मनोऽहिꣳसायै[१] देवनिधिर्वा एष नि धीयते यदग्नि-(१)-रन्ये वा वै निधिमगुप्तं विन्दन्ति न वा प्रति प्र जानात्युखामा क्रामत्यात्मानमेवाधिपां कुरुते गुप्त्यै[२] अथो खल्वाहुर्नाऽऽक्रम्येति नैर्ऋत्युखा यदाक्रामेन्निर्ऋत्या आत्मानमपि दध्यात् तस्मान्ना-ऽऽक्रम्या पुरुषशीर्षमुप दधाति गुप्त्या अथो यथा ब्रूयादेतन्मे गोपायेति तादृगेव तत्[३] (२) प्रजापतिर्वा अथर्वाऽग्निरेव दध्यङ्ङाथर्वणस्तस्येष्टका अस्थान्येतꣳ ह वाव तदृषिरभ्यनूवाचेन्द्रो दधीचो अस्थभिरिति यदिष्टकाभिरग्निं चिनोति सात्मानमेवाग्निं चिनुते[४] सात्माऽमुष्मिँल्लोके भवति य एवं वेद[५] शरीरं वा एतदग्नेर्यच्चित्य आत्मा वैश्वानरो यच्चिते वैश्वानरं जुहोति शरीरमेव सꣳस्कृत्या-(३)-भ्यारोहति[६] शरीरं वा एतद्यजमानः सꣳ स्कुरुते यदग्निं चिनुते यच्चिते वैश्वानरं जुहोति शरीरमेव सꣳस्कृत्याऽऽत्मना-ऽभ्यारोहति तस्मात् तस्य नाव द्यन्ति जीवन्नेव देवानप्येति[७] वैश्वानर्यर्चा पुरीषमुप दधातीयं वा अग्नि-वैश्वानरस्तस्यैषा चितिर्यत् पुरीषमग्निमेव वैश्वानरं चिनुत एषा वा अग्नेः (४) प्रिया तनूर्यद्वैश्वानरः प्रिया-मेवास्य तनुवमव रुन्धे ॥ ( अग्नि,- स्तत्, सꣳस्कृत्या,- ग्ने,- दश च ) ॥ ६ ॥

दीक्षाकालविकल्पाः ॥ अग्निर्ऋषिः ।

अग्नेर्वै दीक्षया देवा विराजमाप्नुवन् तिस्रो रात्रीर्दीक्षितः स्यात् त्रिपदा विराड् विराजमाप्नोति षड्रात्रीर्दीक्षितः स्यात् षड् वा ऋतवः संवत्सरः संवत्सरो विराड् विराजमाप्नोति दश रात्रीर्दीक्षितः स्याद्दशाक्षरा विराड् विराजमाप्नोति द्वादश रात्रीर्दीक्षितः स्याद् द्वादश मासाः संवत्सरः संवत्सरो विराड् विराजमाप्नोति त्रयोदश रात्रीर्दीक्षितः स्यात् त्रयोदश (१) मासाः संवत्सरः संवत्सरो विराड् विराज-माप्नोति पञ्चदश रात्रीर्दीक्षितः स्यात् पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरो विराड् विराजमाप्नोति सप्तदश रात्रीर्दीक्षितः स्याद् द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरो विराड् विराजमाप्नोति चतुर्विꣳशतिꣳ रात्रीर्दीक्षितः स्याच्चतुर्विꣳशतिरर्धमासाः संवत्सरः संवत्सरो विराड् विराज-माप्नोति त्रिꣳशतꣳ रात्रीर्दीक्षितः स्यात् (२) त्रिꣳशदक्षरा विराड् विराजमाप्नोति मासं दीक्षितः स्याद्यो मासः स संवत्सरः संवत्सरो विराड् विराजमाप्नोति चतुरो मासो दीक्षितः स्याच्चतुरो वा एतं मासो वसवो-ऽबिभरुस्ते पृथिवीमाऽजयन् गायत्रीं छन्दोऽष्टौ रुद्रास्तेऽन्तरिक्षमाऽजयन् त्रिष्टुभं छन्दो द्वादशाऽऽदित्यास्ते दिवमाऽजयन् जगतीं छन्दस्ततो वै ते (३) व्यावृतमगच्छञ्छ्रैष्ठ्यं देवानां[२] तस्माद् द्वादश मासो भृत्वा-ऽग्निं चिन्वीत द्वादश मासाः संवत्सरः संवत्सरोऽग्निश्चित्यस्तस्याहोरात्राणीष्टका आप्तेष्टकमेनं चिनुतेऽथो व्यावृतमेव गच्छति श्रैष्ठ्यꣳ समानानाम्[३] ॥ ( त्रयोदश, स्यात्, ते, ऽष्टाविꣳशतिश्च ) ॥ ७ ॥

अन्वारोहणाद्यभिधानम् ॥ अग्निर्ऋषिः ।

सुवर्गाय वा एष लोकाय चीयते यदग्निस्तं यन्नान्वारोहेत् सुवर्गाल्लोकाद्यजमानो हीयेत पृथिवीमा-

ऽक्रमिषं प्राणो मा मा हासीदन्तरिक्षमाऽक्रमिषं प्रजा मा मा हासीद्दिवमाऽक्रमिषꣳ सुवरगन्मेत्याहैष वा अग्नेरन्वारोहस्तेनैवैनमन्वारोहति सुवर्गस्य लोकस्य समष्ट्यै[१] यत् पक्षसंमितां मिनुयात् ( १ ) कनीयाꣳसं यज्ञक्रतुमुपेयात् पापीयस्यस्याऽऽत्मनः प्रजा स्याद्वेदिसंमितां मिनोति ज्यायाꣳसमेव यज्ञक्रतुमुपैति नास्याऽऽत्मनः पापीयसी प्रजा भवति[२] साहस्रं चिन्वीत प्रथमं चिन्वानः सहस्रसंमितो वा अयं लोक इममेव लोकमभि जयति द्विषाहस्रं चिन्वीत द्वितीयं चिन्वानो द्विषाहस्रं वा अन्तरिक्षमन्तरिक्षमेवाभि जयति त्रिषाहस्रं चिन्वीत तृतीयं चिन्वान-(२)-स्त्रिषाहस्रो वा असौ लोको ऽमुमेव लोकमभि जयति[३] जानुदघ्नं चिन्वीत प्रथमं चिन्वानो गायत्रियैवेमं लोकमभ्यारोहति नाभिदघ्नं चिन्वीत द्वितीयं चिन्वानस्त्रिष्टुभैवान्तरिक्षमभ्यारोहति ग्रीवदघ्नं चिन्वीत तृतीयं चिन्वानो जगत्यैवामुं लोकमभ्यारोहति[४] नाग्निं चित्वा रामामुपेयादयोनौ रेतो धास्यामीति न द्वितीयं चित्वाऽन्यस्य स्त्रिय-(३)-मुपेयान्न तृतीयं चित्वा कां चनोपेयाद्रेतो वा एतन्नि धत्ते यदग्निं चिनुते यदुपेयाद्रेतसा व्यृध्येताथो खल्वाहुरप्रजस्यं तद्यन्नोपेयादिति यद्रेतः सिचावुपदधाति ते एव यजमानस्य रेतो बिभृतस्तस्मादुपेयाद्रेतसोऽस्कन्दाय[५] त्रीणि वाव रेताꣳसि पिता पुत्रः पौत्रो (४) यद् द्वे रेतः सिचावुपदध्याद्रेतोऽस्य वि च्छिन्द्यात् तिस्र उप दधाति रेतसः संतत्यै इयं वाव प्रथमा रेतः सिग्वाग्वा इयं तस्मात् पश्यन्तीमां पश्यन्ति वाचं वदन्तीमन्तरिक्षं द्वितीया प्राणो वा अन्तरिक्षं तस्मान्नान्तरिक्षं पश्यन्ति न प्राणमसौ तृतीया चक्षुर्वा असौ तस्मात् पश्यन्त्यमूं पश्यन्ति चक्षु—र्यजुषेमां चा-(५)-मूं चोप दधाति मनसा मध्यमामेषां लोकानां क्लृप्त्या अथो प्राणाना[९]—मिष्टो यज्ञो भृगुभिराशीर्दा वसुभि[१०]—स्तस्य त इष्टस्य वीतस्य द्रविणेह भक्षीये[११]—त्याह स्तुतशस्त्रे एवैतेन दुहे[१२] पिता मातरिश्वाऽच्छिद्रा पदा धा अच्छिद्रा उशिजः पदाऽनु तक्षुः सोमो विश्वविन्नेता नेषद्बृहस्पतिरुक्थामदानि शꣳसिषदित्याहैतद्वा ( ६ ) अग्नेरुक्थं तेनैवैनमनु शꣳसति[१३] ॥ ( मिनुया, –च्चिन्वानः, स्त्रियं पौत्रं,-इच, वै, सप्त च ) ॥ ८ ॥

आसन्दी-षडुद्याम-उखा–उलूखलादिप्रशंसा ॥ अग्निर्ऋषिः ।

सूयते वा एषोऽग्नीनां य उखायां भ्रियते यदधः सादयेद्गर्भाः प्रपादुकाः स्युरथो यथा सवात् प्रत्यवरोहति तादृगेव तदासन्दी सादयति गर्भाणां धृत्या अप्रपादायाथो सवमेवैनं करोति[१] गर्भो वा एष यदुख्यो योनिः शिक्यं यच्छिक्यादुखां निरूहेद्योनेर्गर्भं निर्हण्यात् षडुद्यामꣳ शिक्यं भवति षोढाविहितो वै ( १ ) पुरुष आत्मा च शिरश्च चत्वार्यङ्गान्यात्मन्नेवैनं बिभर्ति[२] प्रजापतिर्वा एष यदग्निस्तस्योखा चोलूखलं च स्तनौ तावस्य प्रजा उप जीवन्ति यदुखां चोलूखलं चोपदधाति ताभ्यामेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे[३] संवत्सरो वा एष यदग्निस्तस्य त्रेधाविहिता इष्टकाः प्राजापत्या वैष्णवी-(२)-वैश्वकर्मणीरहोरात्राण्येवास्य प्राजापत्या यदुख्यं बिभर्ति प्राजापत्या एव तदुप धत्ते यत् समिध आदधाति वैष्णवा वै वनस्पतयो वैष्णवीरेव तदुप धत्ते यदिष्टकाभिरग्निं चिनोतीयं वै विश्वकर्मा वैश्वकर्मणीरेव तदुप धत्ते तस्मादाहुस्त्रिवृदग्निरिति[४] तं वा एतं यजमान एव चिन्वीत यदस्यान्य ( ३ ) श्चिनुयाद्यत् तं दक्षिणाभिर्न राधयेदग्निमस्य वृञ्जीत योऽस्याग्निं चिनुयात् तं दक्षिणाभी राधयेदग्निमेव तत् स्पृणोति[५] ॥ ( वै, वैष्णवी,-रन्यो, विꣳशतिश्च ) ॥ ९ ॥

बहुधा चयनप्रशंसा ॥ अग्निर्ऋषिः ।

प्रजापतिरग्निमचिनुतर्तुभिः संवत्सरं वसन्तेनैवास्य पूर्वार्धमचिनुत ग्रीष्मेण दक्षिणं पक्षं वर्षाभिः पुच्छꣳ शरदोत्तरं पक्षꣳ हेमन्तेन मध्यं[1] ब्रह्मणा वा अस्य तत् पूर्वार्धमचिनुत क्षत्रेण दक्षिणं पक्षं पशुभिः पुच्छं विशोत्तरं पक्षमाशया मध्यं[2] य एवं विद्वानग्निं चिनुत ऋतुभिरेवैनं चिनुतेऽथो एतदेव सर्वमव (१) रुन्धे शृण्वन्त्येनमग्निं चिक्यानमत्त्यन्नꣳ रोचते[3] इयं वाव प्रथमा चितिरोषधयो वनस्पतयः पुरीषमन्तरिक्षं द्वितीया वयाꣳसि पुरीषमसौ तृतीया नक्षत्राणि पुरीषं यज्ञश्चतुर्थी दक्षिणा पुरीषं यजमानः पञ्चमी प्रजा पुरीषं[4] यत् त्रिचितीकं चिन्वीत यज्ञं दक्षिणामात्मानं प्रजामन्तरीयात् तस्मात् पञ्चचितीकश्चेतव्य एतदेव सर्वꣳ स्पृणोति[5] यत् तिस्रश्चितय- (२) -स्त्रिवृद्ध्यग्निर्यद् द्वे द्विपाद्यजमानः प्रतिष्ठित्यै[6] पञ्च चितयो भवन्ति पाङ्क्तः पुरुष आत्मानमेव स्पृणोति पञ्च चितयो भवन्ति पञ्चभिः पुरीषैरभ्यूहति दश सं पद्यन्ते दशाक्षरो वै पुरुषो यावानेव पुरुषस्तꣳ स्पृणोत्यथो दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठति[7] संवत्सरो वै षष्ठी चितिर्ऋतवः पुरीषꣳ (३) षट् चितयो भवन्ति षट् पुरीषाणि द्वादश सं पद्यन्ते द्वादश मासाः संवत्सरः संवत्सर एव प्रति तिष्ठति[8] ॥ ( अव, चितयः, पुरीषं, पञ्चदश च ) ॥ १० ॥

आश्वमेधिकाष्टादशिपशुषु प्रथमः पशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

रोहितो धूम्ररोहितः कर्कन्धुरोहितस्ते प्राजापत्याः[1] बभ्रुररुणबभ्रुः शुकबभ्रुस्ते रौद्राः[2] श्येतः श्येताक्षः श्येतग्रीवस्ते पितृदेवत्या[3]—स्तिस्रः कृष्णा वशा वारुण्य[4]—स्तिस्रः श्वेता वशाः सौर्याः[5] मैत्राबार्हस्पत्या धूम्रललामास्तूपराः[6] ॥ ( रोहितः षड्विꣳशतिः ) ॥ ११ ॥

द्वितीयोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

पृश्निस्तिरश्चीनपृश्निरूर्ध्वपृश्निस्ते मारुताः[1] फल्गूर्लोहितोर्णी बलक्षी ताः सारस्वत्यः[2] पृषती स्थूलपृषती क्षुद्रपृषती ता वैश्वदेव्य[3]—स्तिस्रः श्यामा वशाः पौष्णिय[4]—स्तिस्रो रोहिणीर्वशा मैत्रिय[5] ऐन्द्राबार्हस्पत्या अरुणललामास्तूपराः[6] ॥ ( पृश्निः षड्विꣳशतिः ) ॥ १२ ॥

तृतीयोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

शितिबाहुरन्यतः शितिबाहुः समन्तशितिबाहुस्त ऐन्द्रवायवाः[1] शितिरन्ध्रोऽन्यतः शितिरन्ध्रः समन्तशितिरन्ध्रस्ते मैत्रावरुणाः[2] शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विना[3]—स्तिस्रः शिल्पा वशा वैश्वदेव्य[4]—स्तिस्रः श्येनीः परमेष्ठिने[5] सोमापौष्णाः श्यामललामास्तूपराः ॥ ( शितिबाहुः पञ्चविꣳशतिः ) ॥ १३ ॥

चतुर्थोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

उन्नत ऋषभो वामनस्त ऐन्द्रावरुणाः[1] शितिककुच्छितिपृष्ठः शितिभसत् त ऐन्द्राबार्हस्पत्याः[2] शितिपाच्छित्योष्ठः शितिभ्रुस्त ऐन्द्रावैष्णवा[3]—स्तिस्रः सिध्मा वशा वैश्वकर्मण्य[4]—स्तिस्रो धात्रे पृषोदराः[5] ऐन्द्रापौष्णाः श्येतललामास्तूपराः ( उन्नतः पञ्चविꣳशतिः ) ॥ १४ ॥

पञ्चमोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

कर्णास्त्रयो यामाः सौम्यास्त्रयः श्वितिङ्गा[1] अग्नये यविष्ठाय त्रयो नकुला[2]—स्तिस्रो रोहिणीस्त्र्यव्यस्ता

वसूनां[४] तिस्रोऽरुणा दित्यौह्यस्ता रुद्राणां[५] सोमैन्द्रा बभ्रुलललामास्तूपराः ॥ ( कर्णास्त्रयो विंशतिः ) ॥ १५ ॥

षष्ठोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

शुण्ठास्त्रयो वैष्णवा अधीलोधकर्णास्त्रयो विष्णव उरुक्रमाय[२] लप्सुदिनस्त्रयो विष्णव उरुगायाय[३] पञ्चावीस्तिस्र आदित्यानां[४] त्रिवत्सास्तिस्रोऽङ्गिरसा—मैन्द्रावैष्णवा गौरलललामास्तूपराः ॥
( शुण्ठा विंशतिः ) ॥ १६ ॥

सप्तमोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

इन्द्राय राज्ञे त्रयः शितिपृष्ठा इन्द्रायाधिराजाय त्रयः शितिककुदं[२] इन्द्राय स्वराज्ञे त्रयः शितिभसदं[३]—स्तिस्रस्तुर्यौह्यः साध्यानां[४] तिस्रः पष्ठौह्यो विश्वेषां देवाना[५]—माग्नेन्द्राः कृष्णलललामास्तूपराः ॥
( इन्द्राय द्वाविंशतिः ) ॥ १७ ॥

अष्टमोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

अदित्यै त्रयो रोहितैता[१] इन्द्राण्यै त्रयः कृष्णैताः[२] कुह्वै त्रयोऽरुणैता[३]—स्तिस्रो धेनवो राकायै[४] त्रयोऽनड्वाहः सिनीवाल्या[५] आग्नावैष्णवा रोहितलललामास्तूपराः ॥ ( अदित्या अष्टादश ) ॥ १८ ॥

नवमोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

सौम्यास्त्रयः पिशङ्गाः[१] सोमाय राज्ञे त्रयः सारङ्गाः[२] पार्जन्या नभोरूपास्तिस्रोऽजा[३] मल्हा इन्द्राण्यै[४] तिस्रो मेष्य आदित्या[५] द्यावापृथिव्या मालङ्गास्तूपराः ॥ ( सौम्या एकान्नविंशतिः ) ॥ १९ ॥

दशमोऽष्टादशिपशुसङ्घः ॥ विश्वेदेवा ऋषयः ।

वारुणास्त्रयः कृष्णलललामा[१] वरुणाय राज्ञे त्रयो रोहितलललामा[२] वरुणाय रिशादसे त्रयोऽरुणलललामाः[३] शिल्पास्त्रयो वैश्वदेवा[४]—स्त्रयः पृश्नयः सर्वदेवत्या[५] ऐन्द्रासूराः श्येतलललामास्तूपराः ॥
( वारुणा विंशतिः ) ॥ २० ॥

द्वन्द्विनः पशवः ॥ विश्वेदेवा ऋषयः ।

सोमाय स्वराज्ञेऽनोवाहावनड्वाहा[१]—विन्द्राग्निभ्यामोजोदाभ्यामुष्टारा[२]—विन्द्राग्निभ्यां बलदाभ्या[२] सीरवाहावव्वी[३] द्वे धेनू भौमी[४] दिग्भ्यो वडबे द्वे[५] धेनू भौमी[६] वैराजी पुरुषी[७] द्वे धेनू भौमी[८] वायव आरोहणवाहावनड्वाहौ[९] वारुणी कृष्णे वशे[१०] अराड्यौ दिव्यावृषभौ परिमरौ[११] ॥
( सोमाय चतुस्त्रिंशत् ) ॥ २१ ॥

अतिरात्रेऽनुष्ठेयाः केचित् पशवः ॥ विश्वेदेवा ऋषयः ।

एकादश प्रातर्गव्याः पशव आ लभ्यन्ते छगलः कल्माषः किकिदीविर्विदीगयस्ते त्वाष्ट्राः[१] सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्त्या[२]—ग्नेय ऐन्द्राग्न आश्विनस्ते विशालयूप आ लभ्यन्ते[३] ॥
( एकादश पञ्चविंशतिः ) ॥ २२ ॥

ऋतुपशवः ॥ विश्वेदेवा ऋषयः ।

पिशङ्गास्त्रयो वासन्ताः[१] सारङ्गास्त्रयो ग्रैष्माः[२] पृषन्तस्त्रयो वार्षिकाः[३] पृश्नयस्त्रयः शारदाः पृश्निसक्था-

त्रयो हैमन्तिका अवलिप्तास्त्रयः शैशिराः संवत्सराय निवक्षसः ॥ ( पिशङ्गा विंशतिः ) ॥ २३ ॥

[ हिरण्यवर्णा २२२। अपां २९७। भूतेष्टका १९८। सजूः २३२। संवत्सरं १५४। प्रजापति-२१०-रग्नेः १७८। सुवर्गाय ३०७। सूयते १७०। प्रजापती १६५। रोहितः २६। पृश्निः २६। शितिबाहु- २५।-रुन्नतः २५ । कृर्णाः २३। शुण्ठाः २०। इन्द्राया- २२।-दित्यै १८। सौम्या १९। वारुणाः २०। सोमायै-३४।-कादश २५। पिशङ्गा-२०। -त्रयोविंशतिः ॥ २४३६ ॥]

[ इति पञ्चमकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥ ]

## उपानुवाक्यावशिष्टकर्मनिरूपणम् ।

[ अथ सप्तमः प्रपाठकः ॥ ७ ॥ ]

चित्यभिमर्षणादि ॥ अग्निर्ऋषिः ।

यो वा अयथादेवतमग्निं चिनुत आ देवताभ्यो वृश्च्यते पापीयान् भवति यो यथादेवतं न देवताभ्य आ वृश्च्यते वसीयान् भवत्याग्नेय्या गायत्रिया प्रथमां चितिमभि मृशेत् त्रिष्टुभा द्वितीयां जगत्या तृतीया-मनुष्टुभा चतुर्थीं पङ्क्त्या पञ्चमीं यथादेवतमेवाग्निं चिनुते न देवताभ्य आ वृश्च्यते वसीयान् भवती[1]-डायै वा एषा विभक्तिः पशव इडा पशुभिरेनं (१) चिनुते[2] यो वै प्रजापतये प्रतिप्रोच्याग्निं चिनोति नाऽऽर्तिमाच्छेत्यश्वावभितस्तिष्ठेतां कृष्ण उत्तरतः श्वेतो दक्षिणस्तावालभ्येष्टका उप दध्यादेतद्वै प्रजापते रूपं प्राजापत्योऽश्वः साक्षादेव प्रजापतये प्रतिप्रोच्याग्निं चिनोति नाऽऽर्तिमाच्छेत्ये[3]-तद्वा अह्नो रूपं यच्छ्वेतोऽश्वो रात्रियै कृष्ण एतदह्नो (२) रूपं यदिष्टका रात्रियै पुरीषमिष्टका उपधास्यञ्छ्वेतमश्वमभि-मृशेत् पुरीषमुपधास्यन् कृष्णमहोरात्राभ्यामेवैनं चिनुते[4] हिरण्यपात्रं मधोः पूर्णं ददाति मधव्योऽसा-नीति[5] सौर्या चित्रवत्याऽवेक्षते चित्रमेव भवति मध्यन्दिने[6] ऽश्वमव घ्रापयत्यसौ वा आदित्य इन्द्र एष प्रजापतिः प्राजापत्योऽश्वस्तमेव साक्षादृध्नोति[7] ॥

( एन,-मेतदह्नो, ऽष्टाचत्वारिंशच्च ) ॥ १ ॥

ऋषभेष्टकाद्युपधानम् ॥ १, ५, ७-११ त्रिष्टुप्; ३ अनुष्टुप् । अग्निर्ऋषिः ।

त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् ।
अस्थूरि णो गार्हपत्यानि सन्तु तिग्मेन नो ब्रह्मणा सꣳ शिशाधि[1] ॥

पशवो वा एते यदिष्टकाश्चित्यांचित्यामृषभमुप दधाति मिथुनमेवास्य तद्यज्ञे करोति प्रजननाय तस्माद्यूथेयूथ ऋषभः[2] ॥

संवत्सरस्य प्रतिमां यां त्वा रात्र्युपासते । प्रजाꣳ सुवीरां कृत्वा विश्वमायुर्व्यश्नवत्[3] ॥

प्राजापत्या-(१)-मेतामुप दधातीयं वावैषैकाष्टका यदेवैकाष्टकायामन्नं क्रियते तदेवैतयाऽव रुन्ध एषा वै प्रजापतेः कामदुघा तयैव यजमानोऽमुष्मिंल्लोकेऽग्निं दुहे[4]

येन देवा ज्योतिषोर्ध्वा उदायन् येनाऽऽदित्या वसवो येन रुद्राः ।
येनाङ्गिरसो महिमानमानशुस्तेनैतु यजमानः स्वस्ति[5] ॥

सुवर्गाय वा एष लोकाय (२) चीयते यदग्निर्येन देवा ज्योतिषोर्ध्वा उदायन्नित्युख्यᳪ समिन्ध इष्टका एवैता उप धत्ते वानस्पत्याः सुवर्गस्य लोकस्य समष्ट्यै

शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे ।
शतं यो नः शरदो अजीतानिन्द्रो नेषदति दुरितानि विश्वा ॥
ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति ।
तेषां यो अज्यानिमजीतिमावहात् तस्मै नो देवाः (३) परि दत्तेह सर्वे ॥
ग्रीष्मो हेमन्त उत नो वसन्तः शरद्वर्षाः सुवितं नो अस्तु ।
तेषामृतूनाᳪ शतशारदानां निवात एषामभये स्याम ॥
इदुवत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः ।
तेषां वयᳪ सुमतौ यज्ञियानां ज्योगजीता अहताः स्याम ॥
भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवसेन समशीमहि त्वा ।
स नो मयोभूः पितो (४) आ विशस्व शं तोकाय तनुवे स्योनः ॥

अज्यानीरेता उप दधात्येता वै देवता अपराजितास्ता एव प्र विशति नैव जीयते ब्रह्मवादिनो वदन्ति यदर्धमासा मासा ऋतवः संवत्सर ओषधीः पचन्त्यथ कस्मादन्याभ्यो देवताभ्य आग्रयणं निरुप्यत इत्येता हि तद्देवता उदजयन् यदृतुभ्यो निर्वपेद् देवताभ्यः समदं दध्यादाग्रयणं (५) निरुप्यैता आहुतीर्जुहोत्यर्धमासानेव मासानृतून्त्संवत्सरं प्रीणाति न देवताभ्यः समदं दधाति भद्रान्नः श्रेयः समनैष्ट देवा इत्याह हुताद्याय यजमानस्यापराभावाय ॥

(प्राजापत्यां, लोकाय, देवाः, पितो, दध्यादाग्रयणं, पञ्चविᳪशतिश्च) ॥ २ ॥

वज्रिणीष्टकोपधान-वसोर्धाराविशेषविधानम् ॥ १-४ बृहती; ७ गायत्री । अग्निर्ऋषिः ।

इन्द्रस्य वज्रोऽसि वार्त्रघ्नस्तनूपा नः प्रतिस्पशः ।
यो नः पुरस्तात्—*- -*दक्षिणतः*- -*पश्चात्—*- -*दुत्तरतोऽघायुरभिदासत्येतᳪ सोऽस्मानमृच्छतु ॥

देवासुराः संयत्ता आसन् तेऽसुरा दिग्भ्य आऽबाधन्त तान् देवा इष्वा च वज्रेण चापानुदन्त यद्वज्रिणीरुपदधातीष्वा चैव तद्वज्रेण च यजमानो भ्रातृव्यानप नुदते दिक्षूप (१) दधाति देवपुरा एवैतास्तनूपानीः पर्यूहते

ऽग्नाविष्णू सजोषसेमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरा गतम् ॥

ब्रह्मवादिनो वदन्ति यन्न देवतायै जुह्वत्यथ किंदेवत्या वसोर्धारेत्यग्निर्वसुस्तस्यैषा धारा विष्णुर्वसुस्तस्यैषा धाराऽऽग्नावैष्णव्यर्चा वसोर्धारां जुहोति भागधेयेनैवैनौ समर्धयत्यथो एता-(२)-मेवाहुतिमायतनवतीं करोति यत्काम एनां जुहोति तदेवाव रुन्धे रुद्रो वा एष यदग्निस्तस्यैते तनुवौ घोरा-

(३।१-३) यो नः...मृच्छतु ।

ऽन्या शिवाऽन्या यच्छतरुद्रीयं जुहोति यैवास्य घोरा तनूस्तां तेन शमयति यद्वसोर्धारां जुहोति यैवास्य शिवा तनूस्तां तेन प्रीणाति[९] यो वै वसोर्धारायै ( ३ ) प्रतिष्ठां वेद प्रत्येव तिष्ठति[१०] यदाज्यमुच्छिष्येत तस्मिन् ब्रह्मौदनं पचेत् तं ब्राह्मणाश्चत्वारः प्राश्नीयुरेष वा अग्निर्वैश्वानरो यद्ब्राह्मण एषा खलु वा अग्नेः प्रिया तनूर्यद्वैश्वानरः प्रियायामेवैनां तनुवां प्रति ष्ठापयति[११] चतस्रो धेनूर्दद्यात् ताभिरेव यजमानोऽमुष्मिँल्लोकेऽग्निं दुहे[१२] ॥ ( उपै,-तां, धारायै, षट्चत्वारिꣳशच्च ) ॥ ३ ॥

होमविशेषा राष्ट्रभृदाख्येष्टकोपधानं च ॥ ५-८ त्रिष्टुप् । अग्निर्ऋषिः ।

चित्तिं जुहोमि मनसा घृतेनेत्याहादाभ्या वै नामैषाऽऽहुतिर्वैश्वकर्मणी नैनं चिक्यानं भ्रातृव्यो दभ्नोत्यथो देवता एवाव रुन्धे[१] ऽग्ने तमद्येति पङ्क्त्या जुहोति पङ्क्त्याऽऽहुत्या यज्ञमुखमा रभते[२] सप्त ते अग्ने समिधः सप्त जिह्वा इत्याह होत्रा एवाव रुन्धेऽग्निर्देवेभ्योऽपाक्रामद्भागधेय-( १ )-मिच्छमानस्तस्मा एतद्भागधेयं प्रायच्छन्नेतद्वा अग्नेरग्निहोत्रमेतर्हि खलु वा एष जातो यर्हि सर्वश्चितो जातायैवास्मा अन्नमपि दधाति स एनं प्रीतः प्रीणाति वसीयान् भवति[३] ब्रह्मवादिनो वदन्ति यदेष गार्हपत्यश्चीयतेऽथ क्वास्याऽऽहवनीय इत्यसावादित्य इति ब्रूयादेतस्मिन् हि सर्वाभ्यो देवताभ्यो जुह्वति ( २ ) य एवं विद्वानग्निं चिनुते साक्षादेव देवता ऋध्नोत्य[४]—

—ग्ने यशस्विन् यशसेममर्पयेन्द्रावतीमपचितीमिहाऽऽ वह ।
अयं मूर्धा परमेष्ठी सुवर्चाः समानानामुत्तमश्लोको अस्तु[५] ॥
भद्रं पश्यन्त उप सेदुरग्रे तपो दीक्षामृषयः सुवर्विदः ।
ततः क्षत्रं बलमोजश्च जातं तदस्मै देवा अभि सं नमन्तु[६] ॥
धाता विधाता परमो-( ३ )-त संदृक् प्रजापतिः परमेष्ठी विराजा ।
स्तोमाश्छन्दाꣳसि निविदो म आहुरेतस्मै राष्ट्रमभि सं नमाम[७] ॥
अभ्यावर्तध्वमुप मेत साकमयꣳ शास्ताऽधिपतिर्वो अस्तु ।
अस्य विज्ञानमनु सꣳ रभध्वमिमं पश्चादनु जीवाथ सर्वे[८] ॥

राष्ट्रभृत एता उप दधात्येषा वा अग्नेश्चिती राष्ट्रभृत् तयैवास्मिन् राष्ट्रं दधाति ( ४ ) राष्ट्रमेव भवति नास्माद्राष्ट्रं भ्रꣳशते[९] ॥ ( भागधेयं, जुह्वति, परमा, राष्ट्रं दधाति, सप्त च ) ॥ ४ ॥

पुनः परीध्मतादि विधानम् ॥ अग्निर्ऋषिः ।

यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति यन्निर्मन्थ्यं कुर्याद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेत् स एव पुनः परीध्यः स्वादेवैनं योनेर्जनयति नास्मै भ्रातृव्यं जनयति[१] तमो वा एतं गृह्णाति यस्याग्निरुख्य उद्वायति मृत्युस्तमः कृष्णं वासः कृष्णा धेनुर्दक्षिणा तमसै-( १ )-व तमो मृत्युमप हते[२] हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिषैव तमोऽप हतेऽथो तेजो वै हिरण्यं तेज एवाऽऽत्मन् धत्ते[३] सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा

*

सुवर्न सूर्यः स्वाहा ऽर्को वा एष यदग्निरसावादित्यो ( २ ) ऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्वमेधयोरेव ज्योतीꣳषि सं दधात्येष ह त्वा अर्काश्वमेधीयस्यैतदग्नौ क्रियते आपो वा इदमग्रे सलिलमासीत् स एतां प्रजापतिः प्रथमां चितिमपश्यत् तामुपाधत्त तदियमभवत् तं विश्वकर्माऽब्रवीदुप त्वाऽऽऽयानीति नेह लोकोऽस्तीत्य-( ३ )-ब्रवीत् स एतां द्वितीयां चितिमपश्यत् तामुपाधत्त तदन्तरिक्षमभवत् स यज्ञः प्रजापतिमब्रवीदुप त्वाऽऽ ऽयानीति नेह लोकोऽस्तीत्यब्रवीत् स विश्वकर्माणमब्रवीदुप त्वाऽऽऽयानीति केन मोपैष्यसीति दिश्याभिरित्यब्रवीत् तं दिश्याभिरुपैत् ता उपाधत्त ता दिशो ( ४ ) ऽभवं—न्त्स परमेष्ठी प्रजापतिमब्रवीदुप त्वाऽऽ ऽयानीति नेह लोकोऽस्तीत्यब्रवीत् स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामा ऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स एतां तृतीयां चितिमपश्यत् तामुपाधत्त तदसावभवत् स आदित्यः प्रजापतिमब्रवीदुप त्वा ( ५ ) आऽयानीति नेह लोकोऽस्तीत्यब्रवीत् स विश्वकर्माणं च यज्ञं चाब्रवीदुप वामाऽयानीति नेह लोकोऽस्तीत्यब्रूताꣳ स परमेष्ठिनमब्रवीदुप त्वाऽऽ ऽयानीति केन मोपैष्यसीति लोकंपृणयेत्यब्रवीत् तं लोकंपृणयोपैत् तस्मादयातयाम्नी लोकंपृणाऽयातयामा ह्यसा-( ६ )-वादित्य—स्तानृषयोऽब्रुवन्नुप व आऽयामेति केन न उपैष्यथेति भूम्नेत्यब्रुवन् तान् द्वाभ्यां चितिभ्यामुपायन्त्स पञ्चचितीकः समपद्यत य एवं विद्वानग्निं चिनुते भूयानेव भवत्यभीमाँल्लोकाञ्जयति विदुरेनं देवा अथो एतासामेव देवतानाꣳ सायुज्यं गच्छति ॥ ( तमसा, ऽऽदित्यो, ऽस्तीति, दिशः,-स्त्वा, ऽसौ, पञ्चचत्वारिꣳशच्च ) ॥५॥

व्रतेष्टकाप्रशंसा ॥ ८ त्रिपादनुष्टुप्; ९-१० अनुष्टुप् । अग्निर्ऋषिः ।

वयो वा अग्निर्यदग्निचित् पक्षिणोऽश्नीयात् तमेवाग्निमद्यादार्तिमार्च्छेत् संवत्सरं व्रतं चरेत् संवत्सरꣳ हि व्रतं नाति पशुर्वा एष यदग्निर्हिनस्ति खलु वै तं पशुर्य एनं पुरस्तात् प्रत्यञ्चमुपचरति तस्मात् पश्चात् प्राङुपचर्य आत्मनोऽहिꣳसायै तेजोऽसि तेजो मे यच्छ पृथिवीं यच्छ (१) पृथिव्यै मा पाहि ज्योतिरसि ज्योतिर्मे यच्छान्तरिक्षं यच्छान्तरिक्षान्मा पाहि सुवरसि सुवर्मे यच्छ दिवं यच्छ दिवो मा पाही—त्याहैताभिर्वा इमे लोका विधृता यदेता उपदधात्येषां लोकानां विधृत्यै स्वयमातृण्णा उपधाय हिरण्येष्टका उप दधातीमे वै लोकाः स्वयमातृण्णा ज्योतिर्हिरण्यं यत् स्वयमातृण्णा उपधाय (२) हिरण्येष्टका उपदधातीमानेवैताभिर्लोकाञ्ज्योतिष्मतः कुरुतेऽथो एताभिरेवास्मा इमे लोकाः प्र भान्ति

यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः ।
ताभिः सर्वाभी रुचे जनाय नस्कृधि ॥
या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः ।
इन्द्राग्नी ताभिः सर्वाभी रुचं नो धत्त बृहस्पते ॥
रुचं नो धेहि ( ३ ) ब्राह्मणेषु रुचꣳ राजसु नस्कृधि ।
रुचं विश्येषु शूद्रेषु मयि धेहि रुचा रुचम् ॥

द्वेधा वा अग्निं चिक्यानस्य यश इन्द्रियं गच्छत्यग्निं वा चितमीजानं वा यदेता आहुतीर्जुहोत्यात्मन्नेव यश इन्द्रियं धत्ते[११] ईश्वरो वा एष आर्तिमार्तोर्योऽग्निं चिन्वन्नधिक्रामति तत्त्वा यामि ब्रह्मणा वन्दमान इति वारुण्यर्चा (४) जुहुयाच्छान्तिरेवैषाऽग्नेर्गुप्तिरात्मनो[१२] हविष्कृतो वा एष योऽग्निं चिनुते यथा वै हविः स्कन्दत्येवं वा एष स्कन्दति योऽग्निं चित्वा स्त्रियमुपैति मैत्रावरुण्याऽऽमिक्षया यजेत मैत्रा-वरुणतामेवोपैत्यात्मनोऽस्कन्दाय[१३] यो वा अग्निमृतुस्थां वेदर्तुर्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति संवत्सरो वा अग्नि-(५)-र्ऋतुस्थास्तस्य वसन्तः शिरो ग्रीष्मो दक्षिणः पक्षो वर्षाः पुच्छꣳ शरदुत्तरः पक्षो हेमन्तो मध्यं पूर्वपक्षाश्चितयोऽपरपक्षाः पुरीषमहोरात्राणीष्टका एष वा अग्निर्ऋतुस्था य एवं वेदर्तु-र्ऋतुरस्मै कल्पमान एति प्रत्येव तिष्ठति[१४] प्रजापतिर्वा एतं ज्यैष्ठ्यकामो न्यधत्त ततो वै स ज्यैष्ठ्यम-गच्छद्य एवं विद्वानग्निं चिनुते (६) ज्यैष्ठ्यमेव गच्छति[१५] ॥ ( पृथिवीं यच्छ, यत स्वयमातृण्णा उपधाय, धेहि,- चा, ऽग्नि,- श्चिनुते, त्रीणि च ) ॥ ६ ॥

आकूतिमन्त्राः ॥ १-४ त्रिष्टुप्; ५-१० अनुष्टुप् । अग्निर्ऋषिः ।

यदाकूतात् समसुस्रोद्धृदो वा मनसो वा संभृतं चक्षुषो वा ।
तमनु प्रेहि सुकृतस्य लोकं यत्रर्षयः प्रथमजा ये पुराणाः ॥
एतꣳ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः ।
अन्वागन्ता यज्ञपतिर्वो अत्र तꣳ स्म जानीत परमे व्योमन् ॥
जानीतादेनं परमे व्योमन् देवाः सधस्था विद रूपमस्य ।
यदागच्छात् (१) पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मै[३] ॥
सं प्र च्यवध्वमनु सं प्र यातान्ग्ने पथो देवयानान् कृणुध्वम् ।
अस्मिन्त्सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥
प्रस्तरेण परिधिना स्रुचा वेद्या च बर्हिषा । ऋचेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[५] ॥
यदिष्टं यत् परादानं यद्दत्तं या च दक्षिणा ।
त-(२)-दग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् ॥
येना सहस्रं वहसि येनाग्ने सर्ववेदसम् । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[७] ॥
येनाग्ने दक्षिणा युक्ता यज्ञं वहन्त्यृत्विजः । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[८] ॥
येनाग्ने सुकृतः पथा मधोर्धारा व्यानशुः । तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे[९] (३) ॥
यत्र धारा अनपेता मधोर्घृतस्य च याः । तदग्निर्वैश्वकर्मणः सुवर्देवेषु नो दधत् ॥
( आगच्छात्, त,-द्व्यानशुस्तेनेमं यज्ञं नो वह सुवर्देवेषु गन्तवे चतुर्दश च ) ॥ ७ ॥

स्वयंचितिः, कूर्मोपधानं च ॥ १,३. त्रिष्टुप् । अग्निर्ऋषिः ।

यास्ते॑ अग्ने स॒मिधो॒ यानि॒ धाम॒ या जि॒ह्वा जा॑तवेदो॒ यो अ॒र्चिः ।
ये ते॑ अग्ने मे॒डयो॒ य इन्द॑वस्तेभि॑रा॒त्मानं॑ चिनुहि प्रजा॒नन् ॥

उत्स॒न्नय॑ज्ञो वा ए॒ष यद॒ग्निः किं वाऽहै॒तस्य॑ क्रि॒यते॒ किं वा॒ न यद्वा अ॑ध्वर्युर॒ग्नेश्चि॒न्वन्न॑न्तरेत्या॒त्मनो॒ वै तद॒न्तरे॑ति॒ यास्ते॑ अग्ने स॒मिधो॒ यानि॒ ( १ ) धामेत्या॑हैषा वा अ॒ग्नेः स्व॑यंचितिर॒ग्निरे॒व तद॒ग्निं चि॑नोति॒ नाध्व॒र्युरा॒त्मनो॒ऽन्तरे॑ति[२]

चत॑स्र॒ आशाः॒ प्र च॑रन्त्व॒ग्नय॑ इ॒मं नो॑ य॒ज्ञं न॑यतु प्रजा॒नन् ।
घृ॒तं पिन्व॑न्न॒जर॑ꣳ सु॒वीरं॒ ब्रह्म॑ स॒मिद्भ॑व॒त्याहु॑तीनाम् ॥

सु॒व॒र्गाय॒ वा ए॒ष लो॒कायोप॑ धीयते॒ यत् कू॒र्मश्चत॑स्र॒ आशाः॒ प्र च॑रन्त्व॒ग्नय॒ इत्या॑ह॒ ( २ ) दिश॑ ए॒वैतेन॒ प्र जा॑नाति॒[४] —मं नो॑ य॒ज्ञं न॑यतु प्रजा॒नन्नित्या॑ह सु॒व॒र्गस्य॑ लो॒कस्या॒भिनी॑त्यै[५] ब्रह्म॑ स॒मिद्भ॑व॒त्याहु॑तीना॒मित्या॑ह॒ ब्रह्म॑णा॒ वै दे॒वाः सु॑व॒र्गं लो॒कमा॑यन्[६] यद्ब्रह्म॑ण्वत्यो॑पद॒धाति॒ ब्रह्म॑णै॒व तद्यज॑मानः सुव॒र्गं लो॒कमे॑ति[७] प्र॒जाप॑ति॒र्वा ए॒ष यद॒ग्निस्तस्य॑ प्र॒जाः प॒शव॒श्छन्दा॑ꣳसि रू॒पꣳ सर्वा॒न् वर्णा॒निष्ट॑कानां ( ३ ) कु॒र्याद्रू॒पेणै॒व प्र॒जां प॒शून् छन्दा॒ꣳस्यव॑ रुन्धे॒ऽथो॑ प्र॒जाभ्य॑ ए॒वैनं॑ प॒शुभ्य॒श्छन्दो॑भ्योऽव॒रुद्ध्य॑ चिनुते[१] ॥

( ए॒ति यास्ते॑ अग्ने समिधो यान्या,-ग्नय इत्याहे-ष्टकाना॒ꣳ, षोडश च ) ॥ ८ ॥

अग्निग्रहः, सर्वमुखं च ॥ १-२त्रिष्टुप् । अग्निर्ऋषिः ।

मयि॑ गृह्णा॒म्यग्रे॑ अ॒ग्निꣳ रा॒यस्पोषा॑य सुप्रजा॒स्त्वाय॑ सु॒वीर्या॑य ।
मयि॑ प्र॒जां मयि॒ वर्चो॑ दधा॒म्यरि॑ष्टाः स्याम त॒नुवा॑ सु॒वीराः॑[१] ॥
यो नो॑ अ॒ग्निः पि॑तरो हृ॒त्स्व॑न्तरम॑र्त्यो॒ मर्त्या॑ꣳ आ॒विवेश॑ ।
तमा॒त्मन् परि॑ गृह्णीमहे व॒यं मा सो अ॒स्माꣳ अ॑व॒हाय॒ परा॑ गात् ॥

यद॑ध्व॒र्युरा॒त्मन्न॒ग्निमगृ॑हीत्वा॒ऽग्निं चि॑नु॒याद्यो॑ऽस्य॒ स्वो॑ऽग्निस्तमपि॒ ( १ ) यज॑मानाय चिनु॒याद॒ग्निं खलु॒ वै प॒शवो॒ऽनूप॑ तिष्ठन्तेऽप॒क्रामु॑का अस्मात् प॒शवः॑ स्यु॒र्मयि॑ गृह्णा॒म्यग्रे॑ अ॒ग्निमित्या॑हा॒ऽऽत्मन्ने॒व स्वम॒ग्निं दा॑धार॒ नास्मा॑त् प॒शवो॒ऽप॑ क्रामन्ति[३] ब्रह्मवा॒दिनो॑ वदन्ति॒ यन्मृ॒चाऽऽप॑श्चा॒ग्नेर॒नाद्यम॒थ कस्मा॒न्मृ॒दा चा॒द्भिश्चा॒ग्निश्ची॑यत॒ इति॒ यद॒द्भिः सं॒यौत्या-( २ )-पो॒ वै सर्वा॑ दे॒वता॑ दे॒वता॑भिरे॒वैनꣳ सꣳ सृ॑जति॒ यन्मृ॒दा चि॒नोती॒यं वा अ॒ग्निर्वै॑श्वान॒रो॒ऽग्निनै॒व तद॒ग्निं चि॑नोति[४] ब्रह्मवा॒दिनो॑ वदन्ति॒ यन्मृ॒दा चा॒द्भिश्चा॒ग्निश्ची॑यते॒ऽथ कस्मा॑द॒ग्निरु॑च्यत॒ इति॒ यच्छन्दो॑भिश्चि॒नोत्य॒ग्नयो॒ वै छन्दा॑ꣳसि॒ तस्मा॑द॒ग्निरु॑च्यते॒ऽथो॑ इ॒यं वा अ॒ग्निर्वै॑श्वान॒रो य-( ३ )-न्मृ॒दा चि॒नोति॒ तस्मा॑द॒ग्निरु॑च्यते[५] हिर॑ण्येष्टका॒ उप॑ दधाति॒ ज्योति॒र्वै हिर॑ण्यं॒ ज्योति॑रे॒वास्मि॒न् द॒धात्यथो॒ तेजो॒ वै हिर॑ण्यं॒ तेज॑ ए॒वाऽऽत्मन् ध॑त्ते[६] यो वा अ॒ग्निꣳ स॒र्वतो॑मुखं चिनु॒ते सर्वा॑सु प्र॒जास्वन्न॑मत्ति॒ सर्वा॒ दिशो॒ऽभि ज॑यति गाय॒त्रीं पु॒रस्ता॒दुप॑ दधाति त्रि॒ष्टुभं॑ दक्षिण॒तो जग॑तीं प॒श्चाद॑नु॒ष्टुभ॑मुत्तर॒तः प॒ङ्क्तिं मध्य॑ ए॒ष वा ( ४ ) अ॒ग्निः स॒र्वतो॑मुख॒स्तं य ए॒वं वि॒द्वाꣳश्चि॑नु॒ते सर्वा॑सु प्र॒जास्व-

न्नमत्ति सर्वा दिशोऽभि जयत्यथो दिश्येव दिशं प्र वयति तस्माद्दिशि दिक् प्रोता ॥
( अपि, संयौति, वैश्वानरो य,-द्वेष वै, पञ्चविंशतिश्च ) ॥ ९ ॥

पशुशीर्षोपधानं, तत्र केचिद्विशेषाश्च ॥ अग्निर्ऋषिः ।

प्रजापतिरग्निमसृजत सोऽस्मात् सृष्टः प्राङ् प्राद्रवत् तस्मा अश्वं प्रत्यास्यत् स दक्षिणाऽवर्तत तस्मै वृष्णिं प्रत्यास्यत् स प्रत्यङ्ङाऽवर्तत तस्मा ऋषभं प्रत्यास्यत् स उदङ्ङाऽवर्तत तस्मै बस्तं प्रत्यास्यत् स ऊर्ध्वोऽद्रवत् तस्मै पुरुषं प्रत्यास्यत् पशुशीर्षाण्युपदधाति सर्वत एवैन-( १ )-मवरुद्ध्य चिनुत एता वै प्राणभृतश्चक्षुष्मतीरिष्टका यत् पशुशीर्षाणि यत् पशुशीर्षाण्युपदधाति ताभिरेव यजमानोऽमुष्मिंल्लोके प्राणित्यथो ताभिरेवास्मा इमे लोकाः प्र भान्ति मृदाऽभिलिप्योप दधाति मेध्यत्वाय पशुर्वा एष यदग्नि-रन्नं पशव एष खलु वा अग्निर्यत् पशुशीर्षाणि यं कामयेत कनीयोऽस्यान्नꣳ ( २ ) स्यादिति संतरां तस्य पशुशीर्षाण्युप दध्यात् कनीय एवास्यान्नं भवति यं कामयेत समावदस्यान्नꣳ स्यादिति मध्यतस्तस्योप दध्यात् समावदेवास्यान्नं भवति यं कामयेत भूयोऽस्यान्नꣳ स्यादित्यन्तेषु तस्य व्युदूह्योप दध्यादन्तत एवास्मा अन्नमव रुन्धे भूयोऽस्यान्नं भवति ( ३ ) ॥ ( एन,-मस्यान्नं, भूयोऽस्यान्नं भवति ) ॥ १० ॥

[ ११-२४ ] अश्वमेधाङ्गशरीरहोममन्त्राः ॥ ११-२६ । विश्वेदेवा ऋषयः ।

स्तेगान् दꣳष्ट्राभ्यां मण्डूकान् जम्भ्येभिरादकां खादेनोर्जꣳ सꣳसूदेनारण्यं जाम्बीलेन मृदं बर्स्वेभिः शर्कराभिरवकामवकाभिः शर्करामुत्सादेन जिह्वामवक्रन्देन तालुꣳ सरस्वतीं जिह्वाग्रेण ( स्तेगान् द्वाविꣳशतिः ) ॥ ११ ॥

वाजꣳ हनूभ्यामप आस्येनाऽऽदित्याञ्छ्मश्रुभिरुपयाममधरेणोष्ठेन सदुत्तरेणान्तरेणानूकाशं प्रकाशेन बाह्यꣳ स्तनयित्नुं निर्बाधेन सूर्याग्नी चक्षुर्भ्यां विद्युतौ कनीनकाभ्यामशनिं मस्तिष्केण बलं मज्जभिः ॥ ( वाजं पञ्चविꣳशतिः ) ॥ १२ ॥

कूर्माञ्छफैरच्छलाभिः कपिञ्जलान्त्साम कुष्ठिकाभिर्जवं जङ्घाभिरगदं जानुभ्यां वीर्यं कुहाभ्यां भयं प्रचालाभ्यां गुहोपपक्षाभ्यामश्विनावꣳसाभ्यामदितिꣳ शीर्ष्णा निर्ऋतिं निर्जाल्मकेन शीर्ष्णा ॥ ( कूर्मान् त्रयोविꣳशतिः ) ॥ १३ ॥

योक्त्रं गृध्राभिर्युगमानतेन चित्तं मन्याभिः संक्रोशान् प्राणैः प्रकाशेन त्वचं पराकाशेनान्तरां मशकान् केशैरिन्द्रꣳ स्वपसा वहेन बृहस्पतिꣳ शकुनिसादेन रथमुष्णिहाभिः ॥ ( योक्त्रमेकविꣳशतिः ) ॥ १४ ॥

मित्रावरुणौ श्रोणीभ्यामिन्द्राग्नी शिखण्डाभ्यामिन्द्राबृहस्पती ऊरुभ्यामिन्द्राविष्णू अष्ठीवद्भ्याꣳ सवितारं पुच्छेन गन्धर्वाञ्छेपेनाप्सरसो मुष्काभ्यां पवमानं पायुना पवित्रं पोत्राभ्यामाक्रमणꣳ स्थूराभ्यां प्रतिक्रमणं कुष्ठाभ्याम् ॥ ( मित्रावरुणौ द्वाविꣳशतिः ) ॥ १५ ॥

इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशां जत्रवो जीमूतान् हृदयौपशाभ्यामन्तरिक्षं पुरितता नभ उदर्येणेन्द्राणीं प्लीह्ना वल्मीकान् क्लोम्ना गिरीन् प्लाशिभिः समुद्रमुदरेण वैश्वानरं भस्मना ॥ ( इन्द्रस्य द्वाविंशतिः ) ॥ १६ ॥

पूष्णो वनिष्ठुरन्धाहे स्थूरगुदा सर्पान् गुदाभिर्ऋतून् पृष्टीभिर्दिवं पृष्ठेन वसूनां प्रथमा कीकसा रुद्राणां द्वितीयाऽऽदित्यानां तृतीयाऽङ्गिरसां चतुर्थी साध्यानां पञ्चमी विश्वेषां देवानां षष्ठी ॥ ( पूष्णश्चतुर्विंशतिः ) ॥ १७ ॥

ओजो ग्रीवाभिर्निर्ऋतिमस्थभिरिन्द्रं स्वपसा वहेन रुद्रस्य विचलः स्कन्धोऽहोरात्रयोर्द्वितीयोऽर्धमासानां तृतीयो मासां चतुर्थ ऋतूनां पञ्चमः संवत्सरस्य षष्ठः ॥ ( ओजो विंशतिः ) ॥ १८ ॥

आनन्दं नन्दथुना कामं प्रत्यासाभ्यां भयं शितीमभ्यां प्रशिषं प्रशासाभ्यां सूर्याचन्द्रमसौ वृक्याभ्यां श्यामशबलौ मतस्नाभ्यां व्युष्टिं रूपेण निर्मुक्तिमरूपेण ॥ ( आनन्दं षोडश ) ॥ १९ ॥

अहर्मांसेन रात्रिं पीवसाऽपो यूषेण घृतं रसेन श्यां वसया दूषीकाभिर्ह्रादुनिमश्रुभिः पृष्वां दिवं रूपेण नक्षत्राणि प्रतिरूपेण पृथिवीं चर्मणा छवीं छव्योपाकृताय स्वाहाऽऽलब्धाय स्वाहा हुताय स्वाहा ॥ ( अहरष्टाविंशतिः ) ॥ २० ॥

अग्नेः पक्षतिः सरस्वत्यै निपक्षतिः सोमस्य तृतीयाऽपां चतुर्थ्योषधीनां पञ्चमी संवत्सरस्य षष्ठी मरुतां सप्तमी बृहस्पतेरष्टमी मित्रस्य नवमी वरुणस्य दशमीन्द्रस्यैकादशी विश्वेषां देवानां द्वादशी द्यावापृथिव्योः पार्श्वं यमस्य पाटूरः ॥ ( अग्नेरेकान्नत्रिंशत् ) ॥ २१ ॥

वायोः पक्षतिः सरस्वतो निपक्षतिश्चन्द्रमसस्तृतीया नक्षत्राणां चतुर्थी सवितुः पञ्चमी रुद्रस्य षष्ठी सर्पाणां सप्तम्यर्यम्णोऽष्टमी त्वष्टुर्नवमी धातुर्दशमीन्द्राण्या एकादश्यदित्यै द्वादशी द्यावापृथिव्योः पार्श्वं यम्यै पाटूरः ॥ ( वायोरष्टाविंशतिः ) ॥ २२ ॥

पन्थामनूवृग्भ्यां संततिं स्नावन्याभ्यां शुकान् पित्तेन हरिमाणं यक्ना हलीक्ष्णान् पापवातेन कूश्माञ्छकभिः शवर्तानूवध्येन शुनो विशसनेन सर्पाँल्लोहितगन्धेन वयांसि पक्वगन्धेन पिपीलिकाः प्रशादेन ॥ ( पन्थां द्वाविंशतिः ) ॥ २३ ॥

पुरस्ताज्ज्योतिः ॥

क्रमैरत्यक्रमीद्वाजी विश्वैर्देवैर्यज्ञियैः संविदानः ।
स नो नय सुकृतस्य लोकं तस्य ते वयं स्वधया मदेम ॥ ( क्रमैरष्टादश ) ॥ २४ ॥

अश्वानुमन्त्रणम् ॥

द्यौस्ते पृष्ठं पृथिवी सधस्थमात्माऽन्तरिक्षꣳ समुद्रो योनिः सूर्यस्ते चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं मासाश्चार्धमासाश्च पर्वाण्यृतवोऽङ्गानि संवत्सरो महिमा ॥ ( द्यौः पञ्चविꣳशतिः ) ॥ २५ ॥

अश्वानुघ्रापणम् ॥

अग्निः पशुरासीत् तेनायजन्त स एतं लोकमजयद्यस्मिन्नग्निः स ते लोकस्तं जैष्यस्यथाव जिघ्र वायुः पशुरासीत् तेनायजन्त स एतं लोकमजयद्यस्मिन् वायुः स ते लोकस्तस्मात् त्वाऽन्तरेष्यामि यदि नाव-जिघ्रस्यादित्यः पशुरासीत् तेनायजन्त स एतं लोकमजयद्यस्मि-( १ )-न्नादित्यः स ते लोकस्तं जैष्यसि यद्यवजिघ्रसि ॥ ( यस्मिन्नष्टौ च ) ॥ २६ ॥

[ य-१४८।- स्त्वा-२७५।-मिन्द्रस्य १९६ । चित्तिं २०७। यथा ३४५। वयो ३०३। य-१६४।-द्या १६६। मथि २२५। प्रजापतिः १५० । स्तेगान् २२। वाजं २५। कूर्मान् २३ । योक्त्रं २१। मित्रावरुणा-२२।-विन्द्रस्य २२। पूष्ण २४ । ओजं २०। आनन्द-१६।-मई-२८।-रग्ने-२९। वायोः २८। पन्था २२। कमै-१८।-द्यौस्ते २५। ऽग्निः५८। षड्विंꣳशतिः ॥ २५८२ ॥ ]

[ ॥ इति पञ्चमकाण्डे सप्तमः प्रपाठकः ॥ ७ ॥ ]

[ सावित्राणि ३०८१। विष्णुमुखा ३१९५। उत्सन्नयज्ञो २४७७। देवासुरा २९०६। यदेकेन २७२७। हिरण्यवर्णा २४३६। यो वा २५८२। ( सप्त ॥ ७ ॥ १९४०४ ) ]

॥ इति पञ्चमं काण्डं सम्पूर्णम् ॥ ५ ॥

# अथ षष्ठं काण्डम् ।

## सोममन्त्रब्राह्मणनिरूपणम् ।

[ अथ प्रथमः प्रपाठकः ॥ १ ॥ ]

प्राचीनवंशाख्यशालानिर्माणं क्षौरादिभिः संस्कृतस्य यजमानस्य तत्र प्रवेशविधानम् । सोम ऋषिः ।

प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा यत् प्राचीनवꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते[1] परि श्रयत्यन्तर्हितो हि देवलोको मनुष्यलोका[2]—न्नास्माल्लोकात् स्वेतव्यमित्याहुः को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति दिक्ष्वतीकाशान् करोत्यु-( १ )-भयोर्लोकयोरभिजित्यै[3] केशश्मश्रु वपते नखानि नि कृन्तते मृता वा एषा त्वगमेध्या यत् केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैत्य[4]—ङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन्नप्सु स्नाति साक्षादेव दीक्षातपसी अव रुन्धे[5] तीर्थे स्नाति तीर्थे हि ते तां प्रावेशयन्[6] तीर्थे स्नाति ( २ ) तीर्थमेव समानानां भवत्य[7]—पोऽश्नात्यन्तरत एव मेध्यो भवति[8] वाससा दीक्षयति सौम्यं वै क्षौमं देवतया सोममेष देवतामुपैति यो दीक्षते[9] सोमस्य तनूरसि तनुवं मे पाहीत्याह स्वामेव देवतामुपैत्यथो आशिषमेवैतामा शास्ते[10] ऽग्नेस्तूषाधानं वायोर्वातपानं पितृणां नीविरोषधीनां प्रघात ( ३ ) आदित्यानां प्राचीनतानो विश्वेषां देवानामोतुर्नक्षत्राणामतीकाशास्तद्वा एतत् सर्वदेवत्यं यद्वासो यद्वाससा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति[11] बहिःप्राणो वै मनुष्यस्तस्याशनं प्राणोऽश्नाति सप्राण एव दीक्षते[12] आशितो भवति यावानेवास्य प्राणस्तेन सह मेधमुपैति[13] घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणां तद्वा ( ४ ) एतत् सर्वदेवत्यं यन्नवनीतं यन्नवनीतेनाभ्यङ्क्ते सर्वा एव देवताः प्रीणाति[14] प्रच्युतो वा एषोऽस्माल्लोकादगतो देवलोकं यो दीक्षितोऽन्तरेव नवनीतं तस्मान्नवनीतेनाभ्यङ्क्ते[15] ऽनुलोमं यजुषा व्यावृत्त्या[16] इन्द्रो वृत्रमहन् तस्य कनीनिका पराऽपतत् तदाञ्जनमभवद्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते[17] दक्षिणं पूर्वमाऽङ्क्ते ( ५ ) सव्यꣳ हि पूर्वं मनुष्या आञ्जते न नि धावते नीव हि मनुष्या धावन्ते पञ्च कृत्व आऽङ्क्ते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे परिमितमाऽङ्क्तेऽपरिमितꣳ हि मनुष्या आञ्जते सतूलयाऽऽङ्क्तेऽपतूलया हि मनुष्या आञ्जते व्यावृत्त्यै[18] यदपतूलयाऽऽञ्जीत वज्र इव स्यात् सतूलयाऽऽ ऽङ्क्ते मित्रत्वाये ( ६ ) न्द्रो वृत्रमहन्त्सोऽ१पोऽ१भ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् तदपोदक्रामत् ते दर्भा अभवन् यद्दर्भपुञ्जीलैः पवयति या एव मेध्या यज्ञियाः सदेवा आपस्ताभिरेवैनं पवयति[20] द्वाभ्यां पवयत्यहोरात्राभ्यामेवैनं पवयति त्रिभिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति पञ्चभिः ( ७ ) पवयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञायैवैनं पवयति षड्भिः पवयति षड्वा ऋतव ऋतुभिरेवैनं पवयति सप्तभिः पवयति सप्त छन्दाꣳसि छन्दोभिरेवैनं पवयति नवभिः पवयति नव वै पुरुषे प्राणाः सप्राणमेवैनं पवयत्येकविꣳशत्या पवयति दश हस्त्या अङ्गुलयो दश पद्या आत्मैकविꣳशो यावानेव पुरुषस्तमपरिवर्गं ( ८ ) पवयति[21] चित्पतिस्त्वा

पुनात्वित्याह मनो वै चित्पतिर्मनसैवैनं पवयति वाक्पतिस्त्वा पुनात्वित्याह वाचैवैनं पवयति देवस्त्वा सविता पुनात्वित्याह सवितृप्रसूत एवैनं पवयति[२२] तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने, तच्छकेयमित्याहाऽऽशिषमेवैतामा शास्ते[२३] ॥ ( अतीकाशान् करोत्य,-वैशयन् तीर्थे स्नाति, प्रघातो, मनुष्याणां तद्वा, आऽङ्क्ते, मित्रत्वाय, पुञ्चभि,-रपरिवर्ग,-मष्टाचत्वारिंशच्च ) ॥ १ ॥

यज्ञशालां प्रविष्टस्य यजमानस्य दीक्षाहोमविधानम् ॥ सोमऋषिः ।

यावन्तो वै देवा यज्ञायापुनत त एवाभवन् य एवं विद्वान् यज्ञाय पुनीते भवत्येव बहिः पवयित्वाऽन्तः प्र पादयति मनुष्यलोक एवैनं पवयित्वा पूतं देवलोकं प्र णयत्य—दीक्षित एकयाऽऽहुत्येत्याहुः स्रुवेण चतस्रो जुहोति दीक्षितत्वाय स्रुचा पञ्चमीं पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे आकूत्यै प्रयुजेऽग्नये (१) स्वाहेत्याहाऽऽकूत्या हि पुरुषो यज्ञमभि प्रयुङ्क्ते यजेयेति[३] मेधायै मनसेऽग्नये स्वाहेत्याह मेधया हि मनसा पुरुषो यज्ञमभिगच्छति[४] सरस्वत्यै पूष्णेऽग्नये स्वाहेत्याह वाग्वै सरस्वती पृथिवी पूषा वाचैव पृथिव्या यज्ञं प्र युङ्क्ते आपो देवीर्बृहतीर्विश्वशम्भुव इत्याह या वै वर्ष्यास्ता ( २ ) आपो देवीर्बृहतीर्विश्वशम्भुवो[६] यदेतद्यजुर्न ब्रूयाद्दिव्या आपोऽशान्ता इमं लोकमा गच्छेयु—रापो देवीर्बृहतीर्विश्वशम्भुव इत्याहास्मा एवैना लोकाय शमयति तस्माच्छान्ता इमं लोकमा गच्छन्ति[७] द्यावापृथिवी इत्याह द्यावापृथिव्योर्हि यज्ञ उर्वन्तरिक्षमित्याहान्तरिक्षे हि यज्ञो[९] बृहस्पतिर्नो हविषा वृधात्वि-(३) त्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै यज्ञमव रुन्धे[१०] यद्ब्रूयाद्विधेरिति यज्ञस्थाणुमृच्छेद्वृधात्वित्याह यज्ञस्थाणुमेव परि वृणक्ति[११] प्रजापतिर्यज्ञमसृजत सोऽस्मात् सृष्टः पराङैत् स प्र यजुरव्लीनात् प्र साम तमृगुदयच्छद्यदृगुदयच्छत् तदौद्ग्रहणस्यौद्ग्रहणत्वं—मृचा ( ४ ) जुहोति यज्ञस्योद्यत्या[१३] अनुष्टुप्छन्दसामुदयच्छदित्याहुस्तस्मादनुष्टुभा जुहोति यज्ञस्योद्यत्यै[१४] द्वादश वात्सबन्धान्युदयच्छन्नित्याहुस्तस्माद् द्वादशभिर्वात्सबन्धविदो दीक्षयन्ति[१५] सा वा एषर्गनुष्टुग्वागनुष्टुग्यदेतयर्चा दीक्षयति वाचैवैन्ँ सर्वया दीक्षयति[१६] विश्वे देवस्य नेतुरित्याह सावित्र्येतेन मर्तो वृणीत सख्य-(५)-मित्याह पितृदेवत्यैतेन विश्वे राय इषुध्यसीत्याह वैश्वदेव्येतेन द्युम्नं वृणीत पुष्यस इत्याह पौष्ण्येतेन सा वा एषर्क्सर्वदेवत्या यदेतयर्चा दीक्षयति सर्वाभिरेवैनं देवताभिर्दीक्षयति[१७] सप्ताक्षरं प्रथमं पदमष्टाक्षराणि त्रीणि यानि त्रीणि तान्यष्टावुपयन्ति यानि चत्वारि तान्यष्टौ यदष्टाक्षरा तेन ( ६ ) गायत्री यदेकादशाक्षरा तेन त्रिष्टुग्यद् द्वादशाक्षरा तेन जगती सा वा एषर्क्सर्वाणि छन्दाꣳसि यदेतयर्चा दीक्षयति सर्वैरेवैनं छन्दोभिर्दीक्षयति[१८] सप्ताक्षरं प्रथमं पदꣳ सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे[१९] एकस्मादक्षरादनाप्तं प्रथमं पदं तस्माद्यद्वाचोऽनाप्तं तन्मनुष्या उप जीवन्ति पूर्णया जुहोति (७) पूर्ण इव हि प्रजापतिः प्रजापतेराप्त्यै न्यूनया जुहोति न्यूनाद्धि प्रजापतिः प्रजा असृजत प्रजानाꣳ सृष्ट्यै[२०] ॥ ( अग्नये, ता, वृधात्व-चा, सख्यं, तेन, जुहोति, पञ्चदश च ) ॥ २ ॥

कृष्णाजिनेन वस्त्रेण मेखलया च दीक्षाविधानम् ॥ सोमऋषिः ।

ऋक्सामे वै देवेभ्यो यज्ञायाऽतिष्ठमाने कृष्णो रूपं कृत्वाऽपक्रम्यातिष्ठतां तेऽमन्यन्त यं वा इमे उपा-

वत्स्यतः स इदं भविष्यतीति ते उपामन्त्रयन्त ते अहोरात्रयोर्महिमानमपनिधाय देवानुपावर्तन्तैतामेष वा
ऋचो वर्णो यच्छुक्लं कृष्णाजिनस्यैष साम्नो यत् कृष्णं — मृक्सामयोः शिल्पे स्थ इत्याहर्क्सामे एवाव रुन्धे
एष (१) वा अह्नो वर्णो यच्छुक्लं कृष्णाजिनस्यैष रात्रिया यत् कृष्णं यदेवैनयोस्तत्र न्यक्तं तदेवाव रुन्धे[3]
कृष्णाजिनेन दीक्षयति ब्रह्मणो वा एतद्रूपं यत् कृष्णाजिनं ब्रह्मणैवैनं दीक्षयती[4] — मां धियꣳ शिक्षमाणस्य
देवेत्याह यथायजुरेवैत[5] — द्गर्भो वा एष यद्दीक्षित उल्बं वासः प्रोर्णुते तस्मात् (२) गर्भाः प्रावृता जायन्ते[6]
न पुरा सोमस्य क्रयादपोर्णुवीत यत् पुरा सोमस्य क्रयादपोर्णुवीत गर्भाः प्रजानां परापातुकाः स्युः क्रीते
सोमेऽपोर्णुते जायत एव तदथो यथा वसीयाꣳसं प्रत्यपोर्णुते तादृगेव त[7] — दङ्गिरसः सुवर्गं लोकं यन्त
ऊर्जं व्यभजन्त ततो यदत्यशिष्यत ते शरा अभवन्नूर्ग्वै शरा यच्छरमयी (३) मेखला भवत्यूर्जमेवाव रुन्धे[8]
मध्यतः सं नह्यति मध्यत एवास्मा ऊर्जं दधाति तस्मान्मध्यत ऊर्जा भुञ्जत[9] ऊर्ध्वं वै पुरुषस्य नाभ्यै
मेध्यमवाचीनममेध्यं यन्मध्यतः संनह्यति मेध्यं चैवास्यामेध्यं च व्यावर्तयती[10] — न्द्रो वृत्राय वज्रं प्राहरत्
स त्रेधा व्यभवत् स्फ्यस्तृतीयꣳ रथस्तृतीयं यूपस्तृतीयं (४) येऽन्तःशरा अशीर्यन्त ते शरा अभवन् तच्छ-
राणाꣳ शरत्वं वज्रो वै शराः क्षुत् खलु वै मनुष्यस्य भ्रातृव्यो यच्छरमयी मेखला भवति वज्रेणैव साक्षात्
क्षुधं भ्रातृव्यं मध्यतोऽप हते[11] त्रिवृद्भवति त्रिवृद्वै प्राणस्त्रिवृतमेव प्राणं मध्यतो यजमाने दधाति[12]
पृथ्वी भवति रज्जूनां व्यावृत्त्यै[13] मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीं मिथुनत्वाय[14] (५) यज्ञो
दक्षिणामभ्यध्यायत् ताꣳ समभवत् तदिन्द्रोऽचायत् सोऽमन्यत यो वा इतो जनिष्यते स इदं भविष्यतीति
तां प्राविशत् तस्या इन्द्र एवाजायत सोऽमन्यत यो वै मदितो ऽपरो जनिष्यते स इदं भविष्यतीति तस्या
अनुमृश्य योनिमाऽच्छिनत् सा सूतवशाऽभवत् तत् सूतवशायै जन्म (६) ताꣳ हस्ते न्यवेष्टयत तां
मृगेषु न्यदधात् सा कृष्णविषाणाऽभवदिन्द्रस्य योनिरसि मा मा हिꣳसीरिति कृष्णविषाणां प्र यच्छति
सयोनिमेव यज्ञं करोति सयोनिं दक्षिणाꣳ सयोनिमिन्द्रꣳ सयोनित्वाय[15] कृष्यै त्वा सुसस्याया इत्याह
तस्मादकृष्टपच्या ओषधयः पच्यन्ते[16] सुपिप्पलाभ्यस्त्वौषधीभ्य इत्याह तस्मादोषधयः फलं गृह्णन्ति[17]
यद्धस्तेन (७) कण्डूयेत पामनंभावुकाः प्रजाः स्युर्यत् स्मयेत नग्नंभावुकाः कृष्णविषाणया कण्डूयते-
ऽपिगृह्य स्मयते प्रजानां गोपीथाय[18] न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामव चृतेद्यत् पुरा दक्षिणाभ्यो
नेतोः कृष्णविषाणामवचृतेद्योनिः प्रजानां परापातुका स्यान्नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति
योनिर्वै यज्ञस्य चात्वालं योनिः कृष्णविषाणा योनावेव योनिं दधाति यज्ञस्य सयोनित्वाय[19] ॥
( रुन्ध एष,- स्तस्मा,- च्छरमयी, यूपस्तृतीयं, मिथुनत्वाय जन्म, हस्तेना,- ष्टाचत्वारिꣳशच्च ) ॥ ३ ॥

यजमानस्य दण्डादानमुष्टीकरणवाग्यमपूर्वकं नियमानुष्ठानम् ॥ सोमऋषिः ।

वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना सा वनस्पतीन् प्राविशत् सैषा वाग्वनस्पतिषु वदति या दुन्दुभौ
या तूणवे वीणायां यद्दीक्षितदण्डं प्रयच्छति वाचमेवाव रुन्धे[1] औदुम्बरो भवत्यूर्ग्वा उदुम्बर ऊर्जमेवाव
रुन्धे मुखेन संमितो भवति मुखत एवास्मा ऊर्जं दधाति तस्मान्मुखत ऊर्जा भुञ्जते[2] (१) क्रीते सोमे
मैत्रावरुणाय दण्डं प्र यच्छति मैत्रावरुणो हि पुरस्तादृत्विग्भ्यो वाचं विभजति तामृत्विजो यजमाने प्रति

ष्ठापयन्ति[3] स्वाहा यज्ञं मनसेत्याह मनसा हि पुरुषो यज्ञमभिगच्छति स्वाहा द्यावापृथिवीभ्यामित्याह द्यावापृथिव्योर्हि यज्ञः स्वाहोरोरन्तरिक्षादित्याहान्तरिक्षे हि यज्ञः स्वाहा यज्ञं वातादा रभ इत्याहायं (२) वाव यः पवते स यज्ञस्तमेव साक्षादा रभते[4] मुष्टी करोति वाचं यच्छति यज्ञस्य धृत्या[5] अदीक्षिष्टायं ब्राह्मण इति त्रिरुपाꣳश्वाह देवेभ्य एवैनं प्राऽऽह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राऽऽह[6] न पुरा नक्षत्रेभ्यो वाचं वि सृजेद्यत् पुरा नक्षत्रेभ्यो वाचं विसृजेद्यज्ञं विच्छिन्द्या-( ३ )-दुदितेषु नक्षत्रेषु व्रतं कृणुतेति वाचं वि सृजति यज्ञव्रतो वै दीक्षितो यज्ञमेवाभि वाचं वि सृजति[8] यदि विसृजेद्वैष्णवीमृचमनु ब्रूयाद्यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ सं तनोति[9] दैवीं धियं मनामह इत्याह यज्ञमेव तन्म्रदयति[10] सुपारा नो असद्वश इत्याह व्युष्टिमेवाव रुन्धे[11] ( ४ ) ब्रह्मवादिनो वदन्ति होतव्यं दीक्षितस्य गृहा३इ न होतव्या३मिति हविर्वै दीक्षितो यज्जुहुयाद्यजमानस्यावदाय जुहुयाद्यन्न जुहुयाद्यज्ञपरुरन्तरियाद्ये देवा मनोजाता मनोयुज इत्याह प्राणा वै देवा मनोजाता मनोयुजस्तेष्वेव परोक्षं जुहोति तन्नेव हुतं नेवाहुतꣳ[12] स्वपन्तं वै दीक्षितꣳ रक्षाꣳसि जिघाꣳसन्त्यग्निः (५) खलु वै रक्षोहाऽग्ने त्वꣳ सु जागृहि वयꣳ सु मन्दिषीमहीत्याहाग्निमेवाधिपां कृत्वा स्वपिति रक्षसामपहत्या[13] अव्रत्यमिव वा एष करोति यो दीक्षितः स्वपिति त्वमग्ने व्रतपा असीत्याहाग्निर्वै देवानां व्रतपतिः स एवैनं व्रतमा लम्भयति[14] देव आ मर्त्येष्वेत्याह देवो ( ६ ) ह्येष सन् मर्त्येषु[15] त्वं यज्ञेष्वीड्य इत्याहैतꣳ हि यज्ञेष्वीडते[16] ऽप वै दीक्षितात् सुषुपुष इन्द्रियं देवताः क्रामन्ति विश्वे देवा अभि मामाऽववृत्रन्नित्याहेन्द्रियेणैवैनं देवताभिः सं नयति[17] यदेतद्यजुर्न ब्रूयाद्यावत एव पशूनभि दीक्षेत तावन्तोऽस्य पशवः स्यू रास्वेयत् (७) सोमाऽऽ भूयो भरेत्याहापरिमितानेव पशूनव रुन्धे[18] चन्द्रमसि मम भोगाय भवेत्याह यथादेवतमेवैनाः प्रति गृह्णाति[19] वायवे त्वा वरुणाय त्वेति यदेवमेता नानुदिशेदयथादेवतं दक्षिणा गमयेदा देवताभ्यो वृश्च्येत यदेवमेता अनुदिशति यथादेवतमेव दक्षिणा गमयति न देवताभ्य आ (८) वृश्च्यते[20] देवीरापो अपां नपादित्याह यद्वो मेध्यं यज्ञियꣳ सदेवं तद्वो माऽव क्रमिषमिति वावैतदाहाच्छिन्नं तन्तुं पृथिव्या अनु गेषमित्याह सेतुमेव कृत्वा ऽत्येति[22] ॥ ( भुञ्जते, ऽयं, छिन्द्या,- दुन्न्रे, ऽग्नि,-राह देव, इयद्, देवताभ्य आ, त्रयस्त्रिꣳशच्च ॥४॥

प्रायणीयेष्टिविधानम् ॥ सोमऋषिः ।

देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् तेऽन्योऽन्यमुपाधावन् त्वया प्र जानाम त्वयेति तेऽदित्याꣳ समध्रियन्त त्वया प्र जानामेति साऽब्रवीद्वरं वृणै मत्प्रायणा एव वो यज्ञा मदुदयना असन्निति तस्मादादित्यः प्रायणीयो यज्ञानामादित्य उदयनीयः पञ्च देवता यजति पञ्च दिशो दिशां प्रज्ञात्या (१) अथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[2] पथ्याꣳ स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणा सोमेन प्रतीचीꣳ सवित्रोदीचीमदित्योर्ध्वां[3] पथ्याꣳ स्वस्ति यजति प्राचीमेव तया दिशं प्रजानाति पथ्याꣳ स्वस्तिमिष्ट्वाऽग्नीषोमौ यजति चक्षुषी वा एते यज्ञस्य यदग्नीषोमौ ताभ्यामेवानु पश्यत्य-( २ )-ग्नीषोमाविष्ट्वा सवितारं यजति सवितृप्रसूत एवानु पश्यति सवितारमिष्ट्वाऽदितिं यजतीयं वा अदितिरस्यामेव प्रतिष्ठायानु पश्यत्य-दितिमिष्ट्वा मारुतीमृचमन्वाह मरुतो वै देवानां विशो देवविशं खलु

वै कल्पमानं मनुष्यविशमनु कल्पते यन्मारुतीमृचमन्वाह विशां क्लृप्त्यै[५] ब्रह्मवादिनो वदन्ति प्रयाजवदननूयाजं प्रायणीयं कार्यमनूयाजव-( ३ )-दप्रयाजमुदयनीयमितीमे वै प्रयाजा अमी अनूयाजाः सैव सा यज्ञस्य सन्तति[६]—स्तत् तथा न कार्यमात्मा वै प्रयाजाः प्रजाऽनूयाजा यत् प्रयाजानन्तरियादात्मानमन्तरियाद्यदनूयाजानन्तरियात् प्रजामन्तरियाद्यतः खलु वै यज्ञस्य विततस्य न क्रियते तदनु यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु (४) परा भवति[७] प्रयाजवदेवानूयाजवत् प्रायणीयं कार्यं प्रयाजवदनूयाजवदुदयनीयं नाऽऽत्मानमन्तरेति न प्रजां न यज्ञः पराभवति न यजमानः प्रायणीयस्य निष्कास उदयनीयमभि निर्वपति सैव सा यज्ञस्य सन्तति[८]—र्याः प्रायणीयस्य याज्या यत् ता उदयनीयस्य याज्याः कुर्यात् पराङमुं लोकमा रोहेत् प्रमायुकः स्याद्याः प्रायणीयस्य पुरोऽनुवाक्यास्ता (५) उदयनीयस्य याज्याः करोत्यस्मिन्नेव लोके प्रति तिष्ठति[१०] ॥ (प्रज्ञात्यै, पश्यत्य,- नूयाजव,- द्यजमानोऽनु, पुरोऽनुवाक्यास्ता, अष्टौ च) ॥५॥

अरुणया गवा सोमक्रयणविधानम् ॥ सोमऋषिः ।

कद्रूश्च वै सुपर्णी चाऽऽत्मरूपयोरस्पर्धेताꣳ सा कद्रूः सुपर्णीमजयत् साऽब्रवीत् तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानं निष्क्रीणीष्वेती[१]—यं वै कद्रूरसौ सुपर्णी छन्दाꣳसि सौपर्णेयाः[२] साऽब्रवीदस्मै वै पितरौ पुत्रान् बिभृतस्तृतीयस्यामितो दिवि सोमस्तमा हर तेनाऽऽत्मानं निष्क्रीणीष्व·( १ )·ति मा कद्रूरवोचदिति[३] जगत्युदपतच्चतुर्दशाक्षरा सती सा ऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा पशुभिश्च दीक्षया चाऽगच्छत् तस्माज्जगती छन्दसां पशव्यतमा तस्मात् पशुमन्तं दीक्षोप नमति[४] त्रिष्टुगुदपतत् त्रयोदशाक्षरा सती सा ऽप्राप्य न्यवर्तत तस्यै द्वे अक्षरे अमीयेताꣳ सा दक्षिणाभिश्च (२) तपसा चाऽगच्छत्[५] तस्मात् त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्त एतत् खलु वाव तप इत्याहुर्यः स्वं ददातीति[६] गायत्र्युदपतच्चतुरक्षरा सत्यजया ज्योतिषा तमस्या अजाऽभ्यरुन्ध तदजाया अजत्वꣳ सा सोमं चाऽहरच्चत्वारि चाक्षराणि साऽष्टाक्षरा समपद्यत[७] ब्रह्मवादिनो वदन्ति ( ३ ) कस्मात् सत्याद्गायत्री कनिष्ठा छन्दसाꣳ सती यज्ञमुखं परीयायेति यदेवादः सोममाऽहरत् तस्माद्यज्ञमुखं पर्यैत् तस्मात् तेजस्विनीतमा[८] पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात् तदधयत् तस्माद् द्वे सवने शुक्रवती प्रातःसवनं च माध्यन्दिनं च तस्मात् तृतीयसवन ऋजीषमभि षुण्वन्ति धीतमिव हि मन्यन्त[९] (४) आशिरमव नयति सशुक्रत्वायाथो सं भरत्येवैनत्[१०] तꣳ सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् स तिस्रो रात्रीः परिमुषितोऽवसत् तस्मात् तिस्रो रात्रीः क्रीतः सोमो वसति[११] ते देवा अब्रुवन्त्स्त्रीकामा वै गन्धर्वाः स्त्रिया निष्क्रीणामेति ते वाचꣳ स्त्रियमेकहायनीं कृत्वा तया निरक्रीण[१२]—न्त्सा रोहिद्रूपं कृत्वा गन्धर्वेभ्यो (५) ऽपक्रम्यातिष्ठत् तद्रोहितो जन्म[१३] ते देवा अब्रुवन्नप युष्मदक्रमीन्नास्मानुपावर्तते वि ह्वयामहा इति ब्रह्म गन्धर्वा अवदन्नगायन् देवाः सा देवान् गायत उपावर्तत तस्माद्गायन्तꣳ स्त्रियः कामयन्ते[१४] कामुका एनꣳ स्त्रियो भवन्ति य एवं वेदाथो य एवं विद्वानपि जन्येषु भवति तेभ्य एव ददत्युत यद्बहुतया (६) भवन्त्ये[१५]—कहायन्या क्रीणाति वाचैवैनꣳ सर्वया क्रीणाति तस्मादेकहायना

मनुष्या॑ वाचं॑ वद॒न्त्य॑[१६]—कू॒टया॑ऽक॒र्णया॑ऽका॒णया॑ऽश्लो॒णया॑ऽस॒प्तश॑फया क्रीणाति[१७] स॒र्वयै॒वैनं॑ क्रीणाति[१८] यच्छ्वे॒तया॑ क्री॒णीया॑द्दुश्च॒र्मा यज॑मानः स्याद्यत् कृ॒ष्णया॑ऽनु॒स्तर॑णी स्यात् प्र॒मायु॑को यज॑मानः स्याद्यद् द्विरू॒पया॑ वार्त्र॒घ्नी स्यात् स वा॒ऽन्यं जि॑नी॒यात् तं वा॒ऽन्यो जि॑नीयादरु॒णया॑ पि॒ङ्गाक्ष्या ( ७ ) क्री॒णात्ये॒तद्वै सोम॑स्य रू॒प२ँ स्वयै॒वैनं॑ दे॒वत॑या क्रीणाति[१९]॥ (निष्क्री॑णीष्व॒, दक्षिणाभिश्च, वदन्ति॒, मन्य॑न्ते, गन्ध॒र्वेभ्यो॑, ब॒हुत॑बाः, पिङ्गाक्ष्या, दश॑ च ) ॥ ६ ॥

सोमक्रयप्रकारः ॥ सोमऋषिः ।

तद्धिर॑ण्यमभव॒त् तस्मा॑द॒द्भ्यो हिर॑ण्यं पुनन्ति॒ ब्र॒ह्मवा॒दिनो॑ वदन्ति॒ कस्मा॑त् स॒त्याद॑न॒स्थिके॑न प्र॒जाः प्र॒वीय॑न्ते ऽस्थ॒न्वती॒र्जाय॑न्त॒ इति॒ यद्धिर॑ण्यं घृ॒तेऽव॒धाय॑ जु॒होति॒ तस्मा॑दन॒स्थिके॑न प्र॒जाः प्र वी॑यन्ते ऽस्थ॒न्वती॒र्जाय॑न्ते॒ ए॒तद्वा अ॒ग्नेः प्रि॒यं धाम॒ यद्घृ॒तं तेजो॒ हिर॑ण्यमि॒यं ते॑ शुक्र त॒नूरि॒दं वर्च॒ इत्या॑ह॒ सते॑जसमे॒वैन२ँ स॒तं॑नुं ( १ ) क॒रोत्यथो॒ सं भ॑रत्ये॒वैनं॑ यदब॑द्धमव॒दध्या॒द्गर्भाः॑ प्र॒जानां॑ परा॒पातु॑काः स्यु॒र्बद्ध॑मव॒ द॒धाति॒ गर्भा॑णां॒ धृत्यै॑ निष्ट॒क्यं॑ बध्नाति प्र॒जानां॑ प्र॒जन॑नाय॒ वाग्वा ए॒षा यत् सो॑म॒क्रय॑णी जूर॒सीत्या॑ह॒ यद्धि मन॑सा जव॑ते त॒द्वाचा वद॑ति धृ॒ता मन॒सेत्या॑ह॒ मन॑सा॒ हि वाग्धृ॒ता जुष्टा॒ विष्ण॑व॒ इत्या॑ह ( २ ) य॒ज्ञो वै विष्णु॑र्य॒ज्ञायै॒वैनां॑ जुष्टां॑ करोति॒ तस्या॑स्ते स॒त्यस॑वसः प्रस॒व इत्या॑ह॒ स॒वि॒तृप्र॑सूतामे॒व वाच॒मव॑ रुन्धे[६] काण्डे॑काण्डे॒ वै क्रि॒यमा॑णे य॒ज्ञ२ँ रक्षा॒२ँसि जिघा॒२ँसन्त्ये॒ष खलु॒ वा अर॑क्षोहतः॒ पन्था॒ यो॑ऽग्नेश्च॒ सूर्य॑स्य च॒ सूर्य॑स्य॒ चक्षु॒रा॑ऽरु॑हम॒ग्नेर॒क्ष्णः क॒नीनि॑कामि॒त्या॑ह॒ य ए॒वार॑क्षोह॒तः पन्था॒स्त२ँ स॒मारो॑हति[७] ( ३ ) वाग्वा ए॒षा यत् सो॑म॒क्रय॑णी चिद॑सि म॒नाऽसीत्या॑ह॒ शास्त्ये॒वैना॑मे॒तत् तस्मा॑च्छि॒ष्टाः प्र॒जा जाय॑न्ते चिद॒सीत्या॑ह॒ यद्धि मन॑सा चे॒तय॑ते त॒द्वाचा वद॑ति म॒नाऽसीत्या॑ह॒ यद्धि मन॑सा॒ऽभि॒गच्छ॑ति॒ तत् क॒रोति॒ धीर॒सीत्या॑ह॒ यद्धि मन॑सा ध्याय॑ति त॒द्वाचा ( ४ ) वद॑ति॒ दक्षि॑णा॒ऽसीत्या॑ह॒ दक्षि॑णा॒ ह्ये॑षा य॒ज्ञिया॒ऽसीत्या॑ह य॒ज्ञिया॑मे॒वैनां॑ करोति क्ष॒त्रिया॒ऽसीत्या॑ह क्ष॒त्रिया॒ ह्ये॑षाऽदि॑तिरस्यु॒भ॒यतः॑ शी॒र्ष्णीत्या॑ह॒ यदे॒वाऽऽदि॒त्यः प्रा॑य॒णीयो॑ य॒ज्ञाना॑मादि॒त्य उ॑दय॒नीय॒स्तस्मा॑दे॒वमा॑ह॒ यदब॑द्धा॒ स्याद॑य॒ता स्या॒द्यत् प॑दिब॒द्धाऽनु॒स्तर॑णी स्यात् प्र॒मायु॑को यज॑मानः स्या॒त् ( ५ ) यत् क॑र्णगृ॒हीता वार्त्र॒घ्नी स्या॒त् स वा॒ऽन्यं जि॑नी॒यात् तं वा॒ऽन्यो जि॑नीयान्मि॒त्रस्त्वा॑ प॒दि ब॑ध्ना॒त्वित्या॑ह मि॒त्रो वै शि॒वो दे॒वानां॒ तेनै॒वैनां॑ प॒दि ब॑ध्नाति[१०] पू॒षाऽध्व॑नः पा॒त्वित्या॑हे॒यं वै पू॒षेमामे॒वास्या॑ अधि॒पाम॑कः सम॑ष्ट्या इन्द्रा॒याध्य॑क्षा॒येत्या॑हेन्द्र॑मे॒वास्या॒ अध्य॑क्षं क॒रोत्य –( ६ )–नु॑ त्वा मा॒ता मन्य॑ताम॒नु॑ पि॒तेत्या॑हानु॑मतयै॒वैन॑या क्रीणाति॒ सा दे॑वि दे॒वमच्छे॒हीत्या॑ह दे॒वी ह्ये॑षा दे॒वः सोम॒ इन्द्रा॑य सोम॒मित्या॑हेन्द्रा॑य॒ हि सोम॑ आह्रि॒यते॒ यदे॒तद्यजु॒र्न ब्रू॒यात् परा॑च्ये॒व सो॑म॒क्रय॑णीयाद्रु॒द्रस्त्वाऽऽ व॑र्तय॒त्वित्या॑ह रु॒द्रो वै क्रू॒रो ( ७ ) दे॒वानां॒ तमे॒वास्यै॑ प॒रस्ता॑द्दधात्या॒वृत्त्यै॑ क्रू॒रमि॑व॒ वा ए॒तत् क॒रोति॒ यद्रु॒द्रस्य॑ की॒र्तय॑ति मि॒त्रस्य॑ प॒थेत्या॑ह॒ शान्त्यै॑ वा॒चा वा ए॒ष वि क्री॑णी॒ते यः सो॑म॒क्रय॑ण्या स्व॒स्ति सोम॑सखा पु॒नरे॑हि स॒ह र॒य्येत्या॑ह वा॒चैव वि॒क्रीय॒ पुन॑रा॒त्मन् वाचं॑ ध॒त्तेऽनु॑पदासुकाऽस्य वाग्भ॑वति॒ य ए॒वं वेद॑[११] ( ८ )॥ (स॒तं॑नुं, विष्ण॑व॒ इत्या॑ह, स॒मारो॑हति, ध्याय॑ति त॒द्वाचा यज॑मानः स्यात्, करोति, क्रू॒रो, वेद॑) ॥७॥

सोमक्रयण्या गोर्मध्येमार्गे पदसङ्ग्रहप्रकारः ॥ सोमऋषिः ।

षट् पदान्यनु नि ष्क्रामति षडहं वाङ्नाति वदत्युत संवत्सरस्यायने यावत्येव वाक्तामव रुन्धे[1] सप्तमे पदे जुहोति सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै[2] वस्व्यसि रुद्राऽसीत्याह रूपमेवास्या एतन्महिमानं (१) व्याचष्टे[3] बृहस्पतिस्त्वा सुम्ने रण्वत्वित्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे रुद्रो वसुभिरा चिकेत्वित्याहाऽऽवृत्त्यै[4] पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इत्याह पृथिव्या ह्येष मूर्धा यद्देवयजनमिडायाः पद इत्याहेडायै ह्येतत् पदं यत् सोमक्रयण्यै घृतवति स्वाहे-(२)-त्याह यदेवास्यै पदाद्घृतमपीड्यत तस्मादेवमाह[5] यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षाꣳसि यज्ञꣳ हन्युर्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञꣳ रक्षाꣳसि घ्नन्ति[6] काण्डेकाण्डे वै क्रियमाणे यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति परिलिखितꣳ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या (३) इदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति[7] पशवो वै सोमक्रयण्यै पदं यावत्मूतꣳ सं वपति पशूनेवाव रुन्धेऽस्मे राय इति सं वपत्यात्मानमेवाध्वर्युः (४) पशुभ्यो नान्तरेति त्वे राय इति यजमानाय प्र यच्छति यजमान एव रयिं दधाति तोते राय इति पत्निया अर्धो वा एष आत्मनो यत् पत्नी यथा गृहेषु निधत्ते तादृगेव तत्[8] त्वष्टीमती ते सपेयेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधात्य[9]स्मै वै लोकाय गार्हपत्य आ धीयते (५) ऽमुष्मा आहवनीयो यद्गार्हपत्य उपवपेदस्मिँल्लोके पशुमान्त्स्याद्यदाहवनीयेऽमुष्मिँल्लोके पशुमान्त्स्यादुभयोरुप वपत्युभयोरेवैनं लोकयोः पशुमन्तं करोति[10] ॥ (महिमानꣳ, स्वाहा, ऽपहत्या, अध्वर्युः,- धीयते, चतुर्विꣳशतिश्च ) ॥ ८ ॥

क्रयार्थं सोमस्योन्मानप्रकारः ॥ सोमऋषिः ।

ब्रह्मवादिनो वदन्ति विचित्यः सोमा३ न विचित्या३ इति सोमो वा ओषधीनाꣳ राजा तस्मिन् यदापन्नं ग्रसितमेवास्य तद्यद्विचिनुयाद्यथाऽऽस्याद्ग्रसितं निष्खिदति तादृगेव तद्यन्न विचिनुयाद्यथा ऽक्षन्नापन्नं विधावति तादृगेव तत् क्षोधुको ऽध्वर्युः स्यात् क्षोधुको यजमानः सोमविक्रयिन्त्सोमꣳ शोधयेत्येव ब्रूयाद्यदीतरं (१) यदीतरमुभयेनैव सोमविक्रयिणमर्पयति तस्मात् सोमविक्रयी क्षोधुको[1] ऽरुणो ह स्माऽऽहौपवेशिः सोमक्रयण एवाहं तृतीयसवनमव रुन्ध इति पशूनां चर्मन् मिमीते पशूनेवाव रुन्धे पशवो हि तृतीयꣳ सवनं[2] यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीतर्क्षं वा अपशव्यमपशुरेव भवति यं कामयेत पशुमान्त्स्या-(२)-दिति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशूनव रुन्धे पशुमानेव भवत्य[3]पामन्ते क्रीणाति सरसमेवैनं क्रीणात्य[4]मात्योऽसीत्याहामैवैनं कुरुते शुक्रस्ते ग्रह इत्याह शुक्रो ह्यस्य ग्रहो[5]ऽनसाऽच्छ याति महिमानमेवास्याच्छ यात्य[6]नसा (३) ऽच्छ याति तस्मादनोवाह्यꣳ समे जीवनं[7] यत्र खलु वा एतꣳ शीर्ष्णा हरन्ति तस्माच्छीर्षहार्यं गिरौ जीवन[8]मभि त्यं देवꣳ सवितारमित्यतिच्छन्दसर्चा मिमीतेऽतिच्छन्दा वै सर्वाणि छन्दाꣳसि सर्वेभिरेवैनं छन्दोभिर्मिमीते वर्ष्म वा एषा छन्दसां यद-

तिच्छन्दा यदतिच्छन्दसर्चा मिमीते वर्ष्मैवैनꣳ समानानां करोत्येकयैकयोत्सर्गं (४) मिमीतेऽयातयाम्नियायातयाम्नियैवैनं मिमीते तस्मान्नानावीर्या अङ्गुलयः सर्वास्वङ्गुष्ठमुप नि गृह्णाति तस्मात् समावद्वीर्योऽन्याभिरङ्गुलिभिस्तस्मात् सर्वा अनु सं चरति[११] यत् सह सर्वाभिर्मिमीत सꣳश्लिष्टा अङ्गुलयो जायेरन्नेकयैकयोत्सर्गं मिमीते तस्माद्विभक्ता जायन्ते[१२] पञ्च कृत्वो यजुषा मिमीते पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं (५) दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे यद्यजुषा मिमीते भूतमेवाव रुन्धे यत् तूष्णीं भविष्य[१३]द्यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्युप समूहति सदस्यानेवान्वाभजति वाससोप नह्यति सर्वदेवत्यं वै (६) वासः सर्वाभिरेवैनं देवताभिः समर्धयति पशवो वै सोमः प्राणाय त्वेत्युप नह्यति प्राणमेव पशुषु दधाति व्यानाय त्वेत्यनु शृन्थति व्यानमेव पशुषु दधाति तस्मात् स्वपन्तं प्राणा न जहति[१४] ॥

(इतरं, पशुमान्त्स्यां,- द्यात्यनसो,- त्सर्गं, तूष्णीꣳ, सर्वदेवत्यं वै, त्रयस्त्रिꣳशच्च) ॥ ९ ॥

अजादिभिर्नवद्रव्यान्तरैः सोमक्रयणम् ॥ सोमऋषिः ।

यत् कलया ते शफेन ते क्रीणानीति पणेतागोअर्घꣳ सोमं कुर्यादगोअर्घं यजमानमगोअर्घमध्वर्युं गोस्तु महिमानं नाव तिरेद्गवा ते क्रीणानीत्येव ब्रूयाद्गोअर्घमेव सोमं करोति गोअर्घं यजमानं गोअर्घमध्वर्युं न गोर्महिमानमव तिरत्य[१]जया क्रीणाति सतपसमेवैनं क्रीणाति हिरण्येन क्रीणाति सशुक्रमेवै- (१) -नं क्रीणाति धेन्वा क्रीणाति साशिरमेवैनं क्रीणात्यृषभेण क्रीणाति सेन्द्रमेवैनं क्रीणात्यनडुहा क्रीणाति वह्निर्वा अनड्वान् वह्निनैव वह्नि यज्ञस्य क्रीणाति मिथुनाभ्यां क्रीणाति मिथुनस्यावरुद्ध्यै वाससा क्रीणाति सर्वदेवत्यं वै वासः सर्वाभ्य एवैनं देवताभ्यः क्रीणाति दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे[२] (२) तपसस्तनूरसि प्रजापतेर्वर्ण इत्याह पशुभ्य एव तदध्वर्युर्नि ह्नुत आत्मनोऽनाव्रस्काय[३] गच्छति श्रियं प्र पशूनाप्नोति य एवं वेद[४] शुक्रं ते शुक्रेण क्रीणामीत्याह यथायजुरेवैत[५]द्देवा वै येन हिरण्येन सोममक्रीणन् तदभीषहा पुनराऽददत को हि तेजसा विक्रेष्यत इति येन हिरण्येन (३) सोमं क्रीणीयात् तदभीषहा पुनरा ददीत तेज एवाऽऽत्मन् धत्ते[६] ऽस्मे ज्योतिः सोमविक्रयिणि तम इत्याह ज्योतिरेव यजमाने दधाति तमसा सोमविक्रयिणमर्पयति[७] यदनुपग्रथ्य हन्याद्दन्दशूकास्ताꣳ समाꣳ सर्पाः स्युरिदमहꣳ सर्पाणां दन्दशूकानां ग्रीवा उप ग्रथ्नामीत्याहादन्दशूकास्ताꣳ समाꣳ सर्पा भवन्ति तमसा सोमविक्रयिणं विध्यति[८] स्वान (४) भ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन् तेभ्योऽधि सोममाऽहरन्[९] यदेतेभ्यः सोमक्रयणान्नानुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिँल्लोके सोमꣳ रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्यैतेऽस्यामुष्मिँल्लोके सोमꣳ रक्षन्ति[१०] ॥

(सशुक्रमेवा, व रुन्धे, येन हिरण्येन, स्वान, चतुश्चत्वारिꣳशच्च) ॥ १० ॥

क्रीतस्य सोमस्य शकटेन प्राचीनवंशं प्रतिनयनम् ॥ सोमऋषिः ।

वारुणो वै क्रीतः सोम उपनद्धो मित्रो न एहि सुमित्रधा इत्याह शान्त्या इन्द्रस्योरुमा विश दक्षिणमित्याह देवा वै यꣳ सोममक्रीणन् तमिन्द्रस्योरौ दक्षिण आऽसादयन्नेष खलु वा एतर्हीन्द्रो यो यजते

तस्मादेवमाहो[२]—दायुषा स्वायुषेत्याह देवता एवान्वारभ्योत् (१) तिष्ठत्यु[३]—र्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो ह्येतर्हि सोमो[४]ऽदित्याः सदोऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैतद्[५] वि वा एनमेतदर्धयति यद्वारुण सन्तं मैत्रं करोति वारुण्यर्चाऽऽसादयति स्वयैवैनं देवतया समर्धयति[६] वाससा पर्यानह्यति सर्वदेवत्यं वै वासः सर्वाभिरेवै-(२)-नं देवताभिः समर्धयत्यथो रक्षसामपहत्यै[७] वनेषु व्यन्तरिक्षं ततानेत्याह वनेषु हि व्यन्तरिक्षं ततान वाजमर्वत्स्वित्याह वाज ह्यर्वत्सु पयो अघ्नियास्वित्याह पयो ह्यघ्नियासु हृत्सु क्रतुमित्याह हृत्सु हि क्रतुं वरुणो विश्वग्निमित्याह वरुणो हि विश्वग्निं दिवि सूर्य-(३)-मित्याह दिवि हि सूर्य सोममद्राविवत्याह ग्रावाणो वा अद्रयस्तेषु वा एष सोमं दधाति यो यजते तस्मादेवमाहो[८]—दु त्यं जातवेदसमिति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति रक्षसामपहत्या उस्रावेतं धूर्षाहावित्याह यथायजुरेवैतत्[९] प्र च्यवस्व भुवस्पत इत्याह भूताना ह्येष-(४)-ष पतिर्विश्वान्यभि धामानीत्याह विश्वानि ह्येषोऽभि धामानि प्रच्यवते मा त्वा परिपरी विददित्याह यदेवादः सोममाह्रियमाणं गन्धर्वो विश्वावसुः पर्यमुष्णात् तस्मादेवमाहापरिमोषाय[११] यजमानस्य स्वस्त्ययन्यसीत्याह यजमानस्यैवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै[१२] वरुणो वा एष यजमानमभ्यैति यत् (५) क्रीतः सोम उपनद्धो नमो मित्रस्य वरुणस्य चक्षस इत्याह शान्त्या[१३] आ सोमं वहन्त्यग्निना प्रति तिष्ठते तौ सम्भवन्तौ यजमानमभि सं भवतः पुरा खलु वावैष मेधायाऽऽत्मानमारभ्य चरति यो दीक्षितो[१४] यदग्नीषोमीयं पशुमालभत आत्मनिष्क्रयण एवास्य स[१५] तस्मात् तस्य नाऽऽश्यं पुरुषनिष्क्रयण इव ह्य[१६]—थो खल्वाहु-(६)-रग्नीषोमाभ्यां वा इन्द्रो वृत्रमहन्निति यदग्नीषोमीयं पशुमालभते वार्त्रघ्न एवास्य स तस्माद्वार्यं[१७] वारुण्यर्चा परि चरति स्वयैवैनं देवतया परि चरति[१८] ॥ (अन्वारभ्योत्, सर्वाभिरेव, सूर्यं, भूताना ह्ये,– ति य,– दाहुः, सप्तविंशतिश्च ) ॥ ११ ॥

[ प्राचीनवंशं ४४८। यावन्त ३६५। ऋक्सामे ३९८। वा– ४३३।– ग्देवाः २५८। कद्रू– ३६०।– स्तत ४००। षड् २७४। ब्रह्मवादिनो ३३। य– २४४।– द्वारुण ३२७। एकादश ॥ ३८४०॥

[ ॥ इति षष्ठकाण्डे प्रथमः प्रपाठकः ॥११॥ ]

## सोममन्त्रब्राह्मणनिरूपणम् ।

[ अथ द्वितीयः प्रपाठकः ॥२॥ ]

आतिथ्येष्टिविधानम् ॥ सोमऋषिः ।

यदुभौ विमुच्याऽऽतिथ्यं गृह्णीयाद्यज्ञं वि च्छिन्द्याद्यदुभावविमुच्य यथाऽनागतायाऽऽतिथ्यं क्रियते तादृगेव तद्विमुक्तोऽन्योऽनड्वान् भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यं गृह्णाति यज्ञस्य सन्तत्यै[१] पत्न्यन्वारभते पत्नी हि पारीणह्यस्येशे पत्नियै वानुमतं निर्वपति यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्नियां एवै-(१)-ष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै[२] यावद्भिर्वै राजाऽनुचरैरागच्छति सर्वेभ्यो वै तेभ्य आतिथ्यं क्रियते छन्दांसि खलु वै सोमस्य राज्ञोऽनुचराण्यग्नेरातिथ्यमसि विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति

सोमस्याऽऽतिथ्यमसि विष्णवे त्वेत्याह त्रिष्टुभ एवैतेन करोत्यतिथेरातिथ्यमसि विष्णवे त्वेत्याह जगत्या (२) एवैतेन करोत्यग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वेत्याहानुष्टुभ एवैतेन करोति श्येनाय त्वा सोमभृते विष्णवे त्वेत्याह गायत्रिया एवैतेन करोति[3] पञ्च कृत्वो गृह्णाति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[4] ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्रिया उभयत आतिथ्यस्य क्रियत इति यदेवादः सोममा (३) ऽहरत् तस्माद्गायत्रिया उभयत आतिथ्यस्य क्रियते पुरस्ताच्चोपरिष्टाच्च[5] शिरो वा एतद्यज्ञस्य यदातिथ्यं नवकपालः पुरोडाशो भवति तस्मान्नवधा शिरो विष्यूतं[6] नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मितास्तेजस्त्रिवृत् तेज एव यज्ञस्य शीर्षन् दधाति[7] नवकपालः पुरोडाशो भवति ते त्रयस्त्रिकपालास्त्रिवृता प्राणेन सम्मितास्त्रिवृद्वै (४) प्राणस्त्रिवृतमेव प्राणमभिपूर्वं यज्ञस्य शीर्षन् दधाति[8] प्रजापतेर्वा एतानि पक्ष्माणि यदश्ववाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुः सं भरति[9] देवा वै या आहुतीरजुहवुस्ता असुरा निष्कावमादन् ते देवाः कार्ष्मर्यमपश्यन् कर्मण्यो वै कर्मैनेन कुर्वीतेति ते कार्ष्मर्यमयान् परिधी-(५)-नकुर्वत तैर्वै ते रक्षाꣳस्यपाघ्नत यत् कार्ष्मर्यमयाः परिधयो भवन्ति रक्षसामपहत्यै[10] सꣳ स्पर्शयति रक्षसामनन्ववचाराय[11] न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद्रक्षाꣳस्यपहन्त्यू[12]र्ध्वे समिधावा दधात्युपरिष्टादेव रक्षाꣳस्यप हन्ति[13] यजुषाऽन्यां तूष्णीमन्यां मिथुनत्वाय[14] द्वे आ दधाति द्विपाद्यजमानः प्रतिष्ठित्यै[15] ब्रह्मवादिनो वदन्त्य-(६)-ग्निश्च वा एतौ सोमश्च कथा सोमायाऽऽतिथ्यं क्रियते नाग्नय इति यदग्नावग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियते[16] ऽथो खल्वाहुरग्निः सर्वा देवता इति यद्धविरासाद्याग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयति[17] ॥ ( पत्निया एव, जगत्या, आ, त्रिवृद्वै, परिधीन्, वदन्त्ये,-कचत्वारिꣳशच्च ) ॥ १ ॥

तानूनप्त्रसंज्ञकस्याज्यस्य ग्रहणं, अवान्तरदीक्षा च ॥ सोमऋषिः ।

देवासुराः संयत्ता आसन् ते देवा मिथो विप्रिया आसन् तेऽन्योऽन्यस्मै ज्यैष्ठ्यायातिष्ठमानाः पञ्चधा व्यक्रामन्नग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैस्तेऽमन्यन्तासुरेभ्यो वा इदं भ्रातृव्येभ्यो रध्यामो यन्मिथो विप्रियाः स्मो या न इमाः प्रियास्तनुवस्ताः समवद्यामहै ताभ्यः स निरृच्छाद्यो (१) नः प्रथमोऽन्योऽन्यस्मै द्रुह्यादिति तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्च्छति[1] यत् तानूनप्त्रꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[2] पञ्च कृत्वोऽवद्यति पञ्चधा हि ते तत् समवाद्यन्ताथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[3] आपतये त्वा गृह्णामीत्याह प्राणो वा (२) आपतिः प्राणमेव प्रीणाति परिपतय इत्याह मनो वै परिपतिर्मन एव प्रीणाति तनूनप्त्र इत्याह तनुवो हि ते ताः समवाद्यन्त शाक्वरायेत्याह शक्त्यै हि ते ताः समवाद्यन्त शक्मन्नोजिष्ठायेत्याहौजिष्ठꣳ हि ते तदात्मनः समवाद्यन्ता-नाधृष्टमस्यनाधृष्यमित्याहानाधृष्टꣳ ह्येतदनाधृष्यं देवानामोज (३) इत्याह देवानाꣳ ह्येतदोजोऽभिशस्तिपा अनभिशस्तेन्यमित्याहाभिशस्तिपा

ह्यैतदनभिशस्तेन्यं—मनु मे दीक्षां दीक्षापतिर्मन्यतामित्याह यथायजुरेवैतद्[6] घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नन्तिकमिव खलु वा अस्यैतच्चरन्ति यत् तानूनप्त्रेण प्रचरन्त्यँ[7]ꣳ—शुरꣳशुस्ते देव सोमाऽऽप्या-यतामित्याह य-( ४ )-देवास्यापुवायते यन्मीयते तदेवास्यैतेनाऽऽप्याययत्या तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वेत्याहोभावेवेन्द्रं च सोमं चाऽऽप्याययत्या प्यायय सखीन्त्सन्या मेधयेत्याहर्त्विजो वा अस्य सखायस्तानेवाऽऽप्याययति स्वस्ति ते देव सोम सुत्यामशीये-( ५ )-त्याहाऽऽशिषमेवैतामा शास्ते प्र वा एतेऽस्माल्लोकाच्च्यवन्ते ये सोममाप्याययन्त्यन्तरिक्षदेवत्यो हि सोम आप्यायित एष्टा रायः प्रेषे भगायेत्याह द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रति तिष्ठन्ति[8] देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति ते ( ६ )ऽग्निमेव वरूथं कृत्वाऽसुरानभ्यभवन्नग्निमिव खलु वा एष प्र विशति योऽवान्तरदीक्षामुपैति भ्रातृव्याभिभूत्यै भवत्यात्मना पराऽस्य भ्रातृव्यो भवत्यां— त्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया[11] सन्तरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयते निर्ह्यग्निः शीतेन वायति समिद्ध्यै[12] या ते अग्ने ( ७ ) रुद्रिया तनूरित्याह स्वयैवैनं देवतया व्रतयति सयोनित्वाय शान्त्यै[13] ॥ ( यो, वा, ओजं, आहु य, दशीये,-ति ते, ऽग्न, एकादश च ) ॥ २ ॥

उपसद्धोमविधानम् ॥ सोमऋषिः ।

तेषामसुराणां तिस्रः पुर आसन्नयस्मय्यवमाऽथ रजताऽथ हरिणी ता देवा जेतुं नाशक्नुवन् ता उपसदैवाजिगीषन् तस्मादाहुर्यश्चैवं वेद यश्च नोपसदा वै महापुरं जयन्तीति त इषुꣳ समस्कुर्वताग्निमनीकꣳ सोमꣳ शल्यं विष्णुं तेजनं तेऽब्रुवन् क इमामसिष्यतीति ( १ ) रुद्र इत्यब्रुवन् रुद्रो वै क्रूरः सोऽस्यत्विति सोऽब्रवीद्वरं वृणा अहमेव पशूनामधिपतिरसानीति तस्माद्रुद्रः पशूनामधिपतिस्ताꣳ रुद्रोऽवासृजत् स तिस्रः पुरो भित्त्वैभ्यो लोकेभ्योऽसुरान् प्राणुदत[1] यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै[2] नान्यामाहुतिं पुरस्ताज्जुहुयाद्यदन्यामाहुतिं पुरस्ताज्जुहुया-( २ )-दन्यन्मुखं कुर्यात्[3] स्रुवेणाऽऽघारमा घारयति यज्ञस्य प्रज्ञात्यै[4] पराङतिक्रम्य जुहोति पराच एवैभ्यो लोकेभ्यो यजमानो भ्रातृव्यान् प्र णुदते[5] पुनरत्याक्रम्योपसदं जुहोति प्रणुद्यैवैभ्यो लोकेभ्यो भ्रातृव्याञ्जित्वा भ्रातृव्यलोकमभ्यारोहति[6] देवा वै याः प्रातरुपसद उपासीदन्नह्नस्ताभिरसुरान् प्राणुदन्त याः सायꣳ रात्रियै ताभिर्यत् सायं प्रातरुपसदं ( ३ ) उपसद्यन्तेऽहोरात्राभ्यामेव तद्यजमानो भ्रातृव्यान् प्र णुदते[7] याः प्रातर्याज्याः स्युस्ताः सायं पुरोऽनुवाक्याः कुर्यादयातयामत्वाय[8] तिस्र उपसद उपैति त्रय इमे लोका इमानेव लोकान् प्रीणाति[9] षट् सं पद्यन्ते षड्वा ऋतवं ऋतूनेव प्रीणाति[10] द्वादशाहीने सोम उपैति द्वादश मासाः संवत्सरः संवत्सरमेव प्रीणाति[11] चतुर्विꣳशतिः सं ( ४ ) पद्यन्ते चतुर्विꣳशतिरर्धमासा अर्धमासानेव प्रीणात्यां—राग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन् मे लोकेऽर्धुकꣳ स्यादित्येकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्राऽवान्तरदीक्षाऽस्मिन्नेवास्मै लोकेऽर्धुकं भवति[13] परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन् मे लोकेऽर्धुकꣳ स्यादिति चतुरोऽग्रे ( ५ )ऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्नेवास्मै लोकेऽर्धुकं भवति[14] ॥ ( असिष्यतीति, जुहुयात् , सायंप्रातरुपसद,- श्चतुर्विꣳशतिः सं, चतुरोऽग्रे, षोडश च ) ॥ ३ ॥

सौमिकया वेद्यभिधानम् ॥ सोमऋषिः ।

सुवर्गं वा एते लोकं यन्ति य उपसदं उपयन्ति तेषां य उन्नयते हीयत एव स नोदनेषीति सून्नीयमिवं यो वै स्वार्थेतां यताꣳ श्रान्तो हीयत उत स निष्यायं सह वसति तस्मात् सकृदुन्नीय नापरमुन्नयेत दध्नोन्नयेतैतद्वै पशूनाꣳ रूपꣳ रूपेणैव पशूनवं रुन्धे (१) यज्ञो देवेभ्यो निलायत विष्णू रूपं कृत्वा स पृथिवीं प्राविशत् तं देवा हस्तान्त्सꣳ रभ्यैच्छन् तमिन्द्र उपर्युपर्यत्यक्रामत् सोऽब्रवीत् को माऽयमुपर्युपर्यत्यक्रमीदित्यहं दुर्गे हन्तेत्यथ कस्त्वमित्यहं दुर्गादाहर्तेति सोऽब्रवीद् दुर्गे वै हन्ताऽवोचथा वराहोऽयं वाममोषः (२) सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्ति तं जहि यदि दुर्गे हन्ताऽसीति स दर्भपुञ्जीलमुद्वृह्य सप्त गिरीन् भित्त्वा तमहन्त्सोऽब्रवीद् दुर्गाद्वा आहर्ताऽवोचथा एतमा हरेति तमेभ्यो यज्ञ एव यज्ञमाऽहरद्यत् तद्वित्तं वेद्यमसुराणामविन्दन्त तदेकं वेद्यै वेदित्वं—मसुराणां (३) वा इयमग्र आसीद्यावदासीनः परापश्यति तावद्देवानां ते देवा अब्रुवन्नस्त्वेव नोऽस्यामपीति कियद्वो दास्याम इति यावदियꣳ सलावृकी त्रिः परिक्रामति तावन्नो दत्तेति स इन्द्रः सलावृकी रूपं कृत्वेमां त्रिः सर्वतः पर्यक्रामत् तदिमामविन्दन्त यदिमामविन्दन्त तद्वेद्यै वेदित्वꣳ (४) सा वा इयꣳ सर्वैव वेदिरियति शक्ष्यामीति त्वा अवमाय यजन्ते त्रिꣳशत् पदानि पश्चात् तिरश्ची भवति षट्त्रिꣳशत् प्राची चतुर्विꣳशतिः पुरस्तात् तिरश्ची दशदश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धं उद्धन्ति यदेवास्या अमेध्यं तदप हन्त्यु—द्धन्ति तस्मादोषधयः परा भवन्ति (५) बर्हिः स्तृणाति तस्मादोषधयः पुनरा भवन्त्यु—त्तरं बर्हिष उत्तरबर्हिः स्तृणाति प्रजा वै बर्हिर्यजमान उत्तरबर्हिर्यजमानमेवायजमानादुत्तरं करोति तस्माद्यजमानोऽयजमानादुत्तरः ॥ ( रुन्धे, वाममोषो, वेदित्वमसुराणां, वेदित्वं, भवन्ति, पञ्चविꣳशतिश्च ) ॥ ४ ॥

दीक्षितस्य व्रतनिर्णयः ॥ सोमऋषिः ।

यद्वा अनीशानो भारमादत्ते वि वै स लिशते यद् द्वादश साह्नस्योपसदः स्युस्तिस्रोऽहीनस्य यज्ञस्य विलोम क्रियेत तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य यज्ञस्य सवीर्यत्वायाथो सलोम क्रियते वत्सस्यैकः स्तनो भागी हि सोऽथैकꣳ स्तनं व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर एतद्वै (१) क्षुरपवि नाम व्रतं येन प्र जातान् भ्रातृव्यान् नुदते प्रति जनिष्यमाणानथो कनीयसैव भूय उपैति चतुरोऽग्रे स्तनान् व्रतमुपैत्यथ त्रीनथ द्वावथैकमेतद्वै सुजघनं नाम व्रतं तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभि—र्यवागू राजन्यस्य व्रतं क्रूरेव वै यवागूः क्रूर इव (२) राजन्यो वज्रस्य रूपꣳ समृद्ध्या आमिक्षा वैश्यस्य पाकयज्ञस्य रूपं पुष्ट्यै पयो ब्राह्मणस्य तेजो वै ब्राह्मणस्तेजः पयस्तेजसैव तेजः पय आत्मन् धत्तेऽथो पयसा वै गर्भा वर्धन्ते गर्भ इव खलु वा एष यद्दीक्षितो यदस्य पयो व्रतं भवत्यात्मानमेव तद्वर्धयति त्रिव्रतो वै मनुरासीद् द्विव्रता असुरा एकव्रता (३) देवाः प्रातर्मध्यन्दिने सायं तन्मनोर्व्रतमासीत् पाकयज्ञस्य रूपं पुष्ट्यै प्रातश्च सायं चासुराणां निर्मध्यं क्षुधो रूपं ततस्ते पराऽभवन् मध्यन्दिने मध्यरात्रे देवानां ततस्तेऽभवन्त्सुवर्गं लोकमायन् यदस्य मध्यन्दिने मध्यरात्रे व्रतं भवति मध्यतो वा अन्नेन

भुञ्जते मध्यत एव तदूर्जं धत्ते भ्रातृव्याभिभूत्यै भवत्यात्मना (४) पराऽस्य भ्रातृव्यो भवति[७] गर्भो वा एष यदीक्षितो योनिर्दीक्षितविमितं यदीक्षितो दीक्षितविमितात् प्रवसेद्यथा योनेर्गर्भः स्कन्दति तादृगेव तन्न प्रवस्तव्यमात्मनो गोपीथाय[८]—ष वै व्याघ्रः कुलगोपो यदग्निस्तस्माद्यद्दीक्षितः प्रवसेत् स एनमीश्वरो-ऽनूत्थाय हन्तोर्न प्रवस्तव्यमात्मनो गुप्त्यै[९] दक्षिणतः शय एतद्वै यजमानस्या-(५)-ऽऽयतनꣳ स्व एवाऽऽयतने शये[१०] ऽग्निमभ्यावृत्य शये देवता एव यज्ञमभ्यावृत्य शये[११] ॥ (एतद्वै,- क्रूर इवै,- कं व्रता, आत्मना, यजमानस्य, त्रयोदश च) ॥ ५ ॥

यागार्थं काम्या भूमयः ॥ सोमऋषिः ।

पुरोहविषि देवयजने याजयेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जये[१]—दित्येतद्वै पुरोहविर्देवयजनं यस्य होता प्रातरनुवाकमनुब्रुवन्नग्निमप आदित्यमभि विपश्यत्यु[२]—पैनमुत्तरो यज्ञो नमत्यभि सुवर्गं लोकं जयत्या[३]—प्ते देवयजने याजयेद्भ्रातृव्यवन्तं[४] पन्थां वाऽधिस्पर्शयेत् कर्तं वा यावन्नानसे यातवै (१) न रथायैतद्वा आप्तं देवयजनं[५]—माप्नोत्येव भ्रातृव्यं नैनं भ्रातृव्य आप्नोत्ये[६]—कोन्नते देवयजने याजयेत् पशुकामं[७]—मेकोन्नताद्वै देवयजनादाङ्गिरसः पशूनसृजन्ता[८]—न्तरा सदोहविर्धाने उन्नतꣳ स्यादेतद्वा एकोन्नतं देवयजनं[९] पशुमानेव भवति[१०] त्र्युन्नते देवयजने याजयेत् सुवर्गकामं[११] त्र्युन्नताद्वै देवयजनादङ्गिरसः सुवर्गं लोकमा[१२]—यन्नन्तराऽऽहवनीयं च हविर्धानं चो-(२)-न्नतꣳ स्यादन्तरा हविर्धानं च सदश्चान्तरा सदश्च गार्हपत्यं चैतद्वै त्र्युन्नतं देवयजनꣳ[१३] सुवर्गमेव लोकमेति[१४] प्रतिष्ठिते देवयजने याजयेत् प्रतिष्ठाकामं[१५]—मेतद्वै प्रतिष्ठितं देवयजनं यत् सर्वतः समं[१६] प्रत्येव तिष्ठति[१७] यत्रान्यान्या ओषधयो व्यतिषक्ताः स्युस्तद्याजयेत् पशुकामं—मेतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशू-(३)-नव रुन्धे[१९] पशुमानेव भवति[२०] निर्ऋतिगृहीते देवयजने याजयेद्यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमिति[२१]—तद्वै निर्ऋतिगृहीतं देवयजनं यत् सदृश्यै सत्या ऋक्षं[२२] निर्ऋत्यैवास्य यज्ञं ग्राहयति[२३] व्यावृत्ते देवयजने याजयेद्व्यावृत्कामं यं पात्रे वा तल्पे वा मीमाꣳसेरन्[२४] प्राचीनमाहवनीयात् प्रवणꣳ स्यात् प्रतीचीनं गार्हपत्यादेतद्वै व्यावृत्तं देवयजनं[२५] वि पाप्मना (४) भ्रातृव्येणाऽऽवर्तते नैनं पात्रे न तल्पे मीमाꣳसन्ते[२६] कार्ये देवयजने याजयेद्भूतिकामं[२७] कार्यो वै पुरुषो[२८] भवत्येव[२९] ॥ (यातवै, हविर्धानं च, पशून्, पाप्मना, ष्टादश च) ॥ ६ ॥

उत्तरवेदिनिर्माणम् ॥ सोमऋषिः ।

तेभ्य उत्तरवेदिः सिꣳही रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठत् ते देवा अमन्यन्त यतरान् वा इयमुपावर्त्स्यति त इदं भविष्यन्तीति तामुपामन्त्रयन्त साऽब्रवीद्वरं वृणै सर्वान् मया कामान् व्यश्नवथ पूर्वां तु माऽग्नेराहुतिरश्नवता इति तस्मादुत्तरवेदिं पूर्वामग्नेर्व्याघारयन्ति वारेवृतꣳ ह्यस्यै[१] शम्यया परि मिमीते (१) मात्रैवास्यै साऽथो युक्तेनैव युक्तमव रुन्धे[२] वित्तायनी मेऽसीत्याह वित्ता ह्येनानावत् तिक्तायनी मेऽसीत्याह तिक्तान् ह्येनानावदवतान्मा नाथितमित्याह नाथितान् ह्येनानावदवतान्मा व्यथितमित्याह व्यथितान् ह्येनानाव[३]—द्विदेरग्निर्नभो नामा—(२)—ग्ने अङ्गिर इति त्रिर्हरति य एवैषु लोकेष्वग्न-

यस्तानेवाव रुन्धे तूष्णीं चतुर्थꣳ हरत्यनिरुक्तमेवाव रुन्धे[4] सिꣳहीरसि महिषीरसीत्याह सिꣳहीह्येषा रूपं कृत्वोभयानन्तराऽपक्रम्यातिष्ठ—दुरु प्रथस्वोरु ते यज्ञपतिः प्रथतामित्याह यजमानमेव प्रजया पशुभिः प्रथयति ध्रुवा ( ३ ) ऽसीति सꣳ हन्ति धृत्यै देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्वेत्यव चोक्षति प्र च किरति शुद्ध्यै[8] इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पात्वित्याह दिग्भ्य एवैनां प्रोक्षति[9] देवाꣳश्चेदुत्तरवेदिरुपावर्तीहैव वि जयामहा इत्यसुरा वज्रमुद्यत्य देवानभ्यायन्त तानिन्द्रघोषो वसुभिः पुरस्तादपा-( ४ )-नुदत मनोजवाः पितृभिर्दक्षिणतः प्रचेता रुद्रैः पश्चाद्विश्वकर्माऽऽदित्यैरुत्तरतो यदेवमुत्तरवेदिं प्रोक्षति दिग्भ्य एव तद्यजमानो भ्रातृव्यान् प्र णुदते इन्द्रो यतीन्त्सालावृकेभ्यः प्रायच्छत् तान् दक्षिणत उत्तरवेद्या आदन् यत् प्रोक्षणीनामुच्छिष्येत तद्दक्षिणत उत्तरवेद्यै नि नयेद्यदेव तत्र क्रूरं तत् तेन शमयति[10] यं द्विष्यात् तं ध्यायेच्छुचै -( ५ )- वैनमर्पयति[11] ॥ ( मिमीते, नाम, ध्रुवा, ऽपं, शुचा, त्रीणि च ) ॥ ७ ॥

व्याघारणं सम्भारस्थापनं च ॥ सोमऋषिः ।

सोत्तरवेदिरब्रवीत् सर्वान् मया कामान् व्यश्नवथेति ते देवा अकामयन्तासुरान् भ्रातृव्यानभि भवेमेति तेऽजुहवुः सिꣳहीरसि सपत्नसाही स्वाहेति तेऽसुरान् भ्रातृव्यानभ्यभवन् तेऽसुरान् भ्रातृव्यानभिभूया-कामयन्त प्रजां विन्देमहीति तेऽजुहवुः सिꣳहीरसि सुप्रजावनिः स्वाहेति ते प्रजामविन्दन्त ते प्रजां वित्त्वा ( १ ) ऽकामयन्त पशून् विन्देमहीति तेऽजुहवुः सिꣳहीरसि रायस्पोषवनिः स्वाहेति ते पशून् विन्दन्त ते पशून् वित्त्वाऽकामयन्त प्रतिष्ठां विन्देमहीति तेऽजुहवुः सिꣳहीरस्यादित्यवनिः स्वाहेति त इमां प्रतिष्ठामविन्दन्त त इमां प्रतिष्ठां वित्त्वाऽकामयन्त देवता आशिष उपेयामेति तेऽजुहवुः सिꣳहीरस्या वह देवान् देवयते ( २ ) यजमानाय स्वाहेति ते देवता आशिष उपाऽऽयन् पञ्च कृत्वो व्याघारयति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[2] ऽक्ष्णया व्याघारयति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[3] भूतेभ्यस्त्वेति स्रुचमुद्गृह्णाति य एव देवा भूतास्तेषां तद्भागधेयं तानेव तेन प्रीणाति[4] पौतुद्रवान् परिधीन् परि दधात्येषां ( ३ ) लोकानां विधृत्यै अग्नेस्त्रयो ज्यायाꣳसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त सोऽग्निरबिभेदित्थं वाव स्य आर्तिमाऽरिष्यतीति स निलायत स यां वनस्पतिष्ववसत्तां पूतुद्रौ यामोषधीषु ताꣳ सुगन्धितेजने यां पशुषु तां पेत्वस्यान्तरा शृङ्गे तं देवताः प्रैषमैच्छन् तमन्वविन्दन् तमब्रुव-( ४ )-न्नुप न आ वर्तस्व हव्यं नो वहेति सोऽब्रवीद्वरं वृणै यदेव गृहीतस्याहुतस्य बहिःपरिधि स्कन्दात् तन्मे भ्रातृणां भागधेयमसदिति तस्माद्यद्गृहीतस्याहुतस्य बहिःपरिधि स्कन्दति तेषां तद्भागधेयं तानेव तेन प्रीणाति सोऽमन्यतास्थन्वन्तो मे पूर्वे भ्रातरः प्रामेषतास्थानि शातया इति स यान्य-( ५ )-स्थान्यशातयत तत् पूतुद्र्वभवद्यन्माꣳसमुपमृतं तद्गुल्गुलु यदेतान्त्संभारान्त्संभरत्यग्निमेव तत् सं भरत्यग्नेः पुरीषमसीत्याहाग्नेर्ह्येतत् पुरीषं यत् संभारा अथो खल्वाहुरेते वावैनं ते भ्रातरः परि शेरे यत् पौतुद्रवाः परिधय इति[5] ॥ ( वित्त्वा, देवयत, एषा,- मब्रुवन्, यानि, चतुश्चत्वारिꣳशच्च ) ॥ ८ ॥

हविर्धानाख्य शकटे अन्तर्भाव्यहविर्धानमण्डपनिर्माणम् ॥ सोमऋषिः ।

बद्धमव स्यति वरुणपाशादेवैनं मुञ्चति प्र णेनेक्ति मेध्यं एवैनं करोति[1] सावित्रियर्चा हुत्वा हविर्धाने प्र वर्तयति सवितृप्रसूत एवैने प्र वर्तयति[2] वरुणो वा एष दुर्वागुभयतो बद्धो यदक्षः स यदुत्सर्जेद्यजमानस्य गृहानभ्युत्सर्जेत् सुवाग्देव दुर्या॑ँ आ वदेत्याह गृहा वै दुर्याः शान्त्यै[3] पत्न्यु-( १ )-पानक्ति पत्नी हि सर्वस्य मित्रं मित्रत्वाय यद्वै पत्नी यज्ञस्य करोति मिथुनं तदथो पत्निया एवैष यज्ञस्यान्वारम्भोऽनवच्छित्त्यै[4] वर्त्मना वा अन्वित्य यज्ञ॑ँ रक्षा॑ँसि जिघा॑ँसन्ति वैष्णवीभ्यामृग्भ्यां वर्त्मनोर्जुहोति यज्ञो वै विष्णुर्यज्ञादेव रक्षा॑ँस्यप हन्ति यदध्वर्युरनग्नावाहुतिं जुहुयादन्धोऽध्वर्युः स्याद्रक्षा॑ँसि यज्ञ॑ँ हन्यु-( २ )-र्हिरण्यमुपास्य जुहोत्यग्निवत्येव जुहोति नान्धोऽध्वर्युर्भवति न यज्ञ॑ँ रक्षा॑ँसि घ्नन्ति[6] प्राची प्रेतमध्वरं कल्पयन्ती इत्याह सुवर्गमेवैनं लोकं गमयत्य[7]—त्र रमेथां वर्ष्मन् पृथिव्या इत्याह वर्ष्म ह्येतत् पृथिव्या यद्देवयजन॑ँ[8] शिरो वा एतद्यज्ञस्य यद्धविर्धानं दिवो वा विष्णवुत वा पृथिव्या ( ३ ) इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य मेथीं नि हन्ति शीर्षत एव यज्ञस्य यजमान आशिषोऽव रुन्धे[9] दण्डो वा औपरस्तृतीयस्य हविर्धानस्य वषट्कारेणाक्षमच्छिनद्यत्तृतीयं छदिर्हविर्धानयोरुदाह्रियते तृतीयस्य हविर्धानस्यावरुद्ध्यै[10] शिरो वा एतद्यज्ञस्य यद्धविर्धानं विष्णो रराटमसि विष्णोः पृष्ठमसीत्याह तस्मादेतावद्धा शिरो विष्यूतं[11] विष्णोः ( ४ ) स्यूरसि विष्णोर्ध्रुवमसीत्याह वैष्णव॑ँ हि देवतया हविर्धानं[12] यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत् तं न विस्र॑ँसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात् स विस्रस्यः[13] ॥ ( पत्नीं, हन्यु,-र्वा पृथिव्या, विष्यूतं विष्णोः, षड्वि॑ँशतिश्च ) ॥ ९ ॥

सदो निर्माणम् ॥ सोमऋषिः ।

देवस्य त्वा सवितुः प्रसव इत्यभ्रिमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै[1] वज्र इव वा एषा यदभ्रिरभ्रिरसि नारिरसीत्याह शान्त्यै[2] काण्डेकाण्डे वै क्रियमाणे यज्ञ॑ँ रक्षा॑ँसि जिघा॑ँसन्ति परिलिखित॑ँ रक्षः परिलिखिता अरातय इत्याह रक्षसामपहत्या ( १ ) इदमह॑ँ रक्षसो ग्रीवा अपि कृन्तामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ यं चैव द्वेष्टि यश्चैनं द्वेष्टि तयोरेवानन्तरायं ग्रीवाः कृन्तति[3] दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्याहैभ्य एवैनां लोकेभ्यः प्रोक्षति[4] परस्तादर्वाचीं प्रोक्षति तस्मात् ( २ ) परस्तादर्वाचीं मनुष्या ऊर्जमुप जीवन्ति[5] क्रूरमिव वा एतत् करोति यत् खनत्यपोऽव नयति शान्त्यै[6] यवमतीरव नयत्यूर्ग्वै यव ऊर्गुदुम्बर ऊर्जैवोर्ज॑ँ समर्धयति[7] यजमानेन सम्मितौदुम्बरी भवति यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति[8] पितृणा॑ँ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्य१ ( ३ ) ॅह्येतद्यन्निखातं[9] यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्या निखाता स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनां मिनोत्यथो स्वारुहमेवैनां करोत्युं—दिव॑ँ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै[11] द्युतानस्त्वा मारुतो मिनोत्वित्याह द्युतानो ह स्म वै मारुतो देवानामौदुम्बरीं मिनोति तेनैवै-( ४ )-नां मिनोति[12] ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवै[13]—तद्घृतेन द्यावापृथिवी आ पृणेथामित्यौदुम्बर्यां जुहोति द्यावापृथिवी एव रसे-

नानक्त्यै—न्तमन्ववस्रावयत्यान्तमेव यजमानं तेजसाऽनक्त्यै[१५]—न्द्रमसीति छदिरधि नि दधात्यैन्द्र९ हि देवतया सदो विश्वजनस्य छायेत्याह विश्वजनस्य ह्येषा छाया यत् सदो[१६] नवछदि (५) तेजस्कामस्य मिनुयात् त्रिवृता स्तोमेन संमितं तेजस्त्रिवृत् तेजस्व्येव भवत्येकादशछदीन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशछदि भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशछदि प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या एकविꣳशतिछदि प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्यै[१७] उदरं वै सद ऊर्गुदुम्बरो मध्यत औदुम्बरीं मिनोति मध्यत एव प्रजानामूर्जं दधाति तस्मान् (६) मध्यत ऊर्जा भुञ्जते[१८] यजमानलोके वै दक्षिणानि छदीꣳषि भ्रातृव्यलोक उत्तराणि दक्षिणान्युत्तराणि करोति यजमानमेवायजमानादुत्तरं करोति तस्मायजमानोऽयजमानादुत्तरो[१९] ऽन्तर्वर्तान् करोति व्यावृत्त्यै तस्मादरण्यं प्रजा उप जीवन्ति[२०] परि त्वा गिर्वणो गिर इत्याह यथायजुरेवैत[२१]—दिन्द्रस्य स्यूरसीन्द्रस्य ध्रुवमसीत्याहैन्द्र९ हि देवतया सदो[२२] (७) यं प्रथमं ग्रन्थिं ग्रथ्नीयायत् तं न विस्रꣳसयेदमेहेनाध्वर्युः प्र मीयेत तस्मात् स विस्रस्यः[२३] ॥ (अपहत्यै, तस्मात्, पितृदेवत्यं, तेनैव, नवछदि, तस्मात्, सदः, पञ्चदश च) ॥ १० ॥

हविर्धाने चतुर्णामुपरवाणां निर्माणम् ॥ सोमऋषिः ।

शिरो वा एतद्यज्ञस्य यद्धविर्धानं प्राणा उपरवा हविर्धाने खायन्ते तस्माच्छीर्षन् प्राणा[१] अधस्तात् खायन्ते तस्मादधस्ताच्छीर्ष्णः प्राणा[२] रक्षोहणो वलगहनो वैष्णवान् खनामीत्याह वैष्णवा हि देवतयोपरवा[३] असुरा वै निर्यन्तो देवानां प्राणेषु वलगान् न्यखनन् तान् बाहुमात्रेऽन्वविन्दन् तस्माद्बाहुमात्राः खायन्ते[४] इदमहं तं वलगमुद्वपामि (१) यं नः समानो यमसमानो निचखानेत्याह द्वौ वाव पुरुषौ यश्चैव समानो यश्चासमानो यमेवास्मै तौ वलगं निखनतस्तमेवोद्वपति[५] संतृणत्ति तस्मात् संतृण्णा अन्तरतः प्राणा[६] न सं भिनत्ति तस्मादसंभिन्नाः प्राणा[७] अपोऽव नयति तस्मादार्द्रा अन्तरतः प्राणा यवमतीरव नयत्यू-(२)-र्ग्वै यवः प्राणा उपरवाः प्राणेष्वेवोर्जं दधाति[८] बर्हिरव स्तृणाति तस्माल्लोमशा अन्तरतः प्राणा[१०] आज्येन व्याघारयति तेजो वा आज्यं प्राणा उपरवाः प्राणेष्वेव तेजो दधाति[११] हनू वा एते यज्ञस्य यदधिषवणे न सं तृणत्त्यसंतृण्णे हि हनू[१२] अथो खलु दीर्घसोमे संतृद्ये धृत्यै[१३] शिरो वा एतद्यज्ञस्य यद्धविर्धानं (३) प्राणा उपरवा हनू अधिषवणे जिह्वा चर्म ग्रावाणो दन्ता मुखमाहवनीयो नासिकोत्तरवेदिरुदर९ सदो यदा खलु वै जिह्वया दत्स्वधि खादत्यथ मुखं गच्छति यदा मुखं गच्छत्यथोदरं गच्छति तस्माद्धविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्ति[१४] यो वै विराजो यज्ञमुखे दोहं वेद दुह एवै-(४)-नामियं वै विराट् तस्यै त्वक् चर्मोधोऽधिषवणे स्तना उपरवा ग्रावाणो वत्सा ऋत्विजो दुहन्ति सोमः पयो य एवं वेद दुह एवैनाम्[१५] (वपामि, यवमतीरव नयति, हविर्धानं,- मेव, त्रयोविꣳशतिश्च) ॥ ११ ॥

[ य- ३४१। - देवासुरा- ३६१। - स्तेषा९ २६६। सुवर्गं २७५। यत् २६३। पुरोहविषि २१८। तेभ्यः २५३। सा २९४। बद्धं २२६। देवस्य ३६५। शिर २२३। एकादश ॥ ३०८५ ]

[ ॥ इति षष्ठकाण्डे द्वितीयः प्रपाठकः ॥२॥ ]

## सोममन्त्रब्राह्मणनिरूपणम् ।

[ अथ तृतीयः प्रपाठकः ॥३॥ ]

आग्नीध्रीयसदः प्रभृतिस्थानेषु धिष्णियाख्यस्थलविशेषनिर्माणम् ॥ सोमऋषिः ।

चात्वालाद्धिष्णियानुप वपति योनिर्वै यज्ञस्य चात्वालं यज्ञस्य सयोनित्वाय[१] देवा वै यज्ञं परा-ऽजयन्त तमाग्नीध्रात् पुनरपाजयन्नेतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदाग्नीध्राद्धिष्णियान् विहरति यदेव यज्ञस्यापराजितं तत एवैनं पुनस्तनुते[२] पराजित्येव खलु वा एते यन्ति ये बहिष्पवमानꣳ सर्पन्ति बहिष्पवमाने स्तुत (१) आहाग्नीदग्नीन् वि हर बर्हिः स्तृणाहि पुरोडाशाꣳ अलं कुर्विति यज्ञमेवापजित्य पुनस्तन्वाना यन्त्य[३]—ङ्गारैर्द्वे सवने वि हरति शलाकाभिस्तृतीयꣳ सशुक्रत्वायाथो सं भरत्येवैन[४]—द्धिष्णिया वा अमुष्मिँल्लोके सोममरक्षन् तेभ्योऽधि सोममाऽहरन् तमन्ववायन् तं पर्यविशन्[५] य एवं वेद विन्दते (२) परिवेष्टारं[६] ते सोमपीथेन व्यार्ध्यन्त ते देवेषु सोमपीथमैच्छन्त तान् देवा अब्रुवन् द्वेद्वे नामनी कुरुध्वमथ प्र वाऽऽप्स्यथ न वेत्यग्नयो वा अथ धिष्णियास्तस्माद् द्विनामा ब्राह्मणोऽर्धुकस्तेषां ये नेदिष्ठं पर्यविशन् ते सोमपीथं प्राऽऽप्नुवन्नाहवनीय आग्नीध्रीयो होत्रीयो मार्जालीयस्तस्मात् तेषु जुह्वत्य-तिहाय वषट् करोति वि हि (३)—ते सोमपीथेनाऽऽर्ध्यन्त देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्ताद-सुरा आसन् ताꣳस्ताभिः प्राणुदन्त याः प्रतीचीर्ये पश्चादसुरा आसन् ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यङ्ङासीनो धिष्णियान् व्याघारयति पश्चाच्चैव पुरस्ताच्च यजमानो भ्रातृव्यान् प्र णुदते तस्मात् पराचीः प्रजाः प्र वीयन्ते प्रतीचीः (४)—र्जायन्ते[९] प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ् धिष्णियानतिसर्पेत् प्राणान्त्सं कर्षेत् प्रमायुकः स्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वः खलु वै नाभ्यै प्राणो-ऽवाङ्पानो यदध्वर्युः प्रत्यङ् होतारमतिसर्पेदपाने प्राणं दध्यात् प्रमायुकः स्या[१०]—न्नाध्वर्युरुप गायेद्वाग्वीर्यो वा अध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे (५) वाचꣳ सं प्र यच्छेदुपदासुकाऽस्य वाक् स्या[११]—द्ब्रह्मवादिनो वदन्ति नासꣳस्थिते सोमेऽध्वर्युः प्रत्यङ् सदोऽतीयादथ कथा दाक्षिणानि होतुमेति[१२] यामो हि स तेषां[१३] कस्मा अह देवा यामं वाऽयामं वाऽनु ज्ञास्यन्तीत्यु[१४]—त्तरेणाऽऽग्नीध्रं परीत्य जुहोति दाक्षिणानि न प्राणा-न्त्सं कर्षति[१५] न्यन्ये धिष्णिया उप्यन्ते (६) नान्ये यान् निवपति तेन तान् प्रीणाति[१६] यान् न-निवपति यदनुदिशति तेन तान्[१७] ॥ ( स्तुते, विन्दते, हि, प्रतीचीः,- रुद्गात्र, उप्यन्ते, चतुर्दश च ) ॥ १ ॥

वैसर्जनहोमः, अग्नीषोमयोराग्नीध्रीये हविर्धाने च प्रणयनम् ॥ सोमऋषिः ।

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्जनानि[१] द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रति-ष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमत आहवनीये जुहोति सुवर्गमेवैनं लोकं गमयति[२] देवान् वै सुवर्गं लोकं यतो रक्षाꣳस्यजिघाꣳसन्ते सोमेन राज्ञा रक्षाꣳस्यपहत्याप्तुमात्मानं कृत्वा सुवर्गं लोकमायन् रक्षसामनुपलाभायाऽऽत्तः सोमो भवत्यथ (१) वैसर्जनानि जुहोति रक्षसामपहत्यै[३] त्वꣳ सोम तनू-कृद्भ्य इत्याह तनूकृद्ध्येषं द्वेषोभ्योऽन्यकृतेभ्य इत्याहान्यकृतानि हि रक्षाꣳस्यु—रु यन्तासि वरूथमि-त्याहोरु णस्कृधीति वा वैतदाह जुषाणो अप्तुराज्यस्य वेत्वित्याहाप्तुमेव यजमानं कृत्वा सुवर्गं लोकं

गमयति रक्षसामनुपलाभायाऽऽ सोमं ददत (२) आ ग्राव्ण आ वायव्यान्या द्रोणकलशमुत् पत्नीमा नयन्त्यन्वनाꣳसि प्र वर्तयन्ति यावदेवास्यास्ति तेन सह सुवर्गं लोकमेति[8] नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै[9] ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उप वासयति[10] वि ह्येनं तैर्गृह्णते यत् सहोपवासयेदपवायेत[11] सौम्यर्चा प्र पादयति स्वया-(३)-वैनं देवतया प्र पादयत्य[12]—दित्याः सदो-ऽस्यदित्याः सद आ सीदेत्याह यथायजुरेवैत[13]—द्यजमानो वा एतस्य पुरा गोप्ता भवत्येष वो देव सवितः सोम इत्याह सवितृप्रसूत एवैनं देवताभ्यः सं प्र यच्छत्ये[14]—तत् त्वꣳ सोम देवो देवानुपागा इत्याह देवो ह्येष सन् (४) देवानुपैतीदमहं मनुष्यो मनुष्यानित्याह मनुष्यो१ ह्येष सन् मनुष्यानुपैति यदेतद्यजुर्न ब्रूयादप्रजा अपशुर्यजमानः स्यात् सह प्रजया सह रायस्पोषेणेत्याह प्रजयैव पशुभिः सहेमं लोकमुपावर्तते[15] नमो देवेभ्य इत्याह नमस्कारो हि देवानाꣳ स्वधा पितृभ्य इत्याह स्वधाकारो हि (५) पितृणा[16]—मिदमहं निर्वरुणस्य पाशादित्याह वरुणपाशादेव निर्मुच्यते[17] ऽग्ने व्रतपत आत्मनः पूर्वा तनूरादेयेत्याहुः को हि तद्वेद यद्वसीयान्त्स्वे वशे भूते पुनर्वा ददाति न वेति[18] ग्रावाणो वै सोमस्य राज्ञो मलिम्लुसेना य एवं विद्वान् ग्राव्ण आग्नीध्र उपवासयति नैनं मलिम्लुसेना विन्दति[19] (६) ॥ (अथ, ददते, स्वया, सन्, हि, विन्दति ) ॥ २ ॥

यूपच्छेदनम् ॥ सोमऋषिः ।

वैष्णव्यर्चा हुत्वा यूपमच्छैति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया ऽच्छैत्य[1]—त्यन्यानगां नान्या-नुपागामित्याहाति ह्यन्यानेति नान्यानुपैत्यर्वाक्त्वा परैरविदं परोऽवरैरित्याहार्वाग्घ्येनं परैर्विन्दति परोऽवरैस्तं त्वा जुषे (१) वैष्णवं देवयज्याया इत्याह देवयज्यायै ह्येनं जुषते[2] देवस्त्वा सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्त्योषधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः शान्त्यै[3] स्वधिते-र्वृक्षस्य बिभ्यतः प्रथमेन शकलेन सह तेजः परा पतति यः प्रथमः शकलः परापतेत् तमप्या हरेत् सतेजस-(२)-मेवैनमा हरती[4]—मे वै लोका यूपात् प्रयतो बिभ्यति दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिꣳसीरित्याहैभ्य एवैनं लोकेभ्यः शमयति[5] वनस्पते शतवल्शो वि रोहेत्याव्रश्चने जुहोति तस्मादा-व्रश्चनाद्वृक्षाणां भूयाꣳस उत्तिष्ठन्ति[6] सहस्रवल्शा वि वयꣳ रुहेमेत्याहाऽऽशिषमेवैतामा शास्ते[7] ऽनक्षसङ्गं (३) वृश्चे[8]—द्यदक्षसङ्गं वृश्चेदधर्ईषं यजमानस्य प्रमायुकꣳ स्या[9]—द्यं कामयेताप्रतिष्ठितः स्यादित्यारोहं तस्मै वृश्चेदेष वै वनस्पतीनामप्रतिष्ठितोऽप्रतिष्ठित एव भवति[10] यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेदेष वै वनस्पतीनामपशव्योऽपशुरेव भवति[11] यं कामयेत पशुमान्त्स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेदेष वै (४) वनस्पतीनां पशव्यः पशुमानेव भवति[12] प्रतिष्ठितं वृश्चेत् प्रतिष्ठाकामस्यैष वै वनस्पतीनां प्रतिष्ठितो यः समे भूम्यै स्वाद्योनेः रूढः प्रत्येव तिष्ठति[13] यः प्रत्यङ्ङुपनतस्तं वृश्चेत् स हि मेधमभ्युपनतः[14] पञ्चारत्निं तस्मै वृश्चेद्यं कामयेतोपैनमुत्तरो यज्ञो नमेदिति पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञ उपैनमुत्तरो यज्ञो (५) नमति षडरत्निं प्रतिष्ठाकामस्य षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठति सप्तारत्निं पशुकामस्य सप्तपदा शक्वरी पशवः शक्वरी पशूनेवाव रुन्धे नवारत्निं तेजस्कामस्य त्रिवृता स्तोमेन

❀

संमितं तेजस्त्रिवृत् तेजस्व्येव भवत्येकादशारत्निमिन्द्रियकामस्यैकादशाक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुगिन्द्रियाव्येव भवति पञ्चदशारत्निं भ्रातृव्यवतः पञ्चदशो वज्रो भ्रातृव्याभिभूत्यै सप्तदशारत्निं प्रजाकामस्य सप्तदशः प्रजापतिः प्रजापतेराप्त्या (६) एकविꣳशत्यरत्निं प्रतिष्ठाकामस्यैकविꣳशः स्तोमानां प्रतिष्ठा प्रतिष्ठित्या अष्टाश्रिर्भवत्यष्टाक्षरा गायत्री तेजो गायत्री गायत्री यज्ञमुखं तेजसैव गायत्रिया यज्ञमुखेन संमितः ॥

( जुषे, सतेजस,-मनक्षसङ्गं, बहुशाखं वृश्चेदेष वै, यज्ञ उपैनमुत्तरो यज्ञ, आप्त्या, एकान्नविꣳशतिश्च ) ॥ ३ ॥

छिन्नस्य यूपस्य स्थापनम् ॥ सोमऋषिः ।

पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वेत्याहैभ्य एवैनं लोकेभ्यः प्रोक्षति[1] पराञ्चं प्रोक्षति पराङिव हि सुवर्गो लोकः[2] क्रूरमिव वा एतत् करोति यत् खनत्यपोऽव नयति शान्त्यै यवमतीरव नयत्यूर्ग्वै यवो यजमानेन यूपः संमितो यावानेव यजमानस्तावतीमेवास्मिन्नूर्जं दधाति (१) पितृणाꣳ सदनमसीति बर्हिरव स्तृणाति पितृदेवत्याꣳ ह्येतद्यन्निखातं यद्बर्हिरनवस्तीर्य मिनुयात् पितृदेवत्यो निखातः स्याद्बर्हिरवस्तीर्य मिनोत्यस्यामेवैनं मिनोति[3] यूपशकलमवास्यति सतेजसमेवैनं मिनोति[4] देवस्त्वा सविता मध्वाऽनक्त्वित्याह तेजसैवैनमनक्ति[5] सुपिप्पलाभ्यस्त्वौषधीभ्य इति चषालं प्रति (२) मुञ्चति तस्माच्छीर्षत ओषधयः फलं गृह्णन्त्य्[6]—नक्ति तेजो वा आज्यं यजमानेनाग्निष्ठाऽश्रिः संमिता यदग्निष्ठामश्रिमनक्ति यजमानमेव तेजसाऽनक्त्यान्तमनक्त्यान्तमेव यजमानं तेजसाऽनक्ति[7] सर्वतः परि मृशत्यपरिवर्गमेवास्मिन् तेजो दधात्यु[8]—द्दिवꣳ स्तभानाऽन्तरिक्षं पृणेत्याहैषां लोकानां विधृत्यै[9] वैष्णव्यर्चा (३) कल्पयति वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया कल्पयति[10] द्वाभ्यां कल्पयति द्विपाद्यजमानः प्रतिष्ठित्यै[11] यं कामयेत तेजसैनं देवताभिरिन्द्रियेण व्यर्धयेयमित्यग्निष्ठां तस्याश्रिमाहवनीयादित्थं वेत्थं वाऽति नावयेत् तेजसैवैनं देवताभिरिन्द्रियेण व्यर्धयति[12] यं कामयेत तेजसैनं देवताभिरिन्द्रियेण समर्धयेयमित्य-(४)-ग्निष्ठां तस्याश्रिमाहवनीयेन सं मिनुयात् तेजसैवैनं देवताभिरिन्द्रियेण समर्धयति[13] ब्रह्मवनिं त्वा क्षत्रवनिमित्याह यथायजुरेवैतत्[14] परि व्ययत्यूर्ग्वै रशना यजमानेन यूपः संमितो यजमानमेवोर्जा समर्धयति[15] नाभिदघ्ने परि व्ययति नाभिदघ्न एवास्मा ऊर्जं दधाति तस्मान्नाभिदघ्न ऊर्जा भुञ्जते[16] यं कामयेतोर्जैनं (५) व्यर्धयेयमित्यूर्ध्वां वा तस्यावाचीं वाऽवोहेदूर्जैवैनं व्यर्धयति[17] यदि कामयेत वर्षुकः पर्जन्यः स्यादित्यवाचीमवोहेद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्यूर्ध्वामुदूहेद्वृष्टिमेवोद्यच्छति[18] पितृणां निखातं मनुष्याणामूर्ध्वं निखाताद्दा रशनाया ओषधीनाꣳ रशना विश्वेषां (६) देवानामूर्ध्वꣳ रशनाया आ चषालादिन्द्रस्य चषालꣳ साध्यानामतिरिक्तꣳ स वा एष सर्वदेवत्यो यद्यूपो यद्यूपं मिनोति सर्वा एव देवताः प्रीणाति[19] यज्ञेन वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते यूपेन योपयित्वा सुवर्गं लोकमायन् तमृषयो यूपेनैवानु प्राजानन् तद्यूपस्य यूपत्वं (७) यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्यै[20] पुरस्तान्मिनोति पुरस्ताद्धि यज्ञस्य प्रज्ञायते प्रज्ञातꣳ हि तद्यदतिपन्न आहुरिदं कार्यमासीदिति[21] साध्या वै देवा यज्ञमत्यमन्यन्त तान् यज्ञो नास्पृशत् तान् यद्यज्ञस्यातिरिक्तमासीत् तदस्पृशदतिरिक्तं वा एतद्यज्ञस्य यदग्नावग्निं मथित्वा प्रहरत्यातिरिक्तमेत-(८)-

यूपस्य यदूर्ध्वं चषालात् तेषां तद्भागधेयं तानेव तेन प्रीणाति[२२] देवा वै सꣳस्थिते सोमे प्र स्रुचोऽहरन् प्र यूपं तेऽमन्यन्त यज्ञवेशसं वा इदं कुर्म इति ते प्रस्तरꣳ स्रुचां निष्क्रयणमपश्यन्त्स्वरुं यूपस्य सꣳस्थिते सोमे प्र प्रस्तरꣳ हरति जुहोति स्वरुमयज्ञवेशसाय[२३] ॥ ( दधाति, प्रत्यू,-चा, समर्धयेयमित्यू,-जैनं, विश्वेषां, यूपस्व,- मतिरिक्तमेतद्, द्विचत्वारिꣳशच्च ) ॥ ४ ॥

मन्थनविशिष्टमग्निप्रहरणम् ॥ सोमऋषिः ।

साध्या वै देवा अस्मिँल्लोक आसन् नान्यत् किं चन मिषत् तेऽग्निमेवाग्नये मेधायाऽलभन्त न ह्यन्यदालम्भ्यमविन्दन् ततो वा इमाः प्रजाः प्राजायन्त यदग्नावग्निं मथित्वा प्रहरति प्रजानां प्रजननाय[१] रुद्रो वा एष यदग्निर्यजमानः पशुर्यत् पशुमालभ्याग्निं मन्थेद्रुद्राय यजमान-( १ )-मपि दध्यात् प्रमायुकः स्या[२]-दथो खल्वाहुरग्निः सर्वा देवता हविरेतद्यत् पशुरिति यत् पशुमालभ्याग्निं मन्थति हव्यायैवाऽऽसन्नाय सर्वा देवता जनयत्यु[३]-पाकृत्यैव मन्थ्यस्तन्नेवाऽऽलब्धं नेवानालब्ध[४]-मग्नेर्जनित्रमसीत्याहाग्नेर्ह्येतज्जनित्रं वृषणौ स्थ इत्याह वृषणौ ( २ ) ह्येता[५]-वुर्वश्यस्यायुरसीत्याह मिथुनत्वाय[६] घृतेनाक्ते वृषणं दधाथामित्याह वृषणꣳ ह्येते दधाते ये अग्निं[७] गायत्रं छन्दोऽनु प्र जायस्वेत्याह छन्दोभिरेवैनं प्र जनयत्य[८]-ग्नये मथ्यमानायानु ब्रूहीत्याह[९] सावित्रीमृचमन्वाह सवितृप्रसूत एवैनं मन्थति[१०] जातायानु ब्रूहि ( ३ ) प्रह्रियमाणायानु ब्रूहीत्याह काण्डेकाण्ड एवैनं क्रियमाणे समर्धयति[११] गायत्रीः सर्वा अन्वाह गायत्रछन्दा वा अग्निः स्वेनैवैनं छन्दसा समर्धयत्य[१२]-ग्निः पुरा भवत्यग्निं मथित्वा प्र हरति तौ संभवन्तौ यजमानमभि सं भवतो भवतं नः समनसावित्याह शान्त्यै[१३] प्रहृत्य जुहोति जातायैवास्मा अन्नमपि ( ४ ) दधात्याज्येन जुहोत्येतद्वा अग्नेः प्रियं धाम यदाज्यं प्रियेणैवैनं धाम्ना समर्धयत्यथो तेजसा[१४] ॥

( यजमान,-माह वृषणौ, जातायानु ब्रूह्य, प्य, ष्टादश च ) ॥ ५ ॥

पशोरुपाकरणम् ॥ सोमऋषिः ।

इषे त्वेति बर्हिरा दत्त इच्छत इव ह्येष यो यजत[१] उपवीरसीत्याहोप ह्येनानाकरोत्यु[२]-पो देवान् दैवीर्विशः प्रागुरित्याह दैवीर्ह्येता विशः सतीर्देवानुपयन्ति[३] वह्नीरुशिज इत्याहर्त्विजो वै वह्नय उशिजस्तस्मादेवमाह[४] बृहस्पते धारया वसूनीत्या-( १ )-ह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै पशूनव रुन्धे[५] हव्या ते स्वदन्तामित्याह स्वदयत्येवैनान्[६] देव त्वष्टर्वसु रण्वेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति[७] रेवती रमध्वमित्याह पशवो वै रेवतीः पशूनेवास्मै रमयति[८] देवस्य त्वा सवितुः प्रसव इति ( २ ) रशनामा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै[९] ऋतस्य त्वा देवहविः पाशेनाऽऽरभ इत्याह सत्यं वा ऋतꣳ सत्येनैवैनमृतेनाऽऽरभते[१०] ऽक्ष्णया परि हरति वध्यꣳ हि प्रत्यञ्चं प्रतिमुञ्चन्ति व्यावृत्त्यै[११] धर्षा मानुषानिति नि युनक्ति धृत्या[१२] अद्भ्य-( ३ )-स्त्वौषधीभ्यः प्रोक्षामीत्याहाद्भ्यो ह्येष ओषधीभ्यः संभवति यत् पशु[१३]-रपां पेरुरसीत्याहैष ह्यपां पाता यो मेधायाऽऽरभ्यते[१४] स्वात्तं चित् सदेवꣳ हव्यमापो देवीः स्वदतैनमित्याह स्वदयत्यैवैन[१५]-मुपरिष्टात् प्रोक्षत्युपरिष्टादेवैनं मेध्यं करोति पाययत्यन्त-

रत एवैनं ( ४ ) मेध्यं करोत्यधस्तादुपोक्षति सर्वत एवैनं मेध्यं करोति[१६] ॥ ( वसूनीति, प्रसव इत्य,-न्वयो, ऽन्तरत एवैनं, दश च ) ॥ ६ ॥

सामिधेन्यः आघारौ प्रयाजाश्च ॥ सोमऋषिः ।

अग्निना वै होत्रा देवा असुरानभ्यभवन्नग्नये समिध्यमानायानु ब्रूहीत्याह भ्रातृव्याभिभूत्यै[१] सप्तदश सामिधेनीरन्वाह सप्तदशः प्रजापतिः प्रजापतेराप्त्यै[२] सप्तदशान्वाह द्वादश मासाः पञ्चर्तवः स संवत्सरः संवत्सरं प्रजा अनु प्र जायन्ते प्रजानां प्रजननाय[३] देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्त्स प्रजापतिस्तूष्णीमाघार-( १ ) मा ऽघारयत् ततो वै देवा यज्ञमन्वपश्यन् यत् तूष्णीमाघारमाघारयति यज्ञस्यानुख्यात्यां असुरेषु वै यज्ञ आसीत् तं देवास्तूष्णीं होमेनावृञ्जत यत् तूष्णीमाघारमाघारयति भ्रातृव्यस्यैव तद्यज्ञं वृङ्क्ते[५] परिधीन्त्सं मार्ष्टि पुनात्येवैनान् त्रिस्त्रिः सं मार्ष्टि त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै द्वादश सं पद्यन्ते द्वादश ( २ ) मासाः संवत्सरः संवत्सरमेव प्रीणात्यथो संवत्सरमेवास्मा उप दधाति सुवर्गस्य लोकस्य समष्ट्यै[६] शिरो वा एतद्यज्ञस्य यदाघारोऽग्निः सर्वा देवता यदाघारमाघारयति शीर्षत एव यज्ञस्य यजमानः सर्वा देवता अव रुन्धे[७] शिरो वा एतद्यज्ञस्य यदाघार आत्मा पशुराघारमाघार्य पशुꣳ समनक्त्यात्मन्नेव यज्ञस्य ( ३ ) शिरः प्रति दधाति[८] सं ते प्राणो वायुना गच्छतामित्याह वायुदेवत्यो वै प्राणो वायावेवास्य प्राणं जुहोति[९] सं यजत्रैरङ्गानि सं यज्ञपतिराशिषेत्याह यज्ञपतिमेवास्याऽऽशिषं गमयति[१०] विश्वरूपो वै त्वाष्ट्र उपरिष्टात् पशुमभ्यवमीत् तस्मादुपरिष्टात् पशोर्नाव द्यन्ति यदुपरिष्टात् पशुꣳ समनक्ति मेध्यमेवै-( ४ )-नं करोत्यृ[११]—त्विजो वृणीते छन्दाꣳस्येव वृणीते[१२] सप्त वृणीते सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै[१३] एकादश प्रयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तं प्र यजति[१४] वपामेकः परि शय आत्मैवाऽऽत्मानं परि शये[१५] वज्रो वै स्वधितिर्वज्रो यूपशकलो घृतं खलु वै ( ५ ) देवा वज्रं कृत्वा सोममघ्नन् घृतेनाक्तौ पशुं त्रायेथामित्याह वज्रेणैवैनं वशे कृत्वाऽऽलभते[१६] ॥ आघार, पद्यन्ते द्वादशा-ऽऽत्मन्नेव यज्ञस्य, मेध्यमेव, खलु वा, अष्टादश च ) ॥ ७ ॥

पशुसंज्ञपनम् ॥ सोमऋषिः ।

पर्यग्नि करोति सर्वहुतमेवैनं करोत्यस्कन्दायास्कन्नꣳ हि तद्यद्धुतस्य स्कन्दति[१] त्रिः पर्यग्नि करोति त्र्यावृद्धि यज्ञोऽथो रक्षसामपहत्यै[२] ब्रह्मवादिनो वदन्त्यन्वारभ्यः पशू३र्नान्वारभ्या३ इति[३] मृत्यवे वा एष नीयते यत् पशुस्तं यदन्वारभेत प्रमायुको यजमानः स्या—दथो खल्वाहुः सुवर्गाय वा एष लोकाय नीयते यत् ( १ ) पशुरिति यन्नान्वारभेत सुवर्गाल्लोकाद्यजमानो हीयेत[४] वपाश्रपणीभ्यामन्वारभते तन्नेवान्वारब्धं नेवानन्वारब्ध—मुप प्रेष्य होतर्हव्या देवेभ्य इत्याहेषितꣳ हि कर्म क्रियते[५] रेवतीर्यज्ञपतिं प्रियधा ऽऽ विशतेत्याह यथायजुरेवैत—दग्निना पुरस्तादेति रक्षसामपहत्यै[६] पृथिव्याः संपृचः पाहीति बर्हि-( २ )- रुपास्यत्यस्कन्दायास्कन्नꣳ हि तद्यद्बर्हिषि स्कन्दत्यथो बर्हिषदमेवैनं करोति[१०] पराङा वर्ततेऽध्वर्युः पशोः संज्ञप्यमानात् पशुभ्य एव तन्नि ह्नुत आत्मनोऽनाव्रस्काय[११] गच्छति श्रियं प्र पशू-

नाप्नोति य एवं वेद[12] पश्चाल्लोका वा एषा प्राच्युदानीयते यत् पत्नी नमस्त आतानेत्याहाऽऽदित्य-
स्य वै रश्मयः (३) आतानास्तेभ्य एव नमस्करोत्य[13]र्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्यै
घृतस्य कुल्यामनु सह प्रजया सह रायस्पोषेणेत्याहाऽऽशिषमेवैतामा शास्त आपो देवीः शुद्धायुव इत्याह
यथायजुरेवैतत्[14] ॥ (लोकाय नीयते यद्, बर्हीं, रश्मयः, नुवत्रिꣳशच्च) ॥ ८ ॥

वपाहोमः ॥ सोमऋषिः ।

पशोर्वा आलब्धस्य प्राणाञ्छुगृच्छति वाक् त आ प्यायतां प्राणस्त आ प्यायतामित्याह प्राणेभ्य एवा-
स्य शुचꣳ शमयति[1] सा प्राणेभ्योऽधि पृथिवीꣳ शुक् प्र विशति शमहोभ्यामिति नि नयत्यहोरात्रा-
भ्यामेव पृथिव्यै शुचꣳ शमयत्यो[2]षधे त्रायस्वैनꣳ स्वधिते मैनꣳ हिꣳसीरित्याह वज्रो वै स्वधितिः (१)
शान्त्यै[3] पार्श्वत आ च्छ्यति मध्यतो हि मनुष्या आ च्छ्यन्ति तिरश्चीनमा च्छ्यत्यनूचीनꣳ हि मनुष्या
आच्छ्यन्ति व्यावृत्त्यै[4] रक्षसां भागोऽसीति स्थविमतो बर्हिरक्त्वाऽपास्यत्यस्नैव रक्षाꣳसि निर-
वदयत[5] इदमहꣳ रक्षोऽधमं तमो नयामि योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्याह द्वौ वाव पुरुषौ
यं चैव (२) द्वेष्टि यश्चैनं द्वेष्टि तावुभावधमं तमो नयती[6]षे त्वेति वपामुत्खिदतीच्छत इव ह्येष यो
यजते[7] यदुपतृन्याद्रुद्रोऽस्य पशून् घातुकः स्याद्यन्नोपतृन्यादयता स्या[8]दन्ययोपतृणत्त्यन्यया न धृत्यै[9]
घृतेन द्यावापृथिवी प्रोर्णुवाथामित्याह द्यावापृथिवी एव रसेनानक्त्य[10]च्छिन्नो (३) रायः सुवीर इत्याह
यथायजुरेवैतत्[11] क्रूरमिव वा एतत् करोति यद्वपामुत्खिदत्युर्वन्तरिक्षमन्विहीत्याह शान्त्यै[12] प्र वा
एषोऽस्माल्लोकाच्च्यवते यः पशुं मृत्यवे नीयमानमन्वारभते वपाश्रपणी पुनरन्वारभतेऽस्मिन्नेव लोके प्रति
तिष्ठत्य[13]ग्निना पुरस्तादेति रक्षसामपहत्या अथो देवता एव हव्येना-(४)-न्वेति[14] नान्तममङ्गारमति
हरेद्यदन्तममङ्गारमति हरेद्देवता अति मन्येत[15] वायो वीहि स्तोकानामित्याह तस्माद्विभक्ताः स्तोका अव
पद्यन्ते[16] ऽग्रं वा एतत् पशूनां यद्वपाऽग्रमोषधीनां बर्हिरग्रेणैवाग्रꣳ समर्धयत्यथो ओषधीष्वेव पशून् प्रति
ष्ठापयति[17] स्वाहाकृतीभ्यः प्रेष्येत्याह (५) यज्ञस्य समिष्ट्यै[18] प्राणापानौ वा एतौ पशूनां यत्
पृषदाज्यमात्मा वपा पृषदाज्यमभिघार्य वपामभि घारयत्यात्मन्नेव पशूनां प्राणापानौ दधाति[19] स्वाहोर्ध्वनभसं
मारुतं गच्छतमित्याहोर्ध्वनभा ह स्म वै मारुतो देवानां वपाश्रपणी प्र हरति तेनैवैने प्र हरति[20] विषूची
प्र हरति तस्माद्विष्वञ्चौ प्राणापानौ[21] ॥ (स्वधिति, - श्चैव, -च्छिन्नो, हव्येन, -ष्येत्याह, षट्चत्वारिꣳशच्च) ॥ ९ ॥

वसावदानानि ॥ सोमऋषिः ।

पशुमालभ्य पुरोडाशं निर्वपति समेधमेवैनमा लभते[1] वपया प्रचर्य पुरोडाशेन प्र चरत्यूर्ग्वै पुरोडाश
ऊर्जमेव पशूनां मध्यतो दधात्यथो पशोरेव छिद्रमपि दधाति[2] पृषदाज्यस्योपहत्य त्रिः पृच्छति शृतꣳ
हवी३ः शमितरिति त्रिषत्या हि देवा[3] योऽशृतꣳ शृतमाह स एनसा[4] प्राणापानौ वा एतौ पशूनां (१)
यत् पृषदाज्यं पशोः खलु वा आलब्धस्य हृदयमात्माऽभि समेति यत् पृषदाज्येन हृदयमभिघारयत्यात्मन्नेव
पशूनां प्राणापानौ दधाति[5] पशुना वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति
तस्य शिरश्छित्त्वा मेधं प्राक्षारयन्त्स प्रक्षोऽभवत् तत् प्रक्षस्य प्रक्षत्वं यत् प्लक्षशाखोत्तरबर्हिर्भवति समे-

धस्यैव ( २ ) पशोरव द्यति[६] पशुं वै ह्रियमाणꣳ रक्षाꣳस्यनु सचन्तेऽन्तरा यूपं चाऽऽहवनीयं च हरति
रक्षसामपहत्यै[७] पशोर्वा आलब्धस्य मनोऽप क्रामति मनोतायै हविषोऽवदीयमानस्यानु ब्रूहीत्याह मन
एवास्याव रुन्धे[८] एकादशावदानान्यव द्यति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तस्याव
( ३ ) द्यति[९] हृदयस्याग्रेऽव द्यत्यथ जिह्वाया अथ वक्षसो यद्वै हृदयेनाभिगच्छति तज्जिह्वया वदति यज्जि-
ह्वया वदति तदुरसोऽधि निर्वदत्येतद्वै पशोर्यथापूर्वं[१०] यस्यैवमवदाय यथाकाममुत्तरेषामवद्यति यथापूर्व-
मेवास्य पशोरवत्तं भवति[११] मध्यतो गुदस्याव द्यति मध्यतो हि प्राण उत्तमस्याव द्यत्यु ( ४ ) त्तमो
हि प्राणो यदीतरं यदीतरमुभयमेवाजामि[१२] जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषि-
भ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी तदवदानैरेवाव दयते
तदवदानानामवदानत्वं[१३] देवासुराः संयत्ता आसन् ते देवा अग्निमब्रुवन् त्वया वीरेणासुरानभि भवामेति
( ५ ) सोऽब्रवीद्वरं वृणै पशोरुद्धारमुद्धरा इति स एतमुद्धारमुदहरत दोः पूर्वार्धस्य गुदं मध्यतः श्रोणिं
जघनार्धस्य ततो देवा अभवन् पराऽसुरा यत् त्र्यङ्गाणाꣳ समवद्यति भ्रातृव्याभिभूत्यै भवत्यात्मना परा-
ऽस्य भ्रातृव्यो भवत्य[१४]—क्ष्णयाऽव द्यति तस्मादक्ष्णया पशवोऽङ्गानि प्र हरन्ति प्रतिष्ठित्यै[१५] ॥
( एतौ पशूनाꣳ, समेधस्यैव, तस्यावो,- त्तमस्याव द्यती,- ति, पञ्चचत्वारिꣳशच्च ) ॥ १० ॥

अनूयाजविधानम् ॥ सोमऋषिः ।

मेदसा स्रुचौ प्रोर्णोति मेदोरूपा वै पशवो रूपमेव पशुषु दधाति[१] यूषन्नवधाय प्रोर्णोति रसो वा एष
पशूनां यद्यू रसमेव पशुषु दधाति[२] पार्श्वेन वसाहोमं प्रयौति मध्यं वा एतत् पशूनां यत् पार्श्वꣳ रस
एष पशूनां यद्वसा यत् पार्श्वेन वसाहोमं प्रयौति मध्यत एव पशूनाꣳ रसं दधाति[३] घ्नन्ति ( १ ) वा
एतत् पशुं यत् संज्ञपयन्त्यैन्द्रः खलु वै देवतया प्राण ऐन्द्रोऽपान ऐन्द्रः प्राणो अङ्गेअङ्गे नि देध्यदित्याह
प्राणापानावेव पशुषु दधाति[४] देव त्वष्टर्भूरि ते सꣳ समेत्वित्याह त्वाष्ट्रा हि देवतया पशवो[५] विषु-
रूपा यत् सलक्ष्माणो भवथेत्याह विषुरूपा ह्येते सन्तः सलक्ष्माण एतर्हि भवन्ति[६] देवत्रा यन्त-( २ )-
मवसे सखायोऽनु त्वा माता पितरो मदन्त्वित्याहानुमतमेवैनं मात्रा पित्रा सुवर्गं लोकं गमयत्य[७]—र्धर्चे
वसाहोमं जुहोत्यसौ वा अर्धर्च इयमर्धर्च इमे एव रसेनानक्ति दिशो जुहोति दिश एव रसेनानक्त्यथो
दिग्भ्य एवोर्जꣳरसमव रुन्धे[८] प्राणापानौ वा एतौ पशूनां यत् पृषदाज्यं वानस्पत्याः खलु ( ३ ) वै देवतया
पशवो यत् पृषदाज्यस्योपहत्याऽऽह वनस्पतयेऽनु ब्रूहि वनस्पतये प्रेष्येति प्राणापानावेव पशुषु दधात्य[९]—
न्यस्यान्यस्य समवत्तꣳ समवद्यति तस्मान्नानारूपाः पशवो[१०] यूष्णोप सिञ्चति रसो वा एष पशूनां यद्यू
रसमेव पशुषु दधाती[११]—डामुप ह्वयते पशवो वा इडा पशूनेवोप ह्वयते चतुरुप ह्वयते ( ४ ) चतुष्पादो हि
पशवो[१२] यं कामयेतापशुः स्यादित्यमेदस्कं तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणैवैनं पशुभ्यो निर्भ-
जत्यपशुरेव भवति[१३] यं कामयेत पशुमान्त्स्यादिति मेदस्वत् तस्मा आ दध्यान्मेदोरूपा वै पशवो रूपेणै-
वास्मै पशूनव रुन्धे पशुमानेव भवति[१४] प्रजापतिर्यज्ञमसृजत स आज्यं ( ५ ) पुरस्तादसृजत पशुं मध्यतः
पृषदाज्यं पश्चात् तस्मादाज्येन प्रयाजा इज्यन्ते पशुना मध्यतः पृषदाज्येनानूयाजास्तस्मादेतन्मिश्रमिव

पश्चात् सृष्टिं ह्येकादशानूयाजान् यजति दश वै पशोः प्राणा आत्मैकादशो यावानेव पशुस्तमनु यजति[१६] घ्नन्ति वा एतत् पशुं यत् संज्ञपयन्ति प्राणापानौ खलु वा एतौ पशूनां यत् पृषदाज्यं यत् पृषदाज्येना-(६)-नूयाजान् यजति प्राणापानावेव पशुषु दधाति[१७] ॥ ( घ्नन्ति, यन्तं, खलु, ह्वयत, आज्यं, यत् पृषदाज्येन, षट् च ) ॥ ११ ॥

[ चात्वालात् ३१४। सुवर्गाय ३००। वैष्णव्या ३१९। पृथिव्यै ४४२। साध्या २१८। ध्रुवे २१०। ऽग्निना २६८। पर्यग्नि १८७। पशोः २९६। पशुं २९५। मेदसे-३०६। -कादश ॥ ३१५५ ॥ ]

[ ॥ इति षष्ठकाण्डे तृतीयः प्रपाठकः ॥३॥ ]

## सोममन्त्रब्राह्मणनिरूपणम् ।

[ अथ चतुर्थः प्रपाठकः ॥४॥ ]

शुदहोमविधानम् ॥ सोमऋषिः ।

यज्ञेन वै प्रजापतिः प्रजा असृजत ता उपयड्भिरेवासृजत यदुपयज उपयजति प्रजा एव तद्यजमानः सृजते[१] जघनार्धादव द्यति जघनार्धाद्धि प्रजाः प्रजायन्ते[२] स्थविमतोऽव द्यति स्थविमतो हि प्रजाः प्रजायन्ते[३] ऽसंभिन्दन्नव द्यति प्राणानामसंभेदाय[४] न पर्यावर्तयति यत् पर्यावर्तयेदुदावर्तः प्रजा ग्राहुकः स्यात्[५] समुद्रं गच्छ स्वाहेत्याह रेत (१) एव तद्दधात्य[६]—न्तरिक्षं गच्छ स्वाहेत्याहान्तरिक्षेणैवास्मै प्रजाः प्र जनयत्यन्तरिक्षं ह्यनु प्रजाः प्रजायन्ते[७] देवं सवितारं गच्छ स्वाहेत्याह सवितृप्रसूत एवास्मै प्रजाः प्र जनयत्य[८]—होरात्रे गच्छ स्वाहेत्याहाहोरात्राभ्यामेवास्मै प्रजाः प्र जनयत्यहोरात्रे ह्यनु प्रजाः प्रजायन्ते[९] मित्रावरुणौ गच्छ स्वाहे-(२)-त्याह प्रजास्वेव प्रजातासु प्राणापानौ दधाति[१०] सोमं गच्छ स्वाहेत्याह सौम्या हि देवतया प्रजा[११] यज्ञं गच्छ स्वाहेत्याह प्रजा एव यज्ञियाः करोति[१२] छन्दांसि गच्छ स्वाहेत्याह पशवो वै छन्दांसि पशूनेवाव रुन्धे[१३] द्यावापृथिवी गच्छ स्वाहेत्याह प्रजा एव प्रजाता द्यावापृथिवीभ्यामुभयतः परि गृह्णाति[१४] नभो (३) दिव्यं गच्छ स्वाहेत्याह प्रजाभ्य एव प्रजाताभ्यो वृष्टिं नि यच्छत्य[१५]—ग्निं वैश्वानरं गच्छ स्वाहेत्याह प्रजा एव प्रजाता अस्यां प्रति ष्ठापयति[१६] प्राणानां वा एषोऽव द्यति योऽवद्यति गुदस्य मनो मे हार्दि यच्छेत्याह प्राणानेव यथास्थानमुप ह्वयते[१७] पशोर्वा आलब्धस्य हृदयं शुगृच्छति सा हृदयशूल-(४)-मभि समेति यत् पृथिव्यां हृदयशूलमुद्वासयेत् पृथिवीं शुचाऽर्पयेदप्स्वपः शुचाऽर्पयेच्छुष्कस्य चाऽऽर्द्रस्य च सन्धावुद्वासयत्युभयस्य शान्त्यै[१८] यं द्विष्यात् तं ध्यायेच्छुचैवैनमर्पयति[१९] ॥ ( रेतः, स्वाहा, नभो, हृदयशूलं, द्वात्रिंशच्च ) ॥ १ ॥

सोमाभिषवोपयुक्तानां वसतीवरीसंज्ञकानामपामुपादानम् ॥ सोमऋषिः ।

देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन् वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वं तस्मिन् प्रातर्न समशक्नुवन् तदप्सु प्रावेशयन् ता वसतीवरीरभवन् वसतीवरीर्गृह्णाति यज्ञो वै वसतीवरीर्यज्ञमेवाऽऽरभ्य गृहीत्वोप वसति[१] यस्यागृहीता अभि निम्रोचेदनारब्धोऽस्य यज्ञः स्या-

( १ )-यज्ञं वि च्छिन्द्या[२]—ज्ज्योतिष्यां वा गृह्णीयाद्धिरण्यं वा ऽवधाय सशुक्राणामेव गृह्णाति यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात् स हि गृहीतवसतीवरीको[३] वसतीवरीर्गृह्णाति पशवो वै वसतीवरीः पशूनेवाऽऽरभ्य गृहीत्वोप वसति[४] यदन्वीपं तिष्ठन् गृह्णीयान्निर्मार्गुका अस्मात् पशवः स्युः प्रतीपं तिष्ठन् गृह्णाति प्रतिरुध्यैवास्मै पशून् गृह्णाती[५]—न्द्रो ( २ ) वृत्रमहन्त्सो॒ऽपो॒ऽभ्यम्रियत तासां यन्मेध्यं यज्ञियꣳ सदेवमासीत् तदत्यमुच्यत ता वहन्तीरभवन् वहन्तीनां गृह्णाति या एव मेध्या यज्ञियाः सदेवा आपस्तासामेव गृह्णाति[६] नान्तमा वहन्तीरतीयाद्यदन्तमा वहन्तीरतीयाद्यज्ञमति मन्येत न स्थावराणां गृह्णीयाद्वरुणगृहीता वै स्थावरा यत् स्थावराणां गृह्णीया-( ३ )-द्वरुणेनास्य यज्ञं ग्राहये[७]—द्यद्वै दिवा भवत्यपो रात्रिः प्र विशति तस्मात् ताम्रा आपो दिवा ददृश्रे यन्नक्तं भवत्यपोऽहः प्र विशति तस्माच्चन्द्रा आपो नक्तं ददृश्रे छायायै चाऽऽतपतश्च सन्धौ गृह्णात्यहोरात्रयोरेवास्मै वर्णं गृह्णाति[८] हविष्मतीरिमा आप इत्याह हविष्कृतानामेव गृह्णाति[१०] हविष्माꣳ अस्तु ( ४ ) सूर्य इत्याह सशुक्राणामेव गृह्णात्य[११]—नुष्टुभा गृह्णाति वाग्वा अनुष्टुग्वाचैवैनाः सर्वया गृह्णाति[१२] चतुष्पदयर्चा गृह्णाति त्रिः सादयति सप्त सं पद्यन्ते सप्तपदा शक्करी पशवः शक्करी पशूनेवाव रुन्धे[१३] ऽस्मै वै लोकाय गार्हपत्य आ धीयतेऽमुष्मा आहवनीयो यद्गार्हपत्य उपसादयेदस्मिँल्लोके पशुमान्त्स्याद्यदाहवनीयेऽमुष्मि-( ५ )-ल्लोके पशुमान्त्स्यादुभयोरुप सादयत्युभयोरेवैनं लोकयोः पशुमन्तं करोति[१४] सर्वतः परि हरति रक्षसामपहत्या[१५] इन्द्राग्नियोर्भागधेयीः स्थेत्याह यथायजुरेवैत[१६]—दाग्नीध्र उप वासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उप वासयति[१७] यतः खलु वै यज्ञस्य विततस्य न क्रियते ( ६ ) तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यद्वहन्तीनां गृह्णाति क्रियमाणमेव तद्यज्ञस्य शये रक्षसामनन्ववचाराय न होता ईलयन्त्या तृतीयसवनात् परि शेरे यज्ञस्य संतत्यै[१९] ॥ ( स्या,- दिन्द्रो, गृह्णीया- दस्त्व, मुष्मिन्, क्रियते, षड्विꣳशतिश्च ) ॥ २ ॥

हविर्धानशकटात् अधिषवणफलकयोरुपरि सोमावरोहणम् ॥ सोमऋषिः ।

ब्रह्मवादिनो वदन्ति स त्वा अध्वर्युः स्याद्यः सोममुपावहरन्त्सर्वाभ्यो देवताभ्य उपावहरेदिति हृदे त्वेत्याह मनुष्येभ्य एवैतेन करोति मनसे त्वेत्याह पितृभ्य एवैतेन करोति दिवे त्वा सूर्याय त्वेत्याह देवेभ्य एवैतेन करोत्येतावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्य उपावहरति[१] पुरा वाचः ( १ ) प्रवदितोः प्रातरनुवाकमुपाकरोति यावत्येव वाक् तामव रुन्धे[२] ऽपोऽग्रेऽभिव्याहरति यज्ञो वा आपो यज्ञमेवाभि वाचं वि सृजति[३] सर्वाणि छन्दाꣳस्यन्वाह पशवो वै छन्दाꣳसि पशूनेवाव रुन्धे[४] गायत्रिया तेजस्कामस्य परि दध्यात् त्रिष्टुभेन्द्रियकामस्य जगत्या पशुकामस्यानुष्टुभा प्रतिष्ठाकामस्य पङ्क्त्या यज्ञकामस्य विराजाऽन्नकामस्य[५] शृणोत्वग्निः समिधा हवं ( २ ) म इत्याह सवितृप्रसूत एव देवताभ्यो निवेद्यापोऽच्छैत्य[६]—प इष्य होतरित्याहेषितꣳ हि कर्म क्रियते[७] मैत्रावरुणस्य चमसाध्वर्यवा द्रवेत्याह मित्रावरुणौ वा अपां नेतारौ ताभ्यामेवैना अच्छैति[८] देवीरापो अपां नपादित्याहाऽऽहुत्यैवैना निष्क्रीय गृह्णात्यथो हविष्कृतानामेवाभिघृतानां गृह्णाति[९] ( ३ ) कार्षिरसीत्याह शमलमेवाऽऽसामप प्लावयति[१०] समुद्रस्य वोऽक्षित्या उन्नय इत्याह तस्मादद्यमानाः पीयमाना आपो न क्षीयन्ते[११] योनिर्वै यज्ञस्य चात्वालं यज्ञो वसतीवरीर्होतृचमसं

च मैत्रावरुणचमसं च सꣳस्पर्श्य वसतीवरीर्व्यानयति यज्ञस्य सयोनित्वायाथो स्वादेवैना योनेः प्र जनयत्य[१२]–ध्वर्योऽवेरपा३ इत्याहोते-( ४ )-मनन्नमुतेमाः पश्येति वावैतदाह[१३] यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ नि मार्ष्टि यद्यतिरात्रो यजुर्वदन् प्र पद्यते यज्ञक्रतूनां व्यावृत्त्यै[१४] ॥
( वाचो, इवं,–मभिघृतानां गृह्णात्यु,–त पञ्चविꣳशतिश्च ) ॥ ३ ॥

सोमस्याभिषवः ॥ सोमऋषिः ।

देवस्य त्वा सवितुः प्रसव इति ग्रावाणमा दत्ते प्रसूत्या अश्विनोर्बाहुभ्यामित्याहाश्विनौ हि देवानामध्वर्यू आस्तां पूष्णो हस्ताभ्यामित्याह यत्यै[१] पशवो वै सोमो व्यान उपाꣳशुसवनो यदुपाꣳशुसवनमभि मिमीते व्यानमेव पशुषु दधाती[२]–न्द्राय त्वेन्द्राय त्वेति मिमीत इन्द्राय हि सोम आह्रियते[३] पञ्च कृत्वो यजुषा मिमीते ( १ ) पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे पञ्च कृत्वस्तूष्णीं दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे[४] श्वात्राः स्थ वृत्रतुर इत्याहैष वा अपाꣳ सोमपीथो[५] य एवं वेद नाप्स्वार्तिमार्च्छति[६] यत् ते सोम दिवि ज्योतिरित्याहैभ्य एवैनं ( २ ) लोकेभ्यः सं भरति[७] सोमो वै राजा दिशोऽभ्यध्यायत् स दिशोऽनु प्राविशत् प्रागपागुदगधरागित्याह दिग्भ्य एवैनꣳ सं भरत्यथो दिश एवास्मा अव रुन्धे[८] ऽम्ब नि ष्वरेत्याह[९] कामुका एनꣳ स्त्रियो भवन्ति य एवं वेद[१०] यत् ते सोमादाभ्यं नाम जागृवीत्या-( ३ )-हैष वै सोमस्य सोमपीथो[११] य एवं वेद न सौम्यामार्तिमार्च्छति[१२] घ्नन्ति वा एतत् सोमं यदभिषुण्वन्त्यꣳशूनप गृह्णाति त्रायत एवैनं[१३] प्राणा वा अꣳशवः पशवः सोमोऽꣳशून् पुनरपि सृजति प्राणानेव पशुषु दधाति[१४] द्वौद्वावपि सृजति तस्माद् द्वौद्वौ प्राणाः[१५] ॥
( यजुषा मिमीत, एनं, जागृवीति, चतुश्चत्वारिꣳशच्च ) ॥ ४ ॥

सुत्यादिनेकर्तव्येषु ग्रहेषु उपांशुग्रहः । सोमऋषिः ।

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳश्वग्रा ग्रहा गृह्यन्ते प्राणमेवानु प्र यन्त्य[१]–रुणो ह स्माऽऽहौपवेशिः प्रातःसवन एवाहं यज्ञꣳ सꣳ स्थापयामि तेन ततः सꣳस्थितेन चरामीत्यष्टौ कृत्वोऽग्रेऽभिषुणोत्यष्टाक्षरा गायत्री गायत्रं प्रातःसवनं प्रातःसवनमेव तेनाऽऽप्नोत्येकादश कृत्वो द्वितीयमेकादशाक्षरा त्रिष्टुप् त्रैष्टुभं माध्यंदिनꣳ ( १ ) सवनं माध्यंदिनमेव सवनं तेनाऽऽप्नोति द्वादश कृत्वस्तृतीयं द्वादशाक्षरा जगती जागतं तृतीयसवनं तृतीयसवनमेव तेनाऽऽप्नोत्येताꣳ ह वाव स यज्ञस्य सꣳस्थितिमुवाचास्कन्दायास्कन्नꣳ हि तद्यद्यज्ञस्य सꣳस्थितस्य स्कन्दत्य[२]–थो खल्वाहुर्गायत्री वाव प्रातःसवने नातिवाद इत्यनतिवादुक एनं भ्रातृव्यो भवति य एवं वेद तस्मादष्टावष्टौ ( २ ) कृत्वोऽभिषुत्य[३] ब्रह्मवादिनो वदन्ति पवित्रवन्तोऽन्ये ग्रहा गृह्यन्ते किंपवित्र उपाꣳशुरिति वाक्पवित्र इति ब्रूयाद्वाचस्पतये पवस्व वाजिन्नित्याह वाचैवैनं पवयति[४] वृष्णो अꣳशुभ्यामित्याह वृष्णो ह्येतावꣳशू यौ सोमस्य गभस्तिपूत इत्याह गभस्तिना ह्येनं पवयति देवो देवानां पवित्रमसीत्याह देवो ह्येषः ( ३ ) सन् देवानां पवित्रं येषां भागोऽसि तेभ्यस्त्वेत्याह येषाꣳ ह्येष भागस्तेभ्य एनं गृह्णाति[५] स्वाङ्कृतोऽसीत्याह प्राणमेव स्वमकृत मधुमतीर्न इषस्कृधीत्याह सर्वमेवास्मा इदꣳ स्वदयति विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इत्याहोभयेष्वेव देवमनुष्येषु प्राणान्

दधाति[6] मनस्त्वा (४) ऽष्ट्वित्याह मन एवाश्नुत उर्वन्तरिक्षमन्विहीत्याहान्तरिक्षदेवत्यो हि प्राणः स्वाहा त्वा सुभवः सूर्यायेत्याह प्राणा वै स्वभवसो देवास्तेष्वेव परोक्षं जुहोति देवेभ्यस्त्वा मरीचिपेभ्य इत्याहाऽऽदित्यस्य वै रश्मयो देवा मरीचिपास्तेषां तद्भागधेयं तानेव तेन प्रीणाति[7] यदि कामयेत वर्षुकः पर्जन्यः (५) स्यादिति नीचा हस्तेन नि मृज्याद्वृष्टिमेव नि यच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन नि मृज्याद्वृष्टिमेवोद्यच्छति[8] यद्यभिचरेदमुं जह्यथ त्वा होष्यामीति ब्रूयादाहुतिमेवैनं प्रेप्सन् हन्ति[9] यदि दूरे स्यादा तमितोस्तिष्ठेत् प्राणमेवास्यानुगत्य हन्ति[10] यद्यभिचरेदमुष्य (६) त्वा प्राणे सादयामीति सादयेदसन्नो वै प्राणः प्राणमेवास्य सादयति[11] षड्भिरꣳशुभिः पवयति षड् वा ऋतव ऋतुभिरेवैनं पवयति[12] त्रिः पवयति त्रय इमे लोका एभिरेवैनं लोकैः पवयति[13] ब्रह्मवादिनो वदन्ति कस्मात् सत्यात् त्रयः पशूनाꣳ हस्तादाना इति यत् त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्मात् त्रयः पशूनाꣳ हस्तादानाः पुरुषो (७) हस्ती मर्कटः[14] ॥ ( माध्यंदिन- मुष्टावंष्टा,-- वेष, मनस्त्वा, पर्जन्यो, ऽमुष्य, पुरुषो, द्वे च ) ॥५॥

अन्तर्यामग्रहः ॥ सोमऋषिः ।

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा उपाꣳशौ यज्ञꣳ सꣳस्थाप्यमपश्यन् तमुपाꣳशौ समस्थापयन् तेऽसुरा वज्रमुद्यत्य देवानभ्यायन्त ते देवा बिभ्यत इन्द्रमुपाधावन् तानिन्द्रोऽन्तर्यामेणान्तरधत्त तदन्तर्यामस्यान्तर्यामत्वं यदन्तर्यामो गृह्यते भ्रातृव्यानेव तद्यजमानोऽन्तर्धत्ते[1] ऽन्तस्ते (१) दधामि द्यावापृथिवी अन्तरुर्वन्तरिक्षमित्याहैभिरेव लोकैर्यजमानो भ्रातृव्यानन्तर्धत्ते[2] ते देवा अमन्यन्तेन्द्रो वा इदमभूद्यद्वयꣳ स्म इति तेऽब्रुवन् मघवन्ननु न आ भजेति सजोषा देवैरवरैः परैश्चेत्यब्रवीद्ये चैव देवाः परे ये चावरे तानुभया-(२)-नन्वाभजत् सजोषा देवैरवरैः परैश्चेत्याह ये चैव देवाः परे ये चावरे तानुभयानन्वाभजत्य[3]न्तर्यामे मघवन् मादयस्वेत्याह यज्ञादेव यजमानं नान्तरेत्यु[4]पयामगृहीतोऽसीत्याहापानस्य धृत्यै[5] यदुभावपवित्रौ गृह्येयातां प्राणमपानोऽनु न्यृच्छेत् प्रमायुकः स्यात् पवित्रवानन्तर्यामो गृह्यते (३) प्राणापानयोर्विधृत्यै[6] प्राणापानौ वा एतौ यदुपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यं कामयेत प्रमायुकः स्यादित्यसꣳस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ वि च्छिनत्ति ताजक् प्र मीयते यं कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य सादयेद्व्यानेनैवास्य प्राणापानौ सं तनोति सर्वमायुरेति[7] ॥

( त, उभयान्, गृह्यते, चतुश्चत्वारिꣳशच्च ) ॥ ६ ॥

ऐन्द्रवायवग्रहः । सोमऋषिः ।

वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्र यन्ति वायुं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मदग्रा एव वो ग्रहा गृह्यान्ता इति तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्ते तमघ्न[2]न्त्सोऽपूयत् तं देवा नोपाधृष्णुवन् ते वायुमब्रुवन्निमं नः स्वदये-(१)-ति सोऽब्रवीद्वरं वृणै मद्देवत्यान्येव वः पात्राण्युच्यान्ता इति तस्मान्नानादेवत्यानि सन्ति वायव्यान्युच्यन्ते तमेभ्यो वायुरेवास्वदयत् तस्माद्यत् पूयति तत् प्रवाते वि षजन्ति वायुर्हि तस्य पवयिता स्वदयिता[3] तस्य विग्रहणं नाविन्दन्त्साऽदितिरब्रवीद्वरं वृणा अथ मया वि गृह्णीध्वं मद्देवत्या एव वः सोमाः (२) सन्ना

असन्नित्युपयामगृहीतोऽसीत्याहादितिदेवत्यास्तेन यानि हि दारुमयाणि पात्राण्यस्यैतानि योनेः संभूतानि यानि मृन्मयानि साक्षात् तान्यस्यै तस्मादेवमाह वाग्वै पराच्यव्याकृताऽवदत् ते देवा इन्द्रमब्रुवन्निमां नो वाचं व्याकुर्विति सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह (३) गृह्याता इति तस्मादैन्द्रवायवः सह गृह्यते तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुद्यते तस्मात् सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे द्वौ हि स वरावृणीत ॥ (स्वदय, सोमाः, सहा,-ष्टाविꣳशतिश्च) ॥ ७ ॥

मैत्रावरुणग्रहः ॥ सोमऋषिः ।

मित्रं देवा अब्रुवन्त्सोमꣳ राजानꣳ हनामेति सोऽब्रवीन्नाहꣳ सर्वस्य वा अहं मित्रमस्मीति तमब्रुवन् हनामैवेति सोऽब्रवीद्वरं वृणै पयसैव मे सोमꣳ श्रीणन्निति तस्मान्मैत्रावरुणं पयसा श्रीणन्ति तस्मात् पशवोऽपाक्रामन् मित्रः सन् क्रूरमकरिति क्रूरमिव खलु वा एषः (१) करोति यः सोमेन यजते तस्मात् पशवोऽप क्रामन्ति यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेव तन्मित्रꣳ समर्धयति पशुभिर्यजमानं पुरा खलु वावैवं मित्रोऽवेदप मत् क्रूरं चक्रुषः पशवः क्रमिष्यन्तीति तस्मादेवमवृणीत वरुणं देवा अब्रुवन्त्वयाꣳऽशभुवा सोमꣳ राजानꣳ हनामेति सोऽब्रवीद्वरं वृणै मह्यं चै (२) वैष मित्राय च सह गृह्याता इति तस्मान्मैत्रावरुणः सह गृह्यते तस्माद्राज्ञा राजानमꣳशभुवा घ्नन्ति वैश्येन वैश्यꣳ शूद्रेण शूद्रं न वा इदं दिवा न नक्तमासीदव्यावृत्तं ते देवा मित्रावरुणावब्रुवन्निदं नो विवासयतमिति तावब्रूतां वरं वृणावहा एक एवाऽऽवत् पूर्वो ग्रहो गृह्याता इति तस्मादैन्द्रवायवः (३) पूर्वो मैत्रावरुणाद्गृह्यते प्राणापानौ ह्येतौ यदुपाꣳश्वन्तर्यामौ मित्रोऽहरजनयद्वरुणो रात्रिं ततो वा इदं व्यौच्छद्यन्मैत्रावरुणो गृह्यते व्युष्ट्यै ॥ (एष-श्री,-न्द्रवायवो, द्वाविꣳशतिश्च) ॥ ८ ॥

आश्विनग्रहः ॥ सोमऋषिः ।

यज्ञस्य शिरोऽच्छिद्यत ते देवा अश्विनावब्रुवन् भिषजौ वै स्थ इदं यज्ञस्य शिरः प्रति धत्तमिति तावब्रूतां वरं वृणावहै ग्रह एव नावत्रापि गृह्यतामिति ताभ्यामेतमाश्विनमगृह्णन् ततो वै तौ यज्ञस्य शिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै तौ देवा अब्रुवन्नपूतौ वा इमौ मनुष्यचरौ (१) भिषजाविति तस्माद्ब्राह्मणेन भेषजं न कार्यमपूतो ह्येषो ऽमेध्यो यो भिषक्तौ बहिष्पवमानेन पवयित्वा ताभ्यामेतमाश्विनमगृह्णन् तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते तस्मादेवं विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयते तयोस्त्रेधा भैषज्यं वि न्यदधुरग्नौ तृतीयमप्सु तृतीयं तस्मादुदपात्र-(२)-मुपनिधाय ब्राह्मणं दक्षिणतो निषाद्य भेषजं कुर्याद्यावदेव भेषजं तेन करोति समर्धुकमस्य कृतं भवति ब्रह्मवादिनो वदन्ति कस्मात् सत्यादेकपात्रा द्विदेवत्या गृह्यन्ते द्विपात्रा हूयन्त इति यदेकपात्रा गृह्यन्ते तस्मादेकोऽन्तरतः प्राणो द्विपात्रा हूयन्ते तस्मा द्वौद्वौ बहिष्टात् प्राणाः प्राणा वा एते यद् द्विदेवत्याः पशव इडा यदिडां पूर्वां द्विदेवत्येभ्य उपह्वयेत (३) पशुभिः प्राणानन्तर्दधीत प्रमायुकः स्याद् द्विदेवत्यान् भक्षयित्वेडामुप ह्वयते प्राणानेवाऽऽत्मन् धित्वा पशूनुप ह्वयते वाग्वा ऐन्द्रवायवश्चक्षुर्मैत्रावरुणः श्रोत्रमाश्विनः पुरस्तादैन्द्रवायवं भक्षयति तस्मात् पुरस्ताद्वाचा वदति पुरस्तान्मैत्रावरुणं तस्मात्

पुरस्ताच्चक्षुषा पश्यति सर्वतः परिहारमाश्विनं तस्मात् सर्वतः श्रोत्रेण शृणोति[5] प्राणा वा एते यद्
द्विदेवत्या ( ४ ) अरिक्तानि पात्राणि सादयति तस्मादरिक्ता अन्तरतः प्राणा यतः खलु वै यज्ञस्य विततस्य
न क्रियते तदनु यज्ञꣳ रक्षाꣳस्यव चरन्ति यदरिक्तानि पात्राणि सादयति क्रियमाणमेव तद्यज्ञस्य शये
रक्षसामनन्ववचाराय दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयति वाच्येव वाचं दधात्या[10] तृतीयस-
वनात् परि शेरे यज्ञस्य संतत्यै[11] ॥ ( मनुष्यचरा,- वुदपात्र,- मुपह्वयेत, द्विदेवत्याः, षट्चत्वारिꣳशच्च ) ॥ ९ ॥

शुक्रामन्थिग्रहौ ॥ सोमऋषिः ।

बृहस्पतिर्देवानां पुरोहित आसीच्छण्डामर्कावसुराणां ब्रह्मण्वन्तो देवा आसन् ब्रह्मण्वन्तोऽसुरास्ते[1]
ऽन्योऽन्यं नाशक्नुवन्नभिभवितुं ते देवाः शण्डामर्कावुपामन्त्रयन्त तावब्रूतां वरं वृणावहै ग्रहावेव नाव-
त्रापि गृह्येतामिति ताभ्यामेतौ शुक्रामन्थिनावगृह्णन् ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषः शुक्रा-
मन्थिनौ गृह्येते भवत्यात्मना परा ( १ ) ऽस्य भ्रातृव्यो भवति[1] तौ देवा अपनुद्याऽऽत्मन इन्द्रायाजुह-
वुरपनुत्तौ शण्डामर्कौ सहामुनेति ब्रूयाद्यं द्विष्याद्यमेव द्वेष्टि तेनैनौ सहाप नुदते[2] स प्रथमः संकृति-
र्विश्वकर्मेत्येवैनावात्मन इन्द्रायाजुहवुरिन्द्रो ह्येतानि रूपाणि करिक्रदचर[3]—दसौ वा आदित्यः शुक्रश्चन्द्रमा
मन्थ्यपिगृह्य प्राञ्चौ नि-( २ )-ष्क्रामतस्तस्मात् प्राञ्चौ यन्तौ न पश्यन्ति[4] प्रत्यञ्चावावृत्य जुहुतस्तस्मात्
प्रत्यञ्चौ यन्तौ पश्यन्ति[5] चक्षुषी वा एते यज्ञस्य यच्छुक्रामन्थिनौ नासिकोत्तरवेदिरभितः परिक्रम्य
जुहुतस्तस्मादभितो नासिकां चक्षुषी तस्मान्नासिकया चक्षुषी विधृते सर्वतः परि क्रामतो रक्षसामपहत्यै[6]
देवा वै याः प्राचीराहुतीरजुहवुर्ये पुरस्तादसुरा आसन् ताꣳस्ताभिः प्र-( ३ )-णुदन्त याः प्रतीचीर्ये पश्चादसुरा
आसन् ताꣳस्ताभिरपानुदन्त प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनौ पश्चाच्चैव पुरस्ताच्च
यजमानो भ्रातृव्यान् प्र णुदते तस्मात् पराचीः प्रजाः प्र वीयन्ते प्रतीचीर्जायन्ते[7] शुक्रामन्थिनौ वा अनु
प्रजाः प्र जायन्तेऽत्रीश्चाऽऽद्याश्च सुवीराः प्रजाः प्रजनयन् परीहि शुक्रः शुक्रशोचिषा ( ४ ) सुप्रजाः प्रजाः
प्रजनयन् परीहि मन्थी मन्थिशोचिषेत्याहैता वै सुवीरा या अत्रीरेताः सुप्रजा या आद्या[8] य एवं वेदा-
त्र्यस्य प्रजा जायते नाऽऽद्या[9] प्रजापतेरक्ष्यश्वयत् तत् पराऽपतत् तद्विकङ्कतं प्राविशत् तद्विकङ्कते
नारमत तद्यवं प्राविशत् तद्यवेऽरमत तद्यवस्य ( ५ ) यवत्वं यद्वैकङ्कतं मन्थिपात्रं भवति सक्तुभिः
श्रीणाति प्रजापतेरेव तच्चक्षुः सं भरति[10] ब्रह्मवादिनो वदन्ति कस्मात् सत्यान्मन्थिपात्रꣳ सदो नाश्नुत
इत्यार्तिपात्रꣳ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्च्छेत् तस्मान्नाश्नुते[11] ॥ ( आत्मना परा, नि,-ष्प्र,
शुक्रशोचिषा, यवस्य,सप्तत्रिꣳशच्च ) ॥ १० ॥

आग्रयणग्रहः ॥ सोमऋषिः ।

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा आग्रयणाग्रान् ग्रहानपश्यन् तानगृह्णत ततो वै तेऽग्रं
पर्यायन् यस्यैवं विदुष आग्रयणाग्रा ग्रहा गृह्यन्तेऽग्रमेव समानानां पर्येति[1] रुग्णवत्यर्चा भ्रातृव्यवतो
गृह्णीयाद्भ्रातृव्यस्यैव रुक्त्वाऽग्रꣳ समानानां पर्येति[2] ये देवा दिव्येकादश स्थेत्याहै-( १ )-ताव-
तीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्ये[3]—ष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येष

देवतयां वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत सामन्यत वागन्तयन्ति वै मेति साऽऽग्रयणं प्रत्याऽगच्छत् तदाग्रयणस्याऽऽग्रयणत्वं ( २ ) तस्मादाग्रयणे वाग्वि सृज्यते यत् तूष्णीं पूर्वे ग्रहा गृह्यन्ते यथा त्सारीयति म आख इयति नाप रात्स्यामीत्युपावसृजत्ये- वमेव तदध्वर्युराग्रयणं गृहीत्वा यज्ञमारभ्य वाचं वि सृजते त्रिर्हिं करोत्युद्गातॄनेव तद्वृणीते प्रजापतिर्वा एष यदाग्रयणो यदाग्रयणं गृहीत्वा हिं करोति प्रजापतिरेव ( ३ ) तत् प्रजा अभि जिघ्रति तस्माद्वत्सं जातं गौरभि जिघ्रत्यात्मा वा एष यज्ञस्य यदाग्रयणः सवनेसवनेऽभि गृह्णात्यात्मन्नेव यज्ञꣳ सं तनोत्यु परिष्टादा नयति रेत एव तद्दधात्यधस्तादुप गृह्णाति प्र जनयत्येव तद्ब्रह्मवादिनो वदन्ति कस्मात् सत्याद्गायत्री कनिष्ठा छन्दसाꣳसती सर्वाणि सवनानि वहतीत्ये-( ४ )-ष वै गायत्रियै वत्सो यदाग्रयण- स्तमेव तदभिनिवर्तꣳ सर्वाणि सवनानि वहति तस्माद्वत्समपाकृतं गौरभि नि वर्तते ॥ ( आह, ऽऽग्रय- णत्वं, प्रजापतिरेवे,-ति, विꣳशतिश्च ) ॥ ११ ॥

[ यज्ञेन २३२। देवा ३२६। ब्रह्मवादिनो २२५। देवस्य १९४। प्राणो ३५२। देवा १९४। वा-१७८।-ग्मित्रं १८२। यज्ञस्य २४६। बृहस्पति-२८७।-र्देवा २२०। एकादश ॥ २६३६ ]

[ ॥ इति षष्ठकाण्डे चतुर्थः प्रपाठकः ॥ ४ ॥ ]

## सोममन्त्रब्राह्मणनिरूपणम् ।

[ अथ पञ्चमः प्रपाठकः ॥ ५ ॥ ]

उक्थ्यग्रहः ॥ सोमऋषिः ।

इन्द्रो वृत्राय वज्रमुदयच्छत् स वृत्रो वज्रादुद्यतादबिभेत् सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत् ते प्र दास्यामीति तस्मा उक्थ्यं प्रायच्छत् तस्मै द्वितीयमुदयच्छत् सोऽब्रवीन्मा मे प्र हार- स्ति वा इदं मयि वीर्यं तत् ते प्र दास्यामीति ( १ ) तस्मा उक्थ्यमेव प्रायच्छत् तस्मै तृतीयमुदयच्छत् तं विष्णुरन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत् ते प्र दास्यामीति तस्मा उक्थ्यमेव प्रायच्छत् तं निर्मायं भूतमहन् यज्ञो हि तस्य मायाऽऽसीद्यदुक्थ्यो गृह्यत इन्द्रियमेव ( २ ) तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्त इन्द्राय त्वा बृहद्वते वयस्वत इत्याहेन्द्राय हि स तं प्रायच्छत् तस्मै त्वा विष्णवे त्वेत्याह यदेव विष्णुरन्वतिष्ठत जहीति तस्माद्विष्णुमन्वाभजति त्रिर्निर्गृह्णाति त्रिर्हि स तं तस्मै प्रायच्छदे-ष ते योनिः पुनर्हविरसीत्याह पुनःपुन-( ३ )-र्ह्यस्मान्निर्गृह्णाति चक्षुर्वा एतद्यज्ञस्य यदुक्थ्यस्तस्मादुक्थ्यꣳ हुतꣳ सोमा अन्वायन्ति तस्मादात्मा चक्षुरन्वेति तस्मादेकं यन्तं बहवोऽनु यन्ति तस्मादेको बहूनां भद्रो भवति तस्मादेको बह्वीर्जाया विन्दते यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेय- मित्यन्तराऽऽहवनीयं च हविर्धानं च तिष्ठन्नव नये-( ४ )-दात्मानमेव यज्ञयशसेनार्पयति यदि कामयेत यजमानं यज्ञयशसेनार्पयेयमित्यन्तरा सदोहविर्धाने तिष्ठन्नव नयेद्यजमानमेव यज्ञयशसेनार्पयति यदि कामयेत सदस्यान् यज्ञयशसेनार्पयेयमिति सद आलभ्याव नयेत् सदस्यानेव यज्ञयशसेनार्पयति ॥ ( इती,-न्द्रियमेव, पुनःपुन,-र्नयेत् त्रयस्त्रिꣳशच्च ) ॥ १ ॥

ध्रुवग्रहः ॥ सोमऋषिः ।

आयुर्वा एतद्यज्ञस्य यद् ध्रुव उत्तमो ग्रहाणां गृह्यते तस्मादायुः प्राणानामुत्तमं[1] मूर्धानं दिवो अरतिं पृथिव्या इत्याह मूर्धानमेवैनꣳ समानानां करोति[2] वैश्वानरमृताय जातमग्निमित्याह वैश्वानरꣳ हि देवतयाऽऽयु[3]रुभयतोवैश्वानरो गृह्यते तस्मादुभयतः प्राणा अधस्ताच्चोपरिष्टाच्चा[4]र्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी ध्रुवस्तस्मा-( १ )-दर्ध्यवाङ् प्राणोऽन्येषां प्राणाना[5]मुपोप्तेऽन्ये ग्रहाः साद्यन्तेऽनुपोप्ते ध्रुवस्तस्मादस्थ्नाऽन्याः प्रजाः प्रतितिष्ठन्ति माꣳसेनान्या[6] असुरा वा उत्तरतः पृथिवीं पर्याचिकीर्षन् तां देवा ध्रुवेणादृꣳहन् तद् ध्रुवस्य ध्रुवत्वं यद् ध्रुव उत्तरतः साद्यते धृत्या[7] आयुर्वा एतद्यज्ञस्य यद् ध्रुव आत्मा होता यद्धोतृचमसे ध्रुवमवनयत्यात्मन्नेव यज्ञस्या ( २ ) युर्दधाति[8] पुरस्तादुक्थस्यावनीय इत्याहुः पुरस्ताद्ध्यायुषो भुङ्क्ते मध्यतोऽवनीय इत्याहुर्मध्यमेन ह्यायुषो भुङ्क्त उत्तरार्धेऽवनीय इत्याहुरुत्तमेन ह्यायुषो भुङ्क्ते[9] वैश्वदेव्यामृचि शस्यमानायामव नयति वैश्वदेव्यो वै प्रजाः प्रजास्वेवाऽऽयुर्दधाति[10] ॥
( अर्धी ध्रुवस्तस्मा,-देव यज्ञस्यै,-कान्नचत्वारिꣳशच्च ) ॥ २ ॥

ऋतुग्रहाः ॥ सोमऋषिः ।

यज्ञेन वै देवाः सुवर्गं लोकमायन् तेऽमन्यन्त मनुष्या नोऽन्वाभविष्यन्तीति ते संवत्सरेण योपयित्वा सुवर्गं लोकमायन् तमृषय ऋतुग्रहैरेवानु प्राजानन् यदृतुग्रहा गृह्यन्ते सुवर्गस्य लोकस्य प्रज्ञात्यै[1] द्वादश गृह्यन्ते द्वादश मासाः संवत्सरः संवत्सरस्य प्रज्ञात्यै[2] सह प्रथमौ गृह्येते सहोत्तमौ तस्माद् द्वौद्वावृतू[3] उभयतोमुखमृतुपात्रं भवति को ( १ ) हि तद्वेद यत ऋतूनां मुखं[4]मृतुना प्रेष्येति षट् कृत्व आह षड्वा ऋतव ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतुष्पद एव पशून् प्रीणाति द्विः पुनर्ऋतुनाऽऽह द्विपद एव प्रीणात्यृ[5]तुना प्रेष्येति षट् कृत्व आहर्तुभिरिति चतुस्तस्माच्चतुष्पादः पशव ऋतूनुप जीवन्ति द्विः ( २ ) पुनर्ऋतुनाऽऽह तस्माद् द्विपादश्चतुष्पदः पशूनुप जीवन्त्यृ[6]तुना प्रेष्येति षट् कृत्व आहर्तुभिरिति चतुर्द्विः पुनर्ऋतुनाऽऽहाऽऽक्रमणमेव तत् सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै[7] नान्योऽन्यमनु प्र पद्येत यदन्योऽन्यमनु प्र पद्येतर्तुर्ऋतुमनु प्र पद्येतर्तवो मोहुकाः स्युः ( ३ ) प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेण तस्मादादित्यः षण्मासो दक्षिणेनैति षडुत्तरेणो[9]पयामगृहीतोऽसि सꣳसर्पोऽस्यꣳहस्पत्याय त्वेत्याहास्ति त्रयोदशो मास इत्याहुस्तमेव तत् प्रीणाति[10] ॥ ( को, जीवन्ति द्विः, स्यु,-श्चतुस्त्रिꣳशच्च ) ॥ ३ ॥

ऐन्द्राग्न-वैश्वदेवग्रहौ ॥ सोमऋषिः ।

सुवर्गाय वा एते लोकाय गृह्यन्ते यदृतुग्रहा ज्योतिरिन्द्राग्नी यदैन्द्राग्नमृतुपात्रेण गृह्णाति ज्योतिरेवास्मा उपरिष्टाद्दधाति सुवर्गस्य लोकस्यानुख्यात्यां[1] ओजोभृतौ वा एतौ देवानां यदिन्द्राग्नी यदैन्द्राग्नो गृह्यत ओज एवाव रुन्धे[2] वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजा असावादित्यः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति तस्मादसावादित्यः ( १ ) सर्वाः प्रजाः प्रत्यङ्ङुदेति तस्मात् सर्व एव मन्यते मां प्रत्युदगादिति[3] वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति वैश्वदेव्यो वै प्रजास्तेजः शुक्रो यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति प्रजास्वेव तेजो दधाति[4] ॥ ( तस्मादसावादित्य-, त्रिꣳशच्च ) ॥ ४ ॥

माहेन्द्रग्रहश्च ॥ सोमऋषिः ।

इन्द्रो मरुद्भिः सांविद्येन माध्यंदिने सवने वृत्रमहन् यन्माध्यंदिने सवने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव ते यजमानस्य गृह्यन्ते[1] तस्य वृत्रं जघ्नुष ऋतवोऽमुह्यन्त्स ऋतुपात्रेण मरुत्वतीयानगृह्णात् ततो वै स ऋतून् प्राजानाद्यदृतुपात्रेण मरुत्वतीया गृह्यन्त ऋतूनां प्रज्ञात्यै[2] वज्रं वा एतं यजमानो भ्रातृव्याय प्र हरति यन्मरुत्वतीया उदेव प्रथमेन ( १ ) यच्छति प्र हरति द्वितीयेन स्तृणुते तृतीयेना—ऽऽयुधं वा एतद्यजमानः सꣳ स्कुरुते यन्मरुत्वतीया धनुरेव प्रथमो ज्या द्वितीय इषुस्तृतीयः प्रत्येव प्रथमेन धत्ते वि सृजति द्वितीयेन विध्यति तृतीयेने[5]—न्द्रो वृत्रꣳ हत्वा परां परावतमगच्छदपाराधमिति मन्यमानः स हरितोऽभवत् स एतान्मरुत्वतीयानात्मस्परणानपश्यत् तानगृह्णीत ( २ ) प्राणमेव प्रथमेनास्पृणुतापानं द्वितीयेनाऽऽत्मानं तृतीयेना[6]—ऽऽत्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं द्वितीयेनाऽऽत्मानं तृतीयेने[7]—न्द्रो वृत्रमहन् तं देवा अब्रुवन् महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत् वृत्रꣳ हत्वाऽन्यासु देवतास्व-( ३ )-धि यन्माहेन्द्रो गृह्यत उद्धारमेव तं यजमान उद्धरतेऽन्यासु प्रजास्वधि[8] शुक्रपात्रेण गृह्णाति यजमानदेवत्यो वै माहेन्द्रस्तेजः शुक्रो यन्माहेन्द्रꣳ शुक्रपात्रेण गृह्णाति यजमान एव तेजो दधाति[9] ॥ प्रथमेना,-गृह्णीत, देवतास्व, षाविꣳशतिश्च ) ॥ ५ ॥

आदित्यग्रहः ॥ सोमऋषिः ।

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् तस्या उच्छेषणमददुस्तत् प्राश्नात् सा रेतोऽधत्त तस्यै चत्वार आदित्या अजायन्त[1] सा द्वितीयमपचत् साऽमन्यतोच्छेषणान्म इमेऽज्ञत यदग्रे प्राशिष्यामीतो मे वसीयाꣳसो जनिष्यन्त इति साऽग्रे प्राश्नात् सा रेतोऽधत्त तस्यै व्यृद्धमाण्डमजायत[2] साऽऽदित्येभ्य एव ( १ ) तृतीयमपचद्भोगाय म इदꣳ श्रान्तमस्त्विवति तेऽब्रुवन् वरं वृणामहै यो ऽतो जायाता अस्माकꣳ स एकोऽसद्योऽस्य प्रजायामृध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्यो ऽजायत तस्य वा इयं प्रजा यन्मनुष्यास्तास्वेक एवर्धो यो यजते स देवानां भोगाय भवति[3] देवा वै यज्ञा-( २ )-द्रुद्रमन्तरायन्त्स आदित्यानन्वाक्रमत ते द्विदेवत्यान् प्रापद्यन्त तान् न प्रति प्रायच्छन् तस्मादपि वध्यं प्रपन्नं न प्रति प्र यच्छन्ति[4] तस्माद् द्विदेवत्येभ्य आदित्यो निर्गृह्यते[5] यदुच्छेषणादजायन्त तस्मादुच्छेषणाद्गृह्यते[6] तिसृभिर्ऋग्भिर्गृह्णाति माता पिता पुत्रस्तदेव तन्मिथुनमुल्बं गर्भो जरायु तदेव त-( ३ )-न्मिथुनं[7] पशवो वा एते यदादित्य ऊर्दधि दध्ना मध्यतः श्रीणात्यूर्जमेव पशूनां मध्यतो दधाति[8] शृतातङ्क्येन मेध्यत्वाय तस्मादामा पक्वं दुहे[9] पशवो वा एते यदादित्यः परिश्रित्य गृह्णाति प्रतिरुध्यैवास्मै पशून् गृह्णाति[10] पशवो वा एते यदादित्य एष रुद्रो यदग्निः परिश्रित्य गृह्णाति रुद्रादेव पशूनन्तर्दधात्यै[11] –( ४ )–ष वै विवस्वानादित्यो यदुपाꣳशुसवनः स एतमेव सोमपीथं परि शय आ तृतीयसवनाद्विवस्व आदित्यैष ते सोमपीथ इत्याह विवस्वन्तमेवाऽऽदित्यꣳ सोमपीथेन समर्धयति[12] या दिव्या वृष्टिस्तया त्वा श्रीणामीति वृष्टिकामस्य श्रीणीयाद्वृष्टिमेवाव रुन्धे यदि ताजक् प्रस्कन्देद्वर्षुकः पर्जन्यः स्या-

यदि चिरमवर्षुको[13] न ( ५ ) सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट् करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुरस्य प्रमायुकꣳ स्यात् तस्मान्नान्वीक्ष्यः[14] ॥ ( एव, युञ्जा, ज्जरायु तदेव तद्,--न्तर्दधाति, न, सप्तविꣳशतिश्च ) ॥ ६ ॥

सावित्र-वैश्वदेवग्रहौ च ॥ सोमऋषिः ।

अन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति प्रजापतिर्वा एष यदाग्रयणः प्रजानां प्रजननाय[1] न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते नानु वषट् करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजे[2]--देष वै गायत्रो देवानां यत् सवितैष गायत्रियै लोके गृह्यते यदाग्रयणो यदन्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति स्वादेवैनं योनेर्निर्गृह्णाति[3] विश्वे ( १ ) देवास्तृतीयꣳ सवनं नोदयच्छन् ते सवितारं प्रातःसवनभागꣳ सन्तं तृतीयसवनमभि पर्यणयन् ततो वै ते तृतीयꣳ सवनमुदयच्छन् यत् तृतीयसवने सावित्रो गृह्यते तृतीयस्य सवनस्योद्यत्यै[4] सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशः सविता प्रसवानामीशे यत् सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र ( २ ) जनयति[5] सोमे सोममभि गृह्णाति रेत एव तद्दधाति[6] सुशर्माऽसि सुप्रतिष्ठान इत्याह सोमे हि सोममभिगृह्णाति प्रतिष्ठित्यां एतस्मिन् वा अपि ग्रहे मनुष्येभ्यो देवेभ्यः पितृभ्यः क्रियते सुशर्माऽसि सुप्रतिष्ठान इत्याह मनुष्येभ्य एवैतेन करोति बृहदित्याह देवेभ्य एवैतेन करोति नम इत्याह पितृभ्य एवैतेन करोत्ये-( ३ )-तावतीर्वै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो गृह्णात्ये[8]--ष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इत्याह वैश्वदेवो ह्येषः[9] ॥ ( विश्वे. प्र, पितृभ्य एवैतेन करोत्ये,- कान्नविꣳशतिश्च ) ॥ ७ ॥

पात्नीवतग्रहः ॥ सोमऋषिः ।

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳशुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्येते प्राणमेवानु प्रयन्ति प्राणमनूद्यन्ति[1] प्रजापतिर्वा एष यदाग्रयणः प्राण उपाꣳशुः पत्नीः प्रजाः प्र जनयन्ति यदुपाꣳशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति प्रजानां प्रजननाय तस्मात् प्राणं प्रजा अनु प्र जायन्ते[2] देवा वा इतइतः पत्नीः सुवर्गं ( १ ) लोकमजिगाꣳसन् ते सुवर्गं लोकं न प्राजानन् त एतं पात्नीवतमपश्यन् तमगृह्णत ततो वै ते सुवर्गं लोकं प्राजानन् यत् पात्नीवतो गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै[3] स सोमो नातिष्ठत स्त्रीभ्यो गृह्यमाणस्तं घृतं वज्रं कृत्वाऽघ्नन् तं निरिन्द्रियं भूतमगृह्णन् तस्मात् स्त्रियो निरिन्द्रिया अदायादीरपि पापात् पुꣳस उपस्तितरं ( २ )-वदन्ति यद्घृतेन पात्नीवतꣳ श्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णात्यु--पयामगृहीतोऽसीत्याहेयं वा उपयामस्तस्मादिमां प्रजा अनु प्र जायन्ते[5] बृहस्पतिसुतस्य त इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयती[6]--न्दो इत्याह रेतो वा इन्दू रेत एव तद्दधाती[7]--न्द्रियाव इत्या-( ३ )-ह प्रजा वा इन्द्रियं प्रजा एवास्मै प्र जनयत्य--ग्ना३ इत्याहाग्निर्वै रेतोधाः पत्नीव इत्याह मिथुनत्वाय[9] सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति[10] देवा वै त्वष्टारमजिघाꣳसन्त्स पत्नीः प्रापद्यत तं न प्रति प्रायच्छन् तस्मादपि ( ४ ) वध्यं प्रपन्नं न प्रति प्र यच्छन्ति तस्मात् पात्नीवते त्वष्ट्रेऽपि गृह्यते[11] न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते[12] नानु वषट् करोति यदनुवषट्-

कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नानुवषट्कुर्यादशान्तमग्नीत् सोमं भक्षयेदुपाꣳश्वनु वषट् करोति न रुद्रं प्रजा अन्ववसृजति शान्तमग्नीत् सोमं भक्षयत्य[१३]—ग्नीन्नेष्टुरुपस्थमा सीद ( ५ ) नेष्टः पत्नीमुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधाति नेष्टा पत्नियां[१४]—मुद्गात्रा सं ख्यापयति प्रजापतिर्वा एष यदुद्गाता प्रजानां प्रजननाया[१५]—प उप प्र वर्तयति रेत एव तत् सिञ्चत्यू[१६]—रुणोप प्र वर्तयत्यूरुणा हि रेतः सिच्यते[१७] नग्नंकृत्योरुमुप प्र वर्तयति यदा हि नग्न ऊरुर्भवत्यथ मिथुनी( ६ ) भवतोऽथ रेतः सिच्यतेऽथ प्रजाः प्र जायन्ते[१८] ॥

( पत्नीः सुवर्ग,- मुपास्तितर,- मिन्द्रियाव इत्य,- पि, सीद, मिथुन्य,- ष्टौ च ) ॥ ८ ॥

हारियोजनग्रहः ॥ सोमऋषिः ।

इन्द्रो वृत्रमहन् तस्य शीर्षकपालमुदौब्जत् स द्रोणकलशोऽभवत् तस्मात् सोमः समस्रवत् स हारियोजनोऽभवत्[१] तं व्यचिकित्सज्जुहवानी३ मा हौषा३मिति सोऽमन्यत यद्धोष्याम्याम२ हौष्यामि यन्न होष्यामि यज्ञवेशसं करिष्यामीति तमध्रियत होतु२ सोऽग्निरब्रवीन्न मय्याम२ होष्यसीति तं धानाभिरश्रीणात् ( १ ) त२ शृतं भूतमजुहोद्यद्धानाभिर्हारियोजन२ श्रीणाति शृतत्वाय शृतमेवैनं भूतं जुहोति[२] बह्वीभिः श्रीणात्येतावतीरेवास्यामुष्मिँल्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिः श्रीणीया[३]—दृक्सामे वा इन्द्रस्य हरी सोमपानौ तयोः परिधय आधानं यदप्रहृत्य परिधीञ्जुहुयादन्तराधानाभ्यां ( २ ) घासं प्र यच्छेत् प्रहृत्य परिधीञ्जुहोति निराधानाभ्यामेव घासं प्र यच्छत्यु[४]—न्नेता जुहोति यातयामेव ह्येतर्ह्यध्वर्युः स्वगाकृतो यदध्वर्युर्जुहुयाद्यथा विमुक्तं पुनर्युनक्ति तादृगेव त[५]—च्छीर्षन्नधिनिधाय जुहोति शीर्षतो हि स समभव[६]—द्विक्रम्य जुहोति विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै[७] पशवो वै हारियोजनीर्यत् संभिन्द्यादल्पा ( ३ ) एनं पशवो भुञ्जन्त उप तिष्ठेरन् यन्न संभिन्द्याद्बहव एनं पशवोऽभुञ्जन्त उप तिष्ठेरन् मनसा सं बाधत उभयं करोति बहव एवैनं पशवो भुञ्जन्त उप तिष्ठन्त[८] उन्नेतर्युपहवमिच्छन्ते य एव तत्र सोमपीथस्तमेवाव रुन्धत[९] उत्तरवेद्यां नि वपति पशवो वा उत्तरवेदिः पशवो हारियोजनीः पशुष्वेव पशून् प्रति ष्ठापयन्ति[१०] ( ४ ) ॥

( अश्रीणा,- दन्तराधानाभ्या,- मल्पाः, स्थापयन्ति ) ॥ ९ ॥

आग्रयणादीनां कथञ्चित् क्षये पुनर्ग्रहणम्, दारुपात्र-पुरोरुक् प्रशंसा च ॥ सोमऋषिः ।

ग्रहान् वा अनु प्रजाः पशवः प्र जायन्त[१] उपाꣳश्वन्तर्यामावजावयः शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गाव[२] आदित्यग्रहो भूयिष्ठाभिर्ऋग्भिर्गृह्यते तस्माद्गावः पशूनां भूयिष्ठा[३] यत् त्रिरुपाꣳशुꣳ हस्तेन विगृह्णाति तस्माद् द्वौ त्रीनजा जनयत्य[४]—थावयो भूयसीः[५] पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत् कलशाद्गृह्णीयाद्यथा पिता ( १ ) पुत्रं क्षित उपधावति तादृगेव त[६]—द्यत् कलश उपदस्येदाग्रयणाद्गृह्णीयाद्यथा पुत्रः पितरं क्षित उपधावति तादृगेव त[७]—दात्मा वा एष यज्ञस्य यदाग्रयणो यद्ग्रहो वा कलशो वोपदस्येदाग्रयणाद्गृह्णीयादात्मन एवाधि यज्ञं निष्करोत्य[८]—विज्ञातो वा एष गृह्यते यदाग्रयणः स्थाल्या गृह्णाति वायव्येन जुहोति तस्मात् ( २ ) गर्भेणाविज्ञातेन ब्रह्महाऽवभृथमव यन्ति परा स्थालीरस्यन्त्युद्वायव्यानि हरन्ति तस्मात् स्त्रियं जातां पराऽस्यन्त्युत् पुमाꣳसꣳ हरन्ति[१०]

यत् पुरोरुचमाह यथा वस्यस आहरति तादृगेव तद्यद्ग्रहं गृह्णाति यथा वस्यस आहृत्य प्राऽऽह तादृगेव तद्यत् सादयति यथा वस्यस उपनिधायापक्रामति तादृगेव तद्य-( ३ )-द्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद् दृढं पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्यै ॥
( यथा पिता, तस्मा,- दपक्रामति तादृगेव त,-दृष्टादश च ) ॥ १० ॥

सोमपात्रप्रशंसा, सवनीयपुरोडाशविधानं च ॥ सोमऋषिः ।

प्राण्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्तेऽमुमेव तैर्लोकमभि जयति पराङिव ह्यसौ लोको यानि पुनः प्रयुज्यन्त इममेव तैर्लोकमभि जयति पुनः पुनरिव ह्ययं लोकः प्राण्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वोषधयः परा भवन्ति यानि पुनः ( १ ) प्रयुज्यन्ते तान्यन्वोषधयः पुनरा भवन्ति प्राण्यानि पात्राणि युज्यन्ते नान्यानि यानि पराचीनानि प्रयुज्यन्ते तान्यन्वारण्याः पशवोऽरण्यमप यन्ति यानि पुनः प्रयुज्यन्ते तान्यनु ग्राम्याः पशवो ग्राममुपावयन्ति यो वै ग्रहाणां निदानं वेद निदानवान् भवत्याज्यमित्युक्थं तद्वै ग्रहाणां निदानं यदुपाꣳशु शꣳसति त-( २ )-दुपाꣳश्वन्तर्यामयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै ग्रहाणां निदानं य एवं वेद निदानवान् भवति यो वै ग्रहाणां मिथुनं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यैरन्य एतद्वै ग्रहाणां मिथुनं य एवं वेद प्र प्रजया पशुभिर्मिथुनैर्जायते इन्द्रस्त्वष्टुः सोममभीषहाऽपिबत् स विष्वङ् ( ३ ) व्यार्च्छत् स आत्मन्नारमणं नाविन्दत् स एताननुसवनं पुरोडाशानपश्यत् तान् निरवपत् तैर्वै स आत्मन्नारमणमकुरुत तस्मादनुसवनं पुरोडाशा निरुप्यन्ते तस्मादनुसवनं पुरोडाशानां प्राश्नीयादात्मन्नेवाऽऽरमणं कुरुते नैनꣳ सोमोऽति पवते ब्रह्मवादिनो वदन्ति नर्चा न यजुषा पङ्क्तिराप्यतेऽथ किं ( ४ ) यज्ञस्य पाङ्क्तत्वमिति धानाः करम्भः परिवापः पुरोडाशः पयस्या तेन पङ्क्तिराप्यते तद्यज्ञस्य पाङ्क्तत्वम् ॥ ( भवन्ति यानि पुनः, शꣳसति त,- द्विष्वङ्, किं, चतुर्दश च ) ॥ ११ ॥

[ इन्द्र २३३। आयु- १३९। -यज्ञेन १८४। सुवर्गाये- ८०। -न्द्रो १७८। ऽदिति- २७७। -रन्तर्यामपात्रेण १६९। प्राण ३०८। इन्द्रो २००। ग्रहान् १६८। ग्रै- २१४। कांदश २१५० ]

[ ॥ इति षष्ठकाण्डे पञ्चमः प्रपाठकः ॥५॥ ]

## सोममन्त्रब्राह्मणनिरूपणम् ।

[ अथ षष्ठः प्रपाठकः ॥६॥ ]

दक्षिणाहोमः, तद्दानादिवर्णनं च ॥ सोमऋषिः ।

सुवर्गाय वा एतानि लोकाय हूयन्ते यद्दाक्षिणानि द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमते सदोऽभ्यैति सुवर्गमेवैनं लोकं गमयति सौरीभ्यामृग्भ्यां गार्हपत्ये जुहोत्यमुमेवैनं लोकꣳ समारोहयति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुवर्गस्य लोकस्याभिनीत्यै दिवं गच्छ सुवः पतेति हिरण्यꣳ ( १ ) हुत्वोद्गृह्णाति सुवर्गमेवैनं लोकं गमयति रूपेण वो रूपमभ्यै-

मीत्याह रूपेण ह्यासाꣳ रूपमभ्यैति यद्धिरण्येन[६] तुथो वो विश्ववेदा वि भजत्वित्याह तुथो ह स्म वै
विश्ववेदा देवानां दक्षिणा वि भजति तेनैवैना वि भजत्य[७]—तत् ते अग्ने राध ( २ ) ऐति सोमच्युत-
मित्याह सोमच्युतꣳ ह्यस्य राध ऐति[८] तन्मित्रस्य पथा नयेत्याह शान्त्या[९] ऋतस्य पथा प्रेत चन्द्र-
दक्षिणा इत्याह सत्यं वा ऋतꣳ सत्येनैवैना ऋतेन वि भजति[१०] यज्ञस्य पथा सुविता नयन्तीरित्याह
यज्ञस्य ह्येताः पथा यन्ति यद्दक्षिणा[११] ब्राह्मणमद्य राध्यास-( ३ )मृषिमार्षेयमित्याहैष वै ब्राह्मण ऋषि-
रार्षेयो यः शुश्रुवान् तस्मादेवमाह[१२] वि सुवः पश्य व्यन्तरिक्षमित्याह सुवर्गमेवैनं लोकं गमयति[१३]
यतस्व सदस्यैरित्याह मित्रत्वाया[१४]—स्मद्दात्रा देवत्रा गच्छत मधुमतीः प्रदातारमा विशतेत्याह वयमिह
प्रदातारः स्मोऽस्मानमुत्र मधुमतीरा विशतेति ( ४ ) वावैतदाह[१५] हिरण्यं ददाति ज्योतिर्वै हिरण्यं
ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्या[१६] अग्नीधे ददात्यग्निमुखानेवर्तून् प्रीणाति[१७] ब्रह्मणे
ददाति प्रसूत्यै होत्रे ददात्यात्मा वा एष यज्ञस्य यद्धोताऽऽत्मानमेव यज्ञस्य दक्षिणाभिः समर्धयति[१८] ॥
( हिरण्यꣳ, राधो, राध्यासं, मधुमतीरा विशतेत्य,- ष्टात्रिꣳशच्च ) ॥ १ ॥

समिष्टयजुर्होमः ॥ सोमऋषिः ।

समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदति-
करोति यन्नापि करोति तदेव तैः प्रीणाति[१] नव जुहोति नव वै पुरुषे प्राणाः पुरुषेण यज्ञः संमितो
यावानेव यज्ञस्तं प्रीणाति[२] षड् ऋग्मियाणि जुहोति षड्वा ऋतव ऋतूनेव प्रीणाति त्रीणि यजूꣳषि
( १ ) त्रय इमे लोका इमानेव लोकान् प्रीणाति[३] यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञप-
तिमेवैनं गमयति स्वां योनिं गच्छेत्याह स्वामेवैनं योनिं गमयत्ये[४]—ष ते यज्ञो यज्ञपते सहसूक्तवाकः
सुवीर इत्याह यजमान एव वीर्यं दधाति[५] वासिष्ठो ह सात्यहव्यो देवभागं पप्रच्छ यत् सृञ्जयान्
बहुयाजिनोऽयीयजो यज्ञे ( २ ) यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३विति स होवाच यज्ञपताविति सत्याद्वै
सृञ्जयाः परा बभूवुरिति होवाच यज्ञे वाव यज्ञः प्रतिष्ठाप्य आसीद्यजमानस्यापराभावायेति देवा गातु-
विदो गातुं वित्त्वा गातु मितेत्याह यज्ञ एव यज्ञं प्रति ष्ठापयति यजमानस्यापराभावाय[६] ॥ ( यजूꣳषि, यज्ञे,
एकचत्वारिꣳशच्च ) ॥ २ ॥

अवभृथः ॥ सोमऋषिः ।

अवभृथयजूꣳषि जुहोति यदेवार्वाचीनमेकहायनादेनः करोति तदेव तैरव यजते[१] ऽपोऽवभृथमवैत्यप्सु
वै वरुणः साक्षादेव वरुणमव यजते[२] वर्त्मना वा अन्वित्य यज्ञꣳ रक्षाꣳसि जिघाꣳसन्ति साम्नः प्रस्तो-
ताऽन्ववैति साम वै रक्षोहा रक्षसामपहत्यै[३] त्रिर्निधनमुपैति त्रय इमे लोका एभ्य एव लोकेभ्यो रक्षा-
ꣳस्य-( १ )-प हन्ति[४] पुरुषःपुरुषो निधनमुपैति पुरुषःपुरुषो हि रक्षस्वी रक्षसामपहत्या[५] उरुꣳ
हि राजा वरुणश्चकारेत्याह प्रतिष्ठित्यै[६] शतं ते राजन् भिषजः सहस्रमित्याह भेषजमेवास्मै करोत्य-
भिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाभि तिष्ठति[८] बर्हिरभि जुहोत्याहुतीनां प्रतिष्ठित्या अथो
अग्निवत्येव जुहोत्य[९]—पबर्हिषः प्रयाजान् ( २ ) यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चत्या[१०]—

ज्यंभागौ यजति यज्ञस्यैव चक्षुषी नान्तरेति[11] वरुणं यजति वरुणपाशादेवैनं मुञ्चत्य[12]—ग्नीवरुणौ यजति साक्षादेवैनं वरुणपाशान्मुञ्चत्य[13]—र्बर्हिषावनूयाजौ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मुञ्चति[14] चतुरः प्रयाजान् यजति द्वावनूयाजौ षट् सं पद्यन्ते षड्वा ऋतव (३) ऋतुष्वेव प्रति तिष्ठत्य[15]—वभृथ निचङ्कुणेत्याह यथोदितमेव वरुणमव यजते[16] समुद्रे ते हृदयमप्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणः[17] सं त्वा विशन्त्वोषधीरुताऽऽप इत्याहाद्भिरेवैनमोषधीभिः सम्यञ्चं दधाति[18] देवीराप एष वो गर्भ इत्याह यथायजुरेवैतत्[19] पशवो वै (४) सोमो यद्भिन्दूनां भक्षयेत् पशुमान्त्स्याद्वरुणस्त्वेनं गृह्णीयाद्यन्न भक्षयेदपशुः स्यान्नैनं वरुणो गृह्णीयादुपस्पृश्यमेव पशुमान् भवति नैनं वरुणो गृह्णाति[20] प्रतियुतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यते[21] ऽप्रतीक्षमा यन्ति वरुणस्यान्तर्हित्यै[22] एधोऽस्येधिषीमहीत्याह समिधैवाग्निं नमस्यन्त (५) उपायन्ति[23] तेजोऽसि तेजो मयि धेहीत्याह तेज एवाऽऽत्मन् धत्ते[24] ॥

( लोकेभ्यो रक्षाꣳसि, प्रयाजा,-नृतवो, वै, नमस्यन्तो, द्वादश च ) ॥ ३ ॥

यूपैकादशिनी विधानम् ॥ सोमऋषिः ।

स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि मिमीते यूपं मिनोति त्रिवृतमेव वज्रꣳ संभृत्य भ्रातृव्याय प्र हरति स्तृत्यै[1] यदन्तर्वेदि मिनुयाद्देवलोकमभि जयेद्यद्बहिर्वेदि मनुष्यलोकं वेद्यन्तस्य संधौ मिनोत्युभयोर्लोकयोरभिजित्यै[2] उपरसंमितां मिनुयात् पितृलोककामस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमितामिन्द्रियकामस्य सर्वान्त्समान् प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान् पशुकामस्य[3]—तान् वा (१) अनु पशव उप तिष्ठन्ते पशुमानेव भवन्ति[4] व्यतिषजेदितरान् प्रजयैवैनं पशुभिर्व्यतिषजति[5] यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसीयाꣳसमेषा वै गर्तमिद्यस्यैवं मिनोति ताजक् प्र मीयते दक्षिणार्ध्यं वर्षिष्ठं मिनुयात् सुवर्गकामस्याथ ह्रसीयाꣳसमाक्रमणमेव तत् सेतुं यजमानः कुरुते सुवर्गस्य लोकस्य समष्ट्यै[6] (२) यदेकस्मिन् यूपे द्वे रशने परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकाꣳ रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती विन्दते[7] यं कामयेत स्त्र्यस्य जायेतेत्युपान्ते तस्य व्यतिषजेत् स्त्र्येवास्य जायते यं कामयेत पुमानस्य जायेतेत्यान्तं तस्य प्र वेष्टयेत् पुमानेवास्य (३) जायते[8] ऽसुरा वै देवान् दक्षिणत उपानयन् तान् देवा उपशयेनैवापानुदन्त तदुपशयस्योपशयत्वं यद्दक्षिणत उपशय उपशये भ्रातृव्यापनुत्त्यै[9] सर्वे वा अन्ये यूपाः पशुमन्तोऽथोपशय एवापशुस्तस्य यजमानः पशुर्यन्न निर्दिशेदार्तिमार्च्छेद्यजमानोऽसौ ते पशुरिति निर्दिशेद्यं द्विष्याद्यमेव (४) द्वेष्टि तमस्मै पशुं निर्दिशति[10] यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्यान् पशून् हिनस्ति नाऽऽरण्यान्[11] प्रजापतिः प्रजा असृजत सोऽन्नाद्येन व्यार्ध्यत स एतामेकादशिनीमपश्यत् तया वै सोऽन्नाद्यमवारुन्ध यद्दश यूपा भवन्ति दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धे (५) य एकादशः स्तन एवास्यै स दुह एवैनां तेन वज्रो[12] वा एषा सं मीयते यदेकादशिनी सेश्वरा पुरस्तात् प्रत्यञ्चं यज्ञꣳ संमर्दितोर्यत् पात्नीवतं मिनोति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय[13] ॥ ( वा, समष्ट्यै, पुमानेवास्य, यमेव, रुन्धे, त्रिꣳशच्च ) ॥ ४ ॥

पश्वेकादशिनी ॥ सोमऋषिः ।

प्रजापतिः प्रजा असृजत स रिरिचानोऽमन्यत स एतामेकादशिनीमपश्यत् तया वै स आयुरिन्द्रियं वीर्यमात्मन्नधत्त प्रजा इव खलु वा एष सृजते यो यजते स एतर्हि रिरिचान इव यदेषैकादशिनी भवत्यायुरेव तयेन्द्रियं वीर्यं यजमान आत्मन् धत्ते[1] प्रैवाऽऽग्नेयेन वापयति मिथुनꣳ सारस्वत्या करोति रेतः (१) सौम्येन दधाति प्र जनयति पौष्णेन बार्हस्पत्यो भवति ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनयति वैश्वदेवो भवति वैश्वदेव्यो वै प्रजाः प्रजा एवास्मै प्र जनयतीन्द्रियमेवैन्द्रेणाव रुन्धे विशं मारुतेनौजो बलमैन्द्राग्नेन प्रसवाय सावित्रो निर्वरुणत्वाय वारुणो[2] मध्यत ऐन्द्रमा लभते मध्यत एवेन्द्रियं यजमाने दधाति (२) पुरस्तादैन्द्रस्य वैश्वदेवमा लभते वैश्वदेवं वा अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात् पुरस्तादन्नमद्यत ऐन्द्रमालभ्य मारुतमा लभते विड् वै मरुतो विशमेवास्मा अनु बध्नाति[3] यदि कामयेत योऽवगतः सोऽप रुध्यतां योऽपरुद्धः सोऽवगच्छत्वित्यैन्द्रस्य लोके वारुणमा लभेत वारुणस्य लोक ऐन्द्रं (३) य एवावगतः सोऽप रुध्यते योऽपरुद्धः सोऽव गच्छति[4] यदि कामयेत प्रजा मुह्येयुरिति पशून् व्यतिषजेत् प्रजा एव मोहयति[5] यदभिवाहतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमा लभतेऽपवाहतोऽपां प्रजानामवरुणग्राहाय ॥ ( रेतो, यजमाने दधाति, लोक ऐन्द्रꣳ, सप्तत्रिꣳशच्च ॥५॥

पात्नीवतपशुः ॥ सोमऋषिः ।

इन्द्रः पत्निया मनुमयाजयत् तां पर्यग्निकृतामुदसृजत् तया मनुरार्ध्नोत् पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर्ऋद्धिमार्ध्नोत् तामेव यजमान ऋध्नोति[1] यज्ञस्य वा अप्रतिष्ठिताद्यज्ञः परा भवति यज्ञं पराभवन्तं यजमानोऽनु परा भवति यदाज्येन पात्नीवतꣳ सꣳस्थापयति यज्ञस्य प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमानोऽनु प्रति तिष्ठती[2]—ष्टं वपया (१) भवत्यनिष्टं वशयाऽथ पात्नीवतेन प्र चरति तीर्थ एव प्र चरत्यथो एतर्ह्येवास्य याम[3]—स्त्वाष्ट्रो भवति त्वष्टा वै रेतसः सिक्तस्य रूपाणि वि करोति तमेव वृषाणं पत्नीष्वपि सृजति सोऽस्मै रूपाणि वि करोति[4] ॥ ( वपया, षट्त्रिꣳशच्च ) ॥ ६ ॥

सौम्यचर्वाद्यभिधानम् ॥ ६ अनुष्टुप् ॥ सोमऋषिः ।

घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति यत् सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव त[1]—द्यदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यः समदं दध्याद्दक्षिणार्धे जुहोत्येषा वै पितॄणां दिक् स्वायामेव दिशि पितॄन् निरवदयत[2] उद्गातृभ्यो हरन्ति सामदेवत्यो वै सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति तस्यैव स शान्ति[3]—रवे- (१)-क्षन्ते पवित्रं वै सौम्य आत्मानमेव पवयन्ते[4] य आत्मानं न परिपश्येदितासुः स्यादभिदर्दिं कृत्वाऽवेक्षेत तस्मिन् ह्यात्मानं परिपश्यत्यथो आत्मानमेव पवयते[5] यो गतमनाः स्यात् सोऽवेक्षेत

यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति ।

मन एवात्मन् दाधार (२) न गतमना भवत्य[6]—प वै तृतीयसवने यज्ञः क्रामतीजानादनीजानमभ्याग्नावैष्णव्यर्चा घृतस्य यजत्यग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं च दाधारो[7]—पाꣳशु यजति मिथुनत्वाय[8] ब्रह्मवादिनो वदन्ति मित्रो यज्ञस्य स्विष्टं युवते वरुणो दुरिष्टं क्व तर्हि यज्ञः क्व यजमानो

भवतीति यन्मैत्रावरुणीं वशामालभते मित्रेणैव ( १ ) यज्ञस्य स्विष्टꣳ शमयति वरुणेन दुरिष्टं नाऽऽर्तिमार्च्छति यजमानो[9] यथा वै लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सामे यज्ञं प्र भिन्तो यन्मैत्रावरुणीं वशामालभते यज्ञायैव प्रभिन्नाय मत्यमन्ववास्यति शान्त्यै[10] यातयामानि वा एतस्य छन्दाꣳसि य ईजानश्छन्दसामेष रसो यद्वशा यन्मैत्रावरुणीं वशामालभते छन्दाꣳस्येव पुनरा प्रीणात्य- ( ४ ) -यातयामत्वायाथो छन्दःस्वेव रसं दधाति[11] ॥ ( अर्वं, दाधार, मित्रेणैव, प्रीणाति, षट् च ) ॥ ७ ॥

अतिग्राह्यविधानम् ॥ सोमऋषिः ।

देवा वा इन्द्रियं वीर्यं व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन् तदतिग्राह्याणामतिग्राह्यत्वं यदतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं यजमान आत्मन् धत्ते[1] तेज आग्नेयेनेन्द्रियमैन्द्रेण ब्रह्मवर्चसꣳ सौर्येणो[2]-पस्तम्भनं वा एतद्यज्ञस्य यदतिग्राह्याश्चक्रे पृष्ठानि यत् पृष्ठ्ये न गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि सꣳ शृणीयु[3]-र्यदुक्थ्ये ( १ ) गृह्णीयात् प्रत्यञ्चं यज्ञमतिग्राह्याः सꣳ शृणीयु[4]-र्विश्वजिति सर्वपृष्ठे ग्रहीतव्या यज्ञस्य सवीर्यत्वाय[5] प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स प्रियास्तनूरप न्यधत्त तदतिग्राह्या अभवन् वितनुस्तस्य यज्ञ इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इत्यप्यग्निष्टोमे ग्रहीतव्या यज्ञस्य सतनुत्वाय[6] देवता वै सर्वाः सदृशीरासन् ता न व्यावृतमगच्छन् ते देवा ( २ ) एत एतान् ग्रहानपश्यन् तानगृह्णताऽऽग्नेयमग्निरैन्द्रमिन्द्रः सौर्यꣳ सूर्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृतमगच्छन् यस्यैवं विदुष एते ग्रहा गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छती[7]-मे लोका ज्योतिष्मन्तः समावद्वीर्याः कार्या इत्याहुराग्नेयेनास्मिँल्लोके ज्योतिर्धत्त ऐन्द्रेणान्तरिक्ष इन्द्रवायू हि सयुजौ सौर्येणामुष्मिँल्लोके ( ३ ) ज्योतिर्धत्ते ज्योतिष्मन्तोऽस्मा इमे लोका भवन्ति समावद्वीर्यानेनान् कुरुत एतान् वै ग्रहान् बम्बाविश्ववयसाववित्तां ताभ्यामिमे लोकाः पराञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहा गृह्यन्ते प्रास्मा इमे लोकाः पराञ्चश्चार्वाञ्चश्च भान्ति[8] ॥
( उक्थ्ये, देवा, अमुष्मिँल्लोक, एकान्नचत्वारिꣳशच्च ) ॥ ८ ॥

अदाभ्यग्रहः ॥ सोमऋषिः ।

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दाꣳसि सवनानि समस्थापयन् ततो देवा अभवन् पराऽसुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते भवत्यात्मना पराऽस्य भ्रातृव्यो भवति[1] यद्वै देवा असुरानदाभ्येनादभ्नुवन् तददाभ्यस्यादाभ्यत्वं[2] य एवं वेद दभ्नोत्येव भ्रातृव्यं नैनं भ्रातृव्यो दभ्नोत्ये[3] ( १ ) षा वै प्रजापतेरतिमोक्षिणी नाम तनूर्यददाभ्य उपनद्धस्य गृह्णात्यतिमुक्त्या अति पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद घ्नन्ति वा एतत् सोमं यदभिषुण्वन्ति सोमे हन्यमाने यज्ञो हन्यते यज्ञे यजमानो ब्रह्मवादिनो वदन्ति किं तद्यज्ञे यजमानः कुरुते येन जीवन्त्सुवर्गं लोकमेतीति जीवग्रहो वा एष यददाभ्योऽनभिषुतस्य गृह्णाति ( २ ) जीवन्तमेवैनꣳ सुवर्गं लोकं गमयति[6] वि वा एतद्यज्ञं छिन्दन्ति यददाभ्ये सꣳस्थापयन्त्यꣳशूनपि सृजति यज्ञस्य संतत्यै[7] ॥ ( दभ्नोत्य,- नभिषुतस्य गृह्णात्ये,- कान्नत्रिꣳशतिश्च ) ॥ ९ ॥

अंशुग्रहः ॥ सोमऋषिः ।

देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं प्रजापतिरꣳशुमपश्यत् तमगृह्णीत तेन वै स आर्ध्नोद्यस्यैवं विदुषो-
ऽꣳशुर्गृह्यत ऋध्नोत्येव[1] सकृदभिषुतस्य गृह्णाति सकृद्धि स तेनाऽऽर्ध्नो[2]न्मनसा गृह्णाति मन इव हि
प्रजापतिः प्रजापतेराप्त्या[3] औदुम्बरेण गृह्णात्यूर्ग्वा उदुम्बर ऊर्जमेवाव रुन्धे[4] चतुःस्रक्ति भवति
दिक्ष्वे-( १ )-व प्रति तिष्ठति[5] यो वा अꣳशोरायतनं वेदाऽऽयतनवान् भवति वामदेव्यमिति साम
तद्वा अस्याऽऽयतनं मनसा गायमानो गृह्णात्यायतनवानेव भवति[6] यदध्वर्युरꣳशुं गृह्णन् नार्धयेदुभाभ्यां
नर्ध्येताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्येतानवानं गृह्णाति सैवास्यर्द्धि[7]र्हिरण्यमभि व्य-
नित्य-( २ )-मृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभि धिनोति[8] शतमानं भवति शतायुः पुरुषः
शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति[9] ॥ ( दिक्ष्व,- निति, विꣳशतिश्च ) ॥ १० ॥

षोडशिग्रहः ॥ सोमऋषिः ।

प्रजापतिर्देवेभ्यो यज्ञान् व्यादिशत् स रिरिचानोऽमन्यत स यज्ञानाꣳ षोडशधेन्द्रियं वीर्यमात्मान-
मभि समक्खिदत् तत् षोडश्यभवन्न वै षोडशी नाम यज्ञोऽस्ति यद्वाव षोडशꣳ स्तोत्रꣳ षोडशꣳ शस्त्रं
तेन षोडशी तत् षोडशिनः षोडशित्वं यत् षोडशी गृह्यत इन्द्रियमेव तद्वीर्यं यजमान आत्मन् धत्ते[1]
देवेभ्यो वै सुवर्गो लोको ( १ ) न प्राभवत् त एतꣳ षोडशिनमपश्यन् तमगृह्णत ततो वै तेभ्यः सुवर्गो लोकः
प्राभवद्यत् षोडशी गृह्यते सुवर्गस्य लोकस्याभिजित्या[2] इन्द्रो वै देवानामानुजावर आसीत् स प्रजापति-
मुपाधावत् तस्मा एतꣳ षोडशिनं प्रायच्छत् तमगृह्णीत ततो वै सोऽग्रं देवतानां पर्यैद्यस्यैवं विदुषः
षोडशी गृह्यते ( २ ) ऽग्रमेव समानानां पर्येति[3] प्रातःसवने गृह्णाति वज्रो वै षोडशी वज्रः प्रातःसवनꣳ
स्वादेवैनं योनेर्निर्गृह्णाति[4] सवनेसवनेऽभि गृह्णाति सवनात्सवनादेवैनं प्र जनयति[5] तृतीयसवने
पशुकामस्य गृह्णीयाद्वज्रो वै षोडशी पशवस्तृतीयसवनं वज्रेणैवास्मै तृतीयसवनात् पशूनव रुन्धे[6] नोक्थ्ये
गृह्णीयात् प्रजा वै पशव उक्थानि यदुक्थ्ये ( ३ ) गृह्णीयात् प्रजां पशूनस्य निर्दहे[7]दतिरात्रे पशुकामस्य
गृह्णीयाद्वज्रो वै षोडशी वज्रेणैवास्मै पशूनवरुद्ध्य रात्रियोपरिष्टाच्छमयत्य[8]प्यग्निष्टोमे राजन्यस्य गृह्णी-
याद्व्यावृत्कामो हि राजन्यो यजते[9] साह्न एवास्मै वज्रं गृह्णाति स एनं वज्रो भूत्या इन्धे निर्वा दहत्ये-
कविꣳशꣳ स्तोत्रं भवति प्रतिष्ठित्यै[10] हरिवच्छस्यत इन्द्रस्य प्रियं धामो-( ४ )-पाप्नोति[11] कनीया-
ꣳसि वै देवेषु छन्दाꣳस्यासञ्ज्यायाꣳस्यसुरेषु ते देवाः कनीयसा छन्दसा ज्यायश्छन्दोऽभि व्यशꣳसन्
ततो वै तेऽसुराणां लोकमवृञ्जत यत् कनीयसा छन्दसा ज्यायश्छन्दोऽभि विशꣳसति भ्रातृव्यस्यैव तल्लोकं

वृङ्क्ते[१२] षडक्षराण्यति रेचयन्ति षड् वा ऋतव ऋतूनेव प्रीणाति चत्वारि पूर्वाण्यव कल्पयन्ति (५) चतुष्पद एव पशूनव रुन्धे द्वे उत्तरे द्विपद एवाव रुन्धे[१३] ऽनुष्टुभमभि सं पादयन्ति वाग्वा अनुष्टुप् तस्मात् प्राणानां वागुत्तमा[१४] समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोत्येतस्मिन् वै लोक इन्द्रो वृत्रमहन्त्साक्षादेव वज्रं भ्रातृव्याय प्र हरत्य[१५]—रुणपिशङ्गोऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृद्ध्यै[१६] ॥

( लोको, विदुषः षोडशी गृह्यते, यदुक्थ्ये, धाम, कल्पयन्ति, सप्तचत्वारिꣳशच्च ) ॥ ११ ॥

[ सुवर्गाय २३८ । स- १४१ । -मवभृथ यजूꣳषि २६२ । स्फ्येन २८० । प्रजापति-१८७ । -रिन्द्रो ८६ । घ्नन्ति २०७ । देवा १८९ । देवा ११९ । देवाः १२० । प्रजापति- २९७ । रेकादश ॥ २१२६ ]

[ ॥ इति षष्ठकाण्डे षष्ठः प्रपाठकः ॥ ६ ॥ ]

[ प्राचीनवꣳशं ३८४० । य-३०८५ । च्चात्वाला-३१५५ । -द्यज्ञेने-२६३६ । न्द्रः २१५० ।

सुवर्गाय २१२६ । ( षट् ॥ ६ ॥ १६९९२ ) ]

॥ इति षष्ठं काण्डं सम्पूर्णम् ॥ ६ ॥

# अथ सप्तमं काण्डम् ।

## अश्वमेधगतमन्त्राणामभिधानम् ।

[ अथ प्रथमः प्रपाठकः ॥१॥ ]

ज्योतिष्टोमः, ज्योतिष्टोमस्य, तदाद्यसंस्थारूपस्याग्निष्टोमस्य च विधानम् ॥ सोमऋषिः ।

प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट् छन्दसां ज्योतिर्विराड् वाचोऽग्नौ सं तिष्ठते विराजमभि सं पद्यते तस्मात् तज्ज्योतिरुच्यते[१] द्वौ स्तोमौ प्रातःसवनं वहतो यथा प्राणश्चापानश्च द्वौ माध्यंदिनꣳ सवनं यथा चक्षुश्च श्रोत्रं च द्वौ तृतीयसवनं यथा वाक् च प्रतिष्ठा च पुरुषसम्मितो वा एष यज्ञो-ऽस्थूरि[२]-( १ )-र्यं कामं कामयते तमेतेनाभ्यश्नुते सर्वꣳ ह्यस्थूरिणाऽभ्यश्नुते[३] ऽग्निष्टोमेन वै प्रजापतिः प्रजा असृजत ता अग्निष्टोमेनैव पर्यगृह्णात् तासां परिगृहीतानामश्वतरोऽत्यप्रवत तस्यानुहाय रेत आऽदत्त तद्गर्दभे न्यमार्ट् तस्माद्गर्दभो द्विरेता अथो आहुर्वडबायां न्यमार्डिति तस्माद्वडबा द्विरेता अथो आहुरोष-धीषु ( २ ) न्यमार्डिति तस्मादोषधयोऽनभ्यक्ता रेभन्त्यथो आहुः प्रजासु न्यमार्डिति तस्माद्यमौ जायेते तस्मादश्वतरो न प्र जायत आत्तरेता हि तस्माद्बर्हिष्यनवक्लृप्तः सर्ववेदसे वा सहस्रे वाऽवक्लृप्तोऽति ह्यप्रवत य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परि प्रजाता गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति ( ३ ) प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजत प्रजापतिरकामयत प्र जायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथंतरꣳ साम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात् ते मुख्या मुखतो ह्यसृज्यन्तो-रसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप् छन्दो बृहत् ( ४ ) साम राजन्यो मनुष्याणामविः पशूनां तस्मात् ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त मध्यतः सप्तदशं निरमिमीत तं विश्वे देवा देवता अन्वसृज्यन्त जगती छन्दो वैरूपꣳ साम वैश्यो मनुष्याणां गावः पशूनां तस्मात् त आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त पत्त एकविꣳशं निरमिमीत तमनुष्टुप् छन्दो ( ५ ) ऽन्वसृज्यत वैराजꣳ साम शूद्रो मनु-ष्याणामश्वः पशूनां तस्मात् तौ भूतसङ्क्रामिणावश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तो न हि देवता अन्वसृज्यत तस्मात् पादावुप जीवतः पत्तो ह्यसृज्येतां[१] प्राणा वै त्रिवृदर्धमासाः पञ्चदशः प्रजापतिः सप्तदशस्त्रय इमे लोका असावादित्य एकविꣳश एतस्मिन् वा एते श्रिता एतस्मिन् प्रतिष्ठिता ( ६ ) य एवं वेदैतस्मिन्नेव श्रयत्त एतस्मिन् प्रति तिष्ठति[१०] ॥ ( अस्थूरि,- रोषधीषु, ज्येष्ठयज्ञ इति,- बृह,- दनुष्टुप् छन्दः, प्रतिष्ठिता नव च ) ॥ १ ॥

स्तोमप्रशंसा ॥ सोमऋषिः ।

प्रातःसवने वै गायत्रेण छन्दसा त्रिवृते स्तोमाय ज्योतिर्दधदेति त्रिवृता ब्रह्मवर्चसेन पञ्चदशाय ज्यो-तिर्दधदेति पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति सप्तदशेन प्राजापत्येन प्रजननेनैकविꣳशाय ज्योतिर्दधदेति स्तोम एव तत् स्तोमाय ज्योतिर्दधदेत्यथो स्तोम एव स्तोममभि प्र णयति[१] यावन्तो

वै स्तोमास्तावन्तः कामास्तावन्तो लोका-( १ )-स्तावन्ति ज्योतींष्ये[2] तावत एव स्तोमानेतावतः कामा-
नेतावतो लोकानेतावन्ति ज्योतींष्यव रुन्धे[3] ॥ ( तावन्तो लोका,- स्त्रयोदश च ) ॥ २ ॥

अतिरात्रविधिः ॥ सोमऋषिः ।

ब्रह्मवादिनो वदन्ति स त्वै यजेत योऽग्निष्टोमेन यजमानोऽथ सर्वस्तोमेन यजेतेति[1] यस्य त्रिवृत-
मन्तर्यन्ति प्राणाःस्तस्यान्तर्यन्ति प्राणेषु मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[2] यस्य पञ्चदशम-
न्तर्यन्ति वीर्यं तस्यान्तर्यन्ति वीर्ये मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[3] यस्य सप्तदशमन्तर्यन्ति
(१) प्रजां तस्यान्तर्यन्ति प्रजायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्यैकविंशमन्तर्यन्ति
प्रतिष्ठां तस्यान्तर्यन्ति प्रतिष्ठायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते[4] यस्य त्रिणवमन्तर्यन्त्यृतूःश्च
तस्य नक्षत्रियां च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्नक्षत्रियायां च विराजीति ( २ ) खलु वै यज्ञेन यजमानो
यजते[5] यस्य त्रयस्त्रिंशमन्तर्यन्ति देवतास्तस्यान्तर्यन्ति देवतासु मेऽप्यसदिति खलु वै यज्ञेन यजमानो
यजते[6] यो वै स्तोमानामवमं परमतां गच्छन्तं वेद परमतामेव गच्छति त्रिवृद्वै स्तोमानामवमस्त्रिवृत्
परमो य एवं वेद परमतामेव गच्छति[7] ॥ ( सप्तदशमन्तर्यन्ति, विराजीति, चतुश्चत्वारिंशच्च ) ॥ ३ ॥

अङ्गिरसां द्विरात्रविधिः ॥ विश्वेदेवा ऋषयः ।

अङ्गिरसो वै सत्रमासत ते सुवर्गं लोकमायन् तेषांः हविष्मांःश्च हविष्कृच्चाहीयेतां तावकामयेतांः
सुवर्गं लोकमियावेति तावेतं द्विरात्रमपश्यतां तमाऽहरतां तेनायजेतां ततो वै तौ सुवर्गं लोकमैतां य एवं
विद्वान् द्विरात्रेण यजते सुवर्गमेव लोकमेति[1] तावैतां पूर्वेणाह्नाऽगच्छतामुत्तरेणा-( १ )-भिप्लवः पूर्व-
महर्भवति गतिरुत्तरं[2] ज्योतिष्टोमोऽग्निष्टोमः पूर्वमहर्भवति तेजस्तेनाव रुन्धे सर्वस्तोमोऽतिरात्र उत्तरःं
सर्वस्याऽऽप्त्यै सर्वस्यावरुद्ध्यै[3] गायत्रं पूर्वेऽहन्त्साम भवति तेजो वै गायत्री गायत्री ब्रह्मवर्चसं तेज
एव ब्रह्मवर्चसमात्मन् धत्ते त्रैष्टुभमुत्तर ओजो वै वीर्यं त्रिष्टुगोज एव वीर्यमात्मन् धत्ते[4] रथंतरं पूर्वे ( २ )
ऽहन्त्साम भवतीयं वै रथंतरमस्यामेव प्रति तिष्ठति बृहदुत्तरेऽसौ वै बृहदमुष्यामेव प्रति तिष्ठति[5] तदाहुः
क्व जगती चानुष्टुप् चेति वैखानसं पूर्वेऽहन्त्साम भवति तेन जगत्यै नैति षोडश्युत्तरे तेनानुष्टुभो[6]
ऽथाऽऽहुर्यत् समानेऽर्धमासे स्यातामन्यतरस्याह्नो वीर्यमनु ( ३ ) पद्येतेत्यमावास्यायां पूर्वमहर्भवत्युत्तर-
स्मिन्नुत्तरं नानैवार्धमासयोर्भवतो नानावीर्ये भवतो[7] हविष्मन्निधनं पूर्वमहर्भवति हविष्कृन्निधनमुत्तरं
प्रतिष्ठित्यै[8] ॥ ( उत्तरेण, रथंतरं पूर्वे, ऽन्वै-कविंशतिश्च ) ॥ ४ ॥

गर्गत्रिरात्रः । विश्वेदेवा ऋषयः ।

आपो वा इदमग्रे सलिलमासीत् तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत् स इमामपश्यत् तां वराहो भूत्वा-
ऽहरत् तां विश्वकर्मा भूत्वा व्यमार्ट् साऽप्रथत सा पृथिव्यभवत् तत् पृथिव्यै पृथिवित्वं[1] तस्यामश्राम्यत्
प्रजापतिः स देवानसृजत वसून् रुद्रानादित्यान् ते देवाः प्रजापतिमब्रुवन् प्र जायामहा इति सोऽब्रवीत् ( १ )
यथाऽहं युष्मांःस्तपसाऽसृक्ष्येवं तपसि प्रजननमिच्छध्वमिति तेभ्योऽग्निमायतनं प्रायच्छदेतेनाऽऽयतनेन
श्राम्यतेति तेऽग्निनाऽऽयतनेनाश्राम्यन् ते संवत्सर एकां गामसृजन्त तां वसुभ्यो रुद्रेभ्य आदित्येभ्यः

प्रायच्छन्नेता२ँ रक्षध्वमिति तां वसवो रुद्रा आदित्या अरक्षन्त सा वसुभ्यो रुद्रेभ्य आदित्येभ्यः प्राजायत त्रीणि च ( २ ) शतानि त्रयस्त्रि२ँशतं चाथ सैव सहस्रतम्यभवत् ते देवाः प्रजापतिमब्रुवन्त्सहस्रेण नो याजयेति सोऽग्निष्टोमेन वसूनयाजयत् त इमं लोकमजयन् तच्चाददुः स उक्थ्येन रुद्रानयाजयन् तेऽन्तरिक्षमजयन् तच्चाददुः सोऽतिरात्रेणाऽऽदित्यानयाजयत् तेऽमुं लोकमजयन् तच्चाददु—स्तदन्तरिक्षं (३) व्यवैर्यत तस्माद्रुद्रा घातुका अनायतना हि तस्मादाहुः शिथिलं वै मध्यममहस्त्रिरात्रस्य वि हि तदवैर्यतेति त्रैष्टुभं मध्यमस्याह्न आज्यं भवति संयानानि सूक्तानि श२ँसति षोडशिन२ँश२ँसत्यह्नो धृत्या अशिथिलंभावाय तस्मात् त्रिरात्रस्याग्निष्टोम एव प्रथममहः स्यादथोक्थ्योऽथातिरात्र एषां लोकानां विधृत्यै त्रीणित्रीणि शतान्यनूचीनाहमव्यवच्छिन्नानि ददात्ये-( ४ )-षां लोकानामनु संतत्यै[६] दशतं न विच्छिन्द्याद्विराजं नेद्विच्छिनदानीत्यं—थ या सहस्रतम्यासीत् तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेता२ँ स इन्द्रोऽमन्यतानया वा इदं विष्णुः सहस्रं वर्क्ष्यत इति तस्यामकल्पेतां द्विभाग इन्द्रस्तृतीये विष्णुस्तद्वा एषाऽभ्यनूच्यत उभा जिग्यथुरिति तां वा एतामच्छावाक ( ५ ) एव श२ँसत्य—थ या सहस्रतमी सा होत्रे देयेति होतारं वा अभ्यतिरिच्यते यदतिरिच्यते होता ऽनाप्तस्याऽऽपयिता—ऽथाऽऽहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा सहस्रस्यातिरिक्त उन्नेतर्त्विजा—मथाऽऽहुः सर्वेभ्यः सदस्येभ्यो देयेत्य—थाऽऽहुरुदाकृत्या सा वशं चरेदित्य—थाऽऽहुर्ब्रह्मणे चाग्नीधे च देयेति ( ६ ) द्विभागं ब्रह्मणे तृतीयमग्नीध ऐन्द्रो वै ब्रह्मा वैष्णवोऽग्नीचथैव तावकल्पेतामित्य—थाऽऽहुर्या कल्याणी बहुरूपा सा देयेत्य—थाऽऽहुर्या द्विरूपोभयतएनी सा देयेति सहस्रस्य परिगृहीत्यै[१६] तद्वा एतत् सहस्रस्यायन२ँ सहस्र२ँ स्तोत्रीयाः सहस्रं दक्षिणाः सहस्रसंमितः सुवर्गो लोकः सुवर्गस्य लोकस्याभिजित्यै[१७] ॥ ( अब्रुवं,-च्च, तदन्तरिक्षं, ददात्य,-च्छावाक,-श्च देयेति, सप्तचत्वारि२ँशच्च ) ॥ ५ ॥

सहस्रतमीप्रशंसा, तदङ्गभूतं होमादिकं च । त्रिष्टुप् । विश्वेदेवा ऋषयः ।

सोमो वै सहस्रमविन्दत् तमिन्द्रोऽन्वविन्दत् तौ यमो न्यागच्छत् तावब्रवीदस्तु मेऽत्रापीत्यस्तु ही३ इत्यब्रूता२ँ स यम एकस्यां वीर्यं पर्यपश्यदियं वा अस्य सहस्रस्य वीर्यं बिभर्तीति तावब्रवीदियं ममास्त्वेतद्युवयोरिति तावब्रूता२ँ सर्वं वा एतदेतस्यां वीर्यं (१) परि पश्यामो२ँशमा हरामहा इति तस्याम२ँशमाऽहरन्त तामप्सु प्रावेशयन्त्सोमायोदेहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयस्त्रि२ँशता च त्रिभिश्च शतैः सहोदैत् तस्माद्रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणीयाद्य एवं विद्वान् रोहिण्या पिङ्गलयैकहायन्या सोमं क्रीणाति त्रयस्त्रि२ँशता चैवास्य त्रिभिश्च ( २ ) शतैः सोमः क्रीतो भवति सुक्रीतेन यजते[२] तामप्सु प्रावेशयन्निन्द्रायोदेहीति सा रोहिणी लक्ष्मणा पष्ठौही वार्त्रघ्नी रूपं कृत्वा त्रयस्त्रि२ँशता च त्रिभिश्च शतैः सहोदैत् तस्माद्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्याद्य एवं विद्वान् रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं ददाति त्रयस्त्रि२ँशच्चैवास्य त्रीणि च शतानि सा दत्ता ( ३ ) भवति[३] तामप्सु प्रावेशयन् यमायोदेहीति सा जरती मूर्खा तजघन्या रूपं कृत्वा त्रयस्त्रि२ँशता च त्रिभिश्च शतैः सहोदैत् तस्माज्जरतीं मूर्खां तज्जघन्यामनुस्तरणीं कुर्वीत य एवं विद्वाञ्जरतीं मूर्खां तज्जघन्यामनुस्तरणीं कुरुते त्रयस्त्रि२ँशच्चैवास्य त्रीणि च शतानि साऽमुष्मिंल्लोके भवति[४] वागेव सहस्रतमी तस्मा-( ४ )-

द्वरो देयः सा हि वरः सहस्रमस्य सा दत्ता भवति तस्माद्वरो न प्रतिगृह्यः सा हि वरः सहस्रमस्य प्रतिगृहीतं भवतीयं वर इति ब्रूयादथान्यां ब्रूयादियं ममेति तथाऽस्य तत् सहस्रमप्रतिगृहीतं भवत्यु—भयतएनी स्यात्[6] तदाहुरन्यतएनी स्यात् सहस्रं परस्तादेतमिति[7] यैव वरः ( ५ ) कल्याणी रूपसमृद्धा सा स्यात् सा हि वरः समृद्ध्यै[8] तामुत्तरेणाऽऽग्नीध्रं पर्याणीयाऽऽहवनीयस्यान्ते द्रोणकलशमवघ्रापये[9]—दा जिघ्र कलशं मह्युरुधारा पयस्वत्या त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः सा मा सहस्र आ भज प्रजया पशुभिः सह पुनर्माऽऽविशताद्रयिरिति[10] प्रजयैवैनं पशुभी रय्या स--( ६ )--मर्धयति[11] प्रजावान् पशुमान् रयिमान् भवति य एवं वेद[12] तया सहाऽऽग्नीध्रं परेत्य पुरस्तात् प्रतीच्यां तिष्ठन्त्यां जुहुया[13]

—दुभा जिग्यथुर्न परा जयेथे न परा जिग्ये कतरश्चनैनोः ।
इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति[14] ॥

त्रेधाविभक्तं वै त्रिरात्रे सहस्रं साहस्रीमेवैनां करोति सहस्रस्यैवैनां मात्रां ( ७ ) करोति[15] रूपाणि जुहोति रूपैरेवैनाꣳ समर्धयति[16] तस्या उपोत्थाय कर्णमा जपे[17]—दिडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतादिति[18] देवेभ्य एवैनमा वेदयत्यन्वेनं देवा बुध्यन्ते[19] ॥ ( एतदेतस्या वीर्यं, त्रिभिश्च, दत्ता, सहस्रतमी तस्मा,- द्वेव वरः, सं, मात्रा,- मेकान्नचत्वारिꣳशच्च ) ॥ ६ ॥

सहस्रतमीदानम् ॥ विश्वेदेवा ऋषयः ।

सहस्रतम्या वै यजमानः सुवर्गं लोकमेति सैनꣳ सुवर्गं लोकं गमयति सा मा सुवर्गं लोकं गमयेत्याह सुवर्गमेवैनं लोकं गमयति[1] सा मा ज्योतिष्मन्तं लोकं गमयेत्याह ज्योतिष्मन्तमेवैनं लोकं गमयति[2] सा मा सर्वान् पुण्याँल्लोकान् गमयेत्याह सर्वानेवैनं पुण्याँल्लोकान् गमयति[3] सा ( १ ) मा प्रतिष्ठां गमय प्रजया पशुभिः सह पुनर्माऽऽ विशताद्रयिरिति प्रजयैवैनं पशुभी रय्यां प्रति ष्ठापयति[4] प्रजावान् पशुमान् रयिमान् भवति य एवं वेद[5] तामग्नीधे वा ब्रह्मणे वा होत्रे वोद्गात्रे वाऽध्वर्यवे वा दद्यात् सहस्रमस्य सा दत्ता भवति[6] सहस्रमस्य प्रतिगृहीतं भवति यस्तामविद्वान् ( २ ) प्रतिगृह्णाति तां प्रति गृह्णीयादेकाऽसि न सहस्रमेका त्वा भूतां प्रति गृह्णामि न सहस्रमेका मा भूताऽऽ विश मा सहस्रमित्ये[7]—कामेवैनां भूतां प्रति गृह्णाति न सहस्रं य एवं वेद[8] स्योनाऽसि सुषदा सुशेवा स्योना माऽऽ विश सुषदा माऽऽ विश सुशेवा माऽऽ विशे-( ३ )- त्याह स्योनैवैनꣳ सुषदा सुशेवा भूताऽऽविशति नैनꣳ हिनस्ति[9] ब्रह्मवादिनो वदन्ति सहस्रꣳ सहस्रतम्यन्वेती३ सहस्रतमीꣳ सहस्रा३मिति यत् प्राचीमुत्सृजेत् सहस्रꣳ सहस्रतम्यन्वियात् तत् सहस्रमप्रज्ञात्रꣳ सुवर्गं लोकं न प्र जानीयात् प्रतीचीमुत् सृजति ताꣳ सहस्रमनु पर्यावर्तते सा प्रजानती सुवर्गं लोकमेति[10] यजमान-( ४ )-मभ्युत् सृजति क्षिप्रे सहस्रं प्र जायत उत्तमा नीयते प्रथमा देवान् गच्छति[11] ॥ ( लोकान् गमयति सा, ऽविद्वान्, सुशेवा, माऽऽ विश, यजमानं, द्वादश च ) ॥ ७ ॥

आत्रेयश्चतूरात्रः ॥ विश्वेदेवा ऋषयः ।

अत्रिरददादौर्वाय प्रजां पुत्रकामाय स रिरिचानोऽमन्यत निर्वीर्यः शिथिलो यातयामा स एतं चतूरात्रमपश्यत् तमाऽहरत् तेनायजत ततो वै तस्य चत्वारो वीरा आऽजायन्त सुहोता सूद्गाता स्वध्वर्युः

सुसंभेयो य एवं विद्वाꣳश्चतूरात्रेण यजत आऽस्य चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्युः सुसंभेयो[१] ये चतुर्विꣳशाः पवमाना ब्रह्मवर्चसं त-( १ )-द्य उद्यन्तः स्तोमाः श्रीः सा[३] ऽत्रिꣳ श्रद्धादेवं यजमानं चत्वारि वीर्याणि नोपानमन् तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यꣳ स एताꣳश्चतुरश्चतुष्टोमान्त्सोमान-पश्यत् तानाहरत् तैरयजत तेज एव प्रथमेनावारुन्धेन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन य एवं विद्वाꣳश्चतुरश्चतुष्टोमान्त्सोमानाहरति तैर्यजते तेज एव ( २ ) प्रथमेनाव रुन्ध इन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं चतुर्थेन यामेवात्रिर्ऋद्धिमार्ध्नोत् तामेव यजमान ऋध्नोति[५] ॥ ( तत्, तेज एवा,-ष्टादश च ) ॥ ८ ॥

जामदग्न्यश्चतूरात्रः ॥ विश्वेदेवा ऋषयः ।

जमदग्निः पुष्टिकामश्चतूरात्रेणायजत स एतान् पोषाꣳ अपुष्यत् तस्मात् पलितौ जामदग्नियो न सं जानाते[१] एतानेव पोषान् पुष्यति य एवं विद्वाꣳश्चतूरात्रेण यजते[२] पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशः पशूनेवाव रुन्धेऽन्नं वै पुरोडाशोऽन्नमेवाव रुन्धे[३] ऽन्नादः पशुमान् भवति य एवं विद्वाꣳश्चतूरात्रेण यजते[४] ॥ ( जमदग्निरष्टाचत्वारिꣳशत् ) ॥ ९ ॥

पञ्चरात्रः ॥ विश्वेदेवा ऋषयः ।

संवत्सरो वा इदमेक आसीत् सोऽकामयतर्तून्त्सृजेयेति स एतं पञ्चरात्रमपश्यत् तमाऽहरत् तेना-यजत ततो वै स ऋतूनसृजत य एवं विद्वान् पञ्चरात्रेण यजते प्रैव जायते[१] त ऋतवः सृष्टा न व्या-वर्तन्त त एतं पञ्चरात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै ते व्यावर्तन्त ( १ ) य एवं विद्वान् पञ्च-रात्रेण यजते वि पाप्मना भ्रातृव्येणाऽऽ वर्तते[२] सार्वसेनिः शौचेयोऽकामयत पशुमान्त्स्यामिति स एतं पञ्चरात्रमाऽहरत् तेनायजत ततो वै स सहस्रं पशून् प्राऽऽप्नोद्य एवं विद्वान् पञ्चरात्रेण यजते प्र सहस्रं पशूनाप्नोति[३] बबरः प्रावाहणिरकामयत वाचः प्रवदिता स्यामिति स एतं पञ्चरात्रमा ( २ ) ऽहरत् तेनायजत ततो वै स वाचः प्रवदिताऽभवद्य एवं विद्वान् पञ्चरात्रेण यजते प्रवदितैव वाचो भवत्यथो एनं वाचस्पतिरित्याहुँ—रनाप्तश्चतूरात्रोऽतिरिक्तः षड्रात्रोऽथ वा एष संप्रति यज्ञो यत् पञ्चरात्रो य एवं विद्वान् पञ्चरात्रेण यजते संप्रत्येव यज्ञेन यजते[५] पञ्चरात्रो भवति पञ्च वा ऋतवः संवत्सर ( ३ ) ऋतुष्वेव संवत्सरे प्रति तिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धे[६] त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायते पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै[७] ( ४ ) ॥ ( ते व्यावर्तन्त, प्रवदिता स्यामिति स एतं पञ्चरात्रमा, संवत्सरो, ऽभिजित्यै ) ॥ १० ॥

अश्वमेधाङ्गाश्वबन्धनमन्त्राः ॥ २ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामा ददे

इमामगृभ्णन् रशनामृतस्य पूर्व आयुषि विदथेषु कव्या ।

तया देवाः सुतमा बभूवुर्ऋतस्य सामन्त्सरमारपन्ती[२] ॥

अभिधा असि भुवनमसि यन्ताऽसि धर्ताऽसि सोऽग्निं वैश्वानरं सप्रथसं गच्छ स्वाहाकृतः पृथिव्यां यन्ता राड् यन्ताऽसि यमनो धर्ताऽसि धरुणः (१) कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषाय त्वा पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौषधीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः[३] ॥ ( धरुणः, पञ्चविंशतिश्च ) ॥ ११ ॥

अश्वस्य कर्णे जपादिपूर्वकं तदुत्सर्जनम् ॥ विश्वेदेवा ऋषयः ।

विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि हयोऽस्यत्योऽसि नरोऽस्यर्वाऽसि सप्तिरसि वाज्यसि वृषाऽसि नृमणा असि ययुर्नामास्यादित्यानां पत्वान्विहि[१]—अग्नये स्वाहा[२] स्वाहेन्द्राग्निभ्यां[३] स्वाहा प्रजापतये[४] स्वाहा विश्वेभ्यो देवेभ्यः[५] स्वाहा सर्वाभ्यो देवताभ्य[६] इह धृतिः स्वाहे[७]—ह विधृतिः स्वाहे[८]—ह रन्तिः स्वाहे[९]—(१)—ह रमतिः स्वाहा[१०] भूरसि भुवे त्वा भव्याय त्वा भविष्यते त्वा विश्वेभ्यस्त्वा भूतेभ्यो[११] देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं गोपायत[१२] ॥
( रन्तिः स्वाहा, द्वाविंशतिश्च ) ॥ १२ ॥

अश्वमेध उद्द्रावहोमाः ॥ विश्वेदेवा ऋषयः ।

आयनाय स्वाहा[१] प्रायणाय स्वाहा[२]—उद्द्रावाय स्वाहो[३]—द्द्रुताय स्वाहा[४] शूकाराय स्वाहा[५] शूकृताय स्वाहा[६] पलायिताय स्वाहा[७] ऽऽपलायिताय स्वाहा[८] ऽऽवल्गते स्वाहा[९] परावल्गते स्वाहा[१०] ऽऽयते स्वाहा[११] प्रयते स्वाहा[१२] सर्वस्मै स्वाहा[१३] ॥ ( आयनायोत्तरमापलायिताय षड्विंशतिः ) ॥ १३ ॥

( १४–२५ ) अश्वमेधे पूर्वहोमाः ॥ विश्वेदेवा ऋषयः ।

अग्नये स्वाहा[१] सोमाय स्वाहा[२] वायवे स्वाहा[३] ऽपां मोदाय स्वाहा[४] सवित्रे स्वाहा[५] सरस्वत्यै स्वाहे[६]—न्द्राय स्वाहा[७] बृहस्पतये स्वाहा[८] मित्राय स्वाहा[९] वरुणाय स्वाहा[१०] सर्वस्मै स्वाहा[११] ॥ ( अग्नये वायवेऽपां मोदायेन्द्राय त्रयोविंशतिः ) ॥१४॥

पृथिव्यै स्वाहा[१] ऽन्तरिक्षाय स्वाहा[२] दिवे स्वाहा[३] सूर्याय स्वाहा[४] चन्द्रमसे स्वाहा[५] नक्षत्रेभ्यः स्वाहा[६] प्राच्यै दिशे स्वाहा[७] दक्षिणायै दिशे स्वाहा[८] प्रतीच्यै दिशे स्वाहो[९]—दीच्यै दिशे स्वाहो[१०]—र्ध्वायै दिशे स्वाहा[११] दिग्भ्यः स्वाहा[१२] ऽवान्तरदिशाभ्यः स्वाहा[१३] समाभ्यः स्वाहा[१४] शरद्भ्यः स्वाहा[१५] ऽहोरात्रेभ्यः स्वाहा[१६] ऽर्धमासेभ्यः स्वाहा[१७] मासेभ्यः स्वाह[१८]—र्तुभ्यः स्वाहा[१९] संवत्सराय स्वाहा[२०] सर्वस्मै स्वाहा[२१] ॥ ( पृथिव्यै सूर्याय नक्षत्रेभ्यः प्राच्यै सप्तचत्वारिंशत् ) ॥१५॥

( १६–१७ ) पूर्वदीक्षाहोमाः । विश्वेदेवा ऋषयः ।

अग्नये स्वाहा[१] सोमाय स्वाहा[२] सवित्रे स्वाहा[३] सरस्वत्यै स्वाहा[४] पूष्णे स्वाहा[५] बृहस्पतये स्वाहा[६] ऽपां मोदाय स्वाहा[७] वायवे स्वाहा[८] मित्राय स्वाहा[९] वरुणाय स्वाहा[१०] सर्वस्मै स्वाहा[११] ॥
( अग्नये सवित्रे पूष्णेऽपां मोदाय वायवे त्रयोविंशतिः ) ॥१६॥

पृथिव्यै स्वाहा[1] ऽन्तरिक्षाय स्वाहा[2] दिवे स्वाहा[3] ऽग्नये स्वाहा[4] सोमाय स्वाहा[5] सूर्याय स्वाहा[6] चन्द्रमसे स्वाहा[7] ऽह्ने स्वाहा[8] रात्रियै स्वाह[9]र्जवे स्वाहा[10] साधवे स्वाहा[11] सुक्षित्यै स्वाहा[12] क्षुधे स्वाहा[13] ऽऽशितिम्ने स्वाहा[14] रोगाय स्वाहा[15] हिमाय स्वाहा[16] शीताय स्वाहा[17] ऽऽतपाय स्वाहा[18] ऽरण्याय स्वाहा[19] सुवर्गाय स्वाहा[20] लोकाय स्वाहा[21] सर्वस्मै स्वाहा[22] ॥ ( पृथिव्या अग्नयेऽह्ने रात्रियै चतुश्चत्वारिंशत् ) ॥१७॥

क्रतुदीक्षामन्त्राः ॥ विश्वेदेवा ऋषयः ।

भुवो देवानां कर्मणाऽपसर्तस्य पथ्याऽसि वसुभिर्देवेभिर्देवतया गायत्रेण त्वा छन्दसा युनज्मि वसन्तेन त्वर्तुना हविषा दीक्षयामि[1] रुद्रेभिर्देवेभिर्देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि ग्रीष्मेण त्वर्तुना हविषा दीक्षयाम्या[2]दित्येभिर्देवेभिर्देवतया जागतेन त्वा छन्दसा युनज्मि वर्षाभिस्त्वर्तुना हविषा दीक्षयामि[3] विश्वेभिर्देवेभिर्देवतयाऽऽनुष्टुभेन त्वा छन्दसा युनज्मि (१) शरदा त्वर्तुना हविषा दीक्षयाम्य[4]ङ्गिरोभिर्देवेभिर्देवतया पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्तशिशिराभ्यां त्वर्तुना हविषा दीक्षयाम्या[5]ऽहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ सत्येऽधाꣳ सत्यमृतेऽधाम्[6] ॥

महीमू षु-*-सुत्रामाणं-*-मिह धृतिः स्वाहे[9]ह विधृतिः स्वाहे[10]ह रन्तिः स्वाहे[11]ह रमतिः स्वाहा[12] ॥ ( आनुष्टुभेन त्वा छन्दसा युनज्म्ये,- कान्नपञ्चाशच्च ) ॥ १८ ॥

अश्वचरितहोमाः ॥ विश्वेदेवा ऋषयः ।

ईङ्काराय स्वाहे[1]ङ्कृताय स्वाहा[2] क्रन्दते स्वाहा[3] ऽवक्रन्दते स्वाहा[4] प्रोथते स्वाहा[5] प्रप्रोथते स्वाहा[6] गन्धाय स्वाहा[7] घ्राताय स्वाहा[8] प्राणाय स्वाहा[9] व्यानाय स्वाहा[10] ऽपानाय स्वाहा[11] संदीयमानाय स्वाहा[12] संदिताय स्वाहा[13] विचृत्यमानाय स्वाहा[14] विचृत्ताय स्वाहा[15] पलायिष्यमाणाय स्वाहा[16] पलायिताय स्वाहो[17]परꣳस्यते स्वाहो[18]परताय स्वाहा[19] निवेक्ष्यते स्वाहा[20] निविशमानाय स्वाहा[21] निविष्टाय स्वाहा[22] निषत्स्यते स्वाहा[23] निषीदते स्वाहा[24] निषण्णाय स्वाहा[25] (१) ऽऽसिष्यते स्वाहा[26] ऽऽसीनाय स्वाहा[27] ऽऽसिताय स्वाहा[28] निपत्स्यते स्वाहा[29] निपद्यमानाय स्वाहा[30] निपन्नाय स्वाहा[31] शयिष्यते स्वाहा[32] शयानाय स्वाहा[33] शयिताय स्वाहा[34] संमीलिष्यते स्वाहा[35] संमीलते स्वाहा[36] संमीलिताय स्वाहा[37] स्वप्स्यते स्वाहा[38] स्वपते स्वाहा[39] सुप्ताय स्वाहा[40] प्रभोत्स्यते स्वाहा[41] प्रबुध्यमानाय स्वाहा[42] प्रबुद्धाय स्वाहा[43] जागरिष्यते स्वाहा[44] जाग्रते स्वाहा[45] जागरिताय स्वाहा[46] शुश्रूषमाणाय स्वाहा[47] शृण्वते स्वाहा[48] श्रुताय स्वाहा[49] वीक्षिष्यते स्वाहा[50] (२) वीक्षमाणाय स्वाहा[51] वीक्षिताय स्वाहा[52] सꣳहास्यते स्वाहा[53] संजिहानाय स्वाहो[54]ज्जिहानाय स्वाहा[55] विवर्त्स्यते स्वा-

---

१८ । ७-८ ( सं० १ । ५ । १८-१९ )

हा[५६] विवर्तमानाय स्वाहा[५७] विवृत्ताय स्वाहो[५८]त्थास्यते स्वाहो[५९]त्तिष्ठते स्वाहो[६०]त्थिताय स्वाहा[६१] विधविष्यते स्वाहा[६२] विधून्वानाय स्वाहा[६३] विधूताय स्वाहो[६४]त्क्रꣳस्यते स्वाहो[६५]त्क्रामते स्वाहो[६६]त्क्रान्ताय स्वाहा[६७] चङ्क्रमिष्यते स्वाहा[६८] चङ्क्रम्यमाणाय स्वाहा[६९] चङ्क्रमिताय स्वाहा[७०] कण्डूयिष्यते स्वाहा[७१] कण्डूयमानाय स्वाहा[७२] कण्डूयिताय स्वाहा[७३] निकषिष्यते स्वाहा[७४] निकषमाणाय स्वाहा[७५] ( ३ ) निकषिताय स्वाहा[७६] यदत्ति तस्मै स्वाहा[७७] यत् पिबति तस्मै स्वाहा[७८] यन्मेहति तस्मै स्वाहा[७९] यच्छकृत् करोति तस्मै स्वाहा[८०] रेतसे स्वाहा[८१] प्रजाभ्यः स्वाहा[८२] प्रजननाय स्वाहा[८३] सर्वस्मै स्वाहा[८४] ॥ ( निषण्णाय स्वाहा, वीक्षिष्यते स्वाहा, निकषमाणाय स्वाहा, सप्तविꣳशतिश्च ) ॥ १९ ॥

सावित्रोमः ॥ विश्वेदेवा ऋषयः ।

अग्नये स्वाहा[१] वायवे स्वाहा[२] सूर्याय स्वाहा[३]र्तमस्यृतस्यर्तमसि[४] सत्यमसि सत्यस्य सत्यमसि[५]र्तस्य पन्था असि देवानां छायाऽमृतस्य नाम तत् सत्यं यत् त्वं प्रजापतिरसि[६]धि यदस्मिन् वाजिनीव शुभः स्पर्धन्ते दिवः सूर्येण विशोऽपो वृणानः पवते कव्यन् पशुं न गोपा इर्यः परिज्मा ॥ ( अग्नये वायवेऽष्टाचत्वारिꣳशत् ) ॥ २० ॥

[ प्रजननं ३०९। प्रातःसवने ६३ । ब्रह्मवादिनो १३४। ऽङ्गिरस १७१। आपः ३४७। सोमः ३८९ । सहस्रतम्या २१२। त्रि-११८ । -जमदग्निः ४८। संवत्सरो २०० । देवस्य ७५। विभू- ७२ । रायनाया- २६ ।-ग्नये २३ । पृथिव्या ४७ । अग्नये २३ । पृथिव्यै ४४ । भुवं ९९। इङ्काराया-१७७।-ग्नये ४८। विꣳशतिः ॥ २६२५ ॥ ]

[ ॥ इति सप्तमकाण्डे प्रथमः प्रपाठकः ॥ १ ॥ ]

## षड्रात्राद्यानां निरूपणम् ।

[ अथ द्वितीयः प्रपाठकः ॥ २ ॥ ]

षड्रात्रः ॥ विश्वेदेवा ऋषयः ।

साध्या वै देवाः सुवर्गकामा एतꣳ षड्रात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै ते सुवर्गं लोकमायन् य एवं विद्वाꣳसः षड्रात्रमासते सुवर्गमेव लोकं यन्ति[१] देवसत्रं वै षड्रात्रः प्रत्यक्षꣳ ह्येतानि पृष्ठानि य एवं विद्वाꣳसः षड्रात्रमासते साक्षादेव देवता अभ्यारोहन्ति[२] षड्रात्रो भवति षड् वा ऋतवः षट् पृष्ठानि ( १ ) पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति[३] बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति[४] त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धते पञ्चदशो भवतीन्द्रियमेवाव रुन्धते सप्तदशो ( २ ) भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्त एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् दधते त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै[५] सदोहविर्धानिन एतेन षड्रात्रेण यजेरन्नाश्वत्थी हविर्धानं चाऽऽग्नीध्रं च भवतस्तद्धि सुवर्ग्यं[६] चक्रीवती भवतः सुवर्गस्य

लोकस्य समंष्ट्यै उलूखलबुध्नो यूपों भवति प्रतिष्ठित्यै[8] प्राञ्चों यान्ति प्राङिव हि सुवर्गो ( ३ ) लोकः सरंस्वत्या यान्त्येष वै देवयानः पन्थास्तमेवान्वारोहन्त्यां—क्रोशन्तो यान्त्यवर्तिमेवान्यस्मिन् प्रतिषज्य प्रतिष्ठां गच्छन्ति[11] यदा दशं शतं कुर्वन्त्यथैकंमुत्थानꣳ शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्ति[12] यदा शतꣳ सहस्रं कुर्वन्त्यथैकंमुत्थानꣳ सहस्रंसंमितो वा असौ लोकोऽमुमेव लोकमभि जयन्ति[13] यद्वै—( ४ )--षां प्रमीयेत यदा वा जीयेरन्नथैकंमुत्थानं तद्धि तीर्थम्[14] ॥ ( पृष्ठानि, सप्तदशः, सुवर्गों, जयन्ति य,- दैकादश च ) ॥ १ ॥

सप्तरात्रः ॥ विश्वेदेवा ऋषयः ।

कुसुरुविन्द्र औद्दालकिरकामयत पशुमान्त्स्यामिति स एतꣳ सप्तरात्रमा ऽहरत् तेनायजत तेन वै स यावन्तो ग्राम्याः पशवस्तानवारुन्ध य एवं विद्वान्त्सप्तरात्रेण यजते यावन्त एव ग्राम्याः पशवस्तानेवाव रुन्धे[1] सप्तरात्रो भवति सप्त ग्राम्याः पशवः सप्ताऽऽरण्याः सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै[2] त्रिवृदग्निष्टोमो भवति तेज ( १ ) एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायत एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् धत्ते त्रिणवो भवति विजित्यै पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै[3] यत् प्रत्यक्षं पूर्वेष्वहःसु पृष्ठान्युपेयुः प्रत्यक्षं ( २ ) विश्वजिति यथा दुग्धामुपसीदत्येवमुत्तममहः स्यान्नैकरात्रश्चन स्याद्बृहद्रथंतरे पूर्वेष्वहःसूप यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव न यन्त्यथो अनयोरेव प्रति तिष्ठन्ति यत् प्रत्यक्षं विश्वजिति पृष्ठान्युपयन्ति यथा प्रत्तां दुहे तादृगेव तत् ॥ ( तेज, उपेयुः प्रत्यक्षं, द्विचत्वारिꣳशच्च ) ॥ २ ॥

अष्टरात्रः ॥ विश्वेदेवा ऋषयः ।

बृहस्पतिरकामयत ब्रह्मवर्चसी स्यामिति स एतमष्टरात्रमपश्यत् तमाऽहरत् तेनायजत ततो वै स ब्रह्मवर्चस्यभवद्य एवं विद्वानष्टरात्रेण यजते ब्रह्मवर्चस्येव भवत्यष्टरात्रो भवत्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धेऽष्टरात्रो भवति चतस्रो वै दिशश्चतस्रोऽवान्तरदिशा दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे[1] ( १ ) त्रिवृदग्निष्टोमो भवति तेज एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायत एकविꣳशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् धत्ते त्रिणवो भवति विजित्यै त्रयस्त्रिꣳशो भवति प्रतिष्ठित्यै पञ्चविꣳशोऽग्निष्टोमो भवति प्रजापतेराप्त्यै महाव्रतवानन्नाद्यस्यावरुद्ध्यै विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै[2] ( २ ) ( दिग्भ्य एव ब्रह्मवर्चसमव रुन्धे, ऽभिजित्यै ) ॥ ३ ॥

नवरात्रः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिः प्रजा असृजत ताः सृष्टाः क्षुधं न्यायन्त्स एतं नवरात्रमपश्यत् तमाऽहरत् तेनायजत ततो वै प्रजाभ्योऽकल्पत यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजेतेमे हि वा एतासां लोका अक्लृप्ता

अथैताः क्षुधं नि गच्छन्तीमानेवाऽऽभ्यो लोकान् कल्पयति तान् कल्पमानान् प्रजाभ्योऽनु कल्पते कल्पन्ते ( १ ) ऽस्मा इमे लोका ऊर्जं प्रजासु दधाति[1] त्रिरात्रेणैवेमं लोकं कल्पयति त्रिरात्रेणान्तरिक्षं त्रिरात्रेणामुं लोकं यथा गुणे गुणमन्वस्यत्येवमेव तल्लोके लोकमन्वस्यति धृत्या अशिथिलंभावाय[2] ज्योतिर्गौरायुरिति ज्ञाताः स्तोमा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठन्ति ज्ञात्रं प्रजानां ( २ ) गच्छति[3] नवरात्रो भवत्यभिपूर्वमेवास्मिन् तेजो दधाति[4] यो ज्योगामयावी स्यात् स नवरात्रेण यजेत प्राणा हि वा एतस्या धृता अथैतस्य ज्योगामयति प्राणानेवास्मिन् दाधारोत यदीतासुर्भवति जीवत्येव[5] ॥ ( कल्पन्ते, प्रजानां, त्रयस्त्रिंशच्च ) ॥ ४ ॥

दशरात्रः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिरकामयत प्र जायेयेति स एतं दशहोतारमपश्यत् तमजुहोत् तेन दशरात्रमसृजत तेन दशरात्रेण प्राजायत दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहुयाद्दशहोत्रैव दशरात्रꣳ सृजते तेन दशरात्रेण प्र जायते[1] वैराजो वा एष यज्ञो यद्दशरात्रो य एवं विद्वान् दशरात्रेण यजते विराजमेव गच्छति[2] प्राजापत्यो वा एष यज्ञो यद्दशरात्रो ( १ ) य एवं विद्वान् दशरात्रेण यजते प्रैव जायते[3] इन्द्रो वै सदृङ् देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत् तस्मा एतं दशरात्रं प्रायच्छत् तमाऽहरत् तेनायजत ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एवं विद्वान् दशरात्रेण यजते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छति[4] त्रिककुद्वा ( २ ) एष यज्ञो यद्दशरात्रः ककुत् पञ्चदशः ककुदेकविꣳशः ककुत् त्रयस्त्रिꣳशो य एवं विद्वान् दशरात्रेण यजते त्रिककुदेव समानानां भवति यजमानः पञ्चदशो यजमान एकविꣳशो यजमानस्त्रयस्त्रिꣳशः पुर इतरा[5] अभिचर्यमाणो दशरात्रेण यजेत देवपुरा एव पर्यूहते तस्य न कुतश्चनोपाव्याधो भवति नैनमभिचरन्त्स्तृणुते[6] देवासुराः संयत्ता आसन् ते देवा एताः ( ३ ) देवपुरा अपश्यन् यद्दशरात्रस्ताः पर्यौहन्त तेषां न कुतश्चनोपाव्याधोऽभवत् ततो देवा अभवन् पराऽसुरा यो भ्रातृव्यवान्त्स्यात् स दशरात्रेण यजेत देवपुरा एव पर्यूहते तस्य न कुतश्चनोपाव्याधो भवति भवत्यात्मना पराऽस्य भ्रातृव्यो भवति स्तोमः स्तोमस्योपस्तिर्भवति भ्रातृव्यमेवोपस्तिं कुरुते[7] जामि वा ( ४ ) एतत् कुर्वन्ति यज्ज्यायाꣳसꣳ स्तोममुपेत्य कनीयाꣳसमुपयन्ति यदग्निष्टोमसामान्यवस्ताच्च परस्ताच्च भवन्त्यजामित्वाय[8] त्रिवृदग्निष्टोमोऽग्निष्टुदाग्नेयीषु भवति तेज एवाव रुन्धे[9] पञ्चदश उक्थ्य ऐन्द्रीष्विन्द्रियमेवाव रुन्धे[10] त्रिवृदग्निष्टोमो वैश्वदेवीषु पुष्टिमेवाव रुन्धे[11] सप्तदशोऽग्निष्टोमः प्राजापत्यासु तीव्रसोमोऽन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायते[12] ( ५ ) एकविꣳश उक्थ्यः सौरीषु प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् धत्ते[13] सप्तदशोऽग्निष्टोमः प्राजापत्यासूपहव्य उपहवमेव गच्छति[14] त्रिणवावग्निष्टोमावभित ऐन्द्रीषु विजित्यै[15] त्रयस्त्रिꣳश उक्थ्यो वैश्वदेवीषु प्रतिष्ठित्यै[16] विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति सर्वस्याभिजित्यै[17] ॥ ( एष यज्ञो यद्दशरात्र,– स्त्रिककुद्वा, एता, वै, जायत, एकत्रिꣳशच्च ) ॥५॥

एकादशरात्रः ॥ विश्वेदेवा ऋषयः ।

ऋतवो वै प्रजाकामाः प्रजां नाविन्दन्त तेऽकामयन्त प्रजाꣳ सृजेमहि प्रजामव रुन्धीमहि प्रजां विन्दे-

महि प्रजावन्तः स्यामेति त एतमेकादशरात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै ते प्रजामसृजन्त प्रजामवारुन्धत प्रजामविन्दन्त प्रजावन्तोऽभवन् त ऋतवोऽभवन् तदार्तवानामार्तवत्वमृतूनां वा एते पुत्रास्तस्मा–(१)–दार्तवा उच्यन्ते य एवं विद्वा१ंस एकादशरात्रमासते प्रजामेव सृजन्ते प्रजामव रुन्धते प्रजां विन्दन्ते प्रजावन्तो भवन्ति[1] ज्योतिरतिरात्रो भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै[2] पृष्ठ्यः षडहो भवति षड् वा ऋतवः षट् पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति चतुर्वि१ंशो भवति चतुर्वि१ंशत्यक्षरा गायत्री (२) गायत्रं ब्रह्मवर्चसं गायत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति[3] चतुश्चत्वारि१ंशो भवति चतुश्चत्वारि१ंशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप् त्रिष्टुभ्येवेन्द्रिये प्रति तिष्ठन्त्य[4]–ष्टाचत्वारि१ंशो भवत्यष्टाचत्वारि१ंशदक्षरा जगती जागताः पशवो जगत्यामेव पशुषु प्रति तिष्ठन्त्ये[5]–कादशरात्रो भवति पञ्च वा ऋतव आर्तवाः पञ्चर्तुष्वेवाऽऽर्तवेषु संवत्सरे प्रतिष्ठाय प्रजामव रुन्धते[6] ऽतिरात्रावभितो भवतः प्रजायै परिगृहीत्यै[7] ॥ (एते पुत्रास्तस्मा,–द्गायत्र्ये,–कान्नपञ्चाशच्च) ॥ ६ ॥

द्वादशरात्रः ॥ विश्वेदेवा ऋषयः ।

ऐन्द्रवायवाग्रान् गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति यज्ञस्य वै कॢप्तिमनु प्रजाः कल्पन्ते यज्ञस्यावकॢप्तिमनु न कल्पन्ते यथापूर्वमेव प्रजाः कल्पयति न ज्याया१ंसं कनीयानति क्रामत्यै[1]–न्द्रवायवाग्रान् गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्याऽऽमयति प्राण ऐन्द्रवायवः प्राणेनैवैन१ं समर्धयति[2] मैत्रावरुणाग्रान् गृह्णीरन् येषां दीक्षितानां प्रमीयेत (१) प्राणापानाभ्यां वा एते व्यृध्यन्ते येषां दीक्षितानां प्रमीयते प्राणापानौ मित्रावरुणौ प्राणापानावेव मुखतः परि हरन्ते[3] आश्विनाग्रान् गृह्णीताऽऽनुजावरोऽश्विनौ वै देवानामानुजावरौ पश्चेवाग्रं पर्यैतामश्विनावेतस्य देवता य आनुजावरस्तावेवैनमग्रं परि णयतः[4] शुक्राग्रान् गृह्णीत गतश्रीः प्रतिष्ठाकामोऽसौ वा आदित्यः शुक्र एषोऽन्तोऽन्तं मनुष्यः (२) श्रियै गत्वा नि वर्ततेऽन्तादेवान्तमा रभते न ततः पापीयान् भवति[5] मन्थ्यग्रान् गृह्णीताभिचरन्नार्तपात्रं वा एतद्यन्मन्थिपात्रं मृत्युनैवैनं ग्राहयति ताजगार्तिमार्छत्या[6]–ग्रयणाग्रान् गृह्णीत यस्य पिता पितामहः पुण्यः स्यादथ तन्न प्राप्नुयाद्वाचा वा एष इन्द्रियेण व्यृध्यते यस्य पिता पितामहः पुण्यो (३) भवत्यथ तन्न प्राप्नोत्युर इवैतद्यज्ञस्य वागिव यदाग्रयणो वाचैवैनमिन्द्रियेण समर्धयति न ततः पापीयान् भवत्यु[7]–क्थ्याग्रान् गृह्णीताभिचर्यमाणः सर्वेषां वा एतत् पात्राणामिन्द्रियं यदुक्थ्यपात्र१ं सर्वेणैवैनमिन्द्रियेणाति प्र युङ्क्ते[8] सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्याद्वाग्वै (४) सरस्वती वाचैवैनमति प्र युङ्क्ते[9] मा त्वत् क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति[10] पूर्णान् ग्रहान् गृह्णीयादामयाविनः प्राणान् वा एतस्य शुगृच्छति यस्याऽऽमयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्चत्युत यदीतासुर्भवति जीवत्येव[11] पूर्णान् ग्रहान् (५) गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत् प्राणान् वा एतर्हि प्रजाना१ं शुगृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजाना१ं शुचो मुञ्चति ताजक् प्र वर्षति[12] ॥ (प्रमीयेत, मनुष्यः, ऋध्यते यस्य पिता पितामहः पुण्यो, वाग्वा, एव पूर्णान् ग्रहान्, पञ्चविंशतिश्च) ॥७॥

द्वादशाहस्य व्यूढप्रकाशः ॥ विश्वेदेवा ऋषयः ।

गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहस्तस्मात् प्रायणीयेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति[1] त्रैष्टुभो वै शुक्रस्त्रैष्टुभं द्वितीयमहस्तस्माद् द्वितीयेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णाति[2] जागतो वा आग्रयणो जागतं तृतीयमहस्तस्मात् तृतीयेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्ये[3]—तद्वै (१) यज्ञमापद्यच्छन्दाꣳस्याप्नोति यदाग्रयणः श्वो गृह्यते यत्रैव यज्ञमदृशन् तत एवैनं पुनः प्र युङ्क्ते[4] जगन्मुखो वै द्वितीयस्त्रिरात्रो जागत आग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते[5] राथंतरो वा ऐन्द्रवायवो राथंतरं पञ्चममहस्तस्मात् पञ्चमेऽह-(२)-न्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति[6] बार्हतो वै शुक्रो बार्हतꣳ षष्ठमहस्तस्मात् षष्ठेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्यै[7]—तद्वै द्वितीयं यज्ञमापद्यच्छन्दाꣳस्याप्नोति यच्छुक्रः श्वो गृह्यते यत्रैव यज्ञमदृशन् तत एवैनं पुनः प्र युङ्क्ते[8] त्रिष्टुङ्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभः (३) शुक्रो यत् सप्तमे-ऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते[9] वाग्वा आग्रयणो वागष्टम-महस्तस्मादष्टमेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति[10] प्राणो वा ऐन्द्रवायवः प्राणो नवममह-स्तस्मान्नवमेऽहन्नैन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णात्ये[11]—त-(४)-द्वै तृतीयं यज्ञमापद्यच्छन्दाꣳ-स्याप्नोति यदैन्द्रवायवः श्वो गृह्यते यत्रैव यज्ञमदृशन् तत एवैनं पुनः प्र युङ्क्तेऽथो स्वमेव छन्दोऽनु पर्यावर्तन्ते[12] पथो वा एतेऽध्यपथेन यन्ति येऽन्येनैन्द्रवायवात् प्रतिपद्यन्तेऽन्तः खलु वा एष यज्ञस्य यद्दशममहर्दशमेऽहन्नैन्द्रवायवो गृह्यते यज्ञस्यै-(५)-वान्तं गत्वाऽपथात् पन्थामपि यन्त्यथो यथा वहीयसा प्रतिसारं वहन्ति तादृगेव त[13]—च्छन्दाꣳस्यन्योन्यस्य लोकमभ्यध्यायन् तान्येतेनैव देवा व्यवाहय[14]—न्नैन्द्र-वायवस्य वा एतदायतनं यच्चतुर्थमहस्तस्मिन्नाग्रयणो गृह्यते तस्मादाग्रयणस्याऽऽयतने नवमेऽहन्नैन्द्रवायवो गृह्यते[15] शुक्रस्य वा एतदायतनं यत् पञ्चम-(६)-महस्तस्मिन्नैन्द्रवायवो गृह्यते तस्मादैन्द्रवायवस्या-ऽऽयतने सप्तमेऽहञ्छुक्रो गृह्यते[16] आग्रयणस्य वा एतदायतनं यत् षष्ठमहस्तस्मिञ्छुक्रो गृह्यते तस्मा-च्छुक्रस्याऽऽतनेऽष्टमेऽहन्नाग्रयणो गृह्यते[17] छन्दाꣳस्येव तद्वि वाहयति प्र वस्यसो विवाहमाप्नोति य एवं वेदाथो देवताभ्य एव यज्ञे संविदं दधाति तस्मादिदमन्योऽन्यस्मै (७) ददाति[18] ॥ (एतद्वै, पञ्चमेऽहन्, त्रैष्टुभ, एतत्, गृह्यते यज्ञस्य, पञ्चम,--मन्यस्मा, एकं च) ॥ ८ ॥

द्वादशाहगतान्येकादशाहानि ॥ विश्वेदेवा ऋषयः ।

प्रजापतिरकामयत प्र जायेयेति स एतं द्वादशरात्रमपश्यत् तमाऽहरत् तेनायजत ततो वै स प्राजायत यः कामयेत प्र जायेयेति स द्वादशरात्रेण यजेत प्रैव जायते[1] ब्रह्मवादिनो वदन्त्यग्निष्टोमप्रायणा यज्ञा अथ कस्मादतिरात्रः पूर्वः प्र युज्यत इति चक्षुषी वा एते यज्ञस्य यदतिरात्रौ कनीनिके अग्निष्टोमौ य-(१)-दग्निष्टोमं पूर्वं प्रयुञ्जीरन् बहिर्धा कनीनिके दध्युस्तस्मादतिरात्रः पूर्वः प्र युज्यते चक्षुषी एव यज्ञे धित्वा मध्यतः कनीनिके प्रति दधति[2] यो वै गायत्रीं ज्योतिः पक्षां वेद ज्योतिषा भासा सुवर्गं लोकमेति यावग्निष्टोमौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मैषा वै गायत्री ज्योतिःपक्षा य एवं वेद ज्योतिषा भासा

सुवर्गं लोक-( २ )-मेति[3] प्रजापतिर्वा एष द्वादशधा विहितो यद् द्वादशरात्रो यावतिरात्रौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मा प्रजापतिर्वावैष सन्त्सद्ध वै सत्रेण स्पृणोति प्राणा वै सत् प्राणानेव स्पृणोति[4] सर्वासां वा एते प्रजानां प्राणैरासते सत्रमासते तस्मात् पृच्छन्ति किमेते सत्रिण इति[5] प्रियः प्रजाना-( ३ )- मुत्थितो भवति य एवं वेद[6] ॥ ( अग्निष्टोमौ यत्, सुवर्गं लोकं, प्रियः प्रजानां, पञ्च च ) ॥ ९ ॥

द्वादशमहः, दीक्षाविशेषश्च ॥ विश्वेदेवा ऋषयः ।

न वा एषोऽन्यतोवैश्वानरः सुवर्गाय लोकाय प्राभवदूर्ध्वो ह वा एष आतत आसीत् ते देवा एतं वैश्वानरं पर्यौहन्त्सुवर्गस्य लोकस्य प्रभूत्या[1] ऋतवो वा एतेन प्रजापतिमयाजयन् तेष्वार्ध्नोदधि तदृध्नोति ह वा ऋत्विक्षु य एवं विद्वान् द्वादशाहेन यजते[2] तेऽस्मिन्नैच्छन्त स रसमह वसन्ताय प्रायच्छ-( १ )-द्यवं ग्रीष्मायौषधीर्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ हेमन्तशिशिराभ्यां[3] तेनेन्द्रं प्रजापतिरयाजयत् ततो वा इन्द्र इन्द्रोऽभवत् तस्मादाहुरानुजावरस्य यज्ञ इति स ह्येतेनाग्रेऽयजतै[4]—ष ह वै कुणपमत्ति यः सत्रे प्रतिगृह्णाति पुरुषकुणपमश्वकुणपं गौर्वा अन्नं येन पात्रेणान्नं बिभ्रति यत् तन्न निर्णेनिजति ततोऽधि ( २ ) मलं जायत[5] एक एव यजेतैको हि प्रजापतिरार्ध्नोद्[6] द्वादश रात्रीर्दीक्षितः स्याद् द्वादश मासाः संवत्सरः संवत्सरः प्रजापतिः प्रजापतिर्वावैष एष ह त्वै जायते यस्तपसोऽधि जायते[7] चतुर्धा वा एतास्तिस्रस्तिस्रो रात्रयो यद् द्वादशोपसदो याः प्रथमा यज्ञं ताभिः सं भरति या द्वितीया यज्ञं ताभिरा रभते ( ३ ) यास्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरतः शुन्धते[8] यो वा अस्य पशुमत्ति मांसं सोऽत्ति यः पुरोडाशं मस्तिष्कं स यः परिवापं पुरीषं स य आज्यं मज्जानं स यः सोमं स्वेदं सोऽपि ह वा अस्य शीर्षण्या निष्पदः प्रति गृह्णाति यो द्वादशाहे प्रतिगृह्णाति तस्माद् द्वादशाहेन ( ४ ) न याज्यं पाप्मनो व्यावृत्त्यै[9] ॥ ( अयच्छ,-दधि, रभते, द्वादशाहेन, चत्वारि च ) ॥१०॥

अश्वमेधगता अन्नहोमाः, तत्र युजामयुजां च मिश्रितानां सङ्घः ॥ विश्वेदेवा ऋषयः ।

एकस्मै स्वाहा[1] द्वाभ्यां स्वाहा[2] त्रिभ्यः स्वाहा[3] चतुर्भ्यः स्वाहा[4] पञ्चभ्यः स्वाहा[5] षड्भ्यः स्वाहा[6] सप्तभ्यः स्वाहा[7] ऽष्टाभ्यः स्वाहा[8] नवभ्यः स्वाहा[9] दशभ्यः स्वाहै[10]—कादशभ्यः स्वाहा[11] द्वादशभ्यः स्वाहा[12] त्रयोदशभ्यः स्वाहा[13] चतुर्दशभ्यः स्वाहा[14] पञ्चदशभ्यः स्वाहा[15] षोडशभ्यः स्वाहा[16] सप्तदशभ्यः स्वाहा[17] ऽष्टादशभ्यः स्वाहै[18]—कान्न विंशत्यै स्वाहा[19] नवविंशत्यै स्वाहै[20]—कान्न चत्वारिंशते स्वाहा[21] नवचत्वारिंशते स्वाहै[22]—कान्न ( १ ) षष्ट्यै स्वाहा[23] नवषष्ट्यै स्वाहै[24]—कान्नाशीत्यै स्वाहा[25] नवाशीत्यै स्वाहै[26]—कान्न शताय स्वाहा[27] शताय स्वाहा[28] द्वाभ्यां शताभ्यां स्वाहा[29] सर्वस्मै स्वाहा[30] ॥ ( नवचत्वारिंशते स्वाहैकान्न,-कविंशतिश्च ) ॥ ११ ॥

अयुजामेकाधिकानां सङ्घः ॥ विश्वेदेवा ऋषयः ।

एकस्मै स्वाहा[1] त्रिभ्यः स्वाहा[2] पञ्चभ्यः स्वाहा[3] सप्तभ्यः स्वाहा[4] नवभ्यः स्वाहै[5]—कादशभ्यः स्वाहा[6] त्रयोदशभ्यः स्वाहा[7] पञ्चदशभ्यः स्वाहा[8] सप्तदशभ्यः स्वाहै[9]—कान्न विंशत्यै

स्वाहा नवविꣳशत्यै स्वाहै[११]कान्न चत्वारिꣳशते स्वाहा[१२] नवचत्वारिꣳशते स्वाहै[१३]कान्न षष्ट्यै स्वाहा[१४] नवषष्ट्यै स्वाहै[१५]कान्नाशीत्यै स्वाहा[१६] नवाशीत्यै स्वाहै[१७]कान्न शताय स्वाहा[१८] शताय स्वाहा[१९] सर्वस्मै स्वाहा[२०] ॥ ( एकस्मै पञ्चाशत् ) ॥ १२ ॥

द्व्यादि युग्मसङ्ख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

द्वाभ्याꣳ स्वाहा[१] चतुर्भ्यः स्वाहा[२] षड्भ्यः स्वाहा[३] ऽष्टाभ्यः स्वाहा[४] दशभ्यः स्वाहा[५] द्वादशभ्यः स्वाहा[६] चतुर्दशभ्यः स्वाहा[७] षोडशभ्यः स्वाहा[८] ऽष्टादशभ्यः स्वाहा[९] विꣳशत्यै स्वाहा[१०] ऽष्टानवत्यै स्वाहा[११] शताय स्वाहा[१२] सर्वस्मै स्वाहा[१३] ॥ ( द्वाभ्यामष्टानवत्यै षड्विꣳशतिः ) ॥ १३ ॥

त्र्यादि त्र्युत्तरसंख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

त्रिभ्यः स्वाहा[१] पञ्चभ्यः स्वाहा[२] सप्तभ्यः स्वाहा[३] नवभ्यः स्वाहै[४]कादशभ्यः स्वाहा[५] त्रयोदशभ्यः स्वाहा[६] पञ्चदशभ्यः स्वाहा[७] सप्तदशभ्यः स्वाहै[८]कान्न विꣳशत्यै स्वाहा[९] नवविꣳशत्यै स्वाहै[१०]कान्न चत्वारिꣳशते स्वाहा[११] नवचत्वारिꣳशते स्वाहै[१२]कान्न षष्ट्यै स्वाहा[१३] नवषष्ट्यै स्वाहै[१४]कान्नाशीत्यै स्वाहा[१५] नवाशीत्यै स्वाहै[१६]कान्न शताय स्वाहा[१७] शताय स्वाहा[१८] सर्वस्मै स्वाहा[१९] ॥ ( त्रिभ्योऽष्टाचत्वारिꣳशत् ) ॥ १४ ॥

चतुरादि चतुरुत्तरसङ्ख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

चतुर्भ्यः स्वाहा[१] ऽष्टाभ्यः स्वाहा[२] द्वादशभ्यः स्वाहा[३] षोडशभ्यः स्वाहा[४] विꣳशत्यै स्वाहा[५] षण्णवत्यै स्वाहा[६] शताय स्वाहा[७] सर्वस्मै स्वाहा[८] ॥ ( चतुर्भ्यः षण्णवत्यै षोडश ) ॥ १५ ॥

पञ्चादि पञ्चोत्तरसंख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

पञ्चभ्यः स्वाहा[१] दशभ्यः स्वाहा[२] पञ्चदशभ्यः स्वाहा[३] विꣳशत्यै स्वाहा[४] पञ्चनवत्यै स्वाहा[५] शताय स्वाहा[६] सर्वस्मै स्वाहा[७] ॥ ( पञ्चभ्यः पञ्चनवत्यै चतुर्दश ) ॥ १६ ॥

दशादि दशोत्तरसंख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

दशभ्यः स्वाहा[१] विꣳशत्यै स्वाहा[२] त्रिꣳशते स्वाहा[३] चत्वारिꣳशते स्वाहा[४] पञ्चाशते स्वाहा[५] षष्ट्यै स्वाहा[६] सप्तत्यै स्वाहा[७] ऽशीत्यै स्वाहा[८] नवत्यै स्वाहा[९] शताय स्वाहा[१०] सर्वस्मै स्वाहा[११] ॥ ( दशभ्यो द्वाविꣳशतिः ) ॥ १७ ॥

विंशत्यादि विंशत्युत्तरसंख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

विꣳशत्यै स्वाहा[१] चत्वारिꣳशते स्वाहा[२] षष्ट्यै स्वाहा[३] ऽशीत्यै स्वाहा[४] शताय स्वाहा[५] सर्वस्मै स्वाहा[६] ॥ ( विꣳशत्यै द्वादश ) ॥ १८ ॥

पञ्चाशतमारभ्य पञ्चाशदुत्तराणां शतोत्तराणां च सङ्घः ॥ विश्वेदेवा ऋषयः ।

पञ्चाशते स्वाहा[१] शताय स्वाहा[२] द्वाभ्याꣳ शताभ्याꣳ स्वाहा[३] त्रिभ्यः शतेभ्यः स्वाहा[४]

चतुर्भ्यः शतेभ्यः स्वाहा[5] पञ्चभ्यः शतेभ्यः स्वाहा[6] षड्भ्यः शतेभ्यः स्वाहा[7] सप्तभ्यः शतेभ्यः स्वाहा[8] ऽष्टाभ्यः शतेभ्यः स्वाहा[9] नवभ्यः शतेभ्यः स्वाहा[10] सहस्राय स्वाहा[11] सर्वस्मै स्वाहा[12] ॥ ( पञ्चाशते द्वात्रिंशत् ) ॥ १९ ॥

शतमारभ्य दशगुणवृद्धियुक्तसंख्यासङ्घः ॥ विश्वेदेवा ऋषयः ।

शताय स्वाहा[1] सहस्राय स्वाहा[2] ऽयुताय स्वाहा[3] नियुताय स्वाहा[4] प्रयुताय स्वाहा[5] ऽर्बुदाय स्वाहा[6] न्यर्बुदाय स्वाहा[7] समुद्राय स्वाहा[8] मध्याय स्वाहा[9] ऽन्ताय स्वाहा[10] परार्धाय स्वाहो[11]षसे स्वाहा[12] व्युष्ट्यै स्वाहो[13]देष्यते स्वाहो[14]द्यते स्वाहो[15]दिताय स्वाहा[16] सुवर्गाय स्वाहा[17] लोकाय स्वाहा[18] सर्वस्मै स्वाहा[19] ॥ ( शतायाष्टात्रिंशत् ) ॥ २० ॥

[ साध्याः २११। कुसुरुबिन्दो १४२। बृहस्पतिः १००। प्रजापतिः १३३। प्रजापति -२८१।- ऋतव १४९। ऐन्द्रवायवाग्रान् २७५। गायत्रः ३५१। प्रजापति -१५५। -नैं -२०४। -कस्मा ७१। एकस्मै ५०। द्वाभ्यां २६। त्रिभ्य -४८। श्चतुर्भ्यः १६। पञ्चभ्यो १४। दशभ्यो २२। विंशत्यै १२। पञ्चाशते ३२। शताय ३८। विंशतिः ॥ २३३० ]

[ ॥ इति सप्तमकाण्डे द्वितीयः प्रपाठकः ॥२॥ ]

## सत्रजातनिरूपणम् ।

अथ तृतीयः प्रपाठकः ॥ ३ ॥

द्वादशाहगतमविवाक्यमहः ॥ विश्वेदेवा ऋषयः ।

प्रजवं वा एतेन यन्ति यद्दशममहः पापावहीयं वा एतेन भवन्ति यद्दशममहर्यो वै प्रजवं यतामपथेन प्रतिपद्यते यः स्थाणुꣳ हन्ति यो भ्रेषं न्येति स हीयते स यो वै दशमेऽहन्नविवाक्य उपहन्यते स हीयते तस्मै य उपहताय व्याह तमेवान्वारभ्य समश्नुतेऽथ यो व्याह स ( १ ) हीयते तस्माद्दशमेऽहन्नविवाक्य उपहताय न व्युच्यꣳ—मथो खल्वाहुर्यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य व्यृद्धेनासुरान् पराऽभावयन्निति यत् खलु वै यज्ञस्य समृद्धं तद्यजमानस्य यद्व्यृद्धं तद्भ्रातृव्यस्य स यो वै दशमेऽहन्नविवाक्य उपहन्यते स एवार्तिं रेचयति ते ये बाह्या दृशीकवः ( २ ) स्युस्ते वि ब्रूयु—र्यदि तत्र न विन्देयुरन्तः सदसाद्व्युच्यं[3] यदि तत्र न विन्देयुर्गृहपतिना व्युच्यं[4] तद्व्युच्यमेवा—थ वा एतत् सर्पराज्ञिया ऋग्भिः स्तुवन्तीयं वै सर्पतो राज्ञी यद्वा अस्यां किं चार्चन्ति यदानृचुस्तेनेयꣳ सर्पराज्ञी ते यदेव किं च वाचाऽऽनृचुर्यदतोऽध्यर्चितार-( ३ )-स्तदुभयमाप्त्वाऽवरुध्योत् तिष्ठामेति[6] ताभिर्मनसा स्तुवते न वा इमामश्वरथो नाश्वतरीरथः सद्यः पर्याप्तुमर्हति मनो वा इमाꣳ सद्यः पर्याप्तुमर्हति मनः परिभवितु—मथ ब्रह्म वदन्ति परिमिता वा ऋचः परिमितानि सामानि परिमितानि यजूꣳष्यथैतस्यैवान्तो नास्ति यद्ब्रह्म तत् प्रतिगृणत आ चक्षीत स ( ४ ) प्रतिगरः ॥ ( व्याह स, दृशीकवो, ऽर्चितारः, स, एकं च ) ॥ १ ॥

द्वादशाहयाजिप्रशंसा ॥ विश्वेदेवा ऋषयः ।

ब्रह्मवादिनो वदन्ति किं द्वादशाहस्य प्रथमेनाहर्त्विजां यजमानो वृङ्क्त इति तेज इन्द्रियमिति किं

द्वितीयेनेति प्राणानन्नाद्यमिति किं तृतीयेनेति त्रीनिमाँल्लोकानिति किं चतुर्थेनेति चतुष्पदः पशूनिति किं पञ्चमेनेति पञ्चाक्षरां पङ्क्तिमिति किꣳ षष्ठेनेति षड् ऋतूनिति किꣳ सप्तमेनेति सप्तपदाꣳ शक्वरीमिति (१) किमष्टमेनेत्यष्टाक्षरां गायत्रीमिति किं नवमेनेति त्रिवृतꣳ स्तोममिति किं दशमेनेति दशाक्षरां विराजमिति किमेकादशेनेत्येकादशाक्षरां त्रिष्टुभमिति किं द्वादशेनेति द्वादशाक्षरां जगतीमित्येतावद्वा अस्ति यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते[१] ॥ ( शक्वरीमित्ये,- कचत्वारिꣳशच्च ) ॥ २ ॥

त्रयोदशरात्रः ॥ विश्वेदेवा ऋषयः ।

एष वा आप्तो द्वादशाहो यत् त्रयोदशरात्रः समानꣳ ह्येतदहर्यत् प्रायणीयश्चोदयनीयश्च[१] त्र्यतिरात्रो भवति त्रय इमे लोका एषां लोकानामाप्त्यै[२] प्राणो वै प्रथमोऽतिरात्रो व्यानो द्वितीयोऽपानस्तृतीयः प्राणापानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति सर्वमायुर्यन्ति य एवं विद्वाꣳसस्त्रयोदशरात्रमासते[३] तदाहुर्वाग्वा एषा वितता (१) यद् द्वादशाहस्तां विच्छिन्द्युर्यन्मध्येऽतिरात्रं कुर्युरुपदासुका गृहपतेर्वाक् स्यादुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति संततामेव वाचमव रुन्धतेऽनुपदासुका गृहपतेर्वाग्भवति[४] पशवो वै छन्दोमा अन्नं महाव्रतं यदुपरिष्टाच्छन्दोमानां महाव्रतं कुर्वन्ति पशुषु चैवान्नाद्ये च प्रति तिष्ठन्ति[५] ( वितता, त्रिचत्वारिꣳशच्च ) ॥ ३ ॥

चतुर्दशरात्रः ॥ विश्वेदेवा ऋषयः ।

आदित्या अकामयन्तोभयोर्लोकयोर्ऋध्नुयामेति त एतं चतुर्दशरात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै त उभयोर्लोकयोरार्ध्नुवन्नस्मिꣳश्चामुष्मिꣳश्च य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च[१] चतुर्दशरात्रो भवति सप्त ग्राम्या ओषधयः सप्ताऽऽरण्या उभयीषामवरुद्ध्यै[२] यत् पराचीनानि पृष्ठानि (१) भवन्त्यमुमेव तैर्लोकमभि जयन्ति यत् प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकमभि जयन्ति[३] त्रयस्त्रिꣳशौ मध्यतः स्तोमौ भवतः साम्राज्यमेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानां भवन्त्य—तिरात्रावभितो भवतः परिगृहीत्यै[४] ॥ ( पृष्ठानि, चतुस्त्रिꣳशच्च ) ॥ ४ ॥

अन्यश्चतुर्दशरात्रः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिः सुवर्गं लोकमैत् तं देवा अन्वायन् तानादित्याश्च पशवश्चान्वायन् ते देवा अब्रुवन् यान् पशूनुपाजीविष्म त इमेऽन्वाग्मन्निति तेभ्य एतं चतुर्दशरात्रं प्रत्यौहन् त आदित्याः पृष्ठैः सुवर्गं लोकमाऽरोहन् त्र्यहाभ्यामस्मिँल्लोके पशून् प्रत्यौहन् पृष्ठैरादित्या अमुष्मिँल्लोक आर्ध्नुवन् त्र्यहाभ्यामस्मिं-(१)-ल्लोके पशवो[१] य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर्ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवामुष्मिँल्लोक ऋध्नुवन्ति त्र्यहाभ्यामस्मिँल्लोके[२] ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्ति[३] यदन्यतः पृष्ठानि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौ -(२)- जो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते[४] बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति[५] पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्

त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या ( ३ ) उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति[५] चतुर्दशैतास्तासां या दश दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते याश्चतस्रश्चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्त्यँ—तिरात्रावभितो भवतः परिगृहीत्यै॥ ( आनुवन् त्र्यहाभ्यामस्मिन्,—न्त्सविविधत्वाय, प्रतिष्ठित्या,एकत्रिंशच्च )।५।

पञ्चदशरात्रः ॥ विश्वेदेवा ऋषयः ।

इन्द्रो वै सदृङ् देवताभिरासीत् स न व्यावृतमगच्छत् स प्रजापतिमुपाधावत् तस्मा एतं पञ्चदशरात्रं प्रायच्छत् तमाहरत् तेनायजत ततो वै सोऽन्याभिर्देवताभिर्व्यावृतमगच्छद्य एवं विद्वांसः पञ्चदशरात्रमासते व्यावृतमेव पाप्मना भ्रातृव्येण गच्छन्ति[१] ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं ( १ ) गौरसावायुरेष्वेव लोकेषु प्रति तिष्ठन्त्य[२]—सत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति[३] पञ्चदशरात्रो भवति पञ्चदशो वज्रो वज्रमेव भ्रातृव्येभ्यः प्र हरन्त्य[४]—तिरात्रावभितो भवत इन्द्रियस्य ( १ ) परिगृहीत्यै[५] ॥ ( अन्तरिक्ष,- मिन्द्रियस्यै,- कं च ) ॥ ६ ॥

अन्यः पञ्चदशरात्रः ॥ विश्वेदेवा ऋषयः ।

इन्द्रो वै शिथिल इवाप्रतिष्ठित आसीत् सोऽसुरेभ्योऽबिभेत् स प्रजापतिमुपाधावत् तस्मा एतं पञ्चदशरात्रं वज्रं प्रायच्छत् तेनासुरान् पराभाव्य विजित्य श्रियमगच्छदग्निष्टुता पाप्मानं निरदहत पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन्नधत्त य एवं विद्वांसः पञ्चदशरात्रमासते भ्रातृव्यानेव पराभाव्य विजित्य श्रियं गच्छन्त्यग्निष्टुता पाप्मानं नि-( १ )-र्दहन्ते पञ्चदशरात्रेणौजो बलमिन्द्रियं वीर्यमात्मन् दधते[२] एता एव पशव्याः पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरं पशवोऽनु प्र जायन्ते तस्मात् पशव्या[३] एता एव सुवर्ग्याः पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशः संवत्सर आप्यते संवत्सरः सुवर्गो लोकस्तस्मात् सुवर्ग्या[४] ज्योतिर्गौरायुरिति त्र्यहो भवतीयं वाव ज्योतिरन्तरिक्षं ( २ ) गौरसावायुरिमानेव लोकानभ्यारोहन्ति[५] यदन्यतः पृष्ठानि स्युर्विविवधं स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं ( ३ ) यन्ति[६] पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति[७] पञ्चदशैतास्तासां या दश दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते याः पञ्च पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्य[८]—तिरात्रावभितो भवत इन्द्रियस्य वीर्यस्य प्रजायै ( ४ ) पशूनां परिगृहीत्यै[९] ॥ ( गच्छन्त्यग्निष्टुता पाप्मानं नि,—रन्तरिक्षं, लोकं प्रजायै, द्वे च ) ॥ ७ ॥

सप्तदशरात्रः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिरकामयतान्नादः स्यामिति स एतं सप्तदशरात्रमपश्यत् तमाऽहरत् तेनायजत ततो वै सोऽन्नादोऽभवद्य एवं विद्वांसः सप्तदशरात्रमासतेऽन्नादा एव भवन्ति[१] पञ्चाहो भवति पञ्च वा ऋतवः

❀

संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते[२] ऽसत्त्रं वा एत-( १ )-द्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति[३] सप्तदशरात्रो भवति सप्तदशः प्रजापतिः प्रजापतेराप्त्यै[४] अतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[५] ॥ ( एतत, सप्तत्रिंशच्च ) ॥ ८ ॥

विंशतिरात्रः ॥ विश्वेदेवा ऋषयः ।

सा विराड् विक्रम्यातिष्ठद्ब्रह्मणा देवेष्वन्नेनासुरेषु ते देवा अकामयन्तोभयं सं वृञ्जीमहि ब्रह्म चान्नं चेति त एता विंशतिं रात्रीरपश्यन् ततो वै त उभयं समवृञ्जत ब्रह्म चान्नं च ब्रह्मवर्चसिनोऽन्नादा अभवन् य एवं विद्वांसं एता आसत उभयमेव सं वृञ्जते ब्रह्म चान्नं च ( २ ) ब्रह्मवर्चसिनोऽन्नादा भवन्ति द्वे वा एते विराजौ तयोरेव नाना प्रति तिष्ठन्ति विंशो वै पुरुषो दश हस्त्या अङ्गुलयो दश पद्या यावानेव पुरुषस्तमाप्त्वोत् तिष्ठन्ति[२] ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं ( २ ) लोकमभ्यारोहन्ति[३] यदन्यतः पृष्ठानि स्युर्विविवधं स्यान्मध्ये पृष्ठानि भवन्ति सविवधत्वायौजो वै वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो दधते बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति[४] पराञ्चो वा एते सुवर्गं ( ३ ) लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत् तिष्ठन्त्य[५]-तिरात्रावभितो भवतो ब्रह्मवर्चसस्यान्नाद्यस्य परिगृहीत्यै[६] ॥ ( वृञ्जते ब्रह्म चान्नं च, सुवर्गं,-मेते सुवर्गं,-त्रयोविंशतिश्च ) ॥९॥

एकविंशतिरात्रः ॥ विश्वेदेवा ऋषयः ।

असावादित्योऽस्मिँल्लोक आसीत् तं देवाः पृष्ठैः परिगृह्य सुवर्गं लोकमगमयन् परैरवस्तात् पर्यगृह्णन् दिवाकीर्त्येन सुवर्गे लोके प्रत्यस्थापयन् परैः परस्तात् पर्यगृह्णन् पृष्ठैरुपावारोहन्त्स वा असावादित्योऽमुष्मिँल्लोके परैरुभयतः परिगृहीतो[१] यत् पृष्ठानि भवन्ति सुवर्गमेव तैर्लोकं यजमाना यन्ति परैरवस्तात् परि गृह्णन्ति दिवाकीर्त्येन ( १ ) सुवर्गे लोके प्रति तिष्ठन्ति परैः परस्तात् परि गृह्णन्ति पृष्ठैरुपावरोहन्ति[२] यत् परे परस्तान्न स्युः पराञ्चः सुवर्गाल्लोकान्निष्पद्येरन् यदवस्तान्न स्युः प्रजा निर्दहेयुरभितो दिवाकीर्त्यं परःसामानो भवन्ति सुवर्ग एवैनाँल्लोक उभयतः परि गृह्णन्ति[३] यजमाना वै दिवाकीर्त्यं संवत्सरः परःसामानोऽभितो दिवाकीर्त्यं परःसामानो भवन्ति संवत्सर एवोभयतः ( २ ) प्रति तिष्ठन्ति[४] पृष्ठं वै दिवाकीर्त्यं पार्श्वे परःसामानोऽभितो दिवाकीर्त्यं परःसामानो भवन्ति तस्मादभितः पृष्ठं पार्श्वे भूयिष्ठा ग्रहा गृह्यन्ते भूयिष्ठं शस्यते यज्ञस्यैव तन्मध्यतो ग्रन्थिं ग्रथ्नन्त्यविस्रंसाय[५] सप्त गृह्यन्ते सप्त वै शीर्षण्याः प्राणाः प्राणानेव यजमानेषु दधति[६] यत् पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति यदिमं लोकं न ( ३ ) प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन् यत् प्रतीचीनानि पृष्ठानि भवन्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो अस्मिन्नेव लोके प्रति तिष्ठन्त्यनुन्मादाय[७]-न्द्रो वा अप्रतिष्ठित आसीत् स प्रजापतिमुपाधावत् तस्मा एतमेकविंशतिरात्रं प्रायच्छत् तमाऽहरत् तेनायजत ततो वै स प्रत्यतिष्ठद्ये बहु-

याजिनोऽप्रतिष्ठिताः (४) स्युस्त एकविꣳशतिरात्रमासीरन् द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविꣳश एतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्य—सावादित्यो न व्यरोचत स प्रजापतिमुपाधावत् तस्मा एतमेकविꣳशतिरात्रं प्रायच्छत् तमाऽहरत् तेनायजत ततो वै सोऽरोचत य एवं विद्वाꣳस एकविꣳशतिरात्रमासते (५) रोचन्त एवैकविꣳशतिरात्रो भवति रुग्वा एकविꣳशो रुचमेव गच्छन्त्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येकविꣳशो[१] ऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै[१०] ॥

( गृह्णन्ति द्विवाकीर्त्येन,-वोभयतो, ना,-प्रतिष्ठिता, आसत, एकविꣳशतिश्च ) ॥ १० ॥

अश्वमेधाङ्गपर्याप्तिहोममन्त्राः ॥ १ गायत्री, २ सतः पङ्क्तिः, ३ उपरिष्टाद्बृहती, ४ द्विपदाजगती, ५ अभिसारिणी, ६ महाबृहती, ७ ज्योतिष्मती, ८ अस्तारपङ्क्तिः । विश्वेदेवा ऋषयः ।

अर्वाङ् यज्ञः सं क्रामत्वमुष्मादधि मामभि । ऋषीणां यः पुरोहितः[१] ॥
निर्देवं निर्वीरं कृत्वा विष्कन्धं तस्मिन् हीयतां योऽस्मान् द्वेष्टि ।
शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान् द्वेष्टि[२] ।
यज्ञ यज्ञस्य यत् तेजस्तेन सं क्राममामभि ।
ब्राह्मणानृत्विजो देवान् यज्ञस्य तपसा ते सवाहमा हुवे[३] ॥
इष्टेन पक्वमुप (१) ते हुवे सवाहम् । सं ते वृञ्जे सुकृतꣳ सं प्रजां पशून्[४] ॥
प्रैषान्त्सामिधेनीराघारावाज्यभागावाश्रुतं प्रत्याश्रुतमा शृणोमि ते ।
प्रयाजानूयाजान्त्स्विष्टकृतमिडामाशिष आ वृञ्जे सुवः[५] ॥
अग्निनेन्द्रेण सोमेन सरस्वत्या विष्णुना देवताभिः ।
याज्यानुवाक्याभ्यामुप ते हुवे सवाहं यज्ञमा ददे ते वषट्कृतम्[६] ॥
स्तुतꣳ शस्त्रं प्रतिगरं ग्रहमिडामाशिष-(२)-आ वृञ्जे सुवः ।
पत्नीसंयाजानुप ते हुवे सवाहꣳ समिष्टयजुरा ददे तव[७] ॥
पशून्त्सुतं पुरोडाशान्त्सवनान्योत यज्ञम् ।
देवान्त्सेन्द्रानुप ते हुवे सवाहमग्निमुखान्त्सोमवतो ये च विश्वे[८] ॥ ( उप, ग्रहमिडामाशिषो, द्वाविꣳशच ) ॥ ११ ॥

अश्वमेधाङ्गाप्तिहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

भूतं भव्यं भविष्यद्वषट्स्वाहा नमः[१] ऋक्साम यजुर्वषट्स्वाहा नमः[२] गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः[३] पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमः[४] ऽग्निर्वायुः सूर्यो वषट्स्वाहा नमः[५] प्राणो व्यानोऽपानो वषट्स्वाहा नमः[६] ऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः[७] पिता पुत्रः पौत्रो वषट्स्वाहा नमः[८] भूर्भुवः (१) सुवर्वषट्स्वाहा नमः[९] ॥ ( भुवः,- इचत्वारि च ) ॥ १२ ॥

आभूहोममन्त्राः ॥ १ विराट्, २ त्रिष्टुप्, ३ जगती । विश्वेदेवा ऋषयः ।

आ मे गृहा भवन्त्वा प्रजा म आ मा यज्ञो विशतु वीर्यावान् ।
आपो देवीर्यज्ञिया माऽऽविशन्तु सहस्रस्य मा भूमा मा प्र हासीत् ॥
आ मे ग्रहो भवत्वा पुरोरुक् स्तुतशस्त्रे माऽऽविशतां समीची ।
आदित्या रुद्रा वसवो मे सदस्याः सहस्रस्य मा भूमा मा प्र हासीत् ॥
आ माऽग्निष्टोमो विशतु–(१)–क्थ्यश्चातिरात्रो माऽऽविशत्वापिशर्वरः ।
तिरोअह्निया मा सुहुता आ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत् ॥ (अग्निष्टोमो, विशत्व,-ष्टादश च) ॥ १३ ॥

अनुभूहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

अग्निना तपोऽन्वभवद्वाचा ब्रह्म मणिना रूपाणीन्द्रेण देवान् वातेन प्राणान्त्सूर्येण द्यां चन्द्रमसा नक्षत्राणि यमेन पितॄन् राज्ञा मनुष्यान् फलेन नादेयान्नजगरेण सर्पान् व्याघ्रेणारण्यान् पशूञ्छ्येनेन पतत्रिणो वृष्णाऽश्वानृषभेण गा बस्तेनाजा वृष्णिनाऽवीर्व्रीहिणाऽन्नानि यवेनौषधीर्न्यग्रोधेन वनस्पतीनुदुम्बरेणोर्जं गायत्रिया छन्दांसि त्रिवृता स्तोमान् ब्राह्मणेन (१) वाचम् ॥ (ब्राह्मणेनै,-कं च) ॥ १४ ॥

वैश्वदेवाहुतिमन्त्राः ॥ विश्वेदेवा ऋषयः ।

स्वाहाऽऽधिमाधीताय स्वाहा स्वाहाऽऽधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहाऽदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा (१) विष्णवे स्वाहा विष्णवे निखुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहा सर्वस्मै स्वाहा ॥ (पुरुरूपाय स्वाहा, दश च) ॥ १५ ॥

पश्वङ्गहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

दद्भ्यः स्वाहा हनूभ्याꣳ स्वाहौष्ठाभ्याꣳ स्वाहा मुखाय स्वाहा नासिकाभ्याꣳ स्वाहाऽक्षीभ्याꣳ स्वाहा कर्णाभ्याꣳ स्वाहा पार इक्षवोऽवार्येभ्यः पक्ष्मभ्यः स्वाहाऽवार इक्षवः पार्येभ्यः पक्ष्मभ्यः स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याꣳ स्वाहा ललाटाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यः स्वाहा वहाय स्वाहा ग्रीवाभ्यः स्वाहा स्कन्धेभ्यः स्वाहा कीकसाभ्यः स्वाहा पृष्टीभ्यः स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याꣳ स्वाहा (१) अꣳसाभ्याꣳ स्वाहा दोषभ्याꣳ स्वाहा बाहुभ्याꣳ स्वाहा जङ्घाभ्याꣳ स्वाहा श्रोणीभ्याꣳ स्वाहोरुभ्याꣳ स्वाहाऽष्ठीवद्भ्याꣳ स्वाहा जङ्घाभ्याꣳ स्वाहा भसदे स्वाहा

शिखण्डेभ्यः स्वाहा[32] वालधानाय स्वाहा[33] ऽऽण्डाभ्याꣳ स्वाहा[34] शेपाय स्वाहा[35] रेतसे स्वाहा[36] प्रजाभ्यः स्वाहा[37] प्रजननाय स्वाहा[38] पड्भ्यः स्वाहा[39] शफेभ्यः स्वाहा[40] लोमभ्यः स्वाहा[41] त्वचे स्वाहा[42] लोहिताय स्वाहा[43] माꣳसाय स्वाहा[44] स्नावभ्यः स्वाहा[45] ऽस्थभ्यः स्वाहा[46] मज्जभ्यः स्वाहा[47] (२) ऽङ्गेभ्यः स्वाहा[48] ऽऽत्मने स्वाहा[49] सर्वस्मै स्वाहा[50] ॥ (पार्श्वाभ्याꣳ स्वाहा, मज्जभ्यः स्वाहा, षट् च) ॥ १६ ॥

अश्वावयवरूपहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

अञ्ज्येताय स्वाहा[1] ऽञ्जिसक्थाय स्वाहा[2] शितिपदे स्वाहा[3] शितिककुदे स्वाहा[4] शितिरन्ध्राय स्वाहा[5] शितिपृष्ठाय स्वाहा[6] शित्यꣳसाय स्वाहा[7] पुष्पकर्णाय स्वाहा[8] शित्योष्ठाय स्वाहा[9] शितिभ्रवे स्वाहा[10] शितिभसदे स्वाहा[11] श्वेतानूकाशाय स्वाहा[12] ऽञ्जये स्वाहा[13] ललामाय स्वाहा[14] ऽसितज्ञवे स्वाहा[15] कृष्णैताय स्वाहा[16] रोहितैताय स्वाहा[17] ऽरुणैताय स्वाहे[18]दृशाय स्वाहा[19] कीदृशाय स्वाहा[20] तादृशाय स्वाहा[21] सदृशाय स्वाहा[22] विसदृशाय स्वाहा[23] सुसंदृशाय स्वाहा[24] रूपाय स्वाहा[25] (१) सर्वस्मै स्वाहा[26] ॥ (रूपाय स्वाहा, द्वे च) ॥ १७ ॥

अश्वावयवविरूपहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

कृष्णाय स्वाहा[1] श्वेताय स्वाहा[2] पिशङ्गाय स्वाहा[3] सारङ्गाय स्वाहा[4] ऽरुणाय स्वाहा[5] गौराय स्वाहा[6] बभ्रवे स्वाहा[7] नकुलाय स्वाहा[8] रोहिताय स्वाहा[9] शोणाय स्वाहा[10] श्यावाय स्वाहा[11] श्यामाय स्वाहा[12] पाकलाय स्वाहा[13] सुरूपाय स्वाहा[14] ऽनुरूपाय स्वाहा[15] विरूपाय स्वाहा[16] सरूपाय स्वाहा[17] प्रतिरूपाय स्वाहा[18] शबलाय स्वाहा[19] कमलाय स्वाहा[20] पृश्नये स्वाहा[21] पृश्निसक्थाय स्वाहा[22] सर्वस्मै स्वाहा[23] ॥ (कृष्णाय षट्चत्वारिꣳशत्) ॥ १८ ॥

ओषधिहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

ओषधीभ्यः स्वाहा[1] मूलेभ्यः स्वाहा[2] तूलेभ्यः स्वाहा[3] काण्डेभ्यः स्वाहा[4] वल्शेभ्यः स्वाहा[5] पुष्पेभ्यः स्वाहा[6] फलेभ्यः स्वाहा[7] गृहीतेभ्यः स्वाहा[8] ऽगृहीतेभ्यः स्वाहा[9] ऽवपन्नेभ्यः स्वाहा[10] शयानेभ्यः स्वाहा[11] सर्वस्मै स्वाहा[12] ॥ (ओषधीभ्य, - श्चतुर्विꣳशतिः) ॥ १९ ॥

वनस्पतिहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

वनस्पतिभ्यः स्वाहा[1] मूलेभ्यः स्वाहा[2] तूलेभ्यः स्वाहा[3] स्कन्धोभ्यः स्वाहा[4] शाखाभ्यः स्वाहा[5] पर्णेभ्यः स्वाहा[6] पुष्पेभ्यः स्वाहा[7] फलेभ्यः स्वाहा[8] गृहीतेभ्यः स्वाहा[9] ऽगृहीतेभ्यः स्वाहा[10] ऽवपन्नेभ्यः स्वाहा[11] शयानेभ्यः स्वाहा[12] शिष्टाय स्वाहा[13] ऽतिशिष्टाय स्वाहा[14] परिशिष्टाय स्वाहा[15] सꣳशिष्टाय स्वाहो[16]च्छिष्टाय स्वाहा[17] रिक्ताय स्वाहा[18] ऽरिक्ताय स्वाहा[19] प्ररिक्ताय स्वाहा[20] सꣳरिक्ताय स्वाहो[21]द्रिक्ताय स्वाहा[22] सर्वस्मै स्वाहा[23] ॥ (वनस्पतिभ्यः षट्चत्वारिꣳशत्) ॥ २० ॥

[ प्रजवं २०१ । ब्रह्मवादिनं ९१ । एव ९३ । आदित्याः ८४। प्रजापतिं- १८१। -रिन्द्र १०१ । इन्द्रः २०२ । प्रजापतिः ८७। सा १७३। ऽसा २७१। -र्वाङ् १३२। भूत-५४। -मा ६८। ऽग्निना ५१। स्वाहा ६०। दुद्र्चो १०६। ऽज्येताय ५२। कृष्णायै- ४६ । -षधीभ्यो २४ । वनस्पतिभ्यो ४६ । विश्शतिः ॥ २१२३ ॥]

[ इति सप्तमकाण्डे तृतीयः प्रपाठकः ॥ ३ ॥ ]

## सत्रकर्मनिरूपणम् ।

[ अथ चतुर्थः प्रपाठकः ॥ ४ ॥ ]

चतुर्विंशतिरात्रः ॥ विश्वेदेवा ऋषयः ।

बृहस्पतिरकामयत श्रन्मे देवा दधीरन् गच्छेयं पुरोधामिति स एतं चतुर्विंशतिरात्रमपश्यत् तमाऽहरत् तेनायजत ततो वै तस्मै श्रद्देवा अदधत गच्छत् पुरोधां य एवं विद्वांसश्चतुर्विंशतिरात्रमासते श्रदेभ्यो मनुष्या दधते गच्छन्ति पुरोधां ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायु-( १ )-रिमानेव लोकानभ्यारोहन्त्य-भिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्त्यै-सत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव ( २ ) यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति चतुर्विंशतिरात्रो भवति चतुर्विंशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विंशत्यक्षरा गायत्री गायत्री ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धते ऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै ॥ ( अन्तरिक्षं गौरसावायु, -राभ्यामेव, पञ्चचत्वारिंशच्च ) ॥ १ ॥

अपरश्चतुर्विंशतिरात्रः ॥ विश्वेदेवा ऋषयः ।

यथा वै मनुष्या एवं देवा अग्र आसन् तेऽकामयन्तावर्तिं पाप्मानं मृत्युमपहत्य दैवीं संसदं गच्छेमेति त एतं चतुर्विंशतिरात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै तेऽवर्तिं पाप्मानं मृत्युमपहत्य दैवीं संसदमगच्छन् य एवं विद्वांसश्चतुर्विंशतिरात्रमासतेऽवर्तिमेव पाप्मानमपहत्य श्रियं गच्छन्ति श्रीर्हि मनुष्यस्य ( १ ) दैवी संसं-ज्ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै पृष्ठ्यः षडहो भवति षड् वा ऋतवः संवत्सरस्तं मासा अर्धमासा ऋतवः प्रविश्य दैवीं संसदमगच्छन् य एवं विद्वांसश्चतुर्विंशतिरात्रमासते संवत्सरमेव प्रविश्य वस्यसीं संसदं गच्छन्ति त्रयस्त्रयस्त्रिंशा अवस्ताद्भवन्ति त्रयस्त्रयस्त्रिंशाः परस्तात् त्रयस्त्रिंशैरेवोभयतोऽवर्तिं पाप्मानमपहत्य दैवीं संसदं मध्यतो ( २ ) गच्छन्ति पृष्ठानि हि दैवी संसं-ज्जामि वा एतत् कुर्वन्ति यत् त्रयस्त्रयस्त्रिंशा अन्वञ्चो मध्येऽनिरुक्तो भवति तेनाजाम्यू-र्ध्वानि पृष्ठानि भवन्त्यूर्ध्वाश्छन्दोमा उभाभ्यां रूपाभ्यां सुवर्गं लोकं यन्त्यै-सत्रं वा एतद्यदच्छन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशव-( ३ )-श्छन्दोमा ओजस्येव वीर्ये पशुषु प्रति तिष्ठन्ति त्रयस्त्रयस्त्रिंशा अवस्ताद्भवन्ति

त्रयस्त्रयस्त्रिँशाः परस्तान्मध्ये पृष्ठान्युरो वै त्रयस्त्रिँशा आत्मा पृष्ठान्यात्मन्नेव तद्यजमानाः शर्म नह्यन्तेऽ-
नार्त्यै[8] बृहद्रथंतराभ्यां यन्तीयं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै
यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव (४) सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये
पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ् षडहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत्
तिष्ठन्ति[9] त्रिवृतोऽधि त्रिवृतमुप यन्ति स्तोमानाँ संपत्त्यै प्रभवाय ज्योतिरग्निष्टोमो भवत्ययं वाव स
क्षयोऽस्मादेव तेन क्षयान्न यन्ति[10] चतुर्विँशतिरात्रो भवति चतुर्विँशतिरर्धमासाः संवत्सरः (५)
संवत्सरः सुवर्गो लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो चतुर्विँशत्यक्षरा गायत्री गायत्री
ब्रह्मवर्चसं गायत्रियैव ब्रह्मवर्चसमव रुन्धते[11] ऽतिरात्रावभितो भवतो ब्रह्मवर्चसस्य परिगृहीत्यै[12] ॥
( मनुष्यस्य, मध्यतः, पशव,- स्ताभ्यामेव, संवत्सर,- श्चतुर्विंशतिश्च ) ॥ २ ॥

त्रिंशद्रात्रः ॥ विश्वेदेवा ऋषयः ।

ऋक्षा वा इयमलोमकाऽऽसीत् साऽकामयतौषधीभिर्वनस्पतिभिः प्र जायेयेति सैतास्त्रिँशतँ
रात्रीरपश्यत् ततो वा इयमोषधीभिर्वनस्पतिभिः प्राजायत ये प्रजाकामाः पशुकामाः स्युस्त एता
आसीरन् प्रैव जायन्ते प्रजया पशुभि[1]-रियं वा अक्षुध्यत् सैतां विराजमपश्यत् तामात्मन् धित्वाऽन्नाद्य-
मवारुन्धौषधी-( १ )-र्वनस्पतीन् प्रजां पशून् तेनावर्धत सा जेमानं महिमानमगच्छद्य एवं विद्वाँस एता
आसते विराजमेवाऽऽत्मन् धित्वाऽन्नाद्यमव रुन्धते वर्धन्ते प्रजया पशुभिर्जेमानं महिमानं गच्छन्ति[2]
ज्योतिरतिरात्रो भवति सुवर्गस्य लोकस्यानुख्यात्यै[3] पृष्ठ्यः षडहो भवति षड् वा ऋतवः षट् पृष्ठानि
पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव ( २ ) प्रति तिष्ठन्ति[4] त्रयस्त्रिँशात् त्रयस्त्रिँशमुप
यन्ति यज्ञस्य संतत्या अथो प्रजापतिर्वै त्रयस्त्रिँशः प्रजापतिमेवाऽऽरभन्ते प्रतिष्ठित्यै[5] त्रिणवो भवति
विजित्यै[6] एकविँशो भवति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् दधते[7] त्रिवृदग्निष्टुद्भवति पाप्मानमेव
तेन निर्दहन्तेऽथो तेजो वै त्रिवृत् तेज एवाऽऽत्मन् दधते[8] पञ्चदश इन्द्रस्तोमो भवतीन्द्रियमेवाव
( ३ ) रुन्धते[9] सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते[10] एकविँशो भवति प्रतिष्ठित्या
अथो रुचमेवाऽऽत्मन् दधते[11] चतुर्विँशो भवति चतुर्विँशतिरर्धमासाः संवत्सरः संवत्सरः सुवर्गो
लोकः संवत्सर एव सुवर्गे लोके प्रति तिष्ठन्त्यथो एष वै विषूवान् विषूवन्तो भवन्ति य एवं विद्वाँस
एता आसते[12] चतुर्विँशात् पृष्ठान्युप यन्ति संवत्सर एव प्रतिष्ठाय ( ४ ) देवता अभ्यारोहन्ति[13] त्रय-
स्त्रिँशात् त्रयस्त्रिँशमुप यन्ति त्रयस्त्रिँशद्वै देवता देवतास्वेव प्रति तिष्ठन्ति[14] त्रिणवो भवतीमे वै लोका-
स्त्रिणव एष्वेव लोकेषु प्रति तिष्ठन्ति[15] द्वावेकविँशौ भवतः प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् दधते[16]
बह्वः षोडशिनो भवन्ति तस्माद्बह्वः प्रजासु वृषाणो[17] यदेते स्तोमा व्यतिषक्ता भवन्ति तस्मादिय-
मोषधीभिर्वनस्पतिभिर्व्यतिषक्ता ( ५ ) व्यतिषज्यन्ते प्रजया पशुभिर्य एवं विद्वाँस एता आसते[18] ऽक्लृप्ता
वा एते सुवर्गं लोकं यन्त्युच्चावचान् हि स्तोमानुपयन्ति यदेत ऊर्ध्वाः क्लृप्ताः स्तोमा भवन्ति क्लृप्ता

एव सुवर्गं लोकं यन्त्युभयोरेभ्यो लोकयोः कल्पते[20] त्रिꣳशदेतास्त्रिꣳशदक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते[21] ऽतिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[22] ॥ ( ओषधीः, संवत्सर एवा,- वं, प्रतिष्ठाय, व्यतिषक्तौ,- कात्रपञ्चाशच्च ) ॥ ३ ॥

द्वात्रिंशद्रात्रः ॥ विश्वेदेवा ऋषयः ।

प्रजापतिः सुवर्गं लोकमैत् तं देवा येनयेन छन्दसाऽनु प्रायुञ्जत तेन नाऽऽप्नुवन् त एता द्वात्रिꣳशतꣳ रात्रीरपश्यन् द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः स्वेनैव छन्दसा प्रजापतिमाप्त्वाऽभ्यारुह्य सुवर्गं लोकमायन् य एवं विद्वाꣳस एता आसते द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुगानुष्टुभः प्रजापतिः स्वेनैव छन्दसा प्रजापतिमाप्त्वा श्रियं गच्छन्ति ( १ ) श्रीर्हि मनुष्यस्य सुवर्गो लोको[1] द्वात्रिꣳशदेता द्वात्रिꣳशदक्षराऽनुष्टुग्वागनुष्टुप् सर्वामेव वाचमाप्नुवन्ति सर्वे वाचो वदितारो भवन्ति सर्वे हि श्रियं गच्छन्ति[2] ज्योतिर्गौरायुरिति त्र्यहा भवन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुरिमानेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्यहा भवन्त्यभिपूर्वमेव सुवर्गं लोकमभ्यारोहन्ति[3] बृहद्रथंतराभ्यां यन्ती-( २ )-यं वाव रथंतरमसौ बृहदाभ्यामेव यन्त्यथो अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति[4] पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचस्त्र्यहानुपयन्ति प्रत्यङ् त्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर्ऋद्ध्वोत् तिष्ठन्ति[5] द्वात्रिꣳशदेतास्तासां यास्त्रिꣳशत् त्रिꣳशदक्षरा ( ३ ) विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते ये द्वे अहोरात्रे एव ते उभाभ्याꣳ रूपाभ्याꣳ सुवर्गं लोकं यन्त्य[6]—तिरात्रावभितो भवतः परिगृहीत्यै[7] ॥ ( गच्छन्ति, यन्ति, त्रिꣳशदक्षरा, द्वाविꣳशतिश्च ) ॥ ४ ॥

त्रयस्त्रिंशद्रात्रः ॥ विश्वेदेवा ऋषयः ।

द्वे वाव देवसत्रे द्वादशाहश्चैव त्रयस्त्रिꣳशदहश्च य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते साक्षादेव देवता अभ्यारोहन्ति यथा खलु वै श्रेयानभ्यारूढः कामयते तथा करोति यद्यवविध्यति पापीयान् भवति यदि नावविध्यति सदृङ् य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते वि पाप्मना भ्रातृव्येणाऽऽवर्तन्ते[1] ऽहर्भाजो वा एता देवा अग्र आऽहर-( १ )-न्नहरेकोऽभजताहरेकस्ताभिर्वै ते प्रबाहुगार्ध्नुवन् य एवं विद्वाꣳसस्त्रयस्त्रिꣳशदहमासते सर्वे एव प्रबाहुगृध्नुवन्ति सर्वे ग्रामणीयं प्राप्नुवन्ति[2] पञ्चाहा भवन्ति पञ्च वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धते[3] त्रीण्याश्विनानि भवन्ति त्रय इमे लोका एष्वे-( २ )-व लोकेषु प्रति तिष्ठन्त्यथो त्रीणि वै यज्ञस्येन्द्रियाणि तान्येवाव रुन्धते[4] विश्वजिद्भवत्यन्नाद्यस्यावरुद्ध्यै[5] सर्वपृष्ठो भवति सर्वस्याभिजित्यै[6] वाग्वै द्वादशाहो यत् पुरस्ताद् द्वादशाहमुपेयुरनाप्तां वाचमुपेयुरुपदासुकैषां वाक् स्यादुपरिष्टाद् द्वादशाहमुप यन्त्याप्तामेव वाचमुप यन्ति तस्मादुपरिष्टाद्वाचा वदामो[7] ऽवान्तरं ( ३ ) वै दशरात्रेण प्रजापतिः प्रजा असृजत यद्दशरात्रो भवति प्रजा एव तद्यजमानाः सृजन्त[8] एताꣳ ह वा उदङ्कः शौल्बायनः सत्रस्यर्धिमुवाच यद्दशरात्रो यद्दशरात्रो भवति सत्रस्यर्ध्या अथो यदेव पूर्वेष्वहःसु विलोम क्रियते तस्यैवैषा शान्ति—र्द्व्यनीका वा एता रात्रयो यजमाना विश्वजित् सहातिरात्रेण पूर्वाः षोडश सहा-( ४ )-तिरात्रेणोत्तराः

षोडश य एवं विद्वा५ँसस्त्रयस्त्रि५ँशदहमासत ऐषां द्व्यनीका प्रजा जायते[10] ऽतिरात्रावभितो भवतः परिगृहीत्यै[11] ॥ ( अहर्,-स्त्वर्व,-वान्तर५, षोडश च, सप्तदश च ) ॥ ५ ॥

षट्त्रिंशद्रात्रः ॥ विश्वेदेवा ऋषयः ।

आदित्या अकामयन्त सुवर्गं लोकमियामेति ते सुवर्गं लोकं न प्राजानन्न सुवर्गं लोकमायन् त एत५ँ षट्त्रि५ँशद्रात्रमपश्यन् तमाऽहरन् तेनायजन्त ततो वै ते सुवर्गं लोकं प्राजानन्त्सुवर्गं लोकमायन् य एवं विद्वा५ँसः षट्त्रि५ँशद्रात्रमासते सुवर्गमेव लोकं प्र जानन्ति सुवर्गं लोकं यन्ति[1] ज्योतिरतिरात्रो ( १ ) भवति ज्योतिरेव पुरस्ताद्दधते सुवर्गस्य लोकस्यानुख्यात्यै[2] षडहा भवन्ति षड् वा ऋतव ऋतुष्वेव प्रति तिष्ठन्ति[3] चत्वारो भवन्ति चतस्रो दिशो दिक्ष्वेव प्रति तिष्ठन्त्य—सत्रं वा एतद्यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव ( २ ) वीर्ये पशुषु प्रति तिष्ठन्ति[5] षट्त्रि५ँशद्रात्रो भवति षट्त्रि५ँशदक्षरा बृहती बार्हताः पशवो बृहत्यैव पशूनव रुन्धते बृहती छन्दसा५ँ स्वाराज्यमाश्नुताश्नुवते स्वाराज्यं य एवं विद्वा५ँसः षट्त्रि५ँशद्रात्रमासते सुवर्गमेव लोकं यन्त्य—तिरात्रावभितो भवतः सुवर्गस्य लोकस्य परिगृहीत्यै[7] ॥ ( अतिरात्र, ओजस्येव, षट्त्रि५ँ-शच्च ) ॥ ६ ॥

एकोनपञ्चाशद्रात्रः ॥ विश्वेदेवा ऋषयः ।

वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजामभि सौदासान् भवेयमिति स एतमेकस्मान्नपञ्चाशमपश्यत् तमाऽहरत् तेनायजत ततो वै सोऽविन्दत प्रजामभि सौदासानभवद्य एवं विद्वा५ँस एकस्मान्नपञ्चाशमासते विन्दन्ते प्रजामभि भ्रातृव्यान् भवन्ति[1] त्रयस्त्रिवृतोऽग्निष्टोमा भवन्ति वज्रस्यैव मुख५ँ स५ँ श्यन्ति[2] दश पञ्चदशा भवन्ति पञ्चदशो वज्रो ( १ ) वज्रमेव भ्रातृव्येभ्यः प्र हरन्ति[3] षोडशिमद्दशम-महर्भवति वज्र एव वीर्यं दधति[4] द्वादश सप्तदशा भवन्त्यन्नाद्यस्यावरुद्ध्या अथो प्रैव तैर्जायन्ते[5] पृष्ठ्यः षडहो भवति षड्वा ऋतवः षट् पृष्ठानि पृष्ठैरेवर्तूनन्वारोहन्त्यृतुभिः संवत्सरं ते संवत्सर एव प्रति तिष्ठन्ति[6] द्वादशैकवि५ँशा भवन्ति प्रतिष्ठित्या अथो रुचमेवाऽऽत्मन् ( २ ) दधते[7] बहवः षोडशिनो भवन्ति विजित्यै[8] षडाश्विनानि भवन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्त्यू—नातिरिक्ता वा एता रात्रय ऊनास्तद्यदेकस्यै न पञ्चाशदतिरिक्तास्तद्यद्भूयसीरष्टाचत्वारि५ँशत ऊनाच्च खलु वा अतिरिक्ताच्च प्रजापतिः प्राजायत[10] ये प्रजाकामाः पशुकामाः स्युस्त एता आसीरन् प्रैव जायन्ते प्रजया ( ३ ) पशुभि[11]—र्वैराजो वा एष यज्ञो यदेकस्मान्नपञ्चाशो य एवं विद्वा५ँस एकस्मान्नपञ्चाशमासते विराजमेव गच्छन्त्यन्नादा भवन्त्य[12]—तिरात्रावभितो भवतोऽन्नाद्यस्य परिगृहीत्यै[13] ॥ ( वज्र, आत्मन्, प्रजया, द्वावि५ँशतिश्च ) ॥ ७ ॥

संवत्सरसत्रदीक्षाकालः ॥ विश्वेदेवा ऋषयः ।

संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्नेषा वै संवत्सरस्य पत्नी यदेकाष्टकैतस्यां वा एष एता५ँ रात्रिं वसति साक्षादेव संवत्सरमारभ्य दीक्षन्ते[1] आर्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतो व्यस्तं वा एते संवत्सरस्याभि दीक्षन्ते य एकाष्टकायां दीक्षन्तेऽन्तनामानावृतू भवतः फल्गुनीपूर्णमासे दीक्षेरन् मुखं वा एतत् ( १ ) संवत्सरस्य यत् फल्गुनी-

पूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते[2] तस्यैकैव निर्या यत् साम्मेध्ये विषूवान्त्संपद्यते चित्रापूर्णमासे दीक्षेरन् मुखं वा एतत् संवत्सरस्य यच्चित्रापूर्णमासो मुखत एव संवत्सरमारभ्य दीक्षन्ते तस्य न का चन निर्या भवति[3] चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन् तेषामेकाष्टकायां क्रयः सं पद्यते तेनैकाष्टकां न छम्बट् कुर्वन्ति[4] तेषां ( २ ) पूर्वपक्षे सुत्या सं पद्यते पूर्वपक्षं मासा अभि सं पद्यन्ते ते पूर्वपक्ष उत् तिष्ठन्ति तानुत्तिष्ठत ओषधयो वनस्पतयोऽनूत् तिष्ठन्ति तान् कल्याणी कीर्तिरनूत् तिष्ठत्यरात्सुरिमे यजमाना इति तदनु सर्वे राध्नुवन्ति[5] ॥ ( एत,-- च्छम्बट् कुर्वन्ति तेषां, चतुस्त्रिंशच्च ) ॥ ८ ॥

दीक्षा उपसदश्च ॥ विश्वेदेवा ऋषयः ।

सुवर्गं वा एते लोकं यन्ति ये सत्रमुपयन्त्यभीन्धत एव दीक्षाभिरात्मानꣳ श्रपयन्त उपसद्भि—र्द्वाभ्यां लोमाव द्यन्ति द्वाभ्यां त्वचं द्वाभ्यामसृद् द्वाभ्यां माꣳसं द्वाभ्यामस्थि द्वाभ्यां मज्जानमात्मदक्षिणं वै सत्रमात्मनमेव दक्षिणां नीत्वा सुवर्गं लोकं यन्ति[2] शिखामनु प्र वपन्त ऋद्ध्या अथो रघीयाꣳसः सुवर्गं लोकमयामेति[3] ॥ ( सुवर्गं पञ्चाशत् ) ॥ ९ ॥

प्रायणीयमहः ॥ विश्वेदेवा ऋषयः ।

ब्रह्मवादिनो वदन्त्यतिरात्रः परमो यज्ञक्रतूनां कस्मात् तं प्रथममुप यन्तीत्येतद्वा अग्निष्टोमं प्रथममुप यन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमनुपूर्वमेवैतद्यज्ञक्रतूनुपेत्य तानालभ्य परिगृह्य सोममेवैतत् पिबन्त आसते ज्योतिष्टोमं प्रथममुप यन्ति ज्योतिष्टोमो वै स्तोमानां मुखं मुखत एव स्तोमान् प्र युञ्जते[3] ते ( १ ) सꣳस्तुता विराजमभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराट्सुवर्गमेव तेन लोकं यन्ति[4] रथंतरं दिवा भवति रथंतरं नक्तमित्याहुर्ब्रह्मवादिनः केन तदजामीति सौभरं तृतीयसवने ब्रह्मसामं बृहत् तन्मध्यतो दधाति विधृत्यै तेनाजामि[3] ॥ ( त, एकान्नपञ्चाशच्च ) ॥ १० ॥

संवत्सरगतेषु सर्वमासेष्वहानि ॥ विश्वेदेवा ऋषयः ।

ज्योतिष्टोमं प्रथममुप यन्त्यस्मिन्नेव तेन लोके प्रति तिष्ठन्ति गोष्टोमं द्वितीयमुप यन्त्य तरिक्ष एव तेन तिष्ठन्त्यायुष्टोमं तृतीयमुप यन्त्यमुष्मिन्नेव तेन लोके प्रति तिष्ठन्तीयं वाव ज्योतिरन्तरिक्षं गौरसावायुर्यदेतान्त्स्तोमानुपयन्त्येष्वेव तल्लोकेषु सत्रिणः प्रतितिष्ठन्तो यन्ति[1] ते सꣳस्तुता विराज-( १ )-मभि सं पद्यन्ते द्वे चर्चावति रिच्येते एकया गौरतिरिक्त एकयाऽऽयुरूनः सुवर्गो वै लोको ज्योतिरूर्ग्विराडूर्जमेवाव रुन्धते ते न क्षुधाऽऽर्तिमाच्छन्त्यक्षोधुका भवन्ति क्षुत्संबाधा इव हि सत्रिणो[2] ऽग्निष्टोमावभितः प्रधी तावुक्थ्या मध्ये नभ्यं तत् तदेतत् परियद्देवचक्रं यदेतेन ( २ ) षडहेन यन्ति देवचक्रमेव समारोहन्त्यरिष्ट्यै ते स्वस्ति समश्नुवते[3] षडहेन यन्ति षड्वा ऋतव ऋतुष्वेव प्रति तिष्ठन्त्यु—भयतो ज्योतिषा यन्त्युभयत एव सुवर्गे लोके प्रतितिष्ठन्तो यन्ति[5] द्वौ षडहौ भवतस्तानि द्वादशाहानि सं पद्यन्ते द्वादशो वै पुरुषो द्वे सक्थ्यौ द्वौ बाहू आत्मा च शिरश्च चत्वार्यङ्गानि स्तनौ द्वादशौ ( ३ ) तत् पुरुषमनु पर्यावर्तन्ते[6] त्रयः षडहा भवन्ति तान्यष्टादशाहानि सं पद्यन्ते नवान्यानि नवान्यानि नव वै पुरुषे प्राणा-

स्तत् प्राणानन्नु पर्यावर्तन्ते[७] चत्वारः षडहा भवन्ति तानि चतुर्विꣳशतिरहानि सं पद्यन्ते चतुर्विꣳशतिरर्धमासाः संवत्सरस्तत् संवत्सरमनु पर्यावर्तन्ते[८] ऽप्रतिष्ठितः संवत्सर इति खलु वा आहुर्वर्षीयान् प्रतिष्ठाया इत्येतावद्वै (४) संवत्सरस्य ब्राह्मणं यावन्मासो मासिमास्येव प्रतितिष्ठन्तो यन्ति[९] ॥
(विराज,- मेतेन, द्वादश,- वेतावद्वा, अष्टौ च) ॥ ११ ॥

अश्वमेधाङ्गापाव्यहोममन्त्राः, परियानमन्त्राश्च ॥ विश्वेदेवा ऋषयः ।

मेषस्त्वा पचतैरवतु लोहितग्रीवश्छागैः[२] शल्मलिर्वृद्ध्या[३] पर्णो ब्रह्मणा[४] प्लक्षो मेधेन न्यग्रोधश्चमसै[६]रुदुम्बर ऊर्जा गायत्री छन्दोभि[त्रि]वृत् स्तोमै[रव]न्तीः स्थावन्तीस्त्वाऽवन्तु प्रियं त्वा प्रियाणां वर्षिष्ठमाप्यानां निधीनां त्वा निधिपतिꣳ हवामहे वसो मम ॥ (मेषः षट्त्रिꣳशत्) ॥ १२ ॥

(१३-१४) अपां होममन्त्राः ॥ विश्वेदेवा ऋषयः ।

कूप्याभ्यः स्वाहा कूल्याभ्यः स्वाहा[२] विकर्याभ्यः स्वाहा[३] ऽवट्याभ्यः स्वाहा[४] खन्याभ्यः स्वाहा[५] ह्रद्याभ्यः स्वाहा[६] सूद्याभ्यः स्वाहा[७] सरस्याभ्यः स्वाहा[८] वैशन्तीभ्यः स्वाहा[९] पल्वल्याभ्यः स्वाहा[१०] वर्ष्याभ्यः स्वाहा[११] ऽवर्ष्याभ्यः स्वाहा[१२] ह्रादुनीभ्यः स्वाहा[१३] पृष्वाभ्यः स्वाहा[१४] स्यन्दमानाभ्यः स्वाहा[१५] स्थावराभ्यः स्वाहा[१६] नादेयीभ्यः स्वाहा[१७] सैन्धवीभ्यः स्वाहा[१८] समुद्रियाभ्यः स्वाहा[१९] सर्वाभ्यः स्वाहा[२०] ॥ (कूप्याभ्यश्चत्वारिꣳशत्) ॥ १३ ॥

अद्भ्यः स्वाहा वहन्तीभ्यः स्वाहा[२] परिवहन्तीभ्यः स्वाहा[३] समन्तं वहन्तीभ्यः स्वाहा[४] शीघ्रं वहन्तीभ्यः स्वाहा शीभं वहन्तीभ्यः स्वाहो[६]ग्रं वहन्तीभ्यः स्वाहा[७] भीमं वहन्तीभ्यः स्वाहा ऽम्भोभ्यः स्वाहा नभोभ्यः स्वाहा महोभ्यः स्वाहा[११] सर्वस्मै स्वाहा[१२] ॥ (अद्भ्य एकान्नत्रिꣳशत्) ॥ १४ ॥

शुनः प्रहारः ॥ १ द्विपदा गायत्री; २ एकपदा गायत्री; ३ पङ्क्तिः; ४ त्रिष्टुप् । विश्वेदेवा ऋषयः

यो अर्वन्तं जिघाꣳसति तमभ्यमीति वरुणः[१] ॥
परो मर्तः परः श्वा[२] ॥
अहं च त्वं च वृत्रहन्त्सं बभूव सनिभ्य आ ।
अरातीवा चिदद्रिवोऽनु नौ शूर मꣳसतै भद्रा इन्द्रस्य रातयः[३] ॥
अभि क्रत्वेन्द्र भूरध ज्मन्न ते विव्यङ्महिमानꣳ रजाꣳसि ।
स्वेना हि वृत्रꣳ शवसा जघन्थ न शत्रुरन्तं विविद-(१)-युधा ते[४] ॥ (विविद, द्वे च) ॥ १५ ॥

यव्याख्यहोमः ॥ विश्वेदेवा ऋषयः ॥

नमो राज्ञे नमो वरुणाय[२] नमोऽश्वाय[३] नमः प्रजापतये[४] नमोऽधिपतये[५] ऽधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासं मां धेहि मयि धेहु[६]पाकृताय स्वाहा[७] ऽऽलब्धाय स्वाहा[८] हुताय स्वाहा[९] ॥ (नम एकान्नत्रिꣳशत्) ॥ १६ ॥

गव्याख्याहोमः ॥ १-४ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

मयोभूर्वातो अभि वातूस्रा ऊर्जस्वतीरोषधीरा रिशन्ताम् ।

पीवस्वतीर्जीवधन्याः पिबन्त्ववसाय पद्वते रुद्र मृड ॥

याः सरूपा विरूपा एकरूपा यासामग्निरिष्ट्या नामानि वेद ।

या अङ्गिरसस्तपसेह चक्रुस्ताभ्यः पर्जन्य महि शर्म यच्छ ॥

या देवेषु तनुवमैरयन्त यासाꣳ सोमो विश्वा रूपाणि वेद ।

ता अस्मभ्यं पयसा पिन्वमानाः प्रजावतीरिन्द्र (१) गोष्ठे रिरीहि ॥

प्रजापतिर्मह्यमेता रराणो विश्वैर्देवैः पितृभिः संविदानः ।

शिवाः सतीरुप नो गोष्ठमाऽकस्तासां वयं प्रजया सꣳ सदेम ॥

इह धृतिः स्वाहेह विधृतिः स्वाहेह रन्तिः स्वाहेह रमतिः स्वाहा महीमू षु॰— सुत्रामाणम्॰— ॥ ( इन्द्रा,- द्वात्रिꣳशच्च ) ॥ १७ ॥

ब्रह्मोद्यम् ॥ १-४ अनुष्टुप् , ५-६ त्रिष्टुप् । विश्वेदेवा ऋषयः ॥

किꣳ स्विदासीत् पूर्वचित्तिः किꣳ स्विदासीद्बृहद्वयः ।

किꣳ स्विदासीत् पिशङ्गिला किꣳ स्विदासीत् पिलिप्पिला ॥

द्यौरासीत् पूर्वचित्तिरश्व आसीद्बृहद्वयः । रात्रिरासीत् पिशङ्गिलाऽविरासीत् पिलिप्पिला ॥

कः स्विदेकाकी चरति क उ स्विज्जायते पुनः ।

किꣳ स्विद्धिमस्य भेषजं किꣳ स्विदावपनं महत् ॥

सूर्य एकाकी चरति (१) चन्द्रमा जायते पुनः ।

अग्निर्हिमस्य भेषजं भूमिरावपनं महत् ॥

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि त्वा भुवनस्य नाभिम् ।

पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥

वेदिमाहुः परमन्तं पृथिव्या यज्ञमाहुर्भुवनस्य नाभिम् ।

सोममाहुर्वृष्णो अश्वस्य रेतो ब्रह्मैव वाचः परमं व्योम ॥ ( सूर्य एकाकी चरति, षट्चत्वारिꣳशच्च ) ॥ १८ ॥

मरणोत्तरकालीनोऽश्वोपचारः ॥ गायत्री; २,८,१०,१२,१४-१५ अनुष्टुप्, ३,६ द्विपदा गायत्री; ४ एकपदा त्रिष्टुप्; ५ पंक्तिः । विश्वेदेवा ऋषयः ॥

अम्बे अम्बाल्यम्बिके न मा नयति कश्चन । स सस्त्यश्वकः ॥

सुभगे काम्पीलवासिनि सुवर्गे लोके सं प्रोर्ण्वाथाम् ।

आऽहमजानि गर्भधमा त्वमजासि गर्भधम् ॥

---

( १७ । ९-१० ) तै. सं. १. ५. ११. १८-१९

तौ सह चतुरः पदः सं प्र सारयावहै[३] ॥
वृषा वाꣳ रेतोधा रेतो दधातू[४]त् सक्थ्योर्गृदं धेह्यञ्जिमुदञ्जिमन्वज ।
यः स्त्रीणां जीवभोजनो य आसां (१) बिलधावनः । प्रियः स्त्रीणामपीच्यः[५] ॥
य आसां कृष्णे लक्ष्मणि सर्दिगृदिं परावधीत्[६] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[७] ॥
ऊर्ध्वामेनामुच्छ्रयताद्वेणुभारं गिराविव । अथास्या मध्यमेधताꣳ शीते वाते पुनन्निव[८] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[९] ॥
यद्धरिणी यवमत्ति न (२) पुष्टं पशु मन्यते । शूद्रा यदर्यजारा न पोषाय धनायति[१०] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[११] ॥
इयं यका शकुन्तिका ऽऽहलमिति सर्पति ।
आहतं गभे पसो नि जल्गुलीति धाणिका[१२] ॥
अम्बे अम्बाल्यम्बिके न मा यभति कश्चन । ससस्त्यश्वकः[१३] ॥
माता च ते पिता च तेऽग्रं वृक्षस्य रोहतः (३) ।
प्र सुलामीति ते पिता गभे मुष्टिमतꣳसयत्[१४] ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्र ण आयूꣳषि तारिषत्[१५] ॥
आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे[१६] ॥
यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः[१७] ॥
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ (४) । आपो जनयथा च नः[१८] ॥

( आसा,-मति न, रोहतो, जिन्वथ, चत्वारि च ) ॥ १९ ॥

मरणप्राक्कालीनोऽश्वोपचारः ॥ ७ बृहती; ८ उपरिष्टाद्बृहती, अनुष्टुप् वा; ९-११ गायत्री । विश्वेदेवा ऋषयः ॥

भू—र्भुवः सुव—र्वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसा रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसा ऽऽदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसा[१] ॥

यद्वातो अपो अगमदिन्द्रस्य तनुवं प्रियाम् । एतꣳ स्तोतरेतेन पथा पुनरश्वमा वर्तयासि नः[२] ॥
लाजी३ञ्छाची३न् यशो ममा३म् ।
यव्यायै गव्याया एतद्देवा अन्नमत्तैतदन्नमद्धि प्रजापते[३] ॥
युञ्जन्ति ब्रध्न-(१)-मरुषं चरन्तं परि तस्थुषः । रोचन्ते रोचना दिवि[४] ॥
युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा[५] ॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः[११] ॥ ( ब्रध्नं, पञ्चविꣳशतिश्च ) ॥२०॥

सन्ततिहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

प्राणाय स्वाहा[१] व्यानाय स्वाहा[२] ऽपानाय स्वाहा[३] स्नावभ्यः स्वाहा[४] संतानेभ्यः स्वाहा[५] परिसंतानेभ्यः स्वाहा[६] पर्वभ्यः स्वाहा[७] संधानेभ्यः स्वाहा[८] शरीरेभ्यः स्वाहा[९] यज्ञाय स्वाहा[१०] दक्षिणाभ्यः स्वाहा[११] सुवर्गाय स्वाहा[१२] लोकाय स्वाहा[१३] सर्वस्मै स्वाहा[१४] । ( प्राणायाष्टाविꣳशतिः ) ॥ २१ ॥

प्रमुक्तिहोमः ॥ विश्वेदेवा ऋषयः ।

सिताय स्वाहा[१] ऽसिताय स्वाहा[२] ऽभिहिताय स्वाहा[३] ऽनभिहिताय स्वाहा[४] युक्ताय स्वाहा[५] ऽयुक्ताय स्वाहा[६] सुयुक्ताय स्वाहो[७]द्युक्ताय स्वाहा[८] विमुक्ताय स्वाहा[९] प्रमुक्ताय स्वाहा[१०] वञ्चते स्वाहा[११] परिवञ्चते स्वाहा[१२] संवञ्चते स्वाहा[१३] ऽनुवञ्चते स्वाहो[१४]द्वञ्चते स्वाहा[१५] यते स्वाहा[१६] धावते स्वाहा[१७] तिष्ठते स्वाहा[१८] सर्वस्मै स्वाहा[१९] ॥ ( सितायाष्टात्रिꣳशत् ) ॥ २२ ॥

[ बृहस्पति- १४५। -यैथ- २७४। -क्षाः २९९। प्रजापति- १७२। -द्वै २१७। आदित्या १३६। वसिष्ठः १७२। संवत्सराय १३४। सुवर्गं ५०। ब्रह्मवादिनो ९९। ज्योतिष्टोमं २०८। मेषः ३६। कूप्याभ्यो ४०। ऽग्नये २९। यो ५२। नमो २९। मयोभूः ८८। किम- ९१। -स्वे २०४। भूः ७५। प्राणाय २८। सिताय ३८। द्वाविꣳशतिः ॥ २६२१ ]

[ इति सप्तमकाण्डे चतुर्थः प्रपाठकः ॥४॥ ]

## सत्रविशेषाभिधानम् ।

[ अथ पञ्चमः प्रपाठकः ॥१॥ ]

गवामयनाख्यं संवत्सरसत्रम् ॥ विश्वेदेवा ऋषयः ।

गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि नो जायन्ता इति कामेन तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता उदतिष्ठन्नरात्स्मेत्यथ यासां नाजायन्त ताः संवत्सरमाप्त्वोदतिष्ठन्नरात्स्मेति यासां चाजायन्त यासां च न ता उभयीरुदतिष्ठन्नरात्स्मेति गोसत्रं वै ( १ ) संवत्सरो य एवं विद्वाꣳसः संवत्सरमुपयन्त्यृध्नुवन्त्येव[१] तस्मात् तूपरा वार्षिकौ मासौ पर्त्वा चरति सत्राभिजितꣳह्यस्यै[२] तस्मात् संवत्सरसदो यत् किं च गृहे क्रियते तदाप्तमवरुद्धमभिजितं क्रियते[३] समुद्रं वा एते प्र प्लवन्ते ये संवत्सरमुपयन्ति यो वै समुद्रस्य पारं न पश्यति न वै स तत उदेति संवत्सरो ( २ ) वै समुद्रस्तस्यैतत् पारं यदतिरात्रौ य एवं विद्वाꣳसः संवत्सरमुपयन्त्यनार्ता एवोदृचं गच्छन्ती[४]—यं वै पूर्वोऽतिरात्रोऽसावुत्तरो मनः पूर्वो वागुत्तरः प्राणः पूर्वोऽपान उत्तरः प्ररोधनं पूर्वं उदयनमुत्तरो[५] ज्योतिष्टोमो वैश्वानरोऽतिरात्रो भवति ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्यै[६] चतुर्विꣳशः प्रायणीयो भवति चतुर्विꣳशतिरर्धमासाः ( ३ ) संवत्सरः प्रयन्त एव संवत्सरे प्रति तिष्ठन्ति तस्य त्रीणि च

शतानि षष्टिश्च स्तोत्रीयास्तावतीः संवत्सरस्य रात्रय उभे एव संवत्सरस्य रूपे आप्नुवन्ति[७] ते सꣳस्थित्या अरिष्ट्या उत्तरैरहोभिश्चरन्ति[८] षडहा भवन्ति षड् वा ऋतवः संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्ति[९] गौश्चाऽऽयुश्च मध्यतः स्तोमौ भवतः संवत्सरस्यैव तन्मिथुनं मध्यतो (४) दधति प्रजननायँ ज्योतिरभितो भवति विमोचनमेव तच्छन्दाꣳस्येव तद्विमोकं यन्त्यथो उभयतोज्योतिषैव षडहेन सुवर्गं लोकं यन्ति[११] ब्रह्मवादिनो वदन्त्यासते केन यन्तीति देवयानेन पथेति ब्रूयाच्छन्दाꣳसि वै देवयानः पन्था गायत्री त्रिष्टुब्जगती ज्योतिर्वै गायत्री गौस्त्रिष्टुगायुर्जगती यदेते स्तोमा भवन्ति देवयानेनैव (५) तत् पथा यन्ति[१२] समानꣳ साम भवति देवलोको वै साम देवलोकादेव न यन्त्य[१३]—न्याअन्या ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेवान्यमन्यं देवलोकमभ्यारोहन्तो यन्त्य[१४]—भिवर्तो ब्रह्मसामं भवति सुवर्गस्य लोकस्याभिवृत्त्या[१५] अभिजिद्भवति सुवर्गस्य लोकस्याभिजित्यै[१६] विश्वजिद्भवति विश्वस्य जित्यै[१७] मासिमासि पृष्ठान्युप यन्ति मासिमास्यतिग्राह्या गृह्यन्ते मासिमास्येव वीर्यं (६) दधति मासां प्रतिष्ठित्या[१८] उपरिष्टान्मासां पृष्ठान्युप यन्ति तस्मादुपरिष्टादोषधयः फलं गृह्णन्ति[१९] ॥ ( गोसत्रं वा, एति संवत्सरो, ऽर्धमासा, मिथुन मध्यतो देवयानेनैव, वीर्यं, त्रयोदश च ) ॥ १ ॥

गवामयनस्य दशमासद्वादशमासविकल्पः ॥ विश्वेदेवा ऋषयः ।

गावो वा एतत् सत्रमासताशृङ्गाः सतीः शृङ्गाणि सिषासन्तीस्तासां दश मासा निषण्णा आसन्नथ शृङ्गाण्यजायन्त ता अब्रुवन्नरात्स्मोत् तिष्ठामाव तं काममरुत्समहि येन कामेन न्यषदामेति[१] तासामु त्वा अब्रुवन्नर्धा वा यावतीर्वाऽऽसामहा एवेमौ द्वादशौ मासौ संवत्सरꣳ संपाद्योत् तिष्ठामेति तासां (१) द्वादशे मासि शृङ्गाणि प्रावर्तन्त श्रद्धया वाऽश्रद्धया वा ता इमा यास्तूपरा उभय्यो वाव ता आर्ध्नुवन् याश्च शृङ्गाण्यसन्वन् याश्चोर्जमवारुन्धत[२]—र्ध्नोति दशसु मासूत्तिष्ठन्नृध्नोति द्वादशसु य एवं वेद[३] पदेन खलु वा एते यन्ति विन्दति खलु वै पदेन यन्[४] तद्वा एतदृद्धमयनं तस्मा-(२)-देतद्गोसनि[५] ॥ ( तिष्ठामेति तासां, तस्माद्, द्वे च ) ॥ २ ॥

पृष्ठ्यषडहविकल्पः ॥ विश्वेदेवा ऋषयः ।

प्रथमे मासि पृष्ठान्युप यन्ति मध्यम उप यन्त्युत्तम उप यन्ति[१] तदाहुर्या वै त्रिरेकस्याह्न उपसीदन्ति दह्रं वै साऽपराभ्यां दोहाभ्यां दुहेऽथ कुतः सा धोक्ष्यते यां द्वादश कृत्व उपसीदन्तीति संवत्सरꣳ संपाद्योत्तमे मासि सकृत् पृष्ठान्युपेयुस्तद्यजमाना यज्ञं पशूनव रुन्धते[२] समुद्रं वा (१) एतेनवारमपारं प्र प्लवन्ते ये संवत्सरमुपयन्ति यद् बृहद्रथंतरे अन्वर्जेयुर्यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक् तदनुत्सर्गं बृहद्रथंतराभ्यामित्वा प्रतिष्ठां गच्छन्ति सर्वेभ्यो वै कामेभ्यः संधिर्दुहे तद्यजमानाः सर्वान् कामानव रुन्धते[३] ॥ ( समुद्रं वै, चतुस्त्रिꣳशच्च ) ॥ ३ ॥

उपरे पक्षसि विशेषः ॥ विश्वेदेवा ऋषयः ।

समान्य ऋचो भवन्ति मनुष्यलोको वा ऋचो मनुष्यलोकादेव न यन्त्य[१]—न्यदन्यत् साम भवति देवलोको वै साम देवलोकादेवान्यमन्यं मनुष्यलोकं प्रत्यवरोहन्तो यन्ति[२] जगतीमग्र उप यन्ति जगतीं

वै छन्दा॑ꣳसि प्र॒त्यव॑रोहन्त्या॒ग्रय॒णं ग्रहा॑ बृ॒हत् पृ॒ष्ठानि॑ त्रयस्त्रि॒ꣳश स्तोमा॒स्तस्मा॒ज्ज्याया॑ꣳसं॒ कनी॑यान् प्र॒त्यव॑रोहति वैश्वकर्म॒णो गृ॑ह्यते॒ विश्वा॑न्ये॒व ते॒न कर्मा॑णि॒ यज॑माना॒ अव॑ रुन्धत आदि॒त्यो ( १ ) गृ॒ह्यत इ॒यं वा अदि॑तिर॒स्यामे॒व प्रति॑ तिष्ठन्त्य॒न्यो॑ऽन्यो गृ॒ह्येते मिथुन॒त्वाय॒ प्रजा॑त्यै अवान्त॒रं वै द॑शरा॒त्रेण॑ प्र॒जाप॑तिः प्र॒जा अ॑सृजत॒ यद्द॑शरा॒त्रो भव॑ति प्र॒जा ए॒व तद्यज॑मानाः सृजन्त ए॒ताꣳह॒ वा उद॑ङ्कः शौल्बाय॒नः स॒त्रस्यर्द्धि॑मुवाच॒ यद्द॑शरा॒त्रो यद्द॑शरा॒त्रो भव॑ति स॒त्रस्यर्द्ध्या॒ अथो॒ यदे॒व पूर्वे॑ष्वहः॑सु॒ विलो॑म क्रि॒यते॒ तस्यै॒वै-( २ )-षा शान्तिः॑ ॥ ( आ॒दि॒त्य,– स्त॒स्यै॒व, द्वे च॑ ) ॥ ४ ॥

मात्सर्येण प्रवृत्तयोर्द्वयोर्गवामयनयोर्विशेषः ॥ विश्वेदेवा ऋषयः ।

यदि॒ सोमौ॒ सꣳसु॑तौ॒ स्याता॑ं मह॒ति रात्रि॑यै प्रातरनुवा॒कमु॒पाकु॑र्या॒त् पूर्वो॒ वाचं॒ पूर्वो॑ दे॒वताः॒ पूर्व॑श्छ॒न्दा॑ꣳसि वृ॒ङ्क्ते वृष॑ण्वतीं प्र॒तिप॑दं कुर्यात् प्रातःसव॒नादे॒वैषा॒मिन्द्रं॑ वृ॒ङ्क्तेऽथो॒ खल्वा॑हुः सवनमु॒खे-सव॑नमुखे का॒र्येति॑ सवनमु॒खात्सव॑नमुखादे॒वैषा॒मिन्द्रं॑ वृ॒ङ्क्ते सं॒वे॒शाया॑ोपवे॒शाय॑ गाय॒त्रिया॑स्त्रि॒ष्टुभो॒ जग॑त्या अनु॒ष्टुभः॑ प॒ङ्क्त्या अ॒भिभू॑त्यै॒ स्वाहा॒ छन्दा॑ꣳसि॒ वै सं॒वेश उ॑पवे॒शश्छन्दो॑भिरे॒वैषा॑ं ( १ ) छन्दा॑ꣳसि वृ॒ङ्क्ते स॒जनी॑यꣳ श॒स्यं॑ वि॒हव्य॑ꣳ श॒स्य॑म॒गस्त्य॑स्य कया॒शु॒भीय॑ꣳ श॒स्य॑मे॒ताव॒द्वा अ॑स्ति॒ याव॑दे॒तद्याव॑दे॒वास्ति॒ तदे॑षां वृ॒ङ्क्ते यदि॑ प्रातःसव॒ने क॒लशो॒ दीर्ये॑त वैष्णवी॒षु॒ शिपिवि॒ष्टव॑तीषु स्तुवीरन् य॒ज्ञो य॒ज्ञस्या॒ति-रिच्य॑ते॒ विष्णुं॒ तच्छि॑पिवि॒ष्टम॒भ्यति॑ रिच्यते॒ तद्वि॒ष्णुः शि॑पिवि॒ष्टोऽति॑रिक्त ए॒वाति॑रिक्तं द॒धात्यथो॒ अति॑रिक्ते-नै॒वाति॑रिक्तमा॒प्त्वाऽव॑ ( २ ) रुन्धते॒ यदि॑ म॒ध्यंदि॑ने॒ दीर्ये॑त वषट्का॒रनि॑धन॒ꣳ साम॑ कुर्युर्वषट्का॒रो वै य॒ज्ञस्य॑ प्र॒तिष्ठा॑ प्र॒तिष्ठा॑मे॒वैन॑द्गमयन्ति॒ यदि॑ तृतीयसव॒न ए॒तदे॒व ॥ ( छन्दो॑भिरे॒वैषा,– मवैकान्न॒विꣳश॒तिश्च॑ ) ॥ ५ ॥

गवामयनस्य गुणविकाररूपोऽहरुत्सर्गः । विश्वेदेवा ऋषयः ।

ष॒ड॒हैर्मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्ति ष॒ड॒हैर्हि मासा॑न्त्स॒पश्य॑न्त्य॒र्धमा॒सैर्मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्त्य-र्धमा॒सैर्हि मासा॑न्त्स॒पश्य॑न्त्य॒मावा॒स्य॑या॒ मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्त्यमावा॒स्य॑या॒ हि मासा॑न्त्स॒-पश्य॑न्ति पौर्ण॒मा॒स्या मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्ति पौर्ण॒मा॒स्या हि मासा॑न्त्स॒पश्य॑न्ति॒ यो वै पू॒र्ण आ॑सि॒ञ्चति॒ परा॒ स सि॑ञ्चति॒ यः पू॒र्णादु॑द॒चति॒ ( १ ) प्रा॒णम॑स्मि॒न्त्स द॑धाति॒ यत् पौर्ण॒मा॒स्या मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्ति॑ संवत्स॒रायै॒व तत् प्रा॒णं द॑धति॒ तद॑नु स॒त्रिणः॑ प्राण॑न्ति॒ यद॒हर्नोत्सृ॒जेयु॒र्यथा॑ दृति॒रुप॑नद्धो॒ विप॑तत्ये॒वꣳ सं॑वत्स॒रो वि प॑ते॒दार्ति॒माच्छे॑युर्यत् पौर्ण॒मा॒स्या मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्ति सं॑वत्स॒रायै॒व तदु॑दा॒नं द॑धति॒ तद॑नु स॒त्रिण उ-( २ )-द॑नन्ति॒ नाऽऽर्ति॒माच्छ॑न्ति॒ पूर्ण॑मा॒से वै दे॒वाना॑ꣳ सु॒तो यत् पौर्ण॒मा॒स्या मासा॑न्त्स॒पाद्याह॑रु॒त् सृ॑जन्ति दे॒वाना॑मे॒व त॒द्य॒ज्ञेन॑ य॒ज्ञं प्र॒त्यव॑रोहन्ति॒ वि वा ए॒तद्य॒ज्ञं छि॑न्दन्ति॒ यत् ष॑ड॒हसं॑तत॒ꣳ संत॒मथाह॑रु॒त् सृ॑जन्ति प्राजाप॒त्यं प॒शुमा ल॑भन्ते प्र॒जाप॑तिः॒ सर्वा॑ दे॒वता॑ दे॒वता॑भिरे॒व य॒ज्ञꣳ सं त॑न्वन्ति॒ यन्ति॒ वा ए॒ते सव॑ना॒द्येऽह॑-( ३ )-रु॒त् सृ॑जन्ति तु॒रीयं॒ खलु॒ वा ए॒तत् सव॑नं॒ यत् सा॑न्ना॒य्यं यत् सा॑न्ना॒य्यं भव॑ति॒ तेनै॒व सव॑ना॒न्न य॑न्ति॒ समु॑प॒हूय॑ भक्षयन्त्ये॒तत् सो॑मपी॒था ह्ये॒तर्हि॒ य॒थाय॒तनं॒ वा ए॒तेषा॑ꣳ सव॒नभाजो॑ दे॒वता॑ गच्छन्ति॒ येऽह॑रु॒त् सृ॑जन्त्यनुसव॒नं पु॑रोडा॒शान् निर्व॑पन्ति यथाय॒तना॒दे॒व सव॒नभाजो॑ दे॒वता॒ अव॑ रुन्धते॒ऽष्टाक॑पालान् प्रातःसव॒न एका॑दशकपालान्

माध्यंदिने सवने द्वादशकपालꣳस्तृतीयसवने छन्दाꣳस्येवाऽऽप्त्वा (४) ऽव रुन्धते[12] वैश्वदेवं चरुं तृतीयसवने निर्वपन्ति वैश्वदेवं वै तृतीयसवनं तेनैव तृतीयसवनान्न यन्ति[13] ॥ ( उदच,- त्यु,- धेऽहं,- राप्त्वा, पञ्चदश च ) ॥ ६ ॥

उत्सर्गिणामयनमीमांसा ॥ १४ बृहती । विश्वेदेवा ऋषयः ।

उत्सृज्यां३ नोत्सृज्या३मिति मीमाꣳसन्ते ब्रह्मवादिनस्तद्वाहुरुत्सृज्यमेवेत्य[1]—मावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुरेते हि यज्ञं वहत इति[2] ते त्वाव नोत्सृज्ये इत्याहुर्ये अवान्तरं यज्ञं भेजाते इति[3] या प्रथमा व्यष्टका तस्यामुत्सृज्यमित्याहुरेष मासो विशर इति[4] नाऽऽदिष्ट-( १ )-मुत्सृजेयु—र्यदादिष्टमुत्सृजेयुर्यादृशे पुनः पर्याप्लावे मध्ये षडहस्य संपद्येत षडहैर्मासान्त्संपाद्य यत् सप्तममहस्तस्मिन्नुत्सृजेयु[6]—स्तदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेयुरैन्द्रं दधीन्द्राय मरुत्वते पुरोडाशमेकादशकपालं वैश्वदेवं द्वादशकपालꣳ—मग्नेर्वै वसुमतः प्रातःसवनं यदग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति ( २ ) सवनमष्टाभिरुप यन्ति[7] यदैन्द्रं दधि भवतीन्द्रमेव तद्भागधेयान्न च्यावयन्ती[8]—न्द्रस्य वै मरुत्वतो माध्यंदिनꣳ सवनं यदिन्द्राय मरुत्वते पुरोडाशमेकादशकपालं निर्वपन्ति देवतामेव तद्भागिनीं कुर्वन्ति सवनमेकादशभिरुप यन्ति[10] विश्वेषां वै देवानामृभुमतां तृतीयसवनं यद्वैश्वदेवं द्वादशकपालं निर्वपन्ति देवता एव तद्भागिनीः कुर्वन्ति सवनं द्वादशभि-( ३ )-रुप यन्ति[11] प्राजापत्यं पशुमा लभन्ते यज्ञो वै प्रजापतिर्यज्ञस्यानन्नुसर्गाया[12]—भिवर्त इतः षण्मासो ब्रह्मसामं भवति ब्रह्म वा अभिवर्तो ब्रह्मणैव तत् सुवर्गं लोकमभिवर्तयन्तो यन्ति प्रतिकूलमिव हीतः सुवर्गो लोक[13]—

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा नो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमही[14]—

—त्य-( ४ )-मुत आयताꣳ षण्मासो ब्रह्मसामं भवत्ययं वै लोको ज्योतिः प्रजा ज्योतिरिममेव तल्लोकं पश्यन्तोऽभिवदन्त आ यन्ति[15] ॥ ( नाऽऽदिष्टं,- कुर्वन्ति, द्वादशभि,- रिति, विꣳशतिश्च ) ॥ ७ ॥

गवामयनसम्बन्धिमहाव्रते सामविशेषाः ॥ विश्वेदेवा ऋषयः ।

देवानां वा अन्तं जग्मुषामिन्द्रियं वीर्यमपाक्रामत् तत् क्रोशेनावारुन्धत तत् क्रोशस्य क्रोशत्वं यत् क्रोशेन चात्वालस्यान्ते स्तुवन्ति यज्ञस्यैवान्तं गत्वेन्द्रियं वीर्यमव रुन्धते[1] सत्रस्यर्द्ध्याऽऽहवनीयस्यान्ते स्तुवन्त्यग्निमेवोपद्रष्टारं कृत्वर्द्धिमुप यन्ति[2] प्रजापतेर्हृदयेन हविर्धानेऽन्तः स्तुवन्ति प्रेमाणमेवास्य गच्छन्ति[3] श्लोकेन पुरस्तात् सदसः ( १ ) स्तुवन्त्यनुश्लोकेन पश्चाद्यज्ञस्यैवान्तं गत्वा श्लोकभाजो भवन्ति[4] नवभिरध्वर्युरुद्गायति नव वै पुरुषे प्राणाः प्राणानेव यजमानेषु दधाति[5] सर्वा ऐन्द्रियो भवन्ति प्राणेष्वेवेन्द्रियं दधत्य[6]—प्रतिहृताभिरुद्गायति तस्मात् पुरुषः सर्वाण्यन्यानि शीर्ष्णोऽङ्गानि प्रत्यञ्चति शिर एव नं पञ्चदशꣳ रथंतरं भवतीन्द्रियमेवाव रुन्धते सप्तदशं ( २ ) बृहदन्नाद्यस्यावरुद्ध्या अथो प्रैव तेन जायन्ते एकविꣳशं भद्रं द्विपदासु प्रतिष्ठित्यै[9] पत्नय उप गायन्ति मिथुनत्वाय प्रजात्यै[10] प्रजापतिः प्रजा

*

असृजत सोऽकामयताऽऽसामहꣳ राज्यं परीयामिति तासाꣳ राजनेनैव राज्यं पर्यैत् तद्राजनस्य राजनत्वं यद्राजनं भवति प्रजानामेव तद्यजमाना राज्यं परि यन्ति[11] पञ्चविꣳशं भवति प्रजापते-( ३ )-राप्त्यै[12] पञ्चभिस्तिष्ठन्तः स्तुवन्ति देवलोकमेवाभि जयन्ति पञ्चभिरासीना मनुष्यलोकमेवाभि जयन्ति दश सं पद्यन्ते दशाक्षरा विराडन्नं विराड् विराजैवान्नाद्यमव रुन्धते[13] पञ्चधा विनिषद्य स्तुवन्ति पञ्च दिशो दिक्ष्वेव प्रति तिष्ठन्त्ये[14]—कैकयाऽस्तुतया समायन्ति दिग्भ्य एवान्नाद्यꣳ सं भरन्ति[15] ताभिरुद्गातोद्गायति दिग्भ्य एवान्नाद्यꣳ ( ४ ) संभृत्य तेज आत्मन् दधते तस्मादेकः प्राणः सर्वाण्यङ्गान्यवत्यथो यथा सुपर्ण उत्पतिष्यञ्छिर उत्तमं कुरुत एवमेव तद्यजमानाः प्रजानामुत्तमा भवन्त्य[16]—सन्दीमुद्गाताऽऽरोहति साम्राज्यमेव गच्छन्ति प्लेङ्खꣳ होता नाकस्यैव पृष्ठꣳ रोहन्ति कूर्चावध्वर्युर्ब्रध्नस्यैव विष्टपं गच्छन्त्येतावन्तो वै देवलोकास्तेष्वेव यथापूर्वं प्रति ( ५ ) तिष्ठन्त्यथो आक्रमणमेव तत् सेतुं यजमानाः कुर्वते सुवर्गस्य लोकस्य समष्ट्यै[17] ॥ ( सदंसः, सप्तदशं, प्रजापते,- गायति दिग्भ्य एवान्नाद्यं, प्रत्ये,- कादश च ) ॥ ८ ॥

शततन्तुवीणादिविधिः ॥ विश्वेदेवा ऋषयः।

अर्क्येण वै सहस्रशः प्रजापतिः प्रजा असृजत ताभ्य इलान्देनेरां लूतामवारुन्ध यदर्क्यं भवति प्रजा एव तद्यजमानाः सृजन्त इलान्दं भवति प्रजाभ्य एव सृष्टाभ्य इरां लूतामव रुन्धते तस्माद्याꣳ समाꣳ सत्रꣳ समृद्धं क्षोधुकास्ताꣳ समां प्रजा इषꣳ ह्यासामूर्जमाददते याꣳ समां व्यृद्धमक्षोधुकास्ताꣳ समां प्रजा ( १ ) न ह्यासामिषमूर्जमाददत उत्क्रोदं कुर्वते यथा बन्धान्मुमुचाना उत्क्रोदं कुर्वत एवमेव तद्यजमाना देवबन्धान्मुमुचाना उत्क्रोदं कुर्वत इषमूर्जमात्मन् दधाना[2] वाणः शततन्तुर्भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठन्त्य[3]—जिं धावन्त्यनभिजितस्याभिजित्यै[4] दुन्दुभीन्त्समाघ्नन्ति परमा वा एषा वाग्या दुन्दुभौ परमामेव ( २ ) वाचमव रुन्धते[5] भूमिदुन्दुभिमा घ्नन्ति यैवेमां वाक् प्रविष्टा तामेवाव रुन्धतेऽथो इमामेव जयन्ति[6] सर्वा वाचो वदन्ति सर्वासां वाचामवरुद्ध्या[7] आर्द्रे चर्मन् व्यायच्छेते इन्द्रियस्यावरुद्ध्या आऽन्यः क्रोशति प्रान्यः शꣳसति य आक्रोशति पुनात्येवैनान्त्स यः प्रशꣳसति पूतेष्वेवान्नाद्यं दधात्यृ—षिकृतं च ( ३ ) वा एते देवकृतं च पूर्वैर्मासैरव रुन्धते यद्भूतेच्छदाꣳ सामानि भवन्त्युभयस्यावरुद्ध्यै[10] यन्ति वा एते मिथुनाद्ये संवत्सरमुपयन्त्यन्तर्वेदि मिथुनौ सं भवतस्तेनैव मिथुनान्न यन्ति[11] ॥ ( व्यृद्धमक्षोधुकास्ताꣳ समां प्रजाः, परमामेव, च, त्रिꣳशच्च ॥ ९ ॥

दासीनृत्यम् ॥ विश्वेदेवा ऋषयः।

चर्माव भिन्दन्ति पाप्मानमेवैषामव भिन्दन्ति[1] माऽप रात्सीर्माऽति व्यात्सीरित्याह संप्रत्यैवैषां पाप्मानमव भिन्दन्त्यु[2]—दकुम्भानधिनिधाय दास्यो मार्जालीयं परि नृत्यन्ति पदो निघ्नतीरिदंमधु गायन्त्यो मधु वै देवानां परममन्नाद्यं परममेवान्नाद्यमव रुन्धते पदो नि घ्नन्ति महीयामेवैषु दधति[3] ॥
( चर्मैकान्नपञ्चाशत् ) ॥ १० ॥

अश्वमेधाङ्गा अन्नहोममन्त्राः ॥ विश्वेदेवा ऋषयः।

पृथिव्यै स्वाहा[1] ऽन्तरिक्षाय स्वाहा[2] दिवे स्वाहा[3] संप्लोष्यते स्वाहा[4] संप्लवमानाय

स्वाहा[5] संप्लुताय स्वाहा[6] मेघायिष्यते स्वाहा[7] मेघायते स्वाहा[8] मेघिताय स्वाहा[9] मेघाय स्वाहा[10] नीहाराय स्वाहा[11] निहाकायै स्वाहा[12] प्रासचाय स्वाहा[13] प्रचलाकायै स्वाहा[14] विद्योतिष्यते स्वाहा[15] विद्योतमानाय स्वाहा[16] संविद्योतमानाय स्वाहा[17] स्तनयिष्यते स्वाहा[18] स्तनयते स्वाहो[19]ग्रꣳ स्तनयते स्वाहा[20] वर्षिष्यते स्वाहा[21] वर्षते स्वाहा[22] ऽभिवर्षते स्वाहा[23] परिवर्षते स्वाहा[24] संवर्षते (१) स्वाहा[25] ऽनुवर्षते स्वाहा[26] शीकायिष्यते स्वाहा[27] शीकायते स्वाहा[28] शीकिताय स्वाहा[29] प्रोषिष्यते स्वाहा[30] प्रुष्णते स्वाहा[31] परिप्रुष्णते स्वाहो[32]द्ग्रहीष्यते स्वाहो[33]द्गृह्णते स्वाहो[34]द्गृहीताय स्वाहा[35] विप्लोष्यते स्वाहा[36] विप्लवमानाय स्वाहा[37] विप्लुताय स्वाहा[38] ऽऽतप्स्यते स्वाहा[39] ऽऽतपते स्वाहो[40]ग्रमातपते स्वाह[41]र्ग्भ्यः स्वाहा[42] यजुर्भ्यः स्वाहा[43] सामभ्यः स्वाहा[44] ऽङ्गिरोभ्यः स्वाहा[45] वेदेभ्यः स्वाहा[46] गाथाभ्यः स्वाहा[47] नाराशꣳसीभ्यः स्वाहा[48] रैभीभ्यः स्वाहा[49] (२) सर्वस्मै स्वाहा[50] ॥ (संवर्षते, रैभीभ्यः स्वाहा, द्वे च) ॥११॥

शरीरहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

दत्वते स्वाहा[1] ऽदन्तकाय स्वाहा[2] प्राणिने स्वाहा[3] ऽप्राणाय स्वाहा[4] मुखवते स्वाहा[5] ऽमुखाय स्वाहा[6] नासिकवते स्वाहा[7] ऽनासिकाय स्वाहा[8] ऽक्षण्वते स्वाहा[9] ऽनक्षिकाय स्वाहा[10] कर्णिने स्वाहा[11] ऽकर्णकाय स्वाहा[12] शीर्षण्वते स्वाहा[13] ऽशीर्षकाय स्वाहा[14] पद्वते स्वाहा[15] ऽपादकाय स्वाहा[16] प्राणते स्वाहा[17]ऽप्राणते स्वाहा[18] वदते स्वाहा[19] ऽवदते स्वाहा[20] पश्यते स्वाहा[21] ऽपश्यते स्वाहा[22] शृण्वते स्वाहा[23] ऽशृण्वते स्वाहा[24] मनस्विने स्वाहा[25] (१) ऽमनसे स्वाहा[26] रेतस्विने स्वाहा[27] ऽरेतस्काय स्वाहा[28] प्रजाभ्यः स्वाहा[29] प्रजननाय स्वाहा[30] लोमवते स्वाहा[31] ऽलोमकाय स्वाहा[32] त्वचे स्वाहा[33] ऽत्वक्काय स्वाहा[34] चर्मण्वते स्वाहा[35] ऽचर्मकाय स्वाहा[36] लोहितवते स्वाहा[37] ऽलोहिताय स्वाहा[38] माꣳसन्वते स्वाहा[39] ऽमाꣳसकाय स्वाहा[40] स्नावभ्यः स्वाहा[41] ऽस्नावकाय स्वाहा[42] ऽस्थन्वते स्वाहा[43] ऽनास्थिकाय स्वाहा[44] मज्जन्वते स्वाहा[45] ऽमज्जकाय स्वाहा[46] ऽङ्गिने स्वाहा[47] ऽनङ्गाय स्वाहा[48] ऽऽत्मने स्वाहा[49] ऽनात्मने स्वाहा[50] (२) सर्वस्मै स्वाहा[51] ॥ (मनस्विने स्वाहा, ऽनात्मने स्वाहा, द्वे च) ॥ १२ ॥

परिधिमन्त्राः । विश्वेदेवा ऋषयः ।

कस्त्वा युनक्ति[1] स त्वा युनक्तु[2] विष्णुस्त्वा युनक्त्वस्य यज्ञस्यर्द्ध्यै मह्यꣳ संनत्या अमुष्मै कामायाऽऽयुषे त्वा प्राणाय त्वाऽपानाय त्वा व्यानाय त्वा व्युष्ट्यै त्वा रय्यै त्वा राधसे त्वा घोषाय त्वा पोषाय त्वाऽऽराद्घोषाय त्वा प्रच्युत्यै त्वा[3] ॥ (कोऽष्टात्रिꣳशत्) ॥१३॥

सर्वपृष्ठेष्टिः ॥ विश्वेदेवा ऋषयः ।

अग्नये गायत्राय त्रिवृते राथंतराय वासन्तायाष्टाकपालं इन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हताय ग्रैष्माय-

कादशकपालो[२] विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो वार्षिकेभ्यो द्वादशकपालो[३] मित्रा-वरुणाभ्यामानुष्टुभाभ्यामेकविꣳशाभ्यां वैराजाभ्याꣳ शारदाभ्यां पयस्या[४] बृहस्पतये पाङ्क्ताय त्रिणवाय शाक्वराय हैमन्तिकाय चरुः सवित्र आतिच्छन्दसाय त्रयस्त्रिꣳशाय रैवताय शैशिराय द्वादशकपालो[६] ऽदित्यै विष्णुपत्न्यै चरु—रग्नये वैश्वानराय द्वादशकपालो[८] ऽनुमत्यै चरुः काय एककपालः ॥
( अग्नये गायत्रायादित्या अनुमत्यै चरुः सप्तचत्वारिꣳशत् ) ॥ १४ ॥

सर्वपृष्ठेष्टिप्रयोगः ॥ विश्वेदेवा ऋषयः ।

यो वा अग्नावग्निः प्रहियते यश्च सोमो राजा तयोरेष आतिथ्यं यदग्नीषोमीयोऽथैष रुद्रो यश्चीयते यत् संचितेऽग्नावेतानि हवीꣳषि न निर्वपेदेष एव रुद्रोऽशान्त उपोत्थाय प्रजां पशून् यजमानस्याभि मन्येत यत् संचितेऽग्नावेतानि हवीꣳषि निर्वपति भागधेयेनैवैनꣳ शमयति नास्य रुद्रोऽशान्त (१) उपोत्थाय प्रजां पशूनभि मन्यते[१] दश हवीꣳषि भवन्ति नव वै पुरुषे प्राणा नाभिर्दशमी प्राणानेव यजमाने दधात्यथो दशाक्षरा विराडन्नं विराड् विराज्येवान्नाद्ये प्रति तिष्ठत्यृ—तुभिर्वा एष छन्दोभिः स्तोमैः पृष्ठैश्चे-तव्य इत्याहुर्यदेतानि हवीꣳषि निर्वपत्यृतुभिरेवैनं छन्दोभिः स्तोमैः पृष्ठैश्चिनुते[३] दिशः सुषुवाणेना-(२)-भिजित्या इत्याहुर्यदेतानि हवीꣳषि निर्वपति दिशामभिजित्या[४] एतया वा इन्द्रं देवा अयाजयन् तस्मा-दिन्द्रसव एतया मनुं मनुष्यास्तस्मान्मनुसवो यथेन्द्रो देवानां यथा मनुर्मनुष्याणामेवं भवति य एवं विद्वानेतयेष्ट्या यजते[५] दिग्वतीः पुरोऽनुवाक्या भवन्ति सर्वासां दिशामभिजित्यै[६] ॥ ( अस्य रुद्रोऽशान्तः, सुषुवाणेनै,- कचत्वारिꣳशच्च ) ॥ १५ ॥

[ १६-१७ ] महिमग्रहः ॥ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते द्यौर्महिमा नक्षत्राणि रूपमादित्यस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा[१] ॥ ( यः प्राणतो द्यौरादित्योऽष्टात्रिꣳशत् ) ॥ १६ ॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥

उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि तस्य ते पृथिवी महिमौषधयो वनस्पतयो रूप-मग्निस्ते तेजस्तस्मै त्वा महिम्ने प्रजापतये स्वाहा[१] ॥ ( य आत्मदा पृथिव्यग्नि,- रेकान्नचत्वारिꣳशत् ) ॥ १७ ॥

ब्रह्मवर्चसहोमः ॥ विश्वेदेवा ऋषयः ।

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतां—माऽस्मिन् राष्ट्रे राजन्य इषव्यः शूरो महारथो जायतां[२] दोग्ध्री धेनु—र्वोढाऽनड्वा—नाशुः सप्तिः[५] पुरन्धिर्योषा[६] जिष्णू रथेष्ठाः सभेयो युवा ऽस्य यजमानस्य वीरो जायतां[७] निकामेनिकामे नः पर्जन्यो वर्षतु फलिन्यो न ओषधयः पच्यन्तां[९]

योगक्षेमो नः कल्पताम् ॥ ( आ ब्रह्मन्नेकचत्वारिंशत् ) ॥ १८ ॥

अश्वानुमन्त्रणम् ॥ विश्वेदेवा ऋषयः ।

आऽक्रान् वाजी पृथिवीमग्निं युजमकृत वाज्यर्वा[1] ऽऽऽक्रान् वाज्यन्तरिक्षं वायुं युजमकृत वाज्यर्वा[2] द्यां वाज्याऽक्रंस्त सूर्यं युजमकृत वाज्यर्वा[3] ऽग्निस्ते वाजिन् युङ्ङनु त्वा ऽऽ रभे स्वस्ति मा सं पारय[4] वायुस्ते वाजिन् युङ्ङनु त्वा ऽऽ रभे स्वस्ति मा सं ( १ ) पारय[5] ऽऽदित्यस्ते वाजिन् युङ्ङनु त्वा ऽऽ रभे स्वस्ति मा सं पारय[6] प्राणधृगसि प्राणं मे दृंह[7] व्यानधृगसि व्यानं मे दृंहा[8]—पानधृगस्यपानं मे दृंह[9] चक्षुरसि चक्षुर्मयि धेहि[10] श्रोत्रमसि श्रोत्रं मयि धेह्या[11]—युरस्यायुर्मयि धेहि[12] ॥ ( वायुस्ते वाजिन् न्युङ्ङनु त्वा ऽऽ रभे स्वस्ति मा सं, त्रिचत्वारिंशच्च ) ॥ १९ ॥

अश्वहोममन्त्राः ॥ विश्वेदेवा ऋषयः ।

जज्ञि बीजं[1] वर्ष्टा पर्जन्यः[2] पक्ता सस्यं[3] सुपिप्पला ओषधयः[4] स्वधिचरणेयं[5] सूपसदनोऽग्निः[6] स्वध्यक्षमन्तरिक्षं[7] सुपावः पवमानः[8] सूपस्थाना द्यौः[9] शिवमसौ तपन्[10] यथापूर्वमहोरात्रे[11] पञ्चदशिनोऽर्धमासा[12]—स्त्रिंशिनो मासाः[13] क्लृप्ता ऋतवः[14] शान्तः संवत्सरः[15] ॥ ( जज्ञ्येकत्रिंशत् ) ॥ २० ॥

अश्वस्य रोगादिनिमित्ते प्रायश्चित्तिः ॥ विश्वेदेवा ऋषयः ।

आग्नेयोऽष्टाकपालः सौम्यश्चरुः सावित्रोऽष्टाकपालः पौष्णश्चरू रौद्रश्चरुरग्नये वैश्वानराय द्वादशकपालो मृगाखरे यदि नाऽऽगच्छेदग्नयेऽंहोमुचेऽष्टाकपालः सौर्यं पयो वायव्य आज्यभागः[1] ॥ ( आग्नेयश्चतुर्विंशतिः ) ॥ २१ ॥

मृगारेष्टिः ॥ विश्वेदेवा ऋषयः ।

अग्नयेऽंहोमुचेऽष्टाकपाल[1] इन्द्रायांहोमुच एकादशकपालो[2] मित्रावरुणाभ्यामागोमुग्भ्यां पयस्या[3] वायोसावित्र आगोमुग्भ्यां चरुं[4]—रश्विभ्यामागोमुग्भ्यां धाना[5] मरुद्भ्य एनोमुग्भ्यः सप्तकपालो[6] विश्वेभ्यो देवेभ्य एनोमुग्भ्यो द्वादशकपालो[7] ऽनुमत्यै चरुं[8]—रग्नये वैश्वानराय द्वादशकपालो[9] द्यावापृथिवीभ्यामंहोमुग्भ्यां द्विकपालः[10] ॥ ( अग्नयेऽंहोमुचे त्रिंशत् ) ॥ २२ ॥

सन्नतिहोमाः ॥ विश्वेदेवा ऋषयः ।

अग्नये समनमत् पृथिव्यै समनमद्यथाऽग्निः पृथिव्या समनमदेवं मह्यं भद्राः संनतयः सं नमन्तु वायवे समनमदन्तरिक्षाय समनमद्यथा[1] वायुरन्तरिक्षेण सूर्याय समनम[2]—द्दिवे समनमद्यथा सूर्यो दिवा चन्द्रमसे समनम[3]—न्नक्षत्रेभ्यः समनमद्यथा[4] चन्द्रमा नक्षत्रैर्वरुणाय समनम[5]—दद्भ्यः समनमद्यथा ( १ ) वरुणोऽद्भिः साम्ने समनम[6]—दृचे समनमद्यथा सामर्चा ब्रह्मणे समनमत्[7] क्षत्राय समनमद्यथा ब्रह्म क्षत्रेण राज्ञे समनम[8]—द्विशे समनमद्यथा राजा विशा रथाय समनम[9]—दश्वेभ्यः समनमद्यथा रथोऽश्वैः प्रजापतये समनम[10]—द्भूतेभ्यः समनमद्यथा प्रजापतिर्भूतैः समनमदेवं मह्यं

( २ ) भद्राः संनतयः सं नमन्तु ॥ ( अग्नय: समनमद्यथा, मह्यं, चत्वारि च ) ॥ २३ ॥

यजमानेन वाचनीयः ॥ १ त्रिष्टुप् । विश्वेदेवा ऋषयः ।

ये ते पन्थानः सवितः पूर्व्यासोऽरेणवो वितता अन्तरिक्षे ।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च देव ब्रूहि[1] ॥

नमोऽग्नये पृथिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[2] नमो वायवेऽन्तरिक्षक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[3] नमः सूर्याय दिविक्षिते लोकस्पृते लोकमस्मै यजमानाय देहि[4] ॥ ( ये ते चतुश्चत्वारिंशत् ) ॥ २४ ॥

विराड्रूपेणाश्वोपासनप्रतिपादनम् ॥ विश्वेदेवा ऋषयः ।

यो वा अश्वस्य मेध्यस्य शिरो वेद शीर्षण्वान् मेध्यो भवत्यु—षा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणश्चन्द्रमाः श्रोत्रं दिशः पादा अवान्तरदिशाः पर्शवोऽहोरात्रे निमेषोऽर्धमासाः पर्वाणि मासाः संधानान्यृतवोऽङ्गानि संवत्सर आत्मा रश्मयः केशा नक्षत्राणि रूपं तारका अस्थानि नमो मांसान्योषधयो लोमानि वनस्पतयो वाला अग्निर्मुखं वैश्वानरो व्यात्तं ( १ ) समुद्र उदरमन्तरिक्षं पायुर्द्यावापृथिवी आण्डौ ग्रावा शेपः सोमो रेतो यज्जञ्जभ्यते तद्वि द्योतते यद्विधूनुते तत् स्तनयति यन्मेहति तद्वर्षति वागेवास्य वा—गहर्वा अश्वस्य जायमानस्य महिमा पुरस्ताज्जायते रात्रिरेनं महिमा पश्चादनु जायत एतौ वै महिमानावश्वमभितः सं बभूवतुर्हयो देवानवह-( २ )-दर्वाऽसुरान् वाजी गन्धर्वानश्वो मनुष्यान्त्समुद्रो वा अश्वस्य योनिः समुद्रो[3] [ बन्धुः ]* ॥ ( व्यात्त,- मवहद्, द्वादश च ) ॥ २५ ॥

[ गावो ३१३। गावः १०२। प्रथमे ८४। समान्यो १०२। यदि ११९। षडहै- २१५। -रुत्सृज्यां३ २२० देवानां- २६१। -मर्कैण १८०। चर्म ४९। पृथिव्यै १०२। दुत्वते १०२। को ३८। ऽग्नये ४७। यो १४१। यो ३८। य ३९। आ ४१ आ ९३। जङ्या- ३१। --ग्नयो २४। ऽग्नये ३०। ऽग्नये १०४। ये ४४। यः ११२। पञ्चविंशतिः ॥ २६३१ ]

[ ॥ इति सप्तमकाण्डे पञ्चमः प्रपाठकः ॥५॥ ]

[ प्रजननं २६२५। साध्याः २३३०। प्रजवं २१२३। बृहस्पति- २६२१। -गावः २६३१। पञ्च ॥ १२३३० ]

॥ इति सप्तमं काण्डं सम्पूर्णम् ॥ ७ ॥

[ इषे १६५८२। वायव्यं १९२७३। प्रजापति- १०६२२। -युञ्जानः १४१०५। सावित्राणि १९४०४। प्राचीनवंशं १६९९२। प्रजननं १२३३०। सप्त ॥ १०९३०८ ]

॥ इति तैत्तिरीयसंहिता समाप्ता ॥

---

* 'समुद्रो बन्धुः' यद्यप्यत्र संहितायां पदपाठे च 'बन्धु' रिति पदं वैदिका न पठन्ति, तथाऽपि भाष्यकारसंमतत्वात् 'व्यात्तमवहद् द्वादश च' इति वैदिकसंप्रदायानुरोधिप्रतीकवाक्योक्तद्वादशसंख्यापूरणार्थमावश्यकत्वाच्चात्र स्थापितम् ।

# तैत्तिरीय-संहिताया अनुवाकसूची

## काण्ड-प्रपाठकानुवाकाङ्कसमेता ।

*

यजुर्वेदीय-

## तैत्तिरीय-संहिता-मन्त्राणां

# वर्णानुक्रमसूची ।

[ काण्ड-प्रपाठकानुवाक-मन्त्राङ्क-समेता ]

इत्येष वा इडासुप १,७,२,११
इत्यैन्द्रीꣳ सूतवशामा २,१,५,७
इदं वामास्ये हविः प्रियम् ३,३,११,१
इदं विष्णुर्वि चक्रमे १,२,१३,४
इदं तृतीयꣳ सवनं ३,१,९,४
इदं देवानां १,१,४,११
इदं पितृभ्यो नमो २,६,१२,१०
इदमगन्म देवयजनं ३,१,१,६
इदमहꣳ रक्षोऽधमं १,३,९,१३;६,३,९,६
इदमहं तं वलगम् १,३,२,२;६,२,११,५
इदमहं निर्वरुणस्य १,३,४,१३;६,३,२,१७
इदमहममुं भ्रातृव्यमाभ्यः १,६,६,३
इदमहं मनुष्यो मनुष्यान् १,३,४,१०
इदमसीदमसीति २,६,७,१९
इदमसीदमसीत्येव २,५,७,१२
इदमुत्तरात् सुवः ४,३,२,४
इदमु नः सह १,१,४,१२
इदुवत्सराय परिवत्सराय ५,७,२,१०
इध्मश्च मे बर्हिश्च मे ४,७,८,१
इध्मा बर्हिः प्रोक्षति मेध्यम् २,६,५,२
इन्दो इत्याह रेतो वा ६,५,८,७
इन्द्रं विश्वा अवीवृधन् ४,६,३,१२;५,४,६,१०
इन्द्रं वृत्रं जघ्निवाꣳसं २,५,३,१
इन्द्रं वो विश्वतस्परि १,६,१२,१;२,१,११,१;३,१४,३;३,१,११,१७;४,३,१३,३०
इन्द्रꣳ स्वपसा वहेन ५,७,१४,८,१८,३
इन्द्र आसां नेता बृहस्पतिः ४,६,४,८
इन्द्र एकादशाक्षरेण १,७,११,११
इन्द्र क्रतुं न आ भर ७,५,७,१४
इन्द्र क्षत्रम् २,५,१२,३३
इन्द्र क्षत्रमभिवामम् १,६,१२,१३
इन्द्रघोषस्त्वा वसुभिः १,२,१,१३;६,२,७,७
इन्द्रं नरः २,१,११,२;३,१४,४;३,१,११,१८;४,३,१३,२१
इन्द्रं नरो नेमधिता १,६,१२,२
इन्द्रः पत्निया मनुमयाजयत् ६,६,६,१
इन्द्र मरुत्व इह पाहि १,४,१८,१
इन्द्रमिद्गाथिनो बृहत् १,६,१२,७
इन्द्रमिद्धरी वहतः १,४,३८,१
इन्द्रवायू इमे सुताः १,४,४,२
इन्द्रः वृत्रमहन्नसो ६,४,२,६
इन्द्रः सुत्रामा स्ववाँ १,७,१३,११
इन्द्रस्त्वष्टुः सोममभीषह २,३,२,१३;६,५,११,७
इन्द्रस्त्वा धूपयत्वङ्गिरस्वत् ४,१,६,५
इन्द्रस्य १,७,१०,९;३,२,३,१४
इन्द्रस्य क्रोडः ५,७,१६,१
इन्द्रस्य त्वा बाहुभ्यां १,१,२,१६
इन्द्रस्य ध्रुवमसि १,३,१,१९
इन्द्रस्य प्राणोऽसि २,३,१०,३
इन्द्रस्य बलाय स्वाहा १,८,१५,१६
इन्द्रस्य बाहुरसि १,१,९,२;११,११
इन्द्रस्य भागोऽसि विष्णोः ४,३,९,२
इन्द्रस्य भागोऽसीत्युत्तरतः ५,३,४,४
इन्द्रस्य मन्ये प्रथमस्य ४,७,१५,३
इन्द्रस्य योनिरसि १,२,२,१२
इन्द्रस्य वज्रोऽसि १,७,७,२;८,१२,१७;१५,१,१६,१६;५,७,३,१
इन्द्रस्य वज्रो मरुताम् ४,६,६,१७
इन्द्रस्य वृत्रं जघ्नुषः २,५,३,५
इन्द्रस्य वृष्णो वरुणस्य ४,६,४,९
इन्द्रस्य वै मरुत्वतः ७,५,७,१०
इन्द्रस्य सदोऽसि १,३,१,१५
इन्द्रस्य सुषुवाणस्य ५,६,३,१०
इन्द्रस्य स्यूरसि १,३,१,१८
इन्द्रस्य स्यूरसीन्द्रस्य ६,२,१०,२२
इन्द्रस्याहं देवयज्यया १,६,२,२४;११,१६
इन्द्रस्याहमुज्जितिम् १,६,४,९
इन्द्रस्यैकादशी ५,७,२१,११
इन्द्रस्योरुमा विश १,२,७,८;६,१,११,२
इन्द्राग्निभ्यां त्वा सयुजा ४,४,५,१
इन्द्राग्निभ्यामोजोदाभ्याम् ५,६,२१,२
इन्द्राग्निभ्यां बलदाभ्याꣳ ५,६,२१,३
इन्द्राग्नियोरहं देवयज्यया १,६,२,२३;११,१५
इन्दाग्नियारेहमुज्जिति १,६,४,८
इन्द्राग्नियोर्भागधेयीः १,३,१२,४;६,४,२,१६
इन्द्राग्नी अव्यथमानाम् ४,३,६,१;५,३,२,१
इन्द्राग्नी आगतꣳ सुतं १,४,१५,१
इन्द्राग्नी द्यावापृथिवी १,२,१,१७
इन्द्राग्नी नवतिं पुरः १,१,१४,३
इन्द्राग्नी मे वर्चः कृणुतां ३,३,३,१४
इन्द्राग्नी रोचना दिवः ४,२,११,१;२,१३,२८
इन्द्राग्नी वा एतस्य २,२,१,२
इन्द्राग्नी शिखण्डाभ्याम् ५,७,१५,२
इन्द्राणीमासु नारिषु १,७,१३,३
इन्द्राणीं प्लीह्ना ५,७,१६,७
इन्द्राण्या एकादशी ५,७,२२,११
इन्द्राण्यै कीशां ५,५,१०,४
इन्द्राण्यै चरुं निर्वपेत् २,२,८,२
इन्द्राण्यै त्रयः कृष्णैताः ५,६,१८,२
इन्द्राण्यै सन्नहनं १,१,२,१३
इन्द्राबृहस्पती ऊरुभ्याम् ५,७,१५,३
इन्द्राय घर्मवते २,२,७,४,६
इन्द्राय त्रात्रे पुरोडाशम २,२,७,२
इन्द्राय त्रैष्टुभाय पञ्चदशाय ७,५,१४,२
इन्द्राय त्वा बृहद्वते ६,५,१,२
इन्द्राय त्वा वृत्रघ्ने १,४,१,३
इन्द्राय त्वेन्द्राय त्वेति ६,४,४,२
इन्द्राय दात्रे पुरोडाशम् २,२,८,६
इन्द्राय प्रदात्रे २,२,८,७
इन्द्राय मन्युमते २,१,३,४;२,८,४
इन्द्राय मरुत्वते २,१,३,५

*

नमो रथेभ्यो रथपतिभ्यः ४,५,४,९
नमो राज्ञे ७,४,१६,१
नमो रुद्राय मखघ्ने ३,२,४,१०
नमो रुद्रायाऽऽततायिने ४,५,२,७
नमो रुद्रेभ्यो ये पृथिव्यां४,५,११,१२
नमो रोहिताय स्थपतये ४,५,२,९
नमो लोप्याय चोलप्याय ४,५,९,१०
नमो वः किरिकेभ्यः ४,५,९,१५
नमो वः पितरो रसाय ३,२,५,१९
नमो वञ्चते परिवञ्चते ४,५,३,४
नमो वन्याय च कक्ष्याय ४,५,६,९
नमो वरुणाय ७,४,१६,२
नमो वर्मिणे च वरूथिने ४,५,६,१३
नमो वर्ष्याय चावर्ष्याय ४,५,७,१२
नमो वात्याय च रेष्मियाय ४,५,७,१५
नमो वायवेऽन्तरिक्षक्षिते ७,५,२४,३
नमो वास्तव्याय च ४,५,७,१६
नमो विक्षीणकेभ्यः ४,५,९,१६
नमो विचिन्वत्केभ्यः ४,५,९,१७
नमो विरूपेभ्यो विश्वरूपेभ्यः४,५,४,६
नमो वृक्षेभ्यो हरिकेशेभ्यः४,५,२,२, ८,७
नमो वृद्धाय च संवृध्वने ४,५,५,१०
नमो व्रातेभ्यो व्रातपतिभ्यः४,५,४,४
नमोऽश्वाय ७,४,१६,३
नमोऽसिमद्भ्यो नक्तं चरद्भ्यः४,५,३,७
नमोऽस्यद्भ्यो विध्यद्भ्यः ४,५,३,१२
नमो हन्त्रे च हनीयसे ४,५,८,६
नमो हरिकेशायोपवीतिने ४,५,२,५
नमो हिरण्यबाहवे ४,५,२,१
नमो ह्रस्वाय च वामनाय ४,५,५,८
नमो ह्रदय्याय च ४,५,९,७
न यजमान रिष्यसि १,८,२१,१२
नयवत्यर्चाऽऽग्नीध्रे जुहोति ६,३,२,९
नरंधिषः प्रोह्यमाणः ४,४,९,९
नराशꣳसस्याहं देवयज्यया १,६,४,२
नवकपालः पुरोडाशः ६,२,१,७-८
नवचत्वारिꣳशते स्वाहा७,२,११,२२, १२,१३; १४,११

नवछदि तेजस्कामस्य ६,२,१०,१७
नव जुहोति नव वै ६,६,२,२
नवत्यै स्वाहा ७,२,१७,९
नवदशभिरस्तुवत ४,३,१०,१०
नवनव गृह्यन्ते नव ३,५,१०,५
नवभिरध्वर्युरुद्गायति ७,५,८,५
नवभिरस्तुवत पितरः ४,३,१०,५
नवभ्यः शतेभ्यः स्वाहा ७,२,१९,१०
नवभ्यः स्वाहा७,२,११,९; १२,५; १४,४
नवरात्रो भवत्यभिपूर्वम् ७,२,४,४
नवविꣳशत्याऽस्तुवत ४,३,१०,१५
नवविꣳशत्यै स्वाहा ७,२,११,२०; १२,११; १४,१०
नवषष्ट्यै स्वाहा ७,२,११,२४; १२,१५; १४,१४
न वा इदं दिवा५,२,४,१६;६,४,८,४
न वा उवेतन्म्रियसे ४,६,९,१०
न वा एतेन पूतो न ५,५,९,१६
न वा एषोऽन्यतोवैश्वानरः७,२,१०,१
नवाशीत्यै स्वाहा ७,२,११,१६,१२, १७; १४,१६
नवाग्निमभिचरतः ५,१,६,२०
न विष्वञ्चं वि युयात् २,६,५,१९
नवोनवो भवति २,३,५,४;४,१४,१
न सं भिनत्ति तस्मात् ६,२,११,७
न संवत्सरस्तिष्ठति ५,१,८,२२
न सादयत्यसन्नाद्धि ६,५,६,१४; ७, २; ८,११
न स्थावराणां गृह्णीयात् ६,४,२,८
न ह स्म वै पुराऽग्निः ५,१,९,१
न होता ईलयन्त्या ६,४,२,१९
नाकः षट्त्रिꣳशः ४,३,८,१६; ५,३, ३,१७
नाकसदसि ४,४,७,१०
नाकसद्भिर्वै देवाः सुवर्गं ५,३,७,१
नाक्रो मकरः कुलीकयः ५,५,१३,२
नागतश्रीर्महेन्द्रं यजेत २,५,४,८
नाग्निं चित्वा रामामुपेयात् ५,६,८,५

नात्यग्रं प्र हरेद्यत् २,६,५,१६
नाऽऽदिष्टमुत्सृजेयुः ७,५,७,५
नादेयीभ्यः स्वाहा ७,४,१३,१७
नाध्वर्युरुप गायेत् ६,३,१,११
नानदद्रासभः पत्वा ५,१,५,२१
नाना प्राणो यजमानस्य ३,१,४,८
नानु वषट् करोति ६,५,८,१२
नान्तममङ्गारमति ६,३,९,१५
नान्तमा वहन्तीरतीयात् ६,४,२,७
नान्यामाहुतिं पुरस्तात् ६,२,३,३
नान्यामुत्तरामिष्टकामुप ५,३,७,१०
नान्योऽन्यमनु प्र पद्येत ६,५,३,८
नाभा पृथिव्याः समिधानम्४,१,१०,४
नाभिदघ्ने परि व्ययति ६,३,४,१६
नाभिस्त आप्यायतां १,३,९,६
नामावास्यायां च पौर्णमास्यां२,५,६, १०
नाराशꣳसीभ्यः स्वाहा ७,५,११,४८
नारीस्ते पत्न्यो लोम ५,२,११,५
नाऽऽर्तिमार्च्छति सर्वम् ५,६,२,३
नासिकवते स्वाहा ७,५,१२,७
नासिकाभ्याꣳ स्वाहा ७,३,१६,५
नासोमयाजी सं नयेत् २,५,५,१
नाहमिन्द्राणि रारण १,७,१३,४
निकषमाणाय स्वाहा ७,१,१९,७५
निकषिताय स्वाहा ७,१,१९,७६
निकषिष्यते स्वाहा ७,१,१९,७४
निकामेनिकामे नः पर्जन्यः७,५,१८,८
निकायश्छन्दः ४,३,१२,२०
नि काव्या वेधसः२,२,१२,८;३,१४,२
निक्रमणं निषदनं ४,६,९,३
निग्राभ्याः स्थ देवश्रुतः ३,१,८,१
नितत्निः ४,४,५,११
निपत्स्यते स्वाहा ७,१,१९,२९
निपद्यमानाय स्वाहा ७,१,१९,३०
निपन्नाय स्वाहा ७,१,१९,३१
निम्रुक्तिमरूपेण ५,७,१९,८
नि यच्छति वृष्टिमेव २,६,५,१५
नियुताय स्वाहा ७,२,२०,४
नियुत्वते भवति ध्रुवा २,१,१,४

❀

